विस्तीर्णा “क्षितिर्न भूमिरिव अग्निरपि विस्तीर्णः सर्वेषु भूतेषु जाठररूपेणावस्थानात् । “गिरिर्न पर्वत इव “भुज्म सर्वेषां भोजयिता । यथा गिरौ विद्यमानं फलमूलादिकमाहृत्य सर्वे भुञ्जते तद्वदग्नावपि पचन्तः सर्वे भुञ्जते । यद्वा । अग्नावाहुतिं हुत्वा यजमानाः स्वर्गफलं भुञ्जते । अथवा गिरिर्यथा दुर्भिक्षे सर्वान् प्राणिनो भुनक्ति स्वकीयफलमूलादिदानेन पालयति तद्वदयमपि पापादनुष्ठातॄन् प्रमुञ्चति । तथा चाम्नायते---‘अग्निर्मा तस्मादेनसः प्र मुञ्चतु' ( तै. सं. १. ८. ५. ३) इति । “शंभु सुखकरं “क्षोदो न उदकमिव । यथोदकं सुखं करोति तद्वदग्निः सर्वेषां सुखकारीत्यर्थः । “अज्मन् । संग्रामनामैतत् । अज्मनि संग्रामे “अत्यो “न सततगमनशीलो जात्यश्व इव “सर्गप्रतक्तः सर्गेण विसर्जनेन प्रगमितः । यथा सादिना प्रेषितो जात्यश्वो हन्तव्यसमीपमाशु गच्छति तद्वदग्निरपि स्तोतृभिः प्रेषितः सन् शत्रून् हन्तुं शीघ्रं गच्छतीति भावः । अपि च “सिन्धुर्न

“क्षोदः । स्यन्दनशीलमुदकमिव अयमपि शीघ्रगामी । यथा निम्नप्रदेशाभिमुखो जलप्रवाहो दुर्निर्वारः तद्वद्दग्धव्याभिमुखोऽग्निरपीत्यर्थः । अतो यस्मादेवं तस्मात् “ईम् एनमग्निं कः “वराते को वारयेत् । कोऽपि वारयितुं न शक्नोतीत्यर्थः ॥ रण्वा । रविर्गत्यर्थः। रण्व्यते' प्राप्यते इति रण्वः। ‘कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्मणि पचाद्यच् । भुज्म । ‘भुज पालनाभ्यवहारयोः । इषियुधीन्धि°' इति विधीयमानो मक् बहुलवचनादस्मादपि भवति । सुपां सुलुक्' इति सोर्लुक् । अज्मन् । “ अज गतिक्षेपणयोः ' । मनिनि वलादावार्धधातुके विकल्प इष्यते ' ( का. २. ४. ५६. २ ) इति वचनात् वीभावाभावः । ‘ सुपां सुलुक्' इति सप्तम्या लुक् । सर्गप्रतक्तः । ‘ सृज विसर्गे ' इत्यस्मात् घञन्तः सर्गशब्द आद्युदात्तः । तञ्चु गतौ । अस्मादन्तर्भावितण्यर्थात् निष्ठायां ‘ यस्य विभाषा ' इति इट्प्रतिषेधः । “अनिदिताम्' इति नलोपः । सर्गेण प्रतक्तः

। तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । वराते । वृञ् वरणे । अन्तर्भावितण्यर्थात् लेटि लेटोऽडाटौ' ति आडागमः । व्यत्ययेन शप् । 'वैतोऽन्यत्र ' ( पा. सू. ३. ४.९६ ) इति ऐत्वस्य विकल्पितत्वादभावः ।।

जा॒मिः सिन्धू॑ना॒ं भ्राते॑व॒ स्वस्रा॒मिभ्या॒न्न राजा॒ वना॑न्यत्ति ॥ ७

यद्वात॑जूतो॒ वना॒ व्यस्था॑द॒ग्निर्हं॑ दाति॒ रोमा॑ पृथि॒व्याः ॥८

जा॒मिः । सिन्धू॑नाम् । भ्राता॑ऽइव । स्वस्रा॑म् । इभ्या॑न् । न । राजा॑ । वना॑नि । अ॒त्ति॒ ॥७

जामिः । सिन्धूनाम् । भ्राताऽइव । स्वस्राम् । इभ्यान् । न । राजा । वनानि । अत्ति ॥७

यत् । वात॑ऽजूतः । वना॑ । वि । अस्था॑त् । अ॒ग्निः । ह॒ । दा॒ति॒ । रोम॑ । पृ॒थि॒व्याः ॥८

यत् । वातऽजूतः । वना । वि । अस्थात् । अग्निः । ह । दाति । रोम । पृथिव्याः ॥८

"सिन्धूनां स्यन्दनशीलानामपामयमग्निः “जामिः बन्धुः । तासामुत्पादकत्वात्। तथा चाम्नातम्' अग्नेरापः ' (तै. आ. ८. १) इति । यद्वा । देवेभ्यः पलायितोऽप्सु वर्तमानः सन् तासामपां बन्धुर्बभूवेत्यर्थः । तत्र दृष्टान्तः । “स्वस्रां स्वसॄणां भ्रातेव । यथा भ्रातातिशयेन हितकरो भवति तद्वत् । तादृशोऽग्निः “वनानि महान्त्यरण्यानि "अत्ति भक्षयति । दहतीत्यर्थः। तत्र निदर्शनम् । “राजा "इभ्यान्न भियं यन्तीति नैरुक्तव्युत्पत्त्या इभ्याः शत्रवः । तान् यथा समूलं हिनस्ति तद्वत् । यद्वा । इभ्या धनिनः। तान् यथा धनमपहरन् राजा हिनस्ति तद्वदित्यर्थः । अपि च “यत्

यदा “वातजूतः वातेन प्रेरितः सन् “वना वनान्यरण्यानि “व्यस्थात् उक्तप्रकारेण विविधमातिष्ठति दग्धुं प्रवर्तते तदानीम् “अग्निर्ह असावग्निरेव “पृथिव्याः भूमेः संबन्धीनि "रोम औषधिरूपाणि रोमाणि “दाति छिनत्ति। भूम्यामोषधिवनस्पतिजातं यदस्ति तत्सर्वं दहतीति भावः ॥ स्वस्राम् । आमो नुडभावश्छान्दसः । अस्थात् । लुङि ‘गातिस्था' इति सिचो लुक् । दाति । ‘दाप् लवने '। अदादित्वात् शपो लुक् ॥

श्वसिंत्य॒प्सु हं॒सो न सीद॒न्क्रत्वा॒ चेतिं॑ष्ठो वि॒शामुं॑ष॒र्भुत् ॥९

सोमो॒ न वे॒धा ऋ॒तप्रं॑जातः प॒शुर्न शिश्वां वि॒भुर्दू॒रेभाः ॥१०

श्वसिंति । अ॒प्ऽसु । हं॒सः । न । सीदंन् । क्रत्वां । चेतिंष्ठः । वि॒शाम् । उ॒ष॒ःऽभुत् ॥९

श्वसिति । अप्ऽसु । हंसः । न । सीदन् । क्रत्वा । चेतिष्ठः । विशाम् । उषःऽभुत् ॥९

सोमः॑ । न । वे॒धाः । ऋ॒तऽप्रं॑जातः । प॒शुः । न । शिश्वा॑ । वि॒ऽभुः । दू॒रेऽभाः॑ ॥१०

सोमः । न । वेधाः । ऋतऽप्रजातः । पशुः । न । शिश्वा । विऽभुः । दूरेऽभाः ॥१०

अयमग्निर्देवेभ्यः पलायितः सन् "अप्सु उदकेषु “श्वसिति प्राणिति । निगूढो वर्तते इत्यर्थः । तत्र दृष्टान्तः । “हंसो “न “सीदन् । उदकमध्ये उपविशन् हंस इव । कीदृशोऽग्निः । “क्रत्वा क्रतुना ज्ञानहेतुनात्मीयेन प्रकाशेन “विशां प्रजानां “चेतिष्ठः अतिशयेन चेतयिता ज्ञापयिता । रात्रौ हि सर्वे जना अन्धकारावृतं सर्वमग्नेः प्रकाशाज्जानन्ति । "उषर्भुत् उषस्युषःकालेऽग्निहोत्रादौ प्रबुद्धः “सोमो न “वेधाः सोम इव विधाता स्रष्टा । सोमो यथा

सकलमोषधिरूपं भोग्यजातं सृजति । ‘ सोमो वा ओषधीनां राजा ' ( तै. सं. ६. १. ९. १; तै. ब्रा. ३. ९. १७. १ ) इति श्रुतेः । तथा सकलं भोक्तृजातं सृजति । अग्नेरेव भोक्तृरूपेणावस्थानात् । तथा च तैत्तिरीयकम्- अग्निरन्नादोऽन्नपतिः ' ( तै. ब्रा. २. ५. ७. ३ ) इति । वाजसनेयकेऽपि भोक्तृभोग्ययोरग्नीषोमात्मकत्वमाम्नातम्’ एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः' इति । “ऋतप्रजातः । ऋतमित्युदकनाम । ऋतादुदकात् प्रादुर्भूतः “पशुर्न “शिश्वा । उदकमध्ये वर्तमानोऽग्निः शयानः पशुरिव तनूकृतः संकुचितगात्रोऽभूत् । ततः प्रादुर्भूतः सन् “विभुः प्रभूतः संपन्नः । यद्वा शिश्वा शिशुना गर्भस्थेन वत्सेन सहिता गौरिव विभुः प्रभूतावयवो जात इत्यर्थः । “दूरेभाः । दूरे विप्रकृष्टदेशेऽपि भाः प्रकाशो यस्य स तथोक्तः । एवंभूतोऽग्निरप्सु श्वसतीति पूर्वेण संबन्धः । श्वसिति । ‘ श्वस प्राणने ' । अदादित्वात शपो

लुक् । रुदादिभ्यः सार्वधातुके' ( पा. सू. ७. २. ७६ ) इति इडागमः । तिपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । क्रत्वा । ‘ जसादिषु च्छन्दसि वावचनम् इति नाभावाभावः । उषसि बुध्यते इत्युषर्भुत् ।' बुध अवगमने '। क्विप् च ' इति क्विप् । ‘ एकाचो बशः° ' इति भष्भावः । ‘ अहरादीनां पत्यादिषूपसंख्यानम् ' (पा, म. ८. २. ७० ) इति सकारस्य रेफादेशः । शिश्वा । ' शो तनूकरणे' । ‘ आदेचः' इति आत्वम् । शः कित्सन्वच्च ' ( उ. सू. १. २० ) इति उप्रत्ययः । सन्वद्भावात् द्विर्भावेत्वे । अत एव नित्त्वादाद्युदात्तत्वम् । किद्वद्भावात् “ आतो लोप इटि च' इति आकारलोपः । प्रथमपक्षे ' सुपां सुलुक्' इति सोः आकारः । द्वितीये तु पूर्ववत् नाभावाभावः । दूरेभाः । तत्पुरुषे कृति बहुलम्' इति बहुव्रीहावपि बहुलवचनात् अलुक् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ ९ ॥

**टिप्पणी**

[पराशरोपरि पौराणिकसंदर्भाः](#)

[पराशरोपरि टिप्पणी](#)

(सोम व्यूळ्ह दशरात्र दशम अहः -- ऋभुक्षण इत्य्(७.४८.१) आर्भवम् पश्वा न तायुम् इति द्वैपदम् समिद्धम् अग्निम् समिधा गिरा गृण इति(६.१५.७-९) तृचश् च द्विप्रतीकम् जातवेदस्यम् । - आश्व.श्रौ.सू. ८.१२।२४

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|---|
| १.७ | १.३७ | १.६७ | १.९७ | १.१२७ | १.१५७ | १.१८७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.८ | १.३८ | १.६८ | १.९८ | १.१२८ | १.१५८ | १.१८८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.९ | १.३९ | १.६९ | १.९९ | १.१२९ | १.१५९ | १.१८९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१० | १.४० | १.७० | १.१०० | १.१३० | १.१६० | १.१९० |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.११ | १.४१ | १.७१ | १.१०१ | १.१३१ | १.१६१ | १.१९१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१२ | १.४२ | १.७२ | १.१०२ | १.१३२ | १.१६२ | |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१३ | १.४३ | १.७३ | १.१०३ | १.१३३ | १.१६३ | |

# ऋग्वेदः सूक्तं १.६६

← सूक्तं १.६५

ऋग्वेदः - मण्डल १

सूक्तं १.६६

पराशरः शाक्त्यः

सूक्तं १.६७ →

## दे. अग्निः। द्विपदा विराट् ।

---

रयिर्न चित्रा सूरो न संदृगायुर्न प्राणो नित्यो न सूनुः ॥१॥

तक्वा न भूर्णिर्वना सिषक्ति पयो न धेनुः शुचिर्विभावा ॥२॥

दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानाम् ॥३॥

ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो वयो दधाति ॥४॥

दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै ॥५॥

चित्रो यदभ्राट् छ्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु ॥६॥

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका ॥७॥

यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥८॥

तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ॥९॥

सिन्धुर्न क्षोदः प्र नीचीरैनोन्नवन्त गावः स्वर्दृशीके ॥१०॥

## सायणभाष्यम्

'रयिः' इति दशर्चं द्वैपदमध्ययनतः पञ्चर्चं द्वितीयं सूक्तं पराशरस्यार्षमाग्नेयम् । अनुक्रान्तं च --' रयिः' इति । विनियोगो लैङ्गिकः ॥

र॒यिर्न चि॒त्रा सूरो॒ न सं॒दृगायु॒र्न प्रा॒णो नित्यो॒ न सू॒नुः ॥१

र॒यिः । न । चि॒त्रा । सूरः॑ । न । स॒म्ऽदृक् । आयुः॑ । न । प्रा॒णः । नित्यः॑ । न । सू॒नुः ॥१

रयिः । न । चित्रा । सूरः । न । सम्ऽदृक् । आयुः । न । प्राणः । नित्यः । न । सूनुः ॥१

तक्वा॒ न भूर्णि॒र्वना॑ सिषक्ति॒ पयो॒ न धे॒नुः शुचि॑र्वि॒भावा॑ ॥२

तक्वा॑ । न । भूर्णिः॑ । वना॑ । सि॒स॒क्ति॒ । पयः॑ । न । धे॒नुः । शुचिः॑ । वि॒भाऽवा॑ ॥२

तक्वा । न । भूर्णिः । वना । सिसक्ति । पयः । न । धेनुः । शुचिः । विभाऽवा ॥२

अयमग्निः “रयिर्न धनमिव “चित्रा चायनीयो विचित्ररूपो वा “सूरो न सूर्य इव “संदृक् संद्रष्टा सर्वेषां वस्तूनां दर्शयिता “आयुर्न प्राणः आयुर्मुखे संचरन् प्राणः प्रश्वसन्वायुरिव' प्रियतमः । यद्वा । यथा प्राणवायुः आयुः

जीवनमवस्थापयति । तथा चाम्नायते-’ यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' (कौ.उ.३.२) इति । एवमग्निरपि जाठररूपेणायुषोऽवस्थापयिता। “नित्यः “न “सूनुः नित्यो ध्रुवः पुत्र इव प्रियकारी। यथौरसः पुत्रः पितुर्हितमेवाचरति तद्वदयमपि हितस्य स्वर्गस्य प्रापयिता । तथा चाम्नायते-’ पुत्रः पित्रे लोककृज्जातवेदः' (तै. ब्रा. ३. ७. ७. १०) इति । “तक्वा “न गतिमानश्व इव “भूर्णिः भर्ता । यथाश्व उपर्यारूढं पुरुषं बिभर्ति धारयति पोषयति वा तद्वदयमपीत्यर्थः। “पयो “न “धेनुः पय इव प्रीणयिता “शुचिः दीप्तः “विभावा विशिष्टप्रकाशयुक्तः । एवंगुणविशिष्टोऽग्निः “वना वनान्यरण्यानि “सिषक्ति दग्धुं समवैति सेवते वा ॥ चित्रा । ‘सुपां सुलुक् ' इति सोः पूर्वसवर्णदीर्घत्वम् । नित्यः ।' नेर्ध्रुवे ' ( पा. म. ४. २. १०४ ) इति त्यप् । प्रत्ययस्य पित्त्वादनुदात्तत्वे उपसर्गस्वर एव शिष्यते । तक्वा । ‘ तक हसने ' । गतिकर्मसु पठितत्वादत्र गत्यर्थः । तकति गच्छतीति

तक्वा । अन्येभ्योऽपि दृश्यन्ते ' इति वनिप् । भूर्णिः । ‘ घृणिः पृश्निः' इत्यादौ भरतेर्निप्रत्ययान्तो निपातितः ॥

दा॒धार॒ क्षेम॒मोको॒ न र॒ण्वो यवो॒ न प॒क्वो जेता॒ जनां॑नाम् ॥ ३

दा॒धार॑ । क्षेम॑म् । ओकः॑ । न । र॒ण्वः । यवः॑ । न । प॒क्वः । जेता॑ । जनां॑नाम् ॥३

दाधार । क्षेमम् । ओकः । न । रण्वः । यवः । न । पक्वः । जेता । जनानाम् ॥३

ऋषि॒र्न स्तुभ्वा॑ वि॒क्षु प्र॑श॒स्तो वा॒जी न प्री॒तो वयो॑ दधाति ॥ ४

ऋषिः॑ । न । स्तुभ्वा॑ । वि॒क्षु । प्र॒ऽश॒स्तः । वा॒जी । न । प्री॒तः । वयः॑ । द॒धा॒ति॒ ॥४

ऋषिः । न । स्तुभ्वा । विक्षु । प्रऽशस्तः । वाजी । न । प्रीतः । वयः । दधाति ॥४

अयमग्निः “क्षेमं लब्धस्य धनस्य रक्षणं “दाधार धारयति । स्तोतृभ्यो दत्तस्य धनस्य रक्षणं कर्तुं शक्नोतीति भावः । “ओको “न निवासस्थानं गृहमिव “रण्वः रमणीयः । यद्वा । गन्तव्यः । गृहवत् सर्वैः प्राप्यते इत्यर्थः। "यवो “न यव इव “पक्वः । यथा पक्वो यव उपभोगयोग्यः भवति तद्वदग्निरपि पाकादिकार्यहेतुतया उपभोग्यः इत्यर्थः । “जनानां “जेता शत्रुजनानां मध्येऽभिभविता “ऋषिर्न मन्त्रद्रष्टा ऋषिरिव "स्तुभ्वा देवानां स्तोता "विक्षु यजमानलक्षणेषु मनुष्येषु “प्रशस्तः प्रख्यातः “वाजी “न अश्व इव "प्रीतः हर्षयुक्तः । यथाश्वो हर्षयुक्तो युद्धाभिमुखं गच्छति तद्वदयमपि देवानां हविर्वहने हर्षयुक्तो भवतीत्यर्थः । एवंभूतोऽग्निः “वयः अन्नं “दधाति दधातु । अस्मभ्यं ददात्वित्यर्थः । वय इत्यन्ननाम। ‘ वयः क्षद्म' इति

तन्नामसु पाठात् ॥ दाधार । तुजादीनाम् ' इति अभ्यासस्य दीर्घत्वम् । क्षेमम् । क्षियति निवसत्यनेनेति क्षेमः । ' अर्तिस्तुसु ' इत्यादिना मन् । नित्त्वादाद्युदात्तत्वम् । रण्वः । ' रवि धवि गत्यर्थाः । अस्मात् कर्मणि कप्रत्ययः । इदित्त्वात् नुम् । जेता । तृनन्त आद्युदात्तः । जनानाम् । यतश्च निर्धारणम् ' ( पा. सू. २. ३. ४१ ) इति निर्धारणे षष्ठी, नेयं कर्मणि षष्ठी इति 'न लोकाव्ययनिष्ठा । इति षष्ठीप्रतिषेधो न भवति । स्तुभ्वा। स्तोभतिः स्तुतिकर्मा । ' अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप्॥

दु॒रोक॑शोचि॒ः क्रतु॒र्न नित्यो॑ जा॒येव॒ योना॒वर॒॑ विश्वं॑स्मै ॥५

दु॒रोक॑ऽशोचिः । क्रतु॑ः । न । नित्य॑ः । जा॒याऽइ॑व । योनौ॑ । अर॑म् । विश्वं॑स्मै ॥५

दुरोकऽशोचिः । क्रतुः । न । नित्यः । जायाऽइव । योनौ । अरम् । विश्वस्मै ॥५

चि॒त्रो यदभ्रांट् छ्वे॒तो न वि॒क्षु रथो॒ न रु॒क्मी त्वे॒षः स॒मत्सुं ॥६

चि॒त्रः । यत् । अभ्रांट् । श्वे॒तः । न । वि॒क्षु । रथः॑ । न । रु॒क्मी । त्वे॒षः । स॒मत्ऽसुं ॥६

चित्रः । यत् । अभ्राट् । श्वेतः । न । विक्षु । रथः । न । रुक्मी । त्वेषः । समत्ऽसु ॥६

"दुरोकशोचिः दुष्प्रापतेजाः “क्रतुर्न “नित्यः। क्रतुः कर्मणां कर्ता । स इव ध्रुवः । यथा सः कर्मसु ध्रुवोऽप्रमत्तः सन् जागर्ति तद्वदयमप्यग्निः कर्मसु रक्षसां दहने ध्रुवो जागर्तीत्यर्थः । “योनौ गृहे वर्तमाना “जायेव योषिदिव अग्निहोत्रादिगृहे वर्तमानो वह्निः “विश्वस्मै सर्वस्मै

यष्टृजनाय "अरम् अलं भूषणं भवति । यथा जायया गृहमलंकृतं भवति तद्वदग्निना यज्ञगृहमप्यलंकृतं सत् दृश्यते इत्यर्थः । “चित्रः चायनीयो विचित्रदीप्तिर्वा “यत् यदायमग्निः “अभ्राट् भ्राजते तदानीं “श्वेतो “न शुभ्रवर्ण आदित्य इव भवति। रात्रौ हि अहनि सूर्य इवाग्निः' प्रकाशको भवति । "विक्षु प्रजासु “रथो “न रथ इव “रुक्मी सुवर्णवद्रोचमानदीप्तियुक्तः “समत्सु संग्रामेषु “त्वेषः दीप्तः । एवंभूतोऽग्निर्यदभ्राडिति पूर्वेणान्वयः ॥ दुरोकशोचिः । ‘ उच समवाये । ‘ ईषद्दुःसुषु° ' इति कृच्छ्रार्थे खल् । बहुलवचनात् कुत्वम् । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । दुरोकं शोचिस्तेजो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अरम् । वालमूल° ' ( पा. म. ८. २. १८) इत्यादिना लकारस्य रेफादेशः । अभ्राट् । ‘ भ्राजृ दीप्तौ ' । लङि व्यत्ययेन परस्मैपदम् । ‘ बहुलं छन्दसि ' इति शपो लुक् । व्रश्चादिषत्वे जश्त्वम्। अडागम उदात्तः । यद्वृत्तयोगादनिघातः। समत्सु । समानं

माद्यन्त्येष्विति समदः संग्रामाः । औणादिकः अधिकरणे क्विप्। समानस्य च्छन्दसि ' इति सभावः । यद्वा । सम्यगत्ति भक्षयति वीरानिति समत् । संपूर्वादत्तेः ‘क्विप् च ' इति क्विप् ॥

सेनेंव सृ॒ष्टामं दधा॒त्यस्तु॒र्न दि॒द्युत्त्वे॒षप्रं॑तीका ॥७

सेनां॑ऽइव । सृ॒ष्टा । अमं॑म् । द॒धा॒ति॒ । अस्तुः॑ । न । दि॒द्युत् । त्वे॒षऽप्रं॑तीका ॥७

सेनाऽइव । सृष्टा । अमम् । दधाति । अस्तुः । न । दिद्युत् । त्वेषऽप्रतीका ॥७

य॒मो हं जा॒तो य॒मो जनिं॑त्वं जा॒रः क॒नीना॒ं पति॒र्जनीं॑नाम् ॥ ८

य॒मः । ह॒ । जा॒तः । य॒मः । जनिं॑ऽत्वम् । जा॒रः । क॒नीनां॑म् । पतिः॑ । जनीं॑नाम् ॥८

यमः । ह । जातः । यमः । जनिऽत्वम् । जारः । कनीनाम् । पतिः । जनीनाम् ॥८

“सृष्टा प्रेरिता “सेनेव स्वामिना सह वर्तमाना भटसंहतिरिव अयमग्निः "अमं शत्रूणां भयं दधाति विदधाति । करोतीत्यर्थः । यद्वा । सृष्टा सेनेव अमं बलं दधाति । स यथा बलवती तद्वदग्निरपि बलवानित्यर्थः । निदर्शनान्तरमुच्यते । दिद्युदिति वज्रनाम । तेन चात्रेषुर्लक्ष्यते । “त्वेषप्रतीका दीप्तमुखा “अस्तुर्न दिद्युत् क्षेप्तुः संबन्धिनी इषुरिव । सो यथा भीषयते तद्वदग्निरपि राक्षसादीन् भीषयते इत्यर्थः । अत्र निरुक्तं-- सेनेव सृष्टा भयं वा बलं वा दधात्यस्तुरिव दिद्युत्त्वेषप्रतीका' ( निरु. १०. २१ ) इत्यादि । यच्छति ददाति स्तोतृभ्यः कामानिति

यमोऽग्निरुच्यते । यद्वा ।
इन्द्राग्न्योर्युगपदुत्पन्नत्वादग्नेर्यमत्वम् । अस्मिन्नर्थे यास्केन मन्त्रब्राह्मणे दर्शिते-' यमो ह जात इन्द्रेण सह संगतः । यमाविहेह मातरेत्यपि निगमो भवति' ( निरु. १०, २१ ) इति । यः "जातः उत्पन्नो भूतसंघो यच्च "जनित्वं जनयितव्यमुत्पत्स्यमानं भूतजातं तदुभयमपि "यमो "ह अग्निरेव। सर्वेषां भावानामाहुतिद्वारा अग्न्यधीनत्वात् । "कनीनां कन्यकानां "जारः जरयिता । यतो विवाहसमये अग्नौ लाजादिद्रव्यहोमे सति तासां कन्यात्वं निवर्तते । अतो जरयितेत्युच्यते । तथा "जनीनां जायानां कृतविवाहानां "पतिः भर्ता । तथा चाख्यायते-
अनुपजातपुरुषसंभोगेच्छावस्थां स्त्रियं सोमो लेभे । स च सोमः ईषदुपजातभोगेच्छां तां विश्वावसवे गन्धर्वाय प्रादात् । स च गन्धर्वो विवाहसमयेऽग्नये प्रददौ । अग्निश्च मनुजाय भर्त्रे धनपुत्रैः सहितामिमां प्रायच्छत् ' इति ।
इममर्थं काचिदृक् स्पष्टं ब्रूते-'सोमो ददद्गन्धर्वाय गन्धर्वो

ददद‍ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ' ( ऋ. सं. १०. ८५. ४१ ) इति । यास्कस्त्वाह- तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति' ( निरु. १०. २१ ) इति । यद्वा । जनीनां पालयिता यतोऽयम् अनुष्ठितैर्यागैः फलं प्रयच्छति ॥ सेनेव । इनेन सह वर्तते इति सेना । ' वोपसर्जनस्य ' इति सभावः । बहुव्रीहिस्वरः । जनित्वम् । जनी प्रादुर्भावे'। ' कृत्यार्थे तवैकेन् इति कर्मणि त्वन्प्रत्ययः । इडागमः । नित्त्वादाद्युदात्तत्वम् । जारः । जरयतीति जारः । दारजारौ कर्तरि णिलुक् च' (पा. सू. ३. ३. २०. ४ ) इति निपात्यते । कनीनाम् । कन्याशब्दात षष्ठ्येकवचने ' बहुलं छन्दसि ' इति बहुलग्रहणात् संप्रसारणम् । परपूर्वत्वम् । जनीनाम् । जन्यन्ते आसु इति जनयः स्त्रियः । ' इन्सर्वधातुभ्यः' इति इन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

तं व॑श्च॒राथा॑ व॒यं व॑स॒त्यास्तं॒ न गावो॒ नक्ष॑न्त इ॒द्धम् ॥९

तम् । व॒ः । च॒राथा॑ । व॒यम् । व॒स॒त्या । अस्त॑म् । न । गाव॑ः । नक्ष॑न्ते । इ॒द्धम् ॥९

तम् । वः । चराथा । वयम् । वसत्या । अस्तम् । न । गावः । नक्षन्ते । इद्धम् ॥९

सिन्धु॒र्न क्षोद॒ः प्र नीची॑रैनो॒न्नव॑न्त॒ गाव॒ः स्व१॒॑र्दृशी॑के ॥ १०

सिन्धु॑ः । न । क्षोद॑ः । प्र । नीची॑ः । ऐ॒नो॒त् । नव॑न्त । गाव॑ः । स्व॑ः । दृशी॑के ॥१०

सिन्धुः । न । क्षोदः । प्र । नीचीः । ऐनोत् । नवन्त । गावः । स्वः । दृशीके ॥१०

“वः इति व्यत्ययेन बहुवचनम्। हे अग्ने “तं त्वां “चराथा। चरतीति चरथः पशुः । तत्प्रभवैर्हृदयादिभिः साध्या आहुतिरपि चरथा इत्युच्यते । उपचारात् कार्ये कारणशब्दः । चराथा चरथया पशुप्रभवहृदयादिसाधनया आहुत्या । "वसत्या । वसति निवसतीति स्थावरो व्रीह्यादिर्वसतिः। पूर्ववत् तत्साध्याहुतिर्लक्ष्यते । वसत्या पुरोडाशाद्याहुत्या च “वयम् “इद्धं प्रदीप्तमग्निं “नक्षन्ते व्याप्नुयाम । पुरुषव्यत्ययः । तत्र दृष्टान्तः। “अस्तं “न “गावः । अस्तमिति गृहनाम। यथा गावो गृहं व्याप्नुवन्ति तद्वत् । अत्र यास्कः- ‘तं वश्चराथा चरन्त्या पश्वाहुत्या वसत्या च निवसन्त्यौषधाहुत्यास्तं यथा गाव आप्नुवन्ति तथाप्नुयाम' ( निरु. १०. २१) इति । अयमग्निः सिन्धुर्न “क्षोदः स्यन्दनशीलमुदकमिव "नीचीः नितरामञ्चतीः इतस्ततो नितरामुद्गच्छन्तीर्ज्वालाः “प्र “ऐनोत् प्रेरयति । यथा जलप्रवाहो निम्नदेशे शीघ्रं गच्छति तद्वदग्नेर्ज्वालाः दग्धव्यं प्रति गच्छन्तीति भावः । “स्वः नभसि वर्तमाने

“दृशीके दर्शनीये तस्मिन्नग्नौ “गावः गमनस्वभावा रश्मयः “नवन्त संगच्छन्ते । नवतिर्गतिकर्मा ॥ चराथा । चरेरौणादिकः अथक्प्रत्ययः । दीर्घश्छान्दसः । सुपां सुलुक् ' इति विभक्तेः आकारः । वसत्या । ‘ वहिवस्यर्तिभ्यश्चित्' (उ, सू. ४, ५०० ) इति अतिप्रत्ययः । ‘ उदात्तयणः०' इति विभक्तेरुदात्तत्वम् । अस्तम् । अस्यते अस्मिन् सर्वमित्यस्तं गृहम् । ‘असिहसि' इत्यादिना तन्। 'तितुत्र' इति इट्प्रतिषेधः । नित्त्वादाद्युदात्तत्वम् । नक्षन्ते । नक्षतिर्व्याप्तिकर्मा । ' नक्ष गतौ । व्यत्ययेनात्मनेपदम् । चादिलोपे विभाषा ' इति निघाताभावः । नीचीः । निपूर्वात् ' अञ्चतेश्चोपसंख्यानम् ' ( पा. सू. ४. १. ६. २ ) इति ङीप् ।' अचः' इति अकारलोपे ' चौ ' इति दीर्घत्वम् । ‘न्यधी च ' ( पा. सू. ६. २. ५३) इति गतेः प्रकृतिस्वरत्वम् । ऐनोत् । • इण् गतौ ' । अन्तर्भावितण्यर्थात् छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङि व्यत्ययेन श्नुः । आडागमो वृद्धिश्च । दृशीके । “ दृशिर् प्रेक्षणे ' । “

अनिदृशिभ्यां च ' इति कीकन्प्रत्ययः ।
नित्त्वादाद्युदात्तत्वम् ।।

# ऋग्वेदः सूक्तं १.६७


ऋग्वेदः - मण्डल १

← सूक्तं १.६६

सूक्तं १.६७

सूक्तं १.६८ →


पराशरः शाक्त्यः

## दे. अग्निः। द्विपदा विराट्।

वनेषु जायुर्मर्तेषु मित्रो वृणीते श्रुष्टिं राजेवाजुर्यम् ॥१॥

क्षेमो न साधुः क्रतुर्न भद्रो भुवत्स्वाधीर्होता हव्यवाट् ॥२॥

हस्ते दधानो नृम्णा विश्वान्यमे देवान्धाद्गुहा निषीदन् ॥३॥

विदन्तीमत्र नरो धियंधा हृदा यत्तष्टान्मन्त्राँ अशंसन् ॥४॥

अजो न क्षां दाधार पृथिवीं तस्तम्भ द्यां मन्त्रेभिः सत्यैः ॥५॥

प्रिया पदानि पश्वो नि पाहि विश्वायुरग्ने गुहा गुहं गाः ॥६॥

य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य ॥७॥

वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्र ववाचास्मै ॥८॥

वि यो वीरुत्सु रोधन्महित्वोत प्रजा उत प्रसूष्वन्तः ॥९॥

चित्तिरपां दमे विश्वायुः सद्मेव धीराः सम्माय चक्रुः ॥१०॥

## सायणभाष्यम्

वनेषु' इति द्वैपदं दशर्चम्' अध्ययनतः पञ्चर्चं तृतीयं सूक्तं पराशरस्यार्षमाग्नेयम् । वनेषु' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

वनें॑षु जा॒युर्मर्ते॑षु मि॒त्रो वृ॑णी॒ते श्रु॒ष्टिं राजे॑वाजु॒र्यम् ॥१

वनेंषु । जा॒युः । मर्तेंषु । मि॒त्रः । वृ॒णी॒ते । श्रु॒ष्टिम् ।
राजांऽइव । अ॒जु॒र्यम् ॥१

वनेषु । जायुः । मर्तेषु । मित्रः । वृणीते । श्रुष्टिम् ।
राजाऽइव । अजुर्यम् ॥१

क्षेमो॒ न सा॒धुः क्रतु॒र्न भ॒द्रो भुवंत्स्वा॒धीर्होतां हव्य॒वाट् ॥२

क्षेमः॑ । न । सा॒धुः । क्रतुः॑ । न । भ॒द्रः । भुवंत् । सु॒ऽआ॒धीः
। होतां । ह॒व्य॒ऽवाट् ॥२

क्षेमः । न । साधुः । क्रतुः । न । भद्रः । भुवत् । सुऽआधीः
। होता । हव्यऽवाट् ॥२

“वनेषु जायुः अरण्येषु जायमानः “मर्तेषु मनुष्येषु “मित्रः
सखा सोऽयमग्निः “श्रुष्टिम् । शु आशु अश्नुते कर्माणि
व्याप्नोतीति श्रुष्टिर्यजमानः । क्षिप्रेण कर्मणामनुष्ठातेत्यर्थः।
तथा च यास्कः-’ श्रुष्टीति क्षिप्रनामाशु अष्टीति' (निरु.

६.१२) । एवंभूतं यजमानं “वृणीते संभजते । अनेन प्रत्तं हविः स्वीकृत्य रक्षतीति भावः । तत्र दृष्टान्तः । “राजेव “अजुर्यम् । अजुर्यं जरारहितं दृढाङ्गं सर्वकार्येषु शक्तमित्यर्थः। एवंभूतं पुरुषं यथा राजा वृणीते तद्वत् । “क्षेमो “न रक्षक इव "साधुः साधयिता “क्रतुर्न । क्रतुः कर्मणां कर्ता । स इव “भद्रः भजनीयः कल्याणो वा “होता देवानामाह्वाता “हव्यवाट् हव्यवाहनो नाम देवानामग्निः । तथा चाम्नायते- 'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणां सहरक्षा असुराणाम् । (तै. सं. २. ५.८.६) इति । एवंभूतोऽग्निः “स्वाधीः शोभनकर्मा शोभनाध्यानः वा “भुवत् भवतु ॥ जायुः । ‘ जि जये'।' कृवापाजि° ' इति उण् । अजुर्यम् । जॄष् वयोहानौ । भावे ण्यत् । वृद्धौ कृतायाम् आकारस्य व्यत्ययेन उकारः। जुर्यं जरा नास्त्यस्येति बहुव्रीहौ ‘नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । भुवत् । भवतेर्लेटि

अडागमः । ‘ बहुलं छन्दसि ' इति विकरणस्य लुक् ।
भूसुवास्तिङि' इति गुणप्रतिषेधः ॥

हस्ते॒ दधा॑नो नृ॒म्णा विश्वा॒न्यमे॑ दे॒वान्धा॒द्गुहा॑ नि॒षीद॑न् ॥३

हस्ते॑ । दधा॑नः । नृ॒म्णा । विश्वा॑नि । अमे॑ । दे॒वान् । धा॒त् ।
गुहा॑ । नि॒ऽसीद॑न् ॥३

हस्ते । दधानः । नृम्णा । विश्वानि । अमे । देवान् । धात् ।
गुहा । निऽसीदन् ॥३

वि॒दन्ती॒मत्र॒ नरो॑ धियं॒धा हृ॒दा यत्त॒ष्टान्मन्त्राँ॒ अशं॑सन् ॥४

वि॒दन्ति॑ । ई॒म् । अत्र॑ । नरः॑ । धि॒य॒म्ऽधाः । हृ॒दा । यत् ।
त॒ष्टान् । मन्त्रा॑न् । अशं॑सन् ॥४

विदन्ति । ईम् । अत्र । नरः । धियम्ऽधाः । हृदा । यत् । तष्टान् । मन्त्रान् । अशंसन् ॥४

“विश्वानि सर्वाणि “नृम्णा नृम्णानि हविर्लक्षणानि धनानि “हस्ते स्वकीये बाहौ “दधानः धारयन्नयमग्निः “गुहा गुहायामप्सु मध्येऽश्वत्थादौ वा संवृतप्रदेशे “निषीदन् निगूढो वर्तमानः सन् “अमे भये "देवान् “धात अस्थापयत् । अग्नौ हविर्भिः सह पलायिते सति सर्वे देवा अभैषुरित्यर्थः । “नरः नेतारः “धियंधाः कर्मणां बुद्धीनां वा धारयितारो देवाः “अत्र अस्मिन् काले “ईम् एनमग्निं “विदन्ति जानन्ति । “यत् यदा “हृदा हृदयावस्थितया बुद्ध्या “तष्टान् निर्मितान् अग्निस्तुतिपरान् “मन्त्रान् “अशंसन् अस्तुवन् अवोचन्नित्यर्थः ॥ निषीदन् । सदिरप्रतेः' इति षत्वम् । विदन्ति । ‘ विद ज्ञाने ' । अदादित्वात् शपो लुक् । प्रत्ययस्वरः । धियंधाः । अतोऽनुपसर्गे कः' इति कः । ‘ तत्पुरुषे कृति बहुलम् '

इति बहुलवचनात् द्वितीयाया अपि अलुक् । तष्टान् । ‘ तक्षू त्वक्षू तनूकरणे' । निष्ठा । “यस्य विभाषा' इति इट्प्रतिषेधः । ‘ स्कोः संयोगाद्योः० ' इति कलोपः ॥

अ॒जो न क्षां दा॒धारं पृथि॒वीं त॒स्तम्भ॒ द्यां मन्त्रेंभिः स॒त्यैः ॥ ५

अ॒जः । न । क्षाम् । दा॒धारं । पृ॒थि॒वीम् । त॒स्तम्भं । द्याम् । मन्त्रेंभिः । स॒त्यैः ॥५

अजः । न । क्षाम् । दाधार । पृथिवीम् । तस्तम्भ । द्याम् । मन्त्रेभिः । सत्यैः ॥५

प्रि॒या प॒दानिं प॒श्वो नि पांहि वि॒श्वायुंरग्ने गु॒हा गुहं गाः ॥६

प्रि॒या । प॒दानिं । प॒श्वः । नि । पा॒हि॒ । वि॒श्वऽआंयुः । अ॒ग्ने॒ । गु॒हा । गुहंम् । गा॒ः ॥६

प्रिया । पदानि । पश्वः । नि । पाहि । विश्वऽआयुः । अग्ने । गुहा । गुहम् । गाः ॥६

“अजो “न । अजति गच्छतीत्यजः सूर्यः । यद्वा । न जायते इत्यजः । जन्मरहित इत्यर्थः। स इव। क्षा इति पृथिवीनाम। “क्षां भूमिं “दाधार अयमग्निः प्रकाशकत्वेन धारयति । पृथिवीत्यन्तरिक्षनाम। "पृथिवीम् अन्तरिक्षं च धारयतीत्येव । “द्यां द्युलोकं “सत्यैः अवितथार्थैः "मन्त्रेभिः मन्त्रैः “तस्तम्भ स्तभ्नाति । यथाधो न पतति उपर्येव तिष्ठति तथा करोतीत्यर्थः । मन्त्रैर्दिवो धारणं तैत्तिरीये समाम्नातं- देवा वा आदित्यस्य सुवर्गस्य लोकस्य पराचोऽतिपादादबिभयुः । तं छन्दोभिरदृंहन्धृत्यै ( तै. ब्रा. १. २. ४. २ ) इति। यद्वा । सव्यैर्मन्त्रैः स्तूयमानोऽग्निर्यां तस्तम्भेति । हे "अग्ने “विश्वायुः विश्वं सर्वमायुरन्नं यस्य स त्वं “पश्वः पशोः “प्रिया प्रियाणि “पदानि शोभनतृणोदकोपेतानि स्थानानि “नि “पाहि नितरां पालय

मा धाक्षीरित्यर्थः । तर्हि कुत्र निवसामीति चेत् तत्राह।
"गुहा गुहाया अपि “गुहं गुहां गवां संचारायोग्यस्थानं “गाः गच्छ तत्रैव निवसेत्यर्थः ॥ पश्वः । ‘ जसादिषु च्छन्दसि वावचनम् ' इति ‘घेर्ङिति ' इति गुणाभावे यणादेशः । ‘ उदात्तयणः० ' इति विभक्तेरुदात्तत्वम् । गुहा । ‘सुपां सुलुक्° ' इति पञ्चम्या आजादेशः । चित्त्वादन्तोदात्तत्वम् । गुहम् । व्यत्ययेन ह्रस्वत्वम् । गाः । छान्दसो लुङ् । ' इणो गा लुङि' इति गादेशः ॥

य ईं चि॒केत॒ गुहा॒ भवं॑न्त॒मा यः स॒साद॒ धारां॑मृ॒तस्यं॑ ॥७

यः । ई॒म् । चि॒केतं॑ । गुहां॑ । भवं॑न्तम् । आ । यः । स॒सादं॑ । धारां॑म् । ऋ॒तस्यं॑ ॥७

यः । ईम् । चिकेत । गुहा । भवन्तम् । आ । यः । ससाद । धाराम् । ऋतस्य ॥७

वि ये चृ॒तन्त्यृ॒ता सपं॑न्त॒ आदिद्वसूं॑नि॒ प्र वं॑वाचास्मै ॥८

वि । ये । चृ॒तन्तिं॑ । ऋ॒ता । सपं॑न्तः । आत् । इत् । वसूं॑नि । प्र । व॒वा॒च॒ । अ॒स्मै॒ ॥८

वि । ये । चृतन्ति । ऋता । सपन्तः । आत् । इत् । वसूनि । प्र । ववाच । अस्मै ॥८

“यः पुमान् “ईम् एनं “गुहा “भवन्तं गुहायां सन्तमग्निं “चिकेत जानाति । “यः च “ऋतस्य सत्यस्य यज्ञस्य वा “धारां धारयितारमेनमग्निम् “आ “ससाद आसीदति उपास्ते इत्यर्थः । “ये च “ऋता ऋतानि सत्यानि यज्ञान् वा "सपन्तः समवयन्तः स्पृशन्तो वा पुरुषा एतमग्निं “वि “चृतन्ति अग्निमुद्दिश्य स्तुतीर्ग्रथ्नन्ति कुर्वन्तीत्यर्थः । “आदित् स्तुत्यनन्तरमेव “अस्मै सर्वस्मै स्तोतृजनाय “वसूनि धनानि “प्र “ववाच प्रकथयति ॥ चिकेत । ‘ कित ज्ञाने '। लिटि णलि लित्स्वरः । चृतन्ति । ‘चृती

हिंसाग्रन्थनयोः' । तौदादिकः । लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते । ववाच । लिटि 'ब्रुवो वचिः । ' लिट्यभ्यासस्योभयेषाम् ' ( पा. सू. ६. १. १७ ) इति अभ्यासस्य संप्रसारणम् । ' संप्रसारणाच ' इति परपूर्वत्वस्य ' वा छन्दसि ' ( पा. सू. ६. १. १०६ ) इति विकल्पनात् यणादेशः ॥

वि यो वी॒रुत्सु॒ रोध॑न्महि॒त्वोत प्र॒जा उ॒त प्र॒सूष्व॒न्तः ॥९

वि । यः । वी॒रुत्ऽसु॑ । रोध॑त् । म॒हि॒ऽत्वा । उ॒त । प्र॒ऽजाः । उ॒त । प्र॒ऽसूषु॑ । अ॒न्तरिति॑ ॥९

वि । यः । वीरुत्ऽसु । रोधत् । महिऽत्वा । उत । प्रऽजाः । उत । प्रऽसूषु । अन्तरिति ॥९

चित्तिं॑र॒पां दमे॑ वि॒श्वायु॑ः सद्मे॑व॒ धीरा॑ः स॒म्माय॑ चक्रुः ॥ १०

चित्ति॑ः । अ॒पाम् । दमे॑ । वि॒श्वऽआ॑युः । सद्म॑ऽइव । धीरा॑ः । स॒म्ऽमाय॑ । च॒क्रु॒ः ॥१०

चित्तिः । अपाम् । दमे । विश्वऽआयुः । सद्मऽइव । धीराः । सम्ऽमाय । चक्रुः ॥१०

“यः अग्निः “वीरुत्सु ओषधीषु “महित्वा यानि महत्त्वानि सन्ति तानि “वि “रोधत् विरुणद्धि विशेषेणावृणोति नावशेषयति। "उत अपि च "प्रजाः प्रकर्षेणोत्पन्नाः पुष्पफलादिलक्षणाः “प्रसूषु उत्पादयित्रीषु मातृस्थानीयास्वोषधीषु “अन्तः मध्ये विरुणद्धीत्येव। द्वितीयः उतशब्दः पादपूरणः । तथा “चित्तिः चेतयिता ज्ञापयिता “अपां “दमे जलानां मध्यभूते गृहे "विश्वायुः सर्वान्नो योऽग्निर्वर्तते इति शेषः । तमग्निं “धीराः मेधाविनः

“संमाय संमाननं पूजनं कृत्वा । स्तुतिभिः स्तुत्वेत्यर्थः । “चक्रुः कर्माणि कुर्वन्ति । तत्र दृष्टान्तः । "सद्मेव । यथा सदनं गृहं प्रथमतः संपूज्य पश्चात्तत्र कर्माण्याचरन्ति तद्वत् ॥ वीरुत्सु । विपूर्वात् रोहतेः क्विप् । न्यङ्क्वादिषु वीरुध्' (पा. सू. ७. ३.५३. ग.) इति पठितत्वादुपसर्गस्य दीर्घो धकारश्चान्तादेशः । उक्तं च । वीरुध ओषधयो भवन्ति ' ( निरु. ६. ३ )। रोधत् ।' रुधिर् आवरणे'। लेटि अडागमः । ‘ इतश्च लोपः' इति इकारलोपः । संमाय । माङ् माने शब्दे च'। ‘ समासेऽनञ्पूर्वे क्त्वो ल्यप् ' ( पा. सू. ७. १. ३७)। ‘न ल्यपि ' ( पा. सू. ६. ४. ६९ ) इति ईत्वप्रतिषेधः ॥ ॥ ११ ॥

# ऋग्वेदः सूक्तं १.६८

← सूक्तं १.६७

ऋग्वेदः - मण्डल १

सूक्तं १.६८

पराशरः शाक्त्यः

सूक्तं १.६९ →

## दे. अग्निः। द्विपदा विराट्

श्रीणन्नुप स्थाद्दिवं भुरण्यु स्थातुश्चरथमक्तून्व्यूर्णोत् ॥१॥

परि यदेषामेको विश्वेषां भुवद्देवो देवानां महित्वा ॥२॥

आदित्ते विश्वे क्रतुं जुषन्त शुष्काद्यद्देव जीवो जनिष्ठाः ॥३॥

भजन्त विश्वे देवत्वं नाम ऋतं सपन्तो अमृतमेवैः ॥४॥

ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः ॥५॥

यस्तुभ्यं दाशाद्यो वा ते शिक्षात्तस्मै चिकित्वान्रयिं दयस्व ॥६॥

होता निषत्तो मनोरपत्ये स चिन्न्वासां पती रयीणाम् ॥७॥

इच्छन्त रेतो मिथस्तनूषु सं जानत स्वैर्दक्षैरमूराः ॥८॥

पितुर्न पुत्राः क्रतुं जुषन्त श्रोषन्ये अस्य शासं तुरासः ॥९॥

वि राय और्णोद्दुरः पुरुक्षुः पिपेश नाकं स्तृभिर्दमूनाः ॥१०॥

## सायणभाष्यम्

‘ श्रीणन्' इति द्वैपदं दशर्चं चतुर्थं सूक्तम् । तत्राध्ययनतः पञ्चर्चम् । ऋष्याद्याः पूर्ववत्। विनियोगो लैङ्गिकः ।।

श्री॒णन्नुपं स्था॒द्दिवं भु॒र॒ण्युः स्था॒तुश्च॒रथं॑म॒क्तून्व्यूं॑र्णोत् ॥१

श्री॒णन् । उपं । स्था॒त् । दिवं॑म् । भु॒र॒ण्युः । स्था॒तुः ।
च॒रथं॑म् । अ॒क्तून् । वि । ऊ॒र्णो॒त् ॥१

श्रीणन् । उप । स्थात् । दिवम् । भुरण्युः । स्थातुः ।
चरथम् । अक्तून् । वि । ऊर्णोत् ॥१

परि॒ यदे॑षा॒मेको॒ विश्वे॑षां॒ भुवं॑द्दे॒वो दे॒वानां॑ महि॒त्वा ॥२

परिं । यत् । ए॒षा॒म् । एकः॑ । विश्वे॑षाम् । भुवं॑त् । दे॒वः ।
दे॒वानां॑म् । म॒हि॒ऽत्वा ॥२

परि । यत् । एषाम् । एकः । विश्वेषाम् । भुवत् । देवः ।
देवानाम् । महिऽत्वा ॥२

“भुरण्युः हविषां भर्ता धारयिता पयःप्रभृतिना
श्रयणद्रव्येण सोममिव तैर्हविर्भिः “श्रीणन् मिश्रयन्
“दिवम् “उप "स्थात् उपतिष्ठति प्राप्नोतीत्यर्थः । “स्थातुः
स्थावरं “चरथं जङ्गमं तदुभयात्मकं जगत् “अक्तून् सर्वा

रात्रीश्च “व्यूर्णोत् स्वतेजसा विशेषेणाच्छादयति । हविर्वहनं कुर्वन् सर्वमपि जगत् स्वभासा प्रकाशयति स्म इति भावः । “विश्वेषां सर्वेषां देवानां दानादिगुणयुक्तानां इन्द्रादीनां मध्ये “देवः द्योतमानः “एकः एव अयमग्निः “एषां पूर्वोक्तानां स्थावरादीनां “महित्वा महत्त्वानि माहात्म्यानि “यत् यस्मात् “परि “भुवत् परिभवति परिगृह्णाति परितो व्याप्य वर्तते । परिपूर्वो भवतिः परिग्रहार्थः । यद्वा । एषां विश्वेषां स्थावरादीनां मध्ये वर्तमानोऽयं देवोऽग्निर्देवानां महत्त्वानि यत् यदा परि भुवत् परितो व्याप्नोति। तदानीमिति पूर्वत्रान्वयः ॥ ऊर्णोत् । ‘ ऊर्णुञ् आच्छादने '। ‘ ऊर्णोतेर्विभाषा' (पा. सू. ७. २. ६ ) इति वृद्धेर्विकल्पः ।।

आदित्ते॒ विश्वे॒ क्रतुं॑ जुषन्त॒ शुष्का॒द्यद्दे॑व जी॒वो जनि॑ष्ठाः ॥३

आत् । इत् । ते॒ । विश्वे॑ । क्रतु॑म् । जु॒ष॒न्त॒ । शुष्का॑त् । यत् । दे॒व॒ । जी॒वः । जनि॑ष्ठाः ॥३

आत् । इत् । ते । विश्वे । क्रतुम् । जुषन्त । शुष्कात् । यत् । देव । जीवः । जनिष्ठाः ॥३

भज॑न्त॒ विश्वे॑ देव॒त्वं नाम॑ ऋ॒तं सप॑न्तो अ॒मृत॒मेवैः॑ ॥४

भज॑न्त । विश्वे॑ । दे॒व॒ऽत्वम् । नाम॑ । ऋ॒तम् । सप॑न्तः । अ॒मृत॑म् । एवैः॑ ॥४

भजन्त । विश्वे । देवऽत्वम् । नाम । ऋतम् । सपन्तः । अमृतम् । एवैः ॥४

हे “देव द्योतमानाग्ने “जीवः जीवन् प्रज्वलन् “शुष्कात् नीरसात् अरणिरूपात काष्ठात् “यत् यदा “जनिष्ठाः प्रादुर्भवसि मथनेनोत्पद्यसे “आदित् अनन्तरमेव “विश्वे सर्वे यजमानाः “ते तुभ्यं “क्रतुं कर्म “जुषन्त सेवन्ते

अनुतिष्ठन्ति । तथा अनुष्ठाय च "विश्वे ते सर्वे “नाम नामकम् “ऋतम् अवितथं "देवत्वं देवतात्वं “भजन्त भजन्ते प्राप्नुवन्ति । किं कुर्वन्तः । “अमृतम् अमरणं त्वाम् “एवैः त्वां गन्तृभिः स्तोत्रैः “सपन्तः समवयन्तः प्राप्नुवन्तः इत्यर्थः ॥ जुषन्तेत्यादीनि त्रीण्याख्यातानि ‘ छन्दसि लुङ्लङ्लिटः' इति वर्तमानार्थानि । एवैः । यन्ति स्तोतव्याभिमुख्येन गच्छन्ति इति एवानि स्तोत्राणि । ‘ इण्शीङ्भ्यां वन्' ( उ. सू. १. १५० ) ॥

ऋ॒तस्य॒ प्रेषा॑ ऋ॒तस्य॑ धी॒तिर्वि॒श्वायु॒र्विश्वे॒ अपां॑सि चक्रुः ॥५

ऋ॒तस्य॑ । प्रेषाः॑ । ऋ॒तस्य॑ । धी॒तिः । वि॒श्वऽआ॑युः । विश्वे॑ । अपां॑सि । च॒क्रुः॒ ॥५

ऋतस्य । प्रेषाः । ऋतस्य । धीतिः । विश्वऽआयुः । विश्वे । अपांसि । चक्रुः ॥५

यस्तुभ्यं दाशाद्यो वां ते शिक्षात्तस्मैं चिकित्वान्रयिं दंयस्व ॥ ६

यः । तुभ्यंम् । दाशांत् । यः । वा । ते । शिक्षांत् । तस्मैं । चिकित्वान् । रयिम् । दयस्व ॥६

यः । तुभ्यम् । दाशात् । यः । वा । ते । शिक्षात् । तस्मै । चिकित्वान् । रयिम् । दयस्व ॥६

“ऋतस्य गतस्य देवयजनं प्राप्तस्याग्नेः “प्रेषाः प्रकर्षेणेष्यमाणाः स्तुतयः क्रियन्ते । “धीतिः । धीयते सोमः पीयतेऽस्मिन्निति धीतिर्यागः । सोऽपि “ऋतस्य देवयजनदेशं प्राप्तस्याग्नेरेव क्रियते । अतः सोऽग्निः “विश्वायुः । विश्वं सर्वमायुरन्नं यस्य स तथाविधो भवति । अपि चास्मै “विश्वे सर्वे यजमानाः “अपांसि दर्शपूर्णमासादीनि कर्माणि “चक्रुः कुर्वन्ति । हे अग्ने “तुभ्यं “यः “दाशात् चरुपुरोडाशादीनि हवींषि ददाति ।

“यो “वा अन्योऽपि यो यजमानः “ते "शिक्षात् त्वदीयं कर्म कर्तुं शक्तो भूयासम् इति इच्छति । उभयविधाय “तस्मै यजमानाय “चिकित्वान् तत्कृतमनुष्ठानं जानंस्त्वं “रयिं “दयस्व धनं देहि ॥ दाशात् ।' दाश्रृ दाने '। लेटि आडागमः । शिक्षात् । ‘ शक्लृ शक्तौ ' । इच्छार्थे सन् । ‘ सनि मीमाघुरभलभशक ' ( पा. सू. ७. ४. ५४ ) इति अकारस्य इसादेशः । अत्र लोपोऽभ्यासस्य' इति अभ्यासलोपः । ‘ स्कोः संयोगाद्योः ' इति सकारलोपः । पूर्ववत् लेटि आडागमः । चिकित्वान् । कित ज्ञाने' । लिटः क्वसुः । दयस्व । ‘दय दानगतिरक्षणहिंसादानेषु ॥

होता॒ निषं॑त्तो॒ मनो॒रपं॑त्ये॒ स चि॒न्न्वां॑सा॒ं पतीं॑ रयी॒णाम् ॥७

होतां । निऽसं॑त्तः । मनोः॑ । अपं॑त्ये । सः । चि॒त् । नु । आ॒सा॒म् । पतिः॑ । र॒यी॒णाम् ॥७

होता । निऽसत्तः । मनोः । अपत्ये । सः । चित् । नु ।
आसाम् । पतिः । रयीणाम् ॥७

इ॒च्छन्त॒ रेतो॑ मि॒थस्त॒नूषु॒ सं जा॑नत॒ स्वैर्दक्षै॒रमू॑राः ॥८

इ॒च्छन्त॑ । रेतः॑ । मि॒थः । त॒नूषु॑ । सम् । जा॒न॒त॒ । स्वैः ।
दक्षैः॑ । अमू॑राः ॥८

इच्छन्त । रेतः । मिथः । तनूषु । सम् । जानत । स्वैः ।
दक्षैः । अमूराः ॥८

हे अग्ने त्वं “मनोरपत्ये यजमानस्वरूपायां प्रजायां “होता देवानामाह्वाता सन् “निषत्तः निषण्णः । ‘ मानव्यो हि प्रजाः ' ( तै. सं. ५. १. ५. ६ ) इति हि ब्राह्मणम् । “स “चिन्नु स एव त्वम् “आसां प्रजानां “रयीणा गवादीनां धनानामपि “पतिः स्वामी । अतस्ताः प्रजाः “तनूषु आत्मीयेषु शरीरेषु “मिथः संसृष्टमेकीभूतं पुत्ररूपेण

परिणतं “रेतः वीर्यम् "इच्छन्त ऐच्छन् । त्वदनुग्रहेण पुत्रमलभन्तेति यावत् । लब्धपुत्राश्च ताः प्रजाः "अमूराः अमूढाः सत्यः “स्वैः स्वकीयैः “दक्षैः समर्थैः पुत्रैः सह “सं “जानत सम्यगवगच्छन्ति चिरकालं जीवन्तीत्यर्थः । यद्वा । दक्षशब्दः प्राणवाची । ‘ प्राणो वै दक्षोऽपानः क्रतुः ' ( तै. सं. २. ५. २. ४ ) इति श्रुतेः । स्वैर्दक्षैः स्वकीयैः प्राणैः अमूराः संगतास्त्वयैव सर्वं जानन्ति ॥ इच्छन्त । व्यत्ययेनात्मनेपदम्। जानत । छान्दसो लङ् । झस्य अदादेशे ‘ श्नाभ्यस्तयोरातः ' इति आकारलोपः । अमूराः । मूरा अमूरेत्यत्र यास्क एवं व्याचख्यौ- मूढा वयं स्मोऽमूढस्त्वमसि' ( निरु. ६. ८ ) इति । अतोऽत्रापि अमूरशब्देन अमूढत्वमुच्यते । वर्णव्यापत्त्या ढकारस्य रेफः । यद्वा । मुर्छा मोहसमुच्छ्राययोः'। अस्मात् संपदादिलक्षणो भावे क्विप्। रोल्लोपः ' इति छलोपः। रो मत्वर्थीयः। न मूरा अमूराः । अथवा। ‘अम गत्यादिषु'। अस्मादौणादिक ऊरन्प्रत्ययः ।।

पि॒तुर्न पु॒त्राः क्रतुं॑ जुषन्त॒ श्रोष॒न्ये अ॑स्य॒ शासं॑ तु॒रास॑ः ॥९

पि॒तुः । न । पु॒त्राः । क्रतु॑म् । जु॒ष॒न्त॒ । श्रोष॑न् । ये । अ॒स्य॒ । शास॑म् । तु॒रास॑ः ॥९

पितुः । न । पुत्राः । क्रतुम् । जुषन्त । श्रोषन् । ये । अस्य । शासम् । तुरासः ॥९

वि राय॑ और्णो॒द्दुर॑ः पुरु॒क्षुः पि॒पेश॒ नाकं॒ स्तृभि॒र्दमू॑नाः ॥ १०

वि । राय॑ः । औ॒र्णो॒त् । दुर॑ः । पु॒रु॒ऽक्षुः । पि॒पेश॑ । नाक॑म् । स्तृऽभि॑ः । दमू॑नाः ॥१०

वि । रायः । और्णोत् । दुरः । पुरुऽक्षुः । पिपेश । नाकम् । स्तृऽभिः । दमूनाः ॥१०

“अस्य अग्नेः “शासं शासनं “तुरासः त्वरमाणाः सन्तः "ये यजमानाः “श्रोषन् शृण्वन्ति ते सर्वे तेनानुशिष्टं “क्रतुं कर्म 'जुषन्त सेवन्ते । तत्र दृष्टान्तः । “पितुर्न “पुत्राः । यथा पुत्राः पुरु बहुलं त्रायकाः पुन्नाम्नो नरकाद्वा रक्षकास्तनयाः पितुराज्ञां कुर्वन्ति तद्वत् ।' पुत्रः पुरु त्रायते निपरणाद्वा पुन्नरकं ततस्त्रायत इति वा ' ( निरु. २. ११ ) इति यास्कः । पुरुक्षुः । क्षु इत्यन्ननाम । बह्वन्नः सोऽग्निरेषां यजमानानां “दुरः द्वाराणि यज्ञस्य द्वारभूतानि “रायः धनानि “वि “और्णोत् विवृणोति प्रकाशयति । ददातीति यावत् । अपि च “दमूनाः दमे यज्ञगृहे मनो यस्य सोऽग्निः । नास्मिन्नकं दुःखमस्तीति नाको द्युलोकः । तम् । स्तृभिरिति नक्षत्रनाम । “स्तृभिः नक्षत्रैः "पिपेश अवयवीचकार नक्षत्रैर्युक्तमकरोदित्यर्थः ॥ श्रोषन् । ' श्रु श्रवणे'। लेटि अडागमः । ‘ सिब्बहुलं लेटि' इति सिप् । ‘ बहुलं छन्दसि ' इति विकरणस्य लुक् । ' इतश्च लोपः० '

इति इकारलोपः । संयोगान्तस्य लोपः । पिपेश । ‘ पिश अवयवे ॥ ॥ १२ ॥

# ऋग्वेदः सूक्तं १.६९

← सूक्तं १.६८

ऋग्वेदः - मण्डल १

सूक्तं १.६९

पराशरः शाक्त्यः

सूक्तं १.७० →

## दे. अग्निः। द्विपदा विराट्।

शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः ॥१॥

परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन् ॥२॥

वेधा अदृप्तो अग्निर्विजानन्नूधर्न गोनां स्वाद्मा पितूनाम् ॥३॥

जने न शेव आहूर्यः सन्मध्ये निषत्तो रण्वो दुरोणे ॥४॥

पुत्रो न जातो रण्वो दुरोणे वाजी न प्रीतो विशो वि तारीत् ॥५॥

विशो यदह्वे नृभिः सनीळा अग्निर्देवत्वा विश्वान्यश्याः ॥६॥

नकिष्ट एता व्रता मिनन्ति नृभ्यो यदेभ्यः श्रुष्टिं चकर्थ ॥७॥

तत्तु ते दंसो यदहन्समानैर्नृभिर्यद्युक्तो विवे रपांसि ॥८॥

उषो न जारो विभावोस्रः संज्ञातरूपश्चिकेतदस्मै ॥९॥

त्मना वहन्तो दुरो व्यृण्वन्नवन्त विश्वे स्वर्दृशीके ॥१०॥

## सायणभाष्यम्

शुक्रः' इति द्वैपदं दशर्चम् अध्ययनतः पञ्चर्चं पञ्चमं सूक्तं पराशरस्यार्षमाग्नेयम् । शुक्रः ' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

शुक्रः शुंशुक्वाँ उषो न जारः पप्रा संमीची दिवो न

ज्योतिंः ॥१

शु॒क्रः । शु॒शु॒क्वान् । उ॒षः । न । जा॒रः । प॒प्रा । स॒मी॒ची इतिं स॒म्ऽई॒ची । दि॒वः । न । ज्योतिः॑ ॥१

शुक्रः । शुशुक्वान् । उषः । न । जारः । पप्रा । समीची इति सम्ऽईची । दिवः । न । ज्योतिः ॥१

परि॒ प्रजांत॒ः क्रत्वां बभूथ॒ भुवों दे॒वानां पि॒ता पु॒त्रः सन् ॥ २

परिं । प्रऽजांतः । क्रत्वां । ब॒भू॒थ॒ । भुवः॑ । दे॒वानांम् । पि॒ता । पु॒त्रः । सन् ॥२

परि । प्रऽजातः । क्रत्वा । बभूथ । भुवः । देवानाम् । पिता । पुत्रः । सन् ॥२

“शुक्रः शुभ्रवर्णोऽयमग्निः “उषो “न “जारः उषसो जरयिता सूर्य इव “शुशुक्वान् शोचयिता सर्वस्य प्रकाशयिता भवति । तथा “समीची संगते द्यावापृथिव्यौ “दिवो “न “ज्योतिः योतमानस्य सूर्यस्य ज्योतिरिव "पप्रा स्वतेजसा पूरयिता । हे अग्ने अतस्त्वं “प्रजातः प्रादुर्भूतः सन् “क्रत्वा कर्मणा यद्वा ज्ञानहेतुना प्रकाशेनोक्तप्रकारेण सर्वं जगत् “परि “बभूथ परितो व्याप्नोषि । दीव्यन्तीति देवा ऋत्विजः । तेषां “पुत्रः “सन् पुन्नाम्नो नरकात् त्रायकः सन् “पिता “भुवः पालयिता भवसि । यद्वा । देवानाम् इन्द्रादीनामेव पुत्रः सन् पुत्र इव दूतो भूत्वा पिता हविर्भिः पालयिता भवसि ॥ शुशुक्वान् । ‘ शुच दीप्तौ । लिटः क्वसुः । व्यत्ययेन कुत्वम् । पप्रा । पृ पालनपूरणयोः' इत्यस्मात् 'आदृगमहनजनः' इति किप्रत्ययः । ‘ सुपां सुलुक् ' इति सोः डादेशः । समीची । संपूर्वादञ्चतेः ‘ ऋत्विक् ' इत्यादिना क्विन् । समः समि' ( पा. सू. ६. ३.९३ ) इति सम्यादेशः । ‘ अञ्चतेश्चेति वक्तव्यम् ' इति

ङीप् । अचः' इति अकोरलोपे ' चौ ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण डीप उदात्तत्वम् ।' वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । यदि तु सम्ऽईची इति पदविभागः क्रियते तर्हि उद ईत् ' ( पा. सू. ६. ४. १३९ ) इति विधीयमानमीत्वं सम उत्तरस्यापि द्रष्टव्यम् । बभूथ । बभूथा ततन्थ°' (पा. सू. ७. २. ६४ ) इति निपातनात् इडभावः ॥

वे॒धा अदृ॑प्तो अ॒ग्निर्वि॑जा॒नन्नूध॒र्न गोना॒ं स्वाद्मा॑ पितू॒नाम् ॥ ३

वे॒धाः । अदृ॑प्तः । अ॒ग्निः । वि॒ऽजा॒नन् । ऊध॑ः । न । गोना॑म् । स्वाद्म॑ । पि॒तू॒नाम् ॥३

वेधाः । अदृप्तः । अग्निः । विऽजानन् । ऊधः । न । गोनाम् । स्वाद्म । पितूनाम् ॥३

जने॒ न शेवं॑ आ॒हूर्य॒ः सन्मध्ये॒ निषं॑त्तो र॒ण्वो दु॑रो॒णे ॥४

जने॑ । न । शेवं॑ । आ॒ऽहूर्यः॑ । सन् । मध्ये॑ । निऽसं॑त्तः ।
र॒ण्वः । दु॒रो॒णे ॥४

जने । न । शेव । आऽहूर्यः । सन् । मध्ये । निऽसत्तः ।
रण्वः । दुरोणे ॥४

“वेधाः । मेधाविनामैतत् । मेधावी । यद्वा । विधाता
सर्वस्य कर्ता । “अदृप्तः दर्परहितः “विजानन्
कर्तव्याकर्तव्यविभागं जानन् “अग्निः "गोनां गवाम्
“ऊधर्न गोसंबन्धि पयस आश्रयभूतं स्थानमिव “पितूनाम्
अन्नानां “स्वाद्म स्वादयिता रसयिता । यथा गोरूधः
पयःप्रदानेन सर्वाण्यन्नानि स्वादूनि करोति तद्वदग्निरपि
सम्यक् पाकेन सर्वाण्यन्नानि स्वादूनि करोतीत्यर्थः । अपि
चैवंभूतोऽग्निः “जने “न "शेवः जनपदे लोकसुखकरः
पुरुष इव “मध्ये यज्ञेषु मध्ये “आहूर्यः आह्वातव्यः “सन्

“दुरोणे यज्ञगृहे “निषत्तः निषण्णः “रण्वः रमयिता स्तुत्यो वा भवति ।। गोनाम् । ‘ गोः पादान्ते । (पा. सू. ७. १.५७ ) इत्यपादान्तेऽपि नुट् । स्वाद्म। ‘ स्वाद आस्वादने । अन्तर्भावितण्यर्थात् ‘ अन्येभ्योऽपि दृश्यन्ते' इति मनिन्। ‘सुपां सुलुक्” ' इति सोर्लुक्। पितूनाम् । नामन्यतरस्याम्' इति नाम उदात्तत्वम् । आहूर्यः। आङ्पूर्वात् ह्वयतेः ‘अचो यत्' इति यत्। 'बहुलं छन्दसि ' इति संप्रसारणम् । हलः ' इति दीर्घः । रेफोपजनश्छान्दसः । ‘ यतोऽनावः' इत्याद्युदात्तत्वम् ॥

पु॒त्रो न जा॒तो र॒ण्वो दु॑रो॒णे वा॒जी न प्री॒तो वि॒शो॒ वि ता॑रीत् ॥५

पु॒त्रः । न । जा॒तः । र॒ण्वः । दु॒रो॒णे । वा॒जी । न । प्री॒तः । विशः॑ । वि । ता॒री॒त् ॥५

पुत्रः । न । जातः । रण्वः । दुरोणे । वाजी । न । प्रीतः ।
विशः । वि । तारीत् ॥५

वि॒शो यद॒ह्वे नृभि॒ः सनीं॑ळा अ॒ग्निर्दे॑व॒त्वा विश्वा॑न्यश्याः ॥
६

विशः॑ । यत् । अह्वे॑ । नृऽभिः॑ । सऽनीं॑ळाः । अ॒ग्निः ।
दे॒व॒ऽत्वा । विश्वा॑नि । अ॒श्या॒ः ॥६

विशः । यत् । अह्वे । नृऽभिः । सऽनीळाः । अग्निः ।
देवऽत्वा । विश्वानि । अश्याः ॥६

“पुत्रो “न पुत्र इव "जातः प्रादुर्भूतोऽग्निः "दुरोणे गृहे
“रण्वः रमयिता भवति । “वाजी “न अश्व इव “प्रीतः
हर्षयुक्तः सन् “विशः संग्रामे वर्तमानाः शत्रुभूताः प्रजाः
"वि “तारीत् विशेषेण तरति अतिक्रामति । अपि च “नृभिः
ऋत्विग्लक्षणैर्मनुष्यैः सहितोऽहं “सनीळाः

समाननिवासस्थानाः “विशः दैवीः प्रजाः “यत् यदा “अह्वे आह्वयामि तदानीमयम् “अग्निः “विश्वानि सर्वाणि “देवत्वा देवत्वानि “अश्याः अश्नुते प्राप्नोति । स्वयमेव तत्तद्देवतारूपो भवतीत्यर्थः । तथा च मन्त्रान्तरमाम्नास्यते-- ‘ त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः' (ऋ. सं. ५. ३. १) इत्यादि ॥ अश्याः । ‘ अशू व्याप्तौ । लिङि व्यत्ययेन परस्मैपदमध्यमौ । ‘बहुलं छन्दसि ' इति विकरणस्य लुक् ।।

नकिंष्ट ए॒ता व्र॒ता मिंनन्ति॒ नृभ्यो॒ यदे॒भ्यः श्रु॒ष्टिं च॒कर्थं ॥७

नकिः॑ । ते॒ । ए॒ता । व्र॒ता । मि॒न॒न्ति॒ । नृऽभ्यः॑ । यत् । ए॒भ्यः । श्रु॒ष्टिम् । च॒कर्थ॑ ॥७

नकिः । ते । एता । व्रता । मिनन्ति । नृऽभ्यः । यत् । एभ्यः । श्रुष्टिम् । चकर्थ ॥७

तत्तु ते॒ दंसो॒ यदहं॒न्त्समा॒नैर्नृभि॒र्यद्यु॒क्तो वि॒वे रपांसि ॥८

तत् । तु । ते॒ । दंसः॑ । यत् । अहं॑न् । स॒मा॒नैः । नृऽभिः॑ ।
यत् । यु॒क्तः । वि॒वेः । रपांसि ॥८

तत् । तु । ते । दंसः । यत् । अहन् । समानैः । नृऽभिः ।
यत् । युक्तः । विवेः । रपांसि ॥८

हे अग्ने “ते तव संबन्धीनि “एता “व्रता एतानि
परिदृश्यमानानि दर्शपूर्णमासादीनि कर्माणि “नकिः
"मिनन्ति राक्षसादयो बाधका न हिंसन्ति । “यत् यस्मात्
त्वम् “एभ्यः कर्मसु वर्तमानेभ्यः "नृभ्यः यज्ञस्य नेतृभ्यो
यजमानेभ्यः “श्रुष्टिम् । शु आशु अश्नुते व्याप्नोतीति
श्रुष्टिर्यज्ञफलरूपं सुखम् । तत् “चकर्थ कृतवानसि । सति
हि तव व्रतानां बाधके एतन्नोपपद्यते । अतोऽवगम्यते तव
व्रतानां हिंसका न सन्तीति । हे अग्ने “ते त्वदीयं “तत्तु
"दंसः तदेव कर्म “यत् यदि राक्षसादिः "अहन् हन्ति

नाशयति तदानीं “समानैः सप्तगणरूपेण सदृशैः “नृभिः नेतृभिर्मरुद्भिः "युक्तः त्वं “रपांसि बाधकानि राक्षसादीनि “यत् यस्मात् त्वम् "विवेः गमयसि पलायनं प्रापयसि । तस्मात् तव व्रतानि न हिंसन्तीति योज्यम् ॥ मिनन्ति । ' मी हिंसायाम् । क्रैयादिकः । ‘ प्वादीनां ह्रस्वः' इति ह्रस्वस्वम् । विवेः । ‘ छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ्। वी गत्यादिषु । सिपि अदादित्वात् शपो लुकि प्राप्ते ‘ बहुलं छन्दसि' इति शपः श्लुः ॥

उ॒षो न जा॒रो वि॒भावो॒स्रः संज्ञा॑तरूप॒श्चिके॑तदस्मै ॥९

उ॒षः । न । जा॒रः । वि॒भाऽवा॑ । उ॒स्रः । सञ्ज्ञा॑तऽरूपः । चिके॑तत् । अ॒स्मै॒ ॥९

उषः । न । जारः । विभाऽवा । उस्रः । सञ्ज्ञातऽरूपः । चिकेतत् । अस्मै ॥९

पातय । कीदृशीरपः । "मरुत्वतीः मरुद्भिः संयुक्ताः "जीवधन्याः जीवाः प्राणिनो धन्यास्तृप्ता याभिस्ताः । अन्यत् समानम् ॥

इन्द्रो॑ वृ॒त्रस्य॒ दोध॑त॒ः सानु॑ वज्रे॑ण हीळि॒तः ।

अ॒भि॒क्रम्याव॑ जिघ्नते॒ऽपः सर्मा॑य चो॒दय॒न्नर्च॒न्ननु॑ स्व॒राज्य॑म् ॥५

इन्द्रः॑ । वृ॒त्रस्य॑ । दोध॑तः । सानु॑म् । वज्रे॑ण । ही॒ळि॒तः ।

अ॒भि॒ऽक्रम्य॑ । अव॑ । जि॒घ्न॒ते॒ । अ॒पः । सर्मा॑य । चो॒दय॑न् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥५

इन्द्रः । वृत्रस्य । दोधतः । सानुम् । वज्रेण । हीळितः ।

अभिऽक्रम्य । अव । जिघ्नते । अपः । सर्माय । चोदयन् । अर्चन् । अनु । स्वऽराज्यम् ॥५

“हीळितः क्रुद्धः "इन्द्रः "अभिक्रम्य आभिमुख्येन गत्वा "दोधतः भृशं कम्पमानस्य “वृत्रस्य “सानुं समुच्छ्रितं हनुप्रदेशं "वज्रेण “अव "जिघ्नते प्रहरति । किं कुर्वन् । "अपः वृष्ट्युदकानि "सर्माय सरणाय निर्गमनाय “चोदयन् प्रेरयन् ॥ दोधतः । ‘धूञ् कम्पने'। अस्मात् यङ्लुगन्तात् शतरि अन्त्यलोपश्छान्दसः ।' अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । हीळितः । ‘हेडृ होडृ अनादरे '। ‘ हेळते' ( निं. २. १२. २ ) इत्येतत् क्रुध्यतिकर्मसु पठितम् । अस्मान्निष्ठायां वर्णव्यापत्त्या ईकारः । जिघ्नते । हन्तेर्लटि व्यत्ययेन आत्मनेपदं बहुवचनं च । ‘ बहुलं छन्दसि ' इति शपः श्लुः । ‘ इत्' इत्यनुवृत्तौ ‘ बहुलं छन्दसि ' इति अभ्यासस्य इत्वम् । ‘गमहन' इत्यादिना उपधालोपः ।

समाय । ' सृ गतौ । " अर्तिस्तुसु ' इत्यादिना भावे मन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥ ॥ २९ ॥

अधि॒ सानौ॒ नि जिंघ्नते॒ वज्रेंण श॒तपंर्वणा ।

म॒न्दा॒न इन्द्रो॒ अन्धंस॒ः सखिंभ्यो गा॒तुमिंच्छ॒त्यर्च॒न्ननुं स्व॒राज्यंम् ॥६

अधिं । सानौं । नि । जि॒घ्न॒ते॒ । वज्रेंण । श॒तऽपंर्वणा ।

म॒न्दा॒नः । इन्द्रः॑ । अन्धंसः । सखिंऽभ्यः । गा॒तुम् । इ॒च्छ॒ति॒ । अर्चंन् । अनुं । स्व॒ऽराज्यंम् ॥६

अधि । सानौ । नि । जिघ्नते । वज्रेण । शतऽपर्वणा ।

मन्दानः । इन्द्रः । अन्धसः । सखिऽभ्यः । गातुम् । इच्छति । अर्चन् । अनु । स्वऽराज्यम् ॥६

इन्द्रः "शतपर्वणा शतसंख्याकधाराभिर्युक्तेन "वज्रेण "सानौ “अधि "नि "जिघ्नते । अधिः सप्तम्यर्थानुवादी । समुच्छ्रिते वृत्रस्य कपोलादौ स्थाने नितरां हिनस्ति । स च "इन्द्रः "मन्दानः मन्दमानः स्तूयमानः सन् 'सखिभ्यः समानख्यानेभ्यः स्तोतृभ्यः "अन्धसः अन्नस्य "गातुं मार्गमुपायम् "इच्छति । अन्यत् पूर्ववत् ॥ मन्दानः । मदि स्तुतौ ' । कर्मणि शानचि यक्। छन्दस्युभयथा' इति शानच आर्धधातुकत्वात् अतोलोपयलोपौ । अनुदात्तेतः परत्वात् शानचो लसार्वधातुकानुदात्तत्वे सति यक एवोदात्तत्वम् । अनुदात्ते शानचि तस्य यको लोपे सति उदात्तनिवृत्तिस्वरेण शानच उदात्तत्वं प्राप्नोति । एवं तर्हि शानच आर्धधातुकत्वादेव लसार्वधातुकानुदात्तत्वाभावे चित्स्वर एवावशिष्यते ॥

इन्द्र॒ तुभ्य॒मिदंद्रि॒वोऽनुं॑त्तं वज्रि॒न्वी॒र्यं॑म् ।

यद्ध॒ त्यं मा॒यिनँ मृ॒गं तमु॒ त्वं मा॒यया॑वधी॒रर्च॒न्ननु॑ स्व॒राज्य॑म् ॥७

इन्द्र॑ । तुभ्य॑म् । इत् । अ॒द्रि॒ऽव॒ः । अनु॑त्तम् । व॒ज्रि॒न् । वी॒र्य॑म् ।

यत् । ह॒ । त्यम् । मा॒यिन॑म् । मृ॒गम् । तम् । ऊ॒ं इति॑ । त्वम् । मा॒यया॑ । अ॒व॒धी॒ः । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥७

इन्द्र । तुभ्यम् । इत् । अद्रिऽवः । अनुत्तम् । वज्रिन् । वीर्यम् ।

यत् । ह । त्यम् । मायिनम् । मृगम् । तम् । ऊं इति । त्वम् । मायया । अवधीः । अर्चन् । अनु । स्वऽराज्यम् ॥७

अद्रिरिति मेघनाम । हे "अद्रिवः वाहनरूपमेघयुक्त "वज्रिन् वज्रवन् "इन्द्र "तुभ्यमित् षष्ठ्यर्थे चतुर्थी । तवैव "वीर्यं सामर्थ्यम् "अनुत्तं शत्रुभिरतिरस्कृतम् । "यद्ध

यस्मात् खलु "मायिनं मायाविनं "त्यं तं प्रसिद्धं वञ्चयितारम् । लोकोपद्रवकारिणमित्यर्थः । 'मृगं मृगरूपमापन्नं "तं वृत्रं "त्वम् अपि "मायया एव "अवधीः हतवानसि ॥ अनुत्तम् । 'नसत्तनिषत्त° ' इति निपातनात् निष्ठानत्वाभावः । अवधीः । हन्तेः 'लुङि च ' इति वधादेशः । स चोदन्तः । तस्य अतो लोपे सति स्थानिवद्भावात् सिचि वृद्ध्यभावः ॥

वि ते॒ वज्रा॑सो अस्थिरन्नव॒तिं ना॒व्या॒३॑ अनु॑ ।

म॒हत्तं॑ इन्द्र वी॒र्यं॑ बा॒ह्वोस्ते॒ बलं॑ हि॒तमर्च॒न्ननु॑ स्व॒राज्य॑म् ॥८

वि । ते॒ । वज्रा॑सः । अ॒स्थि॒र॒न् । न॒व॒तिम् । ना॒व्याः॑ । अनु॑ ।

म॒हत् । ते॒ । इ॒न्द्र॒ । वी॒र्य॑म् । बा॒ह्वोः । ते॒ । बल॑म् । हि॒तम् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥८

वि । ते । वज्रासः । अस्थिरन् । नवतिम् । नाव्याः । अनु ।

महत् । ते । इन्द्र । वीर्यम् । बाह्वोः । ते । बलम् । हितम् ।
अर्चन् । अनु । स्वऽराज्यम् ॥८

हे इन्द्र "ते तव "वज्रासः वज्राः
त्वत्सकाशान्निर्गतान्यायुधानि "नाव्याः नावा तार्याः "नवतिं
नवतिसंख्याका वृत्रेण निरुद्धा नदीः "अनु उपलक्ष्य "वि
"अस्थिरन विविधम् अस्थिषत। सर्वत्र व्याप्य वर्तमानं वृत्रं
हन्तुं तव वज्र एकोऽप्यनेक इवासीदित्यर्थः । किं च "इन्द्र
"ते तव "वीर्यं "महत् प्रभूतम् । अन्यैरजेयमित्यर्थः । तथा
“ते "बाह्वोः त्वदीययोर्हस्तयोः “बलं "हितं निहितम् ।
त्वदीयौ बाहू अप्यतिशयेन बलिनावित्यर्थः । अन्यत्
पूर्ववत् ॥ अस्थिरन् । तिष्ठतेर्लुङि • समवप्रविभ्यः स्थः'
इत्यात्मनेपदम् । मन्त्रे घस' ' इति च्लेर्लुक् । स्थाघ्वोरिच्च'
(पा. सू. १. २. १७ ) इति इत्वम् । व्यत्ययेन झस्य

रनादेशः। नाव्याः । ‘ नौवयोधर्म' (पा. सू. ४. ४. ९१ ) इत्यादिना यत् । ‘ यतोऽनावः' इति पर्युदासात् ‘तित्स्वरितम्' इति स्वरितत्वम् । बाह्वोः । उदात्तयणः' इति विभक्त्युदात्तत्वम् ॥

स॒हस्रं॑ सा॒कम॑र्चत॒ परि॑ ष्टोभत विंश॒तिः ।

श॒तैन॒मन्व॑नोनवु॒रिन्द्रा॑य॒ ब्रह्मोद्य॑त॒मर्च॒न्ननु॑ स्व॒राज्य॑म् ॥९

स॒हस्र॑म् । सा॒कम् । अ॒र्च॒त॒ । परि॑ । स्तो॒भ॒त॒ । वि॒ंश॒तिः ।

श॒ता । ए॒न॒म् । अनु॑ । अ॒नो॒न॒वुः॒ । इन्द्रा॑य । ब्रह्म॑ ।
उत्ऽय॑तम् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥९

सहस्रम् । साकम् । अर्चत । परि । स्तोभत । विंशतिः ।

शता । एनम् । अनु । अनोनवुः । इन्द्राय । ब्रह्म ।
उत्ऽयतम् । अर्चन् । अनु । स्वऽराज्यम् ॥९

"सहस्रं सहस्रसंख्याका मनुष्याः "साकमर्चत एनमिन्द्रं युगपदेवापूजयन् । तथा “विंशतिः । षोडशर्त्विजो यजमानः पत्नी च सदस्यः शमिता चेति विंशतिसंख्याकाः। तेषां या विंशतिसंख्या सा “परि “ष्टोभत परितः सर्वतोऽस्तौत् । तथा च “शता शतसंख्याका ऋषयः “एनम् इन्द्रम् "अन्वनोनवुः पुनः पुनरस्तुवन् । अस्मा एव "इन्द्राय “ब्रह्म हविर्लक्षणमन्नम् "उद्यतं दातुमूर्ध्वं धृतम् । अत एवंविध इन्द्रो वृत्रमहन्नित्यर्थः । अन्यत् पूर्ववत् ॥ परि ष्टोभत । स्तोभतिः स्तुतिकर्मा । ' उपसर्गात्सुनोति° ' इति पत्वम् । अनोनवुः ।,' णु स्तुतौ । अस्मात् यङ्लुगन्तात् लुङि • सिजभ्यस्तविदिभ्यश्च ' इति झेः उसादेशः । उद्यतम् । ' यम उपरमे ' । उत्पूर्वादस्मात् कर्मणि निष्ठा । '

अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । ‘ गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

इन्द्रो॑ वृ॒त्रस्य॒ तवि॑षीं॒ निर॑ह॒न्सह॑सा॒ सहः॑ ।

म॒हत्तद॑स्य॒ पौंस्यं॑ वृ॒त्रं ज॑घ॒न्वाँ अ॑सृज॒दर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ १०

इन्द्रः॑ । वृ॒त्रस्य॑ । तवि॑षीम् । निः । अ॒ह॒न् । सह॑सा । सहः॑ ।

म॒हत् । तत् । अ॒स्य॒ । पौंस्य॑म् । वृ॒त्रम् । ज॒घ॒न्वान् । अ॒सृ॒ज॒त् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥१०

इन्द्रः । वृत्रस्य । तविषीम् । निः । अहन् । सहसा । सहः ।

महत् । तत् । अस्य । पौंस्यम् । वृत्रम् । जघन्वान् । असृजत् । अर्चन् । अनु । स्वऽराज्यम् ॥१०

"इन्द्रो "वृत्रस्य असुरस्य “तविषीं बलं स्वकीयेन बलेन "निरहन् हतवान् । "सहसा सहनेन अभिभवसाधनेनायुधेन "सहः अभिभवसाधनं वृत्रायुधं निरहन् । "अस्य इन्द्रस्य “तत् "पौंस्यं बलं "महत अतिप्रौढम्। यस्मादयं "वृत्रं "जघन्वान् हतवान् हत्वा च तन्निरुद्धा अप: "असृजत् तस्मात् वृत्रान्निरगमयत् । अन्यत् पूर्ववत् ॥ पौंस्यम् । 'पुंस अभिवर्धने' । चुरादिः । ‘ अचो यत्' इति यत् । यतोऽनावः । इत्याद्युदात्तत्वम् । जघन्वान् । हन्तेर्लिटः क्वसुः । ‘ विभाषा गमहनविद॰ ' इति इटः विकल्पादभावः । ‘ अभ्यासाच्च' इति अभ्यासादुत्तरस्य हन्तेर्हकारस्य धत्वम् ॥ ॥ ३० ॥

इ॒मे चि॒त्तवं म॒न्यवे॒ वेपेंते भि॒यसां म॒ही ।

यदिं॑न्द्र वज्रि॒न्नोज॑सा वृ॒त्रं म॒रुत्वाँ॒ अव॑धी॒रर्च॒न्ननु॑ स्व॒राज्य॑म् ॥११

इ॒मे । चि॒त् । तव॑ । म॒न्यवे॑ । वेपे॑ते॒ इति॑ । भि॒यसा॑ । म॒ही इति॑ ।

यत् । इ॒न्द्र॒ । व॒ज्रि॒न् । ओज॑सा । वृ॒त्रम् । म॒रुत्वा॑न् । अव॑धीः । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥११

इमे । चित् । तव । मन्यवे । वेपेते इति । भियसा । मही इति ।

यत् । इन्द्र । वज्रिन् । ओजसा । वृत्रम् । मरुत्वान् । अवधीः । अर्चन् । अनु । स्वऽराज्यम् ॥११

"मही महत्यौ “इमे द्यावापृथिव्यावपि हे इन्द्र “तव "मन्यवे त्वदीयकोपात् "भियसा भीत्या "वेपेते कम्पेते । हे "वज्रिन् वज्रवन् "इन्द्र “मरुत्वान् मरुद्भिर्युक्तस्त्वम् “ओजसा बलेन

"यत् यदा “वृत्रं "अवधीः तदानीं द्यावापृथिव्यावपि भयेनाकम्पिषातामित्यर्थः ॥ वेपेते । टुवेपृ कम्पने ' । भियसा । ञिभी भये । औणादिकः कसिप्रत्ययः ।।

न वेपंसा न तंन्यतेन्द्रं वृत्रो वि बींभयत् ।

अभ्येंनं वज्रं आयसः सहस्रंभृष्टिरायतार्चन्ननुं स्वराज्यंम् ॥ १२

न । वेपंसा । न । तन्यता । इन्द्रंम् । वृत्रः । वि । बीभयत् ।

अभि । एनम् । वज्रः । आयसः । सहस्रंऽभृष्टिः । आयत । अर्चंन् । अनुं । स्वऽराज्यंम् ॥१२

न । वेपसा । न । तन्यता । इन्द्रम् । वृत्रः । वि । बीभयत् ।

अभि । एनम् । वज्रः । आयसः । सहस्रऽभृष्टिः । आयत । अर्चन् । अनु । स्वऽराज्यम् ॥१२

"वृत्रः "इन्द्रं "वेपसा स्वकीयेन वेपनेन कम्पनेन “न “वि “बीभयत् भीतं नाकरोत् । तथा “तन्यता स्वकीयेन घोरेण गर्जनशब्देन "न वि बीभयत् । अपि च इन्द्रेण विसृष्टः “आयसः अयोमयः “सहस्रभृष्टिः अनेकाभिर्धाराभिर्युक्तः "वज्रः “एनं वृत्रम् "अभि “आयत हन्तुमाभिमुख्येनागच्छत् । अन्यत् पूर्ववत् ॥ तन्यता । स्तन शब्दे '। ‘ ऋतन्यञ्जि°' इत्यादिना तनोतेर्विधीयमानो यतुच् बहुलवचनादस्मादपि भवति । अत एव सलोपश्च ।' सुपां सुलुक् ' इति तृतीयाया डादेशः । उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् । बीभयत् ।' ञिभी भये । हेतुमति णिच् । अत्र वेपस्तन्यतुभ्यां भयं न हेतोर्वृत्रादिति हेतुभयाभावात् ' बिभेतेर्हेतुभये ' ( पा. सू. ६. १. ५६ ) इति आत्वाभावः। ण्यन्तात् लुङि च्लेश्चङादि । आयत । अय पय गतौ ' । भौवादिरात्मनेपदी ॥

यद्वृत्रं तवं चाशनिं वज्रेंण समयोंधयः ।

अहिंमिन्द्र जिघांसतो दिवि तें बद्बधे शवोऽर्चन्ननुं स्वराज्यंम् ॥१३

यत् । वृत्रम् । तवं । च । अशनिंम् । वज्रेंण । सम्ऽअयोंधयः ।

अहिंम् । इन्द्र । जिघांसतः । दिवि । ते । बद्बधे । शवः । अर्चन् । अनुं । स्वऽराज्यंम् ॥१३

यत् । वृत्रम् । तव । च । अशनिम् । वज्रेण । सम्ऽअयोधयः ।

अहिम् । इन्द्र । जिघांसतः । दिवि । ते । बद्बधे । शवः । अर्चन् । अनु । स्वऽराज्यम् ॥१३

हे "इन्द्र यत् यदा वृत्रं तव हननार्थं तेन सृष्टाम् "अशनिं च त्वं वज्रेण समयोधयः सम्यक् प्रहार्षीः तदानीम् अहिम् आगत्य हन्तारं वृत्रं जिघांसतः हन्तुमिच्छतः “ते तव “शवः बलं “दिवि “बद्बधे बद्धमनुस्यूतं व्याप्तमासीत् । शिष्टं पूर्ववत् । जिघांसतः । हन्तेरिच्छार्थे सनि ‘अज्झनगमां सनि ' ( पा. सू. ६. ४. १६ ) इति उपधादीर्घत्वम् । बद्धधे । ‘ बध बन्धने'। कर्मणि लिटि व्यत्ययेन हलादिशेषाभावः ।।

अ॒भि॒ष्टने॑ ते॑ अद्रिवो॒ यत्स्था जग॑च्च रेजते ।

त्वष्टा॑ चि॒त्तव॑ म॒न्यव॒ इन्द्रं॑ वेवि॒ज्यते॑ भि॒यार्च॒न्ननु॑ स्व॒राज्य॑म् ॥१४

अ॒भि॒ऽस्त॒ने । ते॒ । अ॒द्रि॒ऽव॒ः । यत् । स्थाः । जग॑त् । च॒ । रे॒ज॒ते॒ ।

त्वष्टां । चि॒त् । तवं । म॒न्यवें । इन्द्रं । वे॒वि॒ज्यतें । भि॒या । अर्चन् । अनुं । स्व॒ऽराज्यंम् ॥१४

अभिऽस्तने । ते । अद्रिऽवः । यत् । स्थाः । जगत् । च । रेजते ।

त्वष्टा । चित् । तव । मन्यवे । इन्द्र । वेविज्यते । भिया । अर्चन् । अनु । स्वऽराज्यम् ॥१४

हे "अद्रिवः वज्रवन् “इन्द्र “ते तव "अभिष्टने सिंहनादे सति "स्थाः स्थावरं "जगत् जङ्गम “च "यत् अस्ति तदुभयं "रेजते कम्पते । “त्वष्टा "चित् वज्रनिर्माता त्वष्टा च "तव "मन्यवे त्वदीयाय कोपाय "भिया भीत्या “वेविज्यते भृशं कम्पते । अन्यत् समानम् ।। स्थाः । तिष्ठतेः । क्विप च । इति क्विप् । वेविज्यते । ‘ ओविजी भयचलनयोः । अस्मात् क्रियासमभिहारे यङ् । सन्यङोः । इति द्विर्भावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे यङ एव स्वरः

शिष्यते । इन्द्रस्यस्य पादादौ वर्तमानस्य आमन्त्रितं पूर्वमविद्यमानवत् ' इति अविद्यमानवत्वेदौ सति अस्य पादादित्वात् ‘ °अपादादौ ' इति पर्युदासात् निघाताभावः ।।

न॒हि नु यादं॑धी॒मसीन्द्रं॒ को वी॒र्या॑ प॒रः ।

तस्मिं॑न्नृ॒म्णमु॒त क्रतुं॑ दे॒वा ओजां॑सि॒ सं दं॑धु॒रर्च॒न्ननुं॑ स्व॒राज्यं॑म् ॥१५

न॒हि । नु । यात् । अ॒धि॒ऽइ॒मसिं॑ । इन्द्रं॑म् । कः । वी॒र्या॑ । प॒रः ।

तस्मिं॑न् । नृ॒म्णम् । उ॒त । क्रतुं॑म् । दे॒वाः । ओजां॑सि । सम् । द॒धुः॒ । अर्चं॑न् । अनुं॑ । स्व॒ऽराज्यं॑म् ॥१५

नहि । नु । यात् । अधिऽइमसि । इन्द्रम् । कः । वीर्या । परः ।

तस्मिन् । नृम्णम् । उत । क्रतुम् । देवाः । ओजांसि । सम् । दधुः । अर्चन् । अनु । स्वऽराज्यम् ॥१५

“यात् यान्तं सर्वत्र व्याप्य वर्तमानमिन्द्रं "नहि "नु “अधीमसि वयं न ह्यवगच्छामः। यतो वयमल्पाः । परः इत्येतत्सकारान्तमव्ययं वैदूर्यमाचष्टे । परो दिवा पर एना ' ( ऋ. सं. १०. ८२. ५ ) इति यथा । “परः परस्तादतिदूरे मनुष्यैरनवगाह्ये स्थाने "वीर्या वीर्येण सामर्थ्येन वर्तमानम् “इन्द्रं "कः मनुष्यो जानीयात् । न कोऽपीत्यर्थः । कस्मादिति चेत् अत्राह तस्मिन् इति । यस्मात् “तस्मिन् इन्द्रे “देवाः "नृम्णं धनं “उत अपि च "क्रतुं वीर्यकर्म "ओजांसि बलानि च "सं "दधुः स्थापयांचक्रुः तस्मादित्यर्थः।। यात् । । ' या प्रापणे ' । अस्मात् लटः

शतृ । ‘सुपां सुलुक् ' इति द्वितीयाया लुक् । अधीमसि ।
‘इण् गतौ ' । इदन्तो मसिः । वीर्या । ‘सुपां सुलुक्' इति
तृतीयाया आकारः ।।

याम॑थर्वा॒ मनु॑ष्पि॒ता द॒ध्यङ्धिय॒मत्न॑त ।

तस्मि॒न्ब्रह्मा॑णि पू॒र्वथेन्द्र॑ उ॒क्था सम॑ग्म॒तार्च॒न्नन॑ु स्व॒राज्य॑म्
॥१६

याम् । अथ॑र्वा । मनुः॑ । पि॒ता । द॒ध्यङ् । धिय॑म् । अत्न॑त
।

तस्मि॑न् । ब्रह्मा॑णि । पू॒र्वऽथा॑ । इन्द्रे॑ । उ॒क्था । सम् ।
अ॒ग्म॒त॒ । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥१६

याम् । अथर्वा । मनुः । पिता । दध्यङ् । धियम् । अत्नत
।

तस्मिन् । ब्रह्माणि । पूर्वऽथा । इन्द्रे । उक्था । सम् । अग्मत । अर्चन् । अनु । स्वऽराज्यम् ॥१६

"अथर्वा एतत्संज्ञक ऋषिः "पिता सर्वासां प्रजानां पितृभूतः "मनुः च "दध्यङ् अथर्वणः पुत्र एतत्संज्ञक ऋषिश्च “यां “धियम् "अत्नत यत्कर्मातन्वत अकुर्वन् "तस्मिन् कर्मणि यानि “ब्रह्माणि हविर्लक्षणान्यन्नानि "उक्था शस्त्ररूपाणि स्तोत्राणि च यानि सन्ति तानि सर्वाणि तस्मिन् "इन्द्रे "समग्मत समगच्छन्त । तत्र दृष्टान्तः । "पूर्वथा पूर्वेषामन्येषां वसिष्ठादीनां यज्ञेषु यथा हवींषि स्तोत्राणि चेन्द्रेण संगच्छन्ते तद्वत् । य इन्द्रः "स्वराज्यं स्वस्य राजत्वम् "अनु "अर्चन् अनुपूजयन् । वृत्रवधादिरूपेण कर्मणा स्वकीयमधिपतित्वं प्रकटयन्नित्यर्थः । अत्नत । ‘ तनु विस्तारे' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'तनिपत्योश्छन्दसि' इति उपधालोपः । पूर्वथा । ‘ प्रत्नपूर्वविश्वेमात्थाल् छन्दसि '

(पा. सू. ५. ३. १११) इति इवार्थे पूर्वशब्दात् थाल्प्रत्ययः । लित्स्वरेण प्रत्ययात्पूर्वस्योदाततत्वम् । उक्था । ‘शेश्छन्दसि बहुलम्' इति शेर्लोपः । समग्मत ।' समो गम्यृच्छिभ्याम्' इति आत्मनेपदम् । लुङि • मन्त्रे घस ! इति च्लेर्लुक् । ‘गमहन' इत्यादिना उपधाया लोपः ॥ ॥ ३१॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति

श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क भूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये

# मण्डल

## १

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |

# ऋग्वेदः सूक्तं १.८१

← सूक्तं १.८०

ऋग्वेदः - मण्डल १

सूक्तं १.८१

गोतमो राहूगणः

सूक्तं १.८२ →

## दे. इन्द्रः। पंक्तिः

इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।

तमिन्महत्स्वाजिषूतेमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥१॥

असि हि वीर सेन्योऽसि भूरि परादिदः ।

असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥२॥

यदुदीरत आजयो धृष्णवे धीयते धना ।

युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥३॥

क्रत्वा महाँ अनुष्वधं भीम आ वावृधे शवः ।

श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम् ॥४॥

आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि ।

न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥५॥

यो अर्यो मर्तभोजनं परादादाति दाशुषे ।

इन्द्रो अस्मभ्यं शिक्षतु वि भजा भूरि ते वसु भक्षीय तव राधसः ॥६॥

मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः ।

सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ भर ॥७॥

मादयस्व सुते सचा शवसे शूर राधसे ।

विद्मा हि त्वा पुरूवसुमुप कामान्ससृज्महेऽथा नोऽविता भव ॥८॥

एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम् ।

अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ॥९॥

# सायणभाष्यम्

॥ श्रीगणेशाय नमः ।।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

दशतय्याः पञ्चमोऽयमध्यायो व्याकृतः पुरा ।

धीमता सायणार्येण षष्ठोऽध्यायोऽथ वर्ण्यते ॥

प्रथमे मण्डले त्रयोदशानुवाके सप्त सूक्तानि व्याकृतानि । ' इन्द्रो मदाय ' इति नवर्चमष्टमं सूक्तम् । अत्रानुक्रम्यते-- ' इन्द्रो नव ' इति । ' ऋषिश्चान्यस्मादृषेः ' (अनु. १२. २ ) इति परिभाषया रहूगणपुत्रस्य गोतमस्य अनुवृत्तेः अस्य सूक्तस्य स ऋषिः । पूर्वसूक्ते 'पाङ्क्तं हि ' इत्युक्तत्वात् तुह्यादिपरिभाषयेदमुत्तरं च सूक्तं पाङ्क्तम् । अनादेशपरिभाषयेन्द्रो देवता ॥ पृष्ठ्यस्य पञ्चमेऽहनि निष्केवल्यशस्त्रे इदं सूक्तम् । सूत्रितं च - ' प्रेदं ब्रह्मेन्द्रो

मदाय सत्रा मदास इति निष्केवल्यम् ' ( आश्व. श्रौ. ७. १२) इति । आरम्भणीये चातुर्विंशिकेऽहनि माध्यंदिने सवने ब्राह्मणाच्छंसिनः शस्त्रे ‘ इन्द्रो मदाय ' इति आद्यस्तृचो वैकल्पिकः स्तोत्रियः । ‘ होत्रकाणाम् ' इति खण्डे सूत्रितम् - इन्द्रो मदाय वावृधे मदे मदे हि नो ददिः ' ( आश्व. श्रौ. ७. ४) इति । महाव्रते निष्केवल्ये उत्तरपक्षे ‘ इन्द्रो मदाय ' इत्येका शंसनीया । तथैव पञ्चमारण्यके सूत्रितम् - ‘इन्द्रो मदाय वावृध इति पङ्क्तिः सूददोहाः' (ऐ. आ. ५, २. २) इति ॥

इन्द्रो॒ मदा॑य वावृधे॒ शव॑से वृत्र॒हा नृभिः॑ ।

तमिन्म॒हत्स्वा॒जिषू॒तेमर्भे॑ हवामहे॒ स वाजे॑षु॒ प्र नो॑ऽविषत् ॥१

इन्द्रः॑ । मदा॑य । व॒वृ॒धे॒ । शव॑से । वृ॒त्र॒ऽहा । नृऽभिः॑ ।

तम् । इत् । म॒हत्ऽसु॑ । आ॒जिषु॑ । उ॒त । ई॒म् । अर्भे॑ ।
ह॒वा॒म॒हे॒ । सः । वाजे॑षु । प्र । न॒ः । अ॒वि॒ष॒त् ॥१

इन्द्रः । मदाय । ववृधे । शवसे । वृत्रऽहा । नृऽभिः ।

तम् । इत् । महत्ऽसु । आजिषु । उत । ईम् । अर्भे ।
हवामहे । सः । वाजेषु । प्र । नः । अविषत् ॥१

“वृत्रहा वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हन्ता। यद्वा आवरकाणां शत्रूणां हन्ता “इन्द्रो “मदाय हर्षार्थं “शवसे। बलनामैतत् । बलार्थं च “नृभिः यज्ञस्य नेतृभिर्ऋत्विग्भिः “ववृधे स्तोत्रशस्त्ररूपाभिः स्तुतिभिः प्रवर्धितो बभूव । स्तुत्या हि देवता प्राप्तबला सती प्रवर्धते । "तमित् तमेवेन्द्रं “महत्सु प्रभूतेषु “आजिषु संग्रामेषु “हवामहे अस्माकं रक्षणायाह्वयामहे । “उत अपि च "ईम् एनम् “अर्भे अल्पे संग्रामे हवामहे । अस्माभिराहूतः “सः च इन्द्रः "वाजेषु संग्रामेषु “नः अस्मान “प्र “अविषत्

प्रावतु प्रकर्षेण रक्षतु ॥ ववृधे । वृधेः कर्मणि लिट् । संहितायामभ्यासस्य ‘अन्येषामपि दृश्यते' इति दीर्घत्वम् । तुजादित्वे हि तूतुजान इतिवत् पदकाले दीर्घः श्रूयेत'। नृभिः। 'सावेकाच:० इति प्राप्तस्य विभक्त्युदात्तत्वस्य नृ चान्यतरस्याम्' इति प्रतिषेधः । हवामहे । ह्वयतेर्लटि ‘ह्वः' इति अनुवृतौ ‘ बहुलं छन्दसि ' इति संप्रसारणम् । शपि गुणावादेशौ । अविषत् । अव रक्षणे ' । लेटि अडागमः । ‘इतश्च लोपः' इति इकारलोपः । ‘ सिब्बहुलं लेट ' इति सिप् । तस्य आर्धधातुकत्वात् वलादिलक्षण इट् ॥

असि॒ हि वीं॑र॒ सेन्योऽसि॒ भूरिं॑ परा॒द॒दिः ।

असिं॑ द॒भ्रस्यं॑ चिद्वृ॒धो यजं॑मानाय शिक्षसि सुन्व॒ते भूरिं॑ ते॒ वसुं॑ ॥२

असिं॑ । हि । वी॒र॒ । सेन्यः॑ । असिं॑ । भूरिं॑ । प॒रा॒ऽद॒दिः ।

असिं । द॒भ्रस्यं । चि॒त् । वृ॒धः । यजंमानाय । शि॒क्ष॒सि॒ । सु॒न्व॒ते । भूरिं । ते॒ । वसुं ॥२

असि । हि । वीर । सेन्यः । असि । भूरि । पराऽददिः ।

असि । दभ्रस्य । चित् । वृधः । यजमानाय । शिक्षसि । सुन्वते । भूरि । ते । वसु ॥२

हे “वीर शत्रुक्षेपणकुशलेन्द्र त्वं "सेन्यः “असि सेनार्हो भवसि । त्वमेकोऽपि सेनासदृशो भवसीत्यर्थः । “हि यस्मादेवं तस्मात् “भूरि प्रभूतं शत्रूणां धनं “परादिदः परादाता शत्रूणां पराङ्मुखं यथा भवति तथा आदाता “असि भवसि । "दभ्रस्य “चित् । अल्पनामैतत् । अल्पस्यापि तव स्तोतुः “वृधः वर्धयिता “असि । तथा “यजमानाय यागं कुर्वते “सुन्वते सोमाभिषवं कुर्वते पुरुषाय “शिक्षसि अपेक्षितं धनं ददासि । शिक्षतिर्दानकर्मा । यस्मात् “ते तव “वसु धनं “भूरि

बहुलमक्षयं धनं विद्यते तस्मात् ददासीति भावः ॥
परादददिः । ‘डुदाञ् दाने'। ‘ आदृगमहनजनः । इति किप्रत्ययः । लिङ्वद्भावात् द्विर्वचने ह्रस्वत्वम्। ‘आतो लोप इटि च' इति आकारलोपः। वृधः ।
वृधेरन्तर्भावितण्यर्थात् इगुपधलक्षणः कः । सुन्वते ।
‘शतुरनुमः' इति विभक्तेरुदात्तत्वम् ॥

यदुदीरंत आजयों धृष्णवें धीयते धनां ।

युक्ष्वा मंदच्युता हरी कं हनः कं वसौं दधोऽस्माँ इंन्द्र वसौं दधः ॥३

यत् । उत्ऽईरंते । आजयः । धृष्णवें । धीयते । धनां ।

युक्ष्व । मदऽच्युतां । हरी इतिं । कम् । हनः । कम् । वसौं । दधः । अस्मान् । इन्द्र । वसौं । दधः ॥३

यत् । उत्ऽईरते । आजयः । धृष्णवे । धीयते । धना ।

युक्ष्व । मदऽच्युता । हरी इति । कम् । हनः । कम् । वसौ । दधः । अस्मान् । इन्द्र । वसौ । दधः ॥३

अत्रेदमाख्यानम् । रहूगणपुत्रो गोतमः कुरुसृञ्जयानां राज्ञां पुरोहित आसीत् । तेषां राज्ञां परैः सह युद्धे सति स ऋषिरनेन सूक्तेनेन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति । तस्य च तत्पुरोहितत्वं वाजसनेयिभिराम्नातम् - ' गोतमो ह वै राहूगण उभयेषां कुरुसृञ्जयानां पुरोहित आसीत् ' इति । “यत् यदा “आजयः संग्रामाः “उदीरते उद्गच्छन्ति उत्पद्यन्ते तदानीं “धना धनं “धृष्णवे यो धृष्णुर्धर्षयिता शत्रूणां जेता भवति तस्मै “धीयते निधीयते । जयतो धनं भवतीत्यर्थः । हे इन्द्र एवं तादृशेषु युद्धेषु प्रवृत्तेषु “मदच्युता शत्रूणां मदस्य गर्वस्य च्यावयितारौ “हरी त्वदीयावश्वौ "युक्ष्व रथे योजय ।

योजयित्वा च "कं कंचित् राजानं तव परिचरणमकुर्वन्तं "हनः हन्याः । कंचन त्वां परिचरन्तं “वसौ वसुनि धने “दधः स्थापयसि । अतो जयपराजययोस्त्वमेव कारयितासि । तस्मात् हे "इन्द्र “अस्मान् अस्मदीयान् राज्ञः “वसौ धने “दधः स्थापय ॥ उदीरते । ‘ ईर गतौ ' । आदादिकः । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते । यद्वृत्तयोगादनिघातः । धना । ‘सुपां सुलुक्' इति डादेशः । युक्ष्व । ‘युजिर् योगे'। अन्तर्भावितण्यर्थात् लोटि ‘ बहुलं छन्दसि ' इति विकरणस्य लुक् । ‘ द्व्यचोऽतस्तिङः ' इति संहितायां दीर्घत्वम् । हनः । हन्तेर्लेटि सिपि अडागमः । हनश्च दधश्चेति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति प्रथमायास्तिङ्विभक्तेः निघातप्रतिषेधः ।। वसौ । लिङ्गव्यत्ययः । दधः । ‘ दध धारणे'। लेटि व्यत्ययेन परस्मैपदम् ॥

क्रत्वां म॒हाँ अंनुष्व॒धं भी॒म आ वां॑वृधे॒ शवः॑ ।

श्रि॒य ऋ॒ष्व उंपा॒कयो॒र्नि शि॒प्री हरिं॑वान्दधे॒
हस्तं॑यो॒र्वज्रं॑माय॒सम् ॥४

क्रत्वा॑ । म॒हान् । अ॒नु॒ऽस्व॒धम् । भी॒मः । आ । व॒वृ॒धे॒ ।
शवः॑ ।

श्रि॒ये । ऋ॒ष्वः । उ॒पा॒कयोः॑ । नि । शि॒प्री । हरिं॑ऽवान् । द॒धे॒
। हस्तं॑योः । वज्रं॑म् । आ॒य॒सम् ॥४

क्रत्वा । महान् । अनुऽस्वधम् । भीमः । आ । ववृधे ।
शवः ।

श्रिये । ऋष्वः । उपाकयोः । नि । शिप्री । हरिऽवान् । दधे
। हस्तयोः । वज्रम् । आयसम् ॥४

“क्रत्वा कर्मणा प्रज्ञया वा “महान् सर्वाधिकः "भीमः शत्रूणां भयंकरः इन्द्रः “अनुष्वधम् । स्वधा इति अन्ननाम । स्वधायाम् । विभक्त्यर्थे अव्ययीभावः । सोमलक्षणस्यान्नस्य पाने सतीत्यर्थः । “शवः आत्मीयं बलम् “आ "ववृधे आभिमुख्येन प्रवर्धयत् । तदनन्तरम् “ऋष्वः दर्शनीयः “शिप्री। शिप्रे हनू नासिके वा। तद्युक्तः "हरिवान् हरिनामकाश्वोपेत इन्द्रः “उपाकयोः अन्तिकनामैतत् । समीपवर्तिनोः “हस्तयोः बाह्वोः "आयसम् अयोमयं “वज्रं “श्रिये संपदर्थं “नि “दधे निदधाति स्थापयति। सोमपानेन हृष्टः प्रबल इन्द्रः शत्रूणां हननाय हस्ते वज्रं गृह्णातीति तात्पर्यार्थः ॥ क्रत्वा । ‘ जसादिषु च्छन्दसि वावचनम् ' इति नाभावस्य विकल्पितत्वादभावः । आयसम् । ‘ तस्य विकारः' इति अणप्रत्ययः ॥

आ प॑प्रौ॒ पार्थि॑वं॒ रजो॑ बद्ब॒धे रो॑च॒ना दि॒वि ।

न त्वावाँ॑ इन्द्र॒ कश्च॒न न जा॒तो न ज॑निष्य॒तेऽति॒ विश्वं॑ ववक्षिथ ॥५

आ । प॒प्रौ॒ । पार्थि॑वम् । रजः॑ । ब॒द्ब॒धे । रो॒च॒ना । दि॒वि ।

न । त्वाऽवा॑न् । इ॒न्द्र॒ । कः । च॒न । न । जा॒तः । न । ज॒नि॒ष्य॒ते॒ । अति॑ । विश्व॑म् । व॒व॒क्षि॒थ॒ ॥५

आ । पप्रौ । पार्थिवम् । रजः । बद्बधे । रोचना । दिवि ।

न । त्वाऽवान् । इन्द्र । कः । चन । न । जातः । न । जनिष्यते । अति । विश्वम् । ववक्षिथ ॥५

इन्द्रः स्वतेजसा “पार्थिवं पृथिव्याः संबन्धि वस्तुजातं “रजः अन्तरिक्षलोकं च “आ “पप्रौ आपूरयति । तथा

“दिवि द्युलोके “रोचना रोचमानानि दीप्तानि नक्षत्राणि "बद्बधे बबन्ध स्थापितवान् । अतो हे “इन्द्र “त्वावान् त्वत्सदृशः “कश्चन “न “जातः नोऽत्पन्नोऽस्ति । “न च "जनिष्यते । उत्पत्स्यमानोऽपि नास्ति । तादृशस्त्वं “विश्वं सर्वं रक्षितव्यं जगत् "अति “ववक्षिथ अतिशयेन वोढुमिच्छसि । सर्वस्य जगतो निर्वाहको भवसीत्यर्थः । पप्रौ । ‘ प्रा पूरणे'। लिटि ‘ आत औ णलः ' (पा. सू. ७. १. ३४ ) इति औकारादेशः । पार्थिवम् । पृथिव्या ञाञौ' (पा. सू. ४. १. ८५, २) इति अञ्प्रत्ययः । ञित्त्वादाद्युदात्तत्वम् । रजः। रजन्त्यस्मिन् गन्धर्वादय इति रजः अन्तरिक्षम् । ‘ रज रागे । असुनि रजकरजनरजःसूपसंख्यानम् ' ( का. ६. ४. २४. ४ ) इति नलोपः । बद्बधे । ‘ बध बन्धने' । लिटि व्यत्ययेन हलादिशेषाभावः । एकहल्मध्यगतस्वाभावात् एत्वाभ्यासलोपावपि न स्तः । पादादित्वात् निघाताभावः । त्वावान् ।' वतुष्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य

उपसंख्यानम्' इति वतुप् । ' आ सर्वनाम्नः' इति आत्वम् । ववक्षिथ। वह प्रापणे ' । अस्मात् इच्छासनि सन्यतः ' इति इत्वस्य ‘ सर्वे विधयश्छन्दसि विकल्प्यन्ते ' इति अभावः । सनन्तात् लिटि • अमन्त्रे ' इति निषेधात् आम्प्रत्ययाभावः ॥ ॥ १ ॥

यो अ॒र्यो मं॑र्त॒भोज॑नं परा॒दद॑ाति दा॒शुषे॑ ।

इन्द्रो॑ अ॒स्मभ्यं॑ शिक्षतु॒ वि भं॑जा॒ भूरिं॑ ते॒ वसुं॑ भक्षी॒य तव॒ राधं॑सः ॥६

यः । अ॒र्यः । म॒र्त॒ऽभोज॑नम् । प॒रा॒ऽदद॑ाति । दा॒शुषे॑ ।

इन्द्रः॑ । अ॒स्मभ्यं॑म् । शि॒क्ष॒तु॒ । वि । भ॒ज॒ । भूरिं॑ । ते॒ । वसुं॑ । भ॒क्षी॒य । तवं॑ । राधं॑सः ॥६

यः । अर्यः । मर्तऽभोजनम् । पराऽददाति । दाशुषे ।

इन्द्रः । अस्मभ्यम् । शिक्षतु । वि । भज । भूरि । ते । वसु । भक्षीय । तव । राधसः ॥६

“अर्यः स्वामी पालयिता “यः इन्द्रः “मर्तभोजनं सर्वैर्मनुष्यैरुपभोज्यमन्नं “दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय “पराददाति प्रयच्छति सः “इन्द्रः “अस्मभ्यं “शिक्षतु तादृशमन्नं ददातु । अवशिष्टपादद्वयं प्रत्यक्षकृतम् । हे इन्द्र अस्मभ्यं दातुं धनं “वि “भज विभक्तं कुरु । यतः “ते तव "वसु धनं “भूरि बहुलमसंख्यातं अतः “तव “राधसः धनस्यैकदेशं “भक्षीय भजेय प्राप्नुयाम् ।। पराददाति । अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । ‘ तिङि चोदात्तवति' इति गतेः अनुदात्तत्वम् । दाशुषे ।' दाशृ दाने '। दाश्वान् साह्वान्' इति क्वसुप्रत्ययान्तो निपात्यते । चतुर्थ्येकवचने ' वसोः संप्रसारणम् ' इति संप्रसारणम् । शासिवसिघसीनां च ' इति षत्वम् । भक्षीय । ‘ भज सेवायाम् । प्रार्थनायां लिङि

तस्य ‘ छन्दस्युभयथा ' इति आर्धधातुकत्वात् शबभावः सलोपाभावश्च । ' एकाचः ' इति इट्प्रतिषेधः । आगमानुदात्तत्वे प्रत्ययस्वर एव शिष्यते । पूर्वपदस्यासमानवाक्यगतत्वात् निघाताभावः ‘ समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति वचनात् ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनो “ मदेमदे हि नो ददिः' इति वैकल्पिकोऽनुरूपस्तृचः । ‘ होत्रकाणाम् ' इति खण्डे सूत्रितम् - ‘ मदेमदे हि नो ददिः सुरूपकृत्नुमूतये ' ( आश्व. श्रौ. ७. ४ ) इति ॥

मदेंमदे॒ हि नों द॒दिर्यू॒था गवां॑मृजु॒क्रतुः॑ ।

सं गृं॑भाय पु॒रू श॒तोभं॑याह॒स्त्या वसुं॑ शिशी॒हि रा॒य आ भं॑र ॥७

मदेंऽमदे । हि । न॒ः । द॒दिः । यू॒था । गवां॑म् । ऋ॒जु॒ऽक्रतुः॑ ।

सम् । गृ॒भा॒य॒ । पु॒रु । श॒ता । उ॒भ॒या॒ह॒स्त्या । वसुं ।
शि॒शी॒हि । रा॒यः । आ । भ॒र॒ ॥७

मदेऽमदे । हि । नः । ददिः । यूथा । गवाम् । ऋजुऽक्रतुः ।

सम् । गृभाय । पुरु । शता । उभयाहस्त्या । वसु ।
शिशीहि । रायः । आ । भर ॥७

“मदेमदे सोमपानेन हर्षेहर्षे सति “ऋजुक्रतुः ऋजुकर्मा स इन्द्रः “नः अस्मभ्यं “गवां “यूथा यूथानि "ददिः “हि गोयूथानां दाता खलु। हे इन्द्र स त्वं “पुरु पुरूणि प्रभूतानि “शता शतसंख्याकानि अपरिमितानीत्यर्थः । “वसु वसूनि धनानि “उभयाहस्त्या उभाभ्यां हस्ताभ्यां “सं “गृभाय अस्मभ्यं दातुं सम्यग्गृहाण । “शिशीहि अस्मांस्तीक्ष्णीकुरु । निशितबुद्धियुक्तान् कुर्वित्यर्थः । “रायः धनानि हस्तयोः

स्थितानि “आ “भर आहर प्रयच्छ ॥ ददिः । ‘ डुदाञ् दाने ' । “आदृगमहनजनः° इति किप्रत्ययः । यूथा। ‘ शेश्छन्दसि बहुलम् । इति शेर्लोपः । गवाम् । सावेकाचः' इति प्राप्तस्य न गोश्वन्साववर्ण ' इति प्रतिषेधः । गृभाय । ‘ ग्रह उपादाने '। लोटि हौ । छन्दसि शायजपि ' ( पा. सू. ३. १.८४ ) इति श्नाप्रत्ययस्य शायजादेशः । ‘ हृग्रहोर्भः ' इति भत्वम् । उभयाहस्त्या। उभयहस्तशब्दादुत्तरस्य तृतीयाद्विवचनस्य ‘सुपां सुलुक्' इति ड्यादेशः। ‘अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । समासान्तोदात्तत्वे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । वसु । ‘सुपां सुलुक्' इति विभक्तेर्लुक् । शिशीहि ।' शो तनूकरणे'। ‘बहुलं छन्दसि ' इति विकरणस्य श्लुः । ‘ आदेचः । इति आत्वम् । ‘ इत्' इत्यनुवृत्तौ ‘ बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । ‘ ई हल्यघोः ' इति धातोः ईत्वम् । पादादित्वात् निघाताभावः। रायः । ‘ ऊडिदम्' इति विभक्तेरुदात्तत्वम् ॥

म॒दयं॑स्व सु॒ते सचा॒ शवं॑से शू॒र राधं॑से ।

वि॒द्मा हि त्वां॑ पुरू॒वसु॒मुप॒ कामां॑न्ससृ॒ज्महेऽथां॑ नोऽवि॒ता भं॑व ॥८

म॒दयं॑स्व । सु॒ते । सचां॑ । शवं॑से । शू॒र॒ । राधं॑से ।

वि॒द्म । हि । त्वा॒ । पु॒रु॒ऽवसुं॑म् । उपं॑ । कामां॑न् । स॒सृ॒ज्महें॑ । अथं॑ । न॒ः । अ॒वि॒ता । भ॒व॒ ॥८

मादयस्व । सुते । सचा । शवसे । शूर । राधसे ।

विद्म । हि । त्वा । पुरुऽवसुम् । उप । कामान् । ससृज्महे । अथ । नः । अविता । भव ॥८

हे “शूर शौर्यवन्निन्द्र “सुते सोमेऽभिषुते सति आगत्य "सचा अस्माकं सखा सन् "मादयस्व तेन सोमेन तृप्तो

भव । किमर्थम् । “शवसे बलार्थं “राधसे अस्माकं धनार्थं च । “त्वा त्वां “पुरूवसुं बहुधनं “विद्म “हि वयं जानीमः खलु । अतः अस्मदीयान् “कामान् मात्रा गवा वत्सानिव त्वया "उप “ससृज्महे हि त्वया खल्वेकीकुर्मः। “अथ अनन्तरं “नः अस्माकम् “अविता अभिलषितफलप्रदानेन रक्षिता “भव ॥ मादयस्त्र । ‘ मद तृप्तियोगे'। चुरादिरात्मनेपदी । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते । ससृज्महे ।' सृज विसर्गे'।' बहुलं छन्दसि ' इति विकरणस्य श्लुः । प्रत्ययाद्युदात्तत्वम् । अत्रापि हिशब्दानुषङ्गात् “ छन्दस्यनेकमपि साकाङ्क्षम् ' ( पा. सू. ८. १. ३५) इति निघातप्रतिषेधः ॥

ए॒ते तं इन्द्र ज॒न्तवो॒ विश्वं॑ पुष्यन्ति॒ वार्यं॑म् ।

अ॒न्तर्हि ख्यो जना॑नाम॒र्यो वेदो॒ अदा॑शुषा॒ं तेषां॑ नो॒ वेद॒ आ भ॑र ॥९

ए॒ते । ते॒ । इ॒न्द्र॒ । ज॒न्तवः॑ । विश्व॑म् । पु॒ष्य॒न्ति॒ । वार्य॑म् ।

अ॒न्तः । हि । ख्यः । जना॑नाम् । अ॒र्यः । वेदः॑ । अदा॑शुषाम् । तेषा॑म् । नः॒ । वेदः॑ । आ । भ॒र॒ ॥९

एते । ते । इन्द्र । जन्तवः । विश्वम् । पुष्यन्ति । वार्यम् ।

अन्तः । हि । ख्यः । जनानाम् । अर्यः । वेदः । अदाशुषाम् । तेषाम् । नः । वेदः । आ । भर ॥९

हे “इन्द्र "ते तव स्वभूताः “एते “जन्तवः यजमानलक्षणा जनाः “विश्वं सर्वं “वार्यं सर्वैः संभजनीयं हविः “पुष्यन्ति वर्धयन्ति । “अदाशुषां हविषामदातॄणां “जनानाम् “अन्तः मध्ये विद्यमानं “वेदः धनम् “अर्यः सर्वेषां स्वामी त्वं “ख्यः “हि पश्यसि हि जानासीत्यर्थः। “तेषाम् अयजमानानां

“वेदः धनं “नः अस्मभ्यम् “आ “भर आहर प्रयच्छेति यावत् । अयजमानेषु विद्यमानं धनं यागानुपयुक्तत्वात् व्यर्थमेव भवेत् । अतस्तस्य धनस्य सार्थकत्वाय तदीयं धनमपहृत्य यजमानेभ्यः प्रयच्छेति तात्पर्यार्थः ॥ ख्यः । ‘ख्या प्रकथने '। अयं दर्शनार्थोऽपि । वर्तमाने छान्दसो लुङ् । अस्यतिवक्ति ' इत्यादिना च्लेः अङादेशः । ‘ आतोलोप इटि च ' इति आकारलोपः । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । ‘ हि च ' इति निघातप्रतिषेधः ॥ ॥ २ ॥

# ऋग्वेदः सूक्तं १.८२

ऋग्वेदः मण्डल १

← सूक्तं १.८१

सूक्तं १.८२

गोतमो राहूगणः*

सूक्तं १.८३ →

दे. इन्द्रः। पंक्तिः, ६ जगती



*हारियोजनग्रहः*

उपो षु शृणुही गिरो मघवन्मातथा इव ।

यदा नः सूनृतावतः कर आदर्थयास इद्योजा न्विन्द्र ते हरी ॥१॥

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।

अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥२॥

सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि ।

प्र नूनं पूर्णवन्धुर स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी ॥३॥

स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।

यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥४॥

युक्तस्ते अस्तु दक्षिण उत सव्यः शतक्रतो ।

तेन जायामुप प्रियां मन्दानो याह्यन्धसो योजा न्विन्द्र ते हरी ॥५॥

युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः ।

उत्त्वा सुतासो रभसा अमन्दिषुः पूषण्वान्वज्रिन्समु पत्न्यामदः ॥६॥

# सायणभाष्यम्

उपोष्विति षळ्‌ऋचं नवमं सूक्तम् गोतमस्यार्षमैन्द्रं अन्त्या जगती आद्याः पङ्क्तयः अनुक्रान्तं च- उपोषु षड्‌जगत्यन्तमिति । सूक्तविनियोगो लैङ्गिकः षोडशिशस्त्रे आद्यासुसदृशमित्यादिके द्वे ऋचौ च विनियुज्यन्ते अथ षोडशीति खण्डे सूत्रितम्-उपोषु शृणुही गिरः सुसंदृशं त्वा वयं मघवन्नित्येका द्वे च पङ्क्ती इति । तत्र
प्रथमामृचमाह-

उपो॒ षु शृ॑णु॒ही गिरो॒ मघ॑व॒न्मात॑था इव ।

य॒दा नः॑ सू॒नृता॑वतः॒ कर॒ आद॒र्थया॑स॒ इद्योजा॒ न्विं॑द्र ते॒ हरी॑
॥१

उपो॒ इति॑ । सु । शृ॒णु॒हि । गिरः॑ । मघ॑ऽवन् । मा ।
अत॑थाःऽइव ।

य॒दा । न॒ः । सू॒नृता॑ऽवतः । कर॑ः । आत् । अ॒र्थया॑से । इत् ।
योज॑ । नु । इ॒न्द्र॒ । ते॒ । हरी॒ इति॑ ॥१

उपो इति । सु । शृणुहि । गिरः । मघऽवन् । मा ।
अतथाःऽइव ।

यदा । नः । सूनृताऽवतः । करः । आत् । अर्थयासे । इत् ।
योज । नु । इन्द्र । ते । हरी इति ॥१

हे मघवन्धनवन्निन्द्र गिरः अस्मदीयाः स्तुतीः उपो उपैव सु शृणुहि उपगत्य सम्यक्शृणु अतथा इव पूर्वं यथाविधस्त्वतद्विपरीतो मा भूः अस्मासु पूर्वं यथा अनुग्रहबुद्धियुक्तः तथाविध एव भवेत्यर्थः अपि च नोऽस्मान्सूनृतावतः प्रियसत्यात्मिकावाक्सूनृता तया स्तुतिरूपया वाचा युक्तान् यदाकरः करोषि आत् अनन्तरं त्वमपि अर्थयासे इत् अर्थयस एव याचयस एव नतदास्से अस्माभिः प्रयुक्तास्तुतीः त्वमपि स्वीकरोषीत्यर्थः अतो हे

इन्द्र ते हरी त्वदीयावश्वौ नु क्षिप्रं योज रथे योजय ।।
शृणुहि उतश्च प्रत्ययाच्छन्दसि वा वचनमिति वचनात्
उतश्च प्रत्ययादितिहेर्लुगभावः । अतथा इव तथेवाचरति
तथाति सर्वप्रातिपदिकेभ्य इत्येक इति क्विप्
तथातेरप्रत्ययः न तथा इव अतथा इव अव्य-
यपूर्वपदप्रकृतिस्वरत्वम्। करः डुकृञ्करणे लुङि
कृमृदृरुहिभ्यश्छन्दसीतिच्लेरङादेशः ननुअङः सति
शिष्टत्वात् तित्स्वरेणान्तोदात्तेन भवितव्यम् तर्हि
लङिव्यत्ययेन शप् ननुकृञ्करणेइति भ्वादौ पठ्यते
अतोव्यत्ययः कस्मात्क्रियते इति चेत् मैवम्
यस्मादस्यधातोस्तत्रपाठः अनार्षः तथाहिकः
करत्करतीत्यत्र यदाहतुर्न्यासकारहरदत्तौव्यत्ययेनशविति
तस्मादस्य धातोर्भ्वादौ पाठो नास्तीति गम्यते किंच यद्ययं
पठ्येत करदित्येवमादिरूपसिद्ध्यर्थं
कृमृदृरुहिभ्यश्छन्दसीति करोतेरङ्विधानमनर्थकं स्यात्
अस्माल्लङिशपिअस्यरूपसिद्धेः लुङ्लङोरर्थभेदान्

लुङ्य्येतद्रूपसिद्धये कर्तव्य- मङ्विधानमिति चेत् न छन्दसि लुङ्लङ्लिट इति लुङादीनामेकत्रविधानेनार्थभेदाभावादिति अनेन प्रकारेणास्माभिर्धातुवृत्तावयं धातुर्निराकृतः अतो व्यत्ययेनेति सिद्धम् । अर्थयासे अर्थयाञ्चा यां चुरादिरात्मनेपदी लेट्याडागमः । योज युजिर्योगे ण्यन्ताल्लोटि छन्दस्युभयथेतिशपआर्ध- धातुकत्वात्णेरनिटीति णिलोपः द्व्यृचोतस्तिङ इति संहितायां दीर्घत्वम् ।। १ ।।

अक्ष॒न्नमीं॑मदन्त॒ ह्यवं प्रि॒या अंधूषत ।

अस्तोंषत॒ स्वभांनवो॒ विप्रा॒ नविंष्ठया म॒ती योजा॒ न्विंन्द्र ते॒ हरीं ॥२

अक्षंन् । अमीं॑मदन्त । हि । अवं । प्रि॒याः । अ॒धू॒ष॒त॒ ।

अस्तोंषत । स्वऽभांनवः । विप्राः । नविंष्ठया । म॒ती । योजं । नु । इ॒न्द्र॒ । ते॒ । हरी॒ इतिं ॥२

अक्षन् । अमीमदन्त । हि । अव । प्रियाः । अधूषत ।

अस्तोषत । स्वऽभानवः । विप्राः । नविष्ठया । मती । योज । नु । इन्द्र । ते । हरी इति ॥२

हे इन्द्र त्वया दत्तान्यन्नानि अक्षन् यजमानाभुक्तवन्तः भुक्त्वा च अमीमदन्त हि तृप्ताश्च प्रियाः स्वकीयास्तनूः अवाधूषत अकंपयन् अतिशयितरसास्वादनेन वक्तुमशक्नुवन्तः शरी राण्यकंपयन् तदनन्तरं स्वभानवः स्वायत्तदीप्तयो विप्राः मेधाविनस्ते नविष्ठया नवितृतमया म तीमत्या स्तुत्या अस्तोषतास्तुवन् अन्यत्पूर्ववद्योज्यम्। अक्षन्अदेर्लुङि लुङ्सनोर्घस्लृ इति घस्ला- देशः मस्त्रेघसेत्यादिनाच्लेर्लुक् गमहनेत्यादिनोपधालोपः खरिचेतिचर्त्वं शासिवसिघसीनांचेतिष त्वम् अइणम

उदात्तः । अमीमदन्त मदतृप्तियोगे चुरादिरात्मनेपदी लुङिच्लेश्चङिणिलोपोपधाह्रस्वद्विर्भावसन्वद्भावेत्वदीर्घाः । अधूषत धूञ्कंपने लुङिसिचिव्यत्ययेनगुणाभावः यद्वा छन्दस्यु- भयथेति सिचः सार्वधातुकत्वेनङित्त्वात् ग्क्ङितिचेतिप्रतिषेधः अथवा धूविधूनने तौदादिकः कुटा- दिः अस्मात्कर्मणिलुङि गाङ्कुटादिभ्य इति सिचोङित्त्वाद्गुणाभावः । नविष्ठया णुस्तुतौ करणभूताया अपि स्तुतेः स्वव्यापारे कर्तृत्वात्तृच् तदन्तात्तुश्छन्दसीतीष्ठन्प्रत्ययः तुरिष्ठेमेयःस्वितितृलोपः । मती सुपांसुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वम् मन्त्रे वृषेषपचमनविदेति क्तिन उदात्तत्वम् ।। २ ।।

महापितृयज्ञे सुसंदृशमित्येषा आहवनीयोपस्थाने विनियुक्ता सूत्रितं च- आहवनीयं सुसंदृशं- त्वेति पंक्त्येति ।

सु॒सं॒दृशं॑ त्वा व॒यं मघ॑वन्वन्दिषी॒महि॑ ।

प्र नू॒नं पू॒र्णव॑न्धुरः स्तु॒तो या॑हि॒ वशाँ॒ अनु॒ योजा॒ न्वि॑न्द्र ते॒ हरी॑ ॥३

सु॒ऽस॒न्दृश॑म् । त्वा॒ । व॒यम् । मघ॑ऽवन् । व॒न्दि॒षी॒महि॑ ।

प्र । नू॒नम् । पू॒र्णऽव॑न्धुरः । स्तु॒तः । या॒हि॒ । वशा॑न् । अनु॑ । योज॑ । नु । इ॒न्द्र॒ । ते॒ । हरी॒ इति॑ ॥३

सुऽसन्दृशम् । त्वा । वयम् । मघऽवन् । वन्दिषीमहि ।

प्र । नूनम् । पूर्णऽवन्धुरः । स्तुतः । याहि । वशान् । अनु । योज । नु । इन्द्र । ते । हरी इति ॥३

हे मघवन्निन्द्र सुसंदृशं सुष्ठु अनुग्रहदृष्ट्या सर्वस्य द्रष्टारं त्वा त्वां वयं वन्दिषीमहि स्तवामहि स्तु- तिकर्तारो भूयास्मेत्याशास्यते अस्मात्रिर्वन्दिभिः स्तुतस्त्वं पूर्णवन्धुरः

स्तोतृभ्योदेयैर्धनैःपूरितेन रथेन युक्तः सन् वशान् अनुकामयमानान् अन्यान् यजमानान्प्रति नूनं प्रयाहि अवश्यं प्रतिष्ठस्व योजेत्यादिपूर्ववत्।। वन्दिषीमहि वदिअभिवादनस्तुत्योः आशीर्लिङ् लिङाशिषीतितस्यार्धधातु-कत्वेनलसार्वधातुकस्वराभावेप्रत्ययाद्युदात्तत्वम् । मघवन्नित्यस्यामन्त्रितं पूर्वमविद्यमानवदित्य-विद्यमानवत्त्वे सति पादादित्वान्निघाताभावः ।। ३ ।।

स घा॒ तं वृष॑णं॒ रथ॒मधि॑ तिष्ठाति गो॒विद॑म् ।

यः पात्रं॑ हारियोज॒नं पू॒र्णमि॑न्द्र॒ चिके॑तति॒ योजा॒ न्वि॑न्द्र ते॒ हरी॑ ॥४

सः । घ॒ । तम् । वृष॑णम् । रथ॑म् । अधि॑ । ति॒ष्ठा॒ति॒ । गो॒ऽविद॑म् ।

यः । पात्रं॑म् । हा॒रि॒ऽयो॒ज॒नम् । पू॒र्णम् । इ॒न्द्र॒ । चिके॑तति ।
योज॑ । नु । इ॒न्द्र॒ । ते॒ । हरी॒ इति॑ ॥४

सः । घ । तम् । वृषणम् । रथम् । अधि । तिष्ठाति ।
गोऽविदम् ।

यः । पात्रम् । हारिऽयोजनम् । पूर्णम् । इन्द्र । चिकेतति ।
योज । नु । इन्द्र । ते । हरी इति ॥४

स घ स खल्विन्द्रः वृषणं कामाभिवर्षकं गोविदं गवां लंभयितारं तं रथं अधितिष्ठाति ईदृशं रथं अधितिष्ठतु आरूढो भवतु हे इन्द्र यो रथः हारियोजनं एतत्संज्ञकधानामिश्रितं पूर्णसोमेन पूर्णं पात्रं चिकेतति ज्ञापयति तं रथं अधितिष्ठेति पूर्वेणान्वयः अधिष्ठाय च त्वदीयावश्वौ क्षिप्रंयोजय ।। घ ऋचि तुनुघेति दीर्घः । रथं अधिशीङ्स्थासांकर्मेत्यधिकरणस्य कर्मसंज्ञा । तिष्ठाति तिष्ठतेर्लेट्याडागमः। चिकेतति कित ज्ञाने लेट्यडागमः

जुहोत्यादित्वाच्छपःश्लुः बहुलंछन्दसीति वक्तव्यमिति वचनात् नाभ्यस्तस्याचिपितीति लघूपधगुणप्रतिषेधो न भवति ।। ४ ।।

युक्तस्तें अस्तु दक्षिंण उत सव्यः शंतक्रतो ।

तेनं जायामुपं प्रियां मंन्दानो याह्यन्धंसो योजा न्विंन्द्र ते हरीं ॥५

युक्तः । ते । अस्तु । दक्षिंणः । उत । सव्यः । शतक्रतो इतिं शतऽक्रतो ।

तेनं । जायाम् । उपं । प्रियाम् । मन्दानः । याहि । अन्धंसः । योजं । नु । इन्द्र । ते । हरी इतिं ॥५

युक्तः । ते । अस्तु । दक्षिणः । उत । सव्यः । शतक्रतो इति शतऽक्रतो ।

तेन । जायाम् । उप । प्रियाम् । मन्दानः । याहि ।
अन्धसः । योज । नु । इन्द्र । ते । हरी इति ॥५

हे शतक्रतो बहुकर्मवन्निन्द्र त्वे त्वदीये रथे दक्षिणो दक्षिणपार्श्वस्थोऽश्वोयुक्तोऽस्तु उत अपि च सव्यः वामपार्श्वस्थोपियुक्तोऽस्तु तेन रथेन अन्धसः सोमलक्षणस्यान्नस्य पानेन मन्दानो मत्तस्त्वं प्रियां प्रीणयित्रीं जायामुपयाहि सा यत्र वर्तते तत्र गच्छेत्यर्थः तदर्थं हे इन्द्र त्वदीयावश्वौ रथे क्षिप्रं योजय अनयोत्तरया च पीतसोमस्येन्द्रस्य स्वगृहं प्रतिप्रस्थानं प्रतिपाद्यते ।। मन्दानः मदिस्तुतिमोदमदस्वमकान्तिगतिषु लिटःकानच् द्विर्वचनप्रकरणे छन्दसिवेतिवक्तव्यमिति द्विर्वचनाभावः । अन्धसः अद भक्षणे अदेर्नुम् धश्च(उ.सू. ४.६४५) इत्यसुन्धातोर्नुमागमो धकारान्तादेशश्च ।। ५ ।।

अन्त्येष्वहःसु हारियोजनस्य युनज्मीत्येषा याज्या। सूत्रितं च-युनज्मि ते ब्रह्मणा केशिना हरी इति याज्यानुवाक्ये अन्त्येष्वहःस्विति । तामेतां सूक्ते षष्ठीमृचमाह—

यु॒नज्मिं ते॒ ब्रह्मंणा के॒शिना॒ हरी॒ उप॒ प्र यांहि दधि॒षे गभंस्त्योः ।

उत्त्वां सु॒तासों रभ॒सा अंमन्दिषुः पूष॒ण्वान्वंज्रि॒न्समु॒ पत्न्यांमदः ॥६

यु॒नज्मिं । ते॒ । ब्रह्मंणा । के॒शिनां । हरी॒ इतिं । उपं । प्र । या॒हि॒ । द॒धि॒षे । गभंस्त्योः ।

उत् । त्वा॒ । सु॒तासः॑ । र॒भ॒साः । अ॒म॒न्दि॒षु॒ः । पू॒ष॒ण्ऽवान् । व॒ज्रि॒न् । सम् । उ॒ँ इतिं । पत्न्यां । अ॒म॒द॒ः ॥६

युनज्मि । ते । ब्रह्मणा । केशिना । हरी इति । उप । प्र । याहि । दधिषे । गभस्त्योः ।

उत् । त्वा । सुतासः । रभसाः । अमन्दिषुः । पूषण्ऽवान् । वज्रिन् । सम् । ऊं इति । पत्न्या । अमदः ॥६

हे इन्द्र केशिना केशयुक्तौ शिखावन्तौ ते हरी त्वदीयावश्वौ ब्रह्मणा स्तोत्ररूपेण मन्त्रेण युनेज्मि रथे संयोजयामि तेन रथेन उपप्रयाहि त्वद्गृहमुपगच्छ गभस्त्योः बाहुनामैतत् बाह्वोः अश्वबन्धकान् रश्मीन्दधिषे धारयस्व त्वा त्वां सुतासो यज्ञेऽभिषुताः सोमाः रभसाः वेगवन्तः तीव्राः क्षिप्रमदकारिण- इत्यर्थः उदमन्दिषुः उत्कृष्टमदयुक्तमकार्षुः। हे वज्रिन् अतस्त्वं स्वगृहं गत्वा पूषण्वान्। अत्र पूषन् शब्दः पुष्टौ वर्तते। पुष्टिर्वै पूषा पुष्टिमेवावरुन्ध इति श्रुतेः । सोमपानजनितया पुष्ट्या युक्तः सन्पत्न्या स्वभार्यया सह समु अमदः सम्यगेव तृप्तो भव ।। केशिना केशशब्दान्मत्वर्थीय इनिः। सुपांसुलुगिति विभक्तेराकारः ।रभसाः । अर्शआदित्वादच् । अमन्दिषुः व्यत्ययेन परस्मैपदम् । पूषण्वान्पुषपुष्टौ श्वन्नुक्षन्नित्यादौ

पूषन्निति निपात्यते। तच्चात्र भावसाधनं द्रष्टव्यम्। पूषाअस्यास्तीति पूषण्वान्मादुपधाया इति मतुपो वत्वम् । नलोपे अनोनुडिति नुट्। ह्रस्वनुड्भ्यां मतुप् इति मतुप उदात्तत्वम् । अमदः। मदी हर्षे छन्दसि लुङ्लङ्लिटः इति प्रार्थनायां लङ्। श्यनि प्राप्ते व्यत्ययेन शप् ।। ६ ।।

## टिप्पणी

- अस्य सूक्तस्य ऋषिः गोतमः रहूगणस्य पुत्रः अस्ति। रहूगणः अर्थात् रंहूगणः। मनुष्यस्य रथः मार्गोपरि रङ्हणं करोति, देवानां रथः रोहणं करोति। नारद पुराणे एवं भागवत पुराणे सौवीरराजस्य रहूगणस्य कथा प्रसिद्धमस्ति। अस्मिन् कथायां रहूगणः स्वशिबिकायाः वहनार्थाय जड भरतस्य योजनं करोति। जड भरतस्य योजनकारणेन शिबिकायाः गत्याः

उच्चावचनं भवति एवं तत्पश्चात् सौवीरराजस्य जड भरतेन सह संवादं प्रचलति। रथस्य रंहणे गोतमः केन प्रकारेण परिवर्तनं कर्तुं शक्यते। गोतमः अर्थात् यः सूर्यस्य रश्मीनां स्वहितार्थाय उपयोगं कर्तुं सर्वाधिकः समर्थः अस्ति। सूर्यरश्मिरूप प्राणानां उपयोगः सः जडप्रकृत्याः (अहल्यायाः) रूपांतरणे करोति। गोतमस्य वैशिष्ट्यं अस्ति यत् यत्र - यत्र सः भूम्यामुपरि गर्तं निर्माति, तत्र - तत्र गर्तः उदकेन पूरितं भवति। अयं उदकं किं भवितुं शक्यते। अयं आनन्दस्य रसं भवितुं शक्यते। जैमिनीय ब्राह्मणे कथनमस्ति यत् गोतमस्य इच्छा स्वप्रजायां श्रद्धायाः समावेशस्य अस्ति। लौकिक रूपेण प्रचलितस्य राहुग्रहस्य दृष्ट्या, यदा राहोः असुरस्य सृष्टिरभवत्, तदा राहुः क्षुधया पीडितः अभवत्। तेन शिवतः भोजनं अपृच्छत्। शिवः

कथयति यत् त्वं भोजनरूपेण स्वअङ्गानि भक्षय। अनेन कारणेन राहुग्रहः शिरोमात्रमस्ति। अङ्गानां भक्षणस्य तात्पर्यं एकान्तिक साधना, आनन्दरहित साधना अस्ति। डा. फतहसिंहः रहूशब्द व्याख्या रह - रहस्ये अनुसारं करोति स्म।

रहूगणोपरि टिप्पणी

उन्नेतर्ऋत्विजोपरि टिप्पणी

हरिरुपरि डा. श्रद्धा चौहानस्य अभिव्यक्तिः

पुराणेषु सार्वत्रिक रूपेण हरि शब्दस्य निरुक्तिः एवं भवति - यः त्रयाणां लोकानां दुःखस्य हरणं करोति, सः हरिरस्ति। कथनं सरलमस्ति, क्रियान्वनं कठिनं। सूर्यः ब्रह्माण्डतः ऊर्जायाः कर्षणं स्वरश्मिभिः

करोति, इति ब्राह्मणग्रन्थेषु कथितमस्ति। सूर्यस्य रश्मयः एव तस्य हयाः सन्ति। मर्त्य स्तरे, आत्मा सूर्यस्य रूपमस्ति, इन्द्रियाणि तस्य हया सन्ति। अपि च, द्युलोके हरणस्य यः कार्यं सूर्यः स्वरश्मिभिः करोति, मर्त्यलोके तत् कार्यं गजः स्वशुण्डेन करोति। अतः गजस्य संदर्भ तस्य शुण्ड एव रश्मिः अस्ति।

सोमयागस्य अन्तिमं कृत्यं हारियोजनग्रहः भवति यत्र उन्नेता  ऋत्विजः द्रोणकलशं स्वे मूर्द्ध्नि स्थापयित्वा तेन अग्न्यां सोमाहुतिः ददाति। तत्पश्चात् चमसाध्वर्यवः द्रोणकलशे धानां विकीर्य तस्य भक्षणं कुर्वन्ति। एते धानाः ऋणात्मकेन स्थितितः धनात्मके स्थित्यां प्रवेशस्य प्रतीकाः सन्ति। हारियोजन ग्रहस्य संदर्भे, इन्द्रं स्तुवन्ति यत् सः स्वरथे हरि-द्वयस्य योजनं करोतु(योजा न्विद्र ते

हरी - ऋ. १.८२)। ब्राह्मणेषु कथनमस्ति यत् ऋक् - सामः इन्द्रस्य हरी सन्ति। अन्यत्र (तैत्तिरीय संहिता २.५.६.२) कथनमस्ति यत् दर्श एवं पूर्णमासः इन्द्रस्य हरी सन्ति। एभिः वाक् दर्शमस्ति, ददृश इव हि वाक् भवति, सा अदृश्यमिव एव भवति, शकुनादिरूपेण कदाचिदेव प्रकटीभवति। पूर्णमा मनः अस्ति, तत् मनस्य द्विरूपाः सन्ति - अचेतन मनः एवं चेतन मनः। पूर्णिमायाः मनः पूर्णरूपेण चैतन्यमनस्य प्रतीकमस्ति। कौशीतकि ब्राह्मण १७.१ मध्ये कथनमस्ति यत् प्राणः एव हरिरस्ति। अयं संकेतं करोति यत् प्राणः सूर्यस्य अथवा हरेः रूपमस्ति एवं मन - वाक् तस्य हरी सन्ति। एवं प्रकारेण सूर्य, पृथिवी एवं चन्द्रमसः त्रिक् अथवा संवत्सरस्य निर्माणं भवति। यदा एवं भवति, तदैव हरिः दुःखानां हरणं कर्तुं शक्नोति। यदा प्राणः

भक्ष्यस्य आहरणं कर्तुं इच्छति, तदा वाक् एवं मनः भक्ष्यपदार्थस्य उचितानुचितस्य निर्णयं करिष्यन्तः।



*अभयदेव शर्मा Abhaya Deva Sharma*

डा. अभयदेवशर्मणः कथनमस्ति यत् प्राणस्य आदानं रामः अस्ति, निर्गमनं हरिः। एवंप्रकारेण श्वास-निःश्वासरूपेण हरेरामस्य योजनं अस्ति।

हरेः प्रतिमायां चतुर्बाहुषु शंख, चक्र, पद्म एवं गदा भवन्ति। शंखः धनात्मकतायाः प्रदाता अस्ति, एवं

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.७ | १.३७ | १.६७ | १.९७ | १.१२७ | १.१५७ | १.१८७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.८ | १.३८ | १.६८ | १.९८ | १.१२८ | १.१५८ | १.१८८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.९ | १.३९ | १.६९ | १.९९ | १.१२९ | १.१५९ | १.१८९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१० | १.४० | १.७० | १.१०० | १.१३० | १.१६० | १.१९० |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.११ | १.४१ | १.७१ | १.१०१ | १.१३१ | १.१६१ | १.१९१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१२ | १.४२ | १.७२ | १.१०२ | १.१३२ | १.१६२ | |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१३ | १.४३ | १.७३ | १.१०३ | १.१३३ | १.१६३ | |

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१४ १.४४ १.७४ १.१०४ १.१३४ १.१६४

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१५ १.४५ १.७५ १.१०५ १.१३५ १.१६५

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१६ १.४६ १.७६ १.१०६ १.१३६ १.१६६

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१७ १.४७ १.७७ १.१०७ १.१३७ १.१६७

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१८ १.४८ १.७८ १.१०८ १.१३८ १.१६८

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१९ १.४९ १.७९ १.१०९ १.१३९ १.१६९

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२० १.५० १.८० १.११० १.१४० १.१७०

# ऋग्वेदः सूक्तं १.८३

← सूक्तं १.८२

ऋग्वेदः - मण्डल १

सूक्तं १.८३

गोतमो राहूगणः

सूक्तं १.८४ →

## दे. इन्द्रः। जगती।

अश्वावति प्रथमो गोषु गच्छति सुप्रावीरिन्द्र मर्त्यस्तवोतिभिः ।

तमित्पृणक्षि वसुना भवीयसा सिन्धुमापो यथाभितो विचेतसः ॥१॥

आपो न देवीरुप यन्ति होत्रियमवः पश्यन्ति विततं यथा रजः ।

प्राचैर्देवासः प्र णयन्ति देवयुं ब्रह्मप्रियं जोषयन्ते वरा इव ॥२॥

अधि द्वयोरदधा उक्थ्यं वचो यतस्रुचा मिथुना या सपर्यतः ।

असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ॥३॥

आदङ्गिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया ।

सर्वं पणेः समविन्दन्त भोजनमश्वावन्तं गोमन्तमा पशुं नरः ॥४॥

यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि ।

आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजामहे ॥५॥

बर्हिर्वा यत्स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषते दिवि ।

ग्रावा यत्र वदति कारुरुक्थ्यस्तस्येदिन्द्रो अभिपित्वेषु रण्यति ॥६॥

## सायणभाष्यम्

‘अश्वावति' इति षड़ृचं दशमं सूक्तं गोतमस्यार्षमैन्द्र जागतम् । तथा चानुक्रान्तम् ‘ अश्वावति जागतम् ' इति । अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिशस्त्रे इदं सूक्तम् । सूत्रितं च--- ‘ अश्वावति प्रोग्रां पीतिं वृष्ण इयर्मि सत्यामिति याज्या ' ( आश्व. श्रौ. ६. ४ ) इति ॥

अश्वा॑वति प्रथ॒मो गोषु॑ गच्छति सुप्रा॒वीरि॑न्द्र॒ मर्त्य॒स्तवो॒तिभि॑ः ।

तमित्पृ॑णक्षि॒ वसु॑ना॒ भवी॑यसा॒ सिन्धु॒मापो॒ यथा॒भितो॒ विचे॑तसः ॥१

अश्व॑ऽवति । प्र॒थ॒मः । गोषु॑ । ग॒च्छ॒ति॒ । सु॒प्र॒ऽअ॒वीः । इ॒न्द्र॒ । मर्त्य॑ः । तव॑ । ऊ॒तिऽभि॑ः ।

तम् । इत् । पृ॒ण॒क्षि॒ । वसु॑ना । भवी॑यसा । सिन्धु॑म् । आप॑ः । यथा॑ । अ॒भित॑ः । विऽचे॑तसः ॥१

अश्वऽवति । प्रथमः । गोषु । गच्छति । सुप्रऽअवीः । इन्द्र । मर्त्यः । तव । ऊतिऽभिः ।

तम् । इत् । पृणक्षि । वसुना । भवीयसा । सिन्धुम् । आपः । यथा । अभितः । विऽचेतसः ॥१

"अयम् अग्नेः स्तोता “मित्रस्य अहरभिमानिनो देवस्य “वरुणस्य राज्यभिमानिनश्च संबन्धिने “धायसे धारणायावस्थापनाय भवतु । मित्रावरुणाविममग्नेः स्तोतारं धारयतामित्यर्थः । “अवयाताम् अवस्ताद्गच्छतां स्वर्गलोकस्याधस्तादन्तरिक्षे वर्तमानानां “मरुताम् एतत्संज्ञानां देवानां "हेळः क्रोधः “अद्भुतः महान् भवति । अद्भुत इत्येतन्महन्नाम । तस्मात् क्रोधात् इममग्नेः स्तोतारं मित्रावरुणौ रक्षतामिति शेषः । अपि च “नः अस्मान हे अग्ने “सु “मृळ सुष्ठु मृडय सुखय । “एषां मरुतां “मनः च “पुनः “भूतु पुनरपि प्रसन्नं भवतु । अन्यत् समानम् ॥ धायसे ।' वहिहाधाञ्भ्यश्छन्दसि इति भावे असुन् । नित्' इत्यनुवृत्तेः ‘ आतो युक् चिण्कृतोः' इति युक् । अवयाताम् । ‘ या प्रापणे '। अस्मात् अवपूर्वात् लटः शतृ । ‘ शतुरनुमः०' इति विभक्तेरुदात्तत्वम् । मृळ ।“ मृड सुखने । छन्दस्युभयथा ' इति शप आर्धधातुकत्वात् ‘णेरनिटि'

इति णिलोपः । द्व्यचोऽतस्तिङः इति संहितायां दीर्घत्वम् । भूतु ।' बहुलं छन्दसि ' इति शपो लुक् ।।

दे॒वो दे॒वाना॑मसि मि॒त्रो अद्भु॑तो॒ वसु॒र्वसू॑नामसि॒ चारु॑रध्व॒रे ।

शर्म॑न्स्याम॒ तव॑ स॒प्रथ॑स्त॒मेऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥१३

दे॒वः । दे॒वाना॑म् । अ॒सि॒ । मि॒त्रः । अद्भु॑तः । वसु॑ः । वसू॑नाम् । अ॒सि॒ । चारु॑ः । अ॒ध्व॒रे ।

शर्म॑न् । स्या॒म॒ । तव॑ । स॒प्रथ॑ःऽतमे । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥१३

देवः । देवानाम् । असि । मित्रः । अद्भुतः । वसुः । वसूनाम् । असि । चारुः । अध्वरे ।

शर्मन् । स्याम । तव । सप्रथःऽतमे । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥१३

हे “अग्ने “देवः द्योतमानस्त्वं “देवानां सर्वेषाम् “अद्भुतः महान् “मित्रः “असि प्रौढः सखा भवसि । तथा “चारुः शोभनस्त्वम् “अध्वरे यज्ञे “वसूनां सर्वेषां धनानां “वसुः “असि निवासयिता भवसि । अतोऽस्माकं वसूनि देहीत्यर्थः । किंच “सप्रथस्तमे सर्वतः पृथुतमेऽतिशयेन विस्तीर्णे “तव त्वत्संबन्धिनि शर्मणि यज्ञगृहे “स्याम वर्तमाना भवेम । अन्यत् पूर्ववत् ॥ शर्मन् । सुपां सुलुक् । इति सप्तम्या लुक् ।।

तत्ते॑ भ॒द्रं यत्समि॑द्धः॒ स्वे दमे॒ सोमा॑हुतो॒ जर॑से मृळ॒यत्त॑मः ।

दधा॑सि॒ रत्न॒ं द्रवि॑णं च दा॒शुषेऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥१४

तत् । ते॒ । भ॒द्रम् । यत् । सम्ऽइ॑द्धः । स्वे । दमे॑ । सोम॑ऽआहुतः । जर॑से । मृ॒ळ॒यत्ऽत॑मः ।

दधा॑सि । रत्न॑म् । द्रवि॑णम् । च॒ । दा॒शुषे॑ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥१४

तत् । ते । भद्रम् । यत् । सम्ऽइद्धः । स्वे । दमे । सोमऽआहुतः । जरसे । मृळयत्ऽतमः ।

दधासि । रत्नम् । द्रविणम् । च । दाशुषे । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥१४

हे “अग्ने “ते त्वत्संबन्धि “उत् खलु “भद्रं भजनीयम् । प्रशस्तमित्यर्थः । किं पुनस्तत् । “स्वे “दमे स्वकीये उत्तरवेदिलक्षणे निवासस्थाने । तस्यैष स्वो लोको

यदुत्तरवेदीनाभिः ' ( ऐ. ब्रा. १ २८ ) इति श्रुतेः । तस्यामुत्तरवेद्यां “समिद्धः सम्यगिद्धः प्रज्वलितः “सोमाहुतः हुतेन सोमरसेन संतर्पितः सन् “जरसे ऋत्विग्भिः स्तूयसे इति यदस्ति तद्भद्रमित्यर्थः । एवं प्रशस्तस्त्वं “मृळयत्तमः अतिशयेनास्माकं सुखयिता भूत्वा रत्नं रमणीयं कर्मफलं वा “द्रविणं धनं “च “दाशुषे हविर्दत्तवते यजमानाय “दधासि प्रयच्छसि । अन्यत् समानम् ॥ समिद्धः । ‘ ञिइन्धी दीप्तौ । कर्मणि निष्ठा । ‘ श्वीदितो निष्ठायाम् ' इति इट्प्रतिषेधः । ‘ गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सोमाहुतः ।। सोमेनाहुतः । तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । जरसे । जरतिः स्तुतिकर्मा । व्यत्ययेन कर्मणि कर्तृप्रत्ययः। यद्वृत्तयोगादनिघातः । दधासि। ‘ अनुदात्ते च ' इति अभ्यस्तस्य आद्युदात्तत्वम् ॥

यस्मै॒ त्वं सु॑द्रविणो॒ ददा॑शोऽनागा॒स्त्वम॑दिते स॒र्वता॑ता ।

यं भ॒द्रेण॒ शव॑सा चो॒दया॑सि प्र॒जाव॑ता॒ राध॑सा॒ ते स्या॑म ॥
१५

यस्मै॑ । त्वम् । सु॒ऽद्र॒वि॒णः॒ । ददा॑शः । अ॒ना॒गाः॒ऽत्वम् ।
अ॒दि॒ते॒ । स॒र्वऽता॑ता ।

यम् । भ॒द्रेण॑ । शव॑सा । चो॒दया॑सि । प्र॒जाऽव॑ता । राध॑सा
। ते । स्या॒म॒ ॥१५

यस्मै । त्वम् । सुऽद्रविणः । ददाशः । अनागाःऽत्वम् ।
अदिते । सर्वऽताता ।

यम् । भद्रेण । शवसा । चोदयासि । प्रजाऽवता । राधसा
। ते । स्याम ॥१५

हे "सुद्रविणः शोभनधन "अदिते अखण्डनीयाग्ने "सर्वताता सर्वासु कर्मततिषु यद्वा सर्वेषु यज्ञेषु वर्तमानाय यस्मै यजमानाय “अनागास्त्वम् अपापत्वं पापराहित्येन कर्मार्हतां “त्वं “ददाशः प्रयच्छसि स यजमानः समृद्धो भवति । "यं च यजमानं “भद्रेण भजनीयेन कल्याणेन “शवसा बलेन “चोदयासि संयोजयसि सोऽपि समृद्धो भवति । वयं च स्तोतारः प्रजावता प्रजाभिः पुत्रपौत्रैर्युक्तेन “ते "राधसा त्वया दत्तेन धनेन युक्ताः स्याम भवेम ॥

सुद्रविणः । शोभनानि द्रविणानि धनानि यस्य । ‘ द्रु गतौ । द्रुदक्षिभ्यामिनन् ' ( उ. सू. २. २०८)। द्रविणशब्दस्यान्ते सकारोपजनश्छान्दसः । ददाशः । ‘ दाशृ दाने ' । लेट अडागमः। ‘बहुलं छन्दसि' इति शपः श्लुः । ‘ अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । सर्वताता। सर्वदेवात्तातिल' इति स्वार्थे तातिल्प्रत्ययः। यास्कपक्षे तु सर्वाः स्तुतयो येषु यागेष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वर्णव्यापत्त्या आत्वम् ।

उभयत्रापि सुपां सुलुक्' इति सप्तम्या डादेशः । चोदयासि । ' चुद प्रेरणे' । लेटि आडागमः ॥

स त्वमं॑ग्ने सौभग॒त्वस्यं वि॒द्वान॒स्माक॒माय॒ुः प्र तिं॑रे॒ह दें॑व ।

तन्नों॑ मि॒त्रो वरुं॑णो मामहन्ता॒मदिं॑ति॒ः सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥१६

सः । त्वम् । अ॒ग्ने॒ । सौ॒भ॒ग॒ऽत्वस्यं । वि॒द्वान् । अ॒स्माकं॑म् । आयुः॑ । प्र । ति॒र॒ । इ॒ह । दे॒व॒ ।

तत् । न॒ः । मि॒त्रः । वरुं॑णः । म॒म॒ह॒न्ता॒म् । अदिं॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥१६

सः । त्वम् । अग्ने । सौभगऽत्वस्य । विद्वान् । अस्माकम् । आयुः । प्र । तिर । इह । देव ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः ।
सिन्धुः । पृथिवी । उत । द्यौः ॥१६

हे "देव दानादिगुणयुक्त "अग्ने सः पूर्वोक्तगुणविशिष्टः त्वं "सौभगत्वस्य सुभगत्वं सौभाग्यं “विद्वान् जानन् "इह अस्मिन् कर्मणि "अस्माकमायुः “प्र “तिर प्रवर्धय । प्रपूर्वस्तिरतिर्वर्धनार्थः । त्वया वर्धितं नः अस्माकं “तत् आयुः मित्रादयः षड्दैवताः “ममहन्तां पूजयन्तां रक्षन्त्वित्यर्थः । “मित्रः प्रमीतेस्त्राता “वरुणः अनिष्टानां निवारयिता अदितिः अदीना अखण्डनीया वा देवमाता “सिन्धुः स्यन्दनशीलोदकात्मा देवता "पृथिवी प्रथिता भूदेवता। “उत इति समुच्चये। "द्यौः प्रकाशमाना द्युलोकात्मा देवता । एताश्च सर्वा अग्निना प्रवर्धितमायुर्ममहन्तामिति पूर्वत्रान्वयः ॥ सौभगत्वस्य । सुभगस्य भावः सौभगम् ।' सुभगान्मन्त्रे ' इति उद्गात्रादिषु पाठात् भावे अञ् । पुनरपि भावप्रत्ययोत्पत्तिश्छान्दसी ।

ममहन्ताम् । ‘ मह पूजायाम् ' । भौवादिकः। लोटि • बहुलं छन्दसि ' इति शपः श्लुः । तुजादित्वात् अभ्यासस्य दीर्घत्वम् ॥ ॥ ३२ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थाश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके षष्ठोऽध्यायः समाप्तः ।।

**टिप्पणी**

यज्ञसारथिगानम्

भारुण्डसाम

कुत्सोपरि टिप्पणी

स्तोमोपरि टिप्पणी

जातवेदसः स्वरूपं किं अस्ति, अस्मिन् संदर्भे -- यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्सन्तळिदिवाति रोचसे । रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥७॥

इमं स्तोमं अर्हते जातवेदसे --

काशकृत्स्नधातुकोशे(१.३२३) उल्लेखमस्ति --
अर्ह मह पूजायाम्। अत्र अर्ह-मह शब्दयोः भेदं न प्रतीयते। किन्तु ऋग्वेदे जातवेदाशब्दस्य संदर्भे अयं भेदः व्यक्तः भवति। अर्ह एकान्तिकसाधनायाः एवं मह सार्वत्रिकसाधनायाः प्रतीकौ स्तः। इन्द्रस्य संदर्भे, यदा इन्द्रः वज्रेण वृत्रवधं करोति, तत् एकान्तिकः। यदा सः मरुतैः सह मैत्री करोति, मरुत्सखा भवति, तत् सार्वत्रिकः। जातवेदस्य संदर्भे अयं प्रतीयते यत् यावत् अग्निः छन्देभ्यः बद्धा अस्ति, तावत् एकान्तिकः, अर्हतः अस्ति। यदा छन्दसां अतिक्रमणं कृत्वा स्तोमैः बद्धा भवति, तत् सार्वत्रिकरूपः (संमहेम) अस्ति। इन्द्रस्य सखा मरुतः सन्ति, जातवेदस्य वयं(अग्ने सख्ये मा रिषामा वयं तव)। यावत् अग्निः छन्देभ्यः बद्धा अस्ति, तावत् देवानां स्वरूपं विश्वेदेवाः, समष्टिः अस्ति। यदा स्तोमेभिः, तदा देवताविशेषः, व्यष्टिः।

शुक्लयजुर्वेदे (५.४, १२.६१) एवं शतपथब्राह्मणे (३.४.१.२२) जातवेदसद्वयोः उल्लेखमस्ति। एतयोः सर्जनं अरणिमन्थनतः भवति। अधरारणिः उर्वश्याः रूपमासीत्, उत्तरारणिः पुरूरवारूपः। जातवेदसः यः रूपं एकवचने अस्ति, तत् अमृतं अस्ति - प्रप्र वयममृतं जातवेदसं( ऋ. ६.४८.१)।

जातवेदा उपरि संक्षिप्त टिप्पणी एवं वैदिकसंदर्भाः

षष्ठमहः - वैश्वदेवशस्त्रम्, आग्निमारुतशस्त्रम्-- इमम् स्तोमम् अर्हते जात वेदस इति जातवेदसीयम् । तस्य तद् एव अन्त रूपम् यत् सोदर्कम् । मा रिषाम मा रिषाम इति । तद् अन्ततो अरिष्ट्यै रूपम् । - कौ.ब्रा. २३.८

इमं स्तोममर्हते जातवेदस इत्याग्नीध्रो यजति रथमिव सम्महेमा मनीषयेति बहूनि वाह तदृभूणां

रूपम् – ऐ.ब्रा. ६.१२.१२

षष्ठे अहनि प्रथममाज्यस्तोत्रम् - इमं स्तोममर्हते जातवेदस" इत्याग्नेयमाज्यं भवति सोदर्कमिन्द्रियस्य वीर्यस्य रसस्यानतिक्षाराय यत्र वै देवा इन्द्रियं वीर्यं रसमपश्यंस्तदनुन्यतुदन् – तांब्रा. १३.८.१

इमं स्तोमम् अर्हते जातवेदसे इत्य् आग्नीध्रो यजति रथम् इव सं महेमा मनीषया इति बहूनि वाह तद् ऋभूणां रूपम् – गो.ब्रा. २.२.२२

अग्न्यन्वाधानप्रकरणम् -- प्राग्नये वाचमिमं स्तोममिति चोपस्थानं सूक्ताभ्याम् – शांश्रौसू. ४.२.१०

ज्योतिष्टोमे तृतीयसवने प्रस्थितयाज्याप्रकरणम् --
इमं स्तोममित्याग्नीध्रः शांश्रौसू. ८.२.११

दशरात्रे षष्ठमहः -- इमं स्तोममित्याग्निमारुते
शां.श्रौ.सू. १०.८.१५

उपनयनम् -- इमँ स्तोममर्हत इत्यग्निं परिसमुह्य
पर्युक्ष्य परिस्तीर्यैधोस्येधिषीमहीति समिधमादधाति
– मानवगृह्यसूत्रम् १.१.१६

दर्भाणां पवित्रे मन्त्रवदुत्पाद्येमँ स्तोममर्हत इत्यग्निं
परिसमुह्य पर्युक्ष्य परिस्तीर्य
पश्चादग्नेरेकवद्बर्हिःस्तृणाति मानव गृह्यसूत्रम्
१.१०.२

इमँ स्तोममर्हत इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य
पश्चादग्नेरेकवद्बर्हिस्तृणाति मानवगृह्यसूत्रम् २.२.५

पौण्डरीकयागे यज्ञसारथिगानाय यस्य सामस्य भवान् गानं करिष्यसि, तस्मिन् संदर्भे पौण्डरीकयागस्य स्वरूपं ध्यातव्यं अस्ति। कथनमस्ति यत् पौण्डरीकयागे गजस्य आलभनं भवति, यथा अश्वमेधे अश्वस्य। नायं आलभनं भौतिकरूपेण भवति। गजस्य प्रकृतिः शुण्डद्वारा जलस्य आकर्षणस्य भवति, यथा सूर्यः स्वकिरणेभ्यः जलस्य आकर्षणं करोति। एवमेव, अस्मिन् जगति, यः सर्वश्रेष्ठमस्ति, तस्य आकर्षणम्। अभिधानराजेन्द्रकोशे(भागः ५, पृ. ८४३). कथनमस्ति यत् एकः पंकपूर्णः सरोवरः अस्ति यस्मात् साधकेन पद्मस्य आहरणं करणीयं अस्ति। यः एवंकरणे सक्षमः भवति, तत् पुण्डरीकं अस्ति, शेषः कण्डरीकं।

# ऋग्वेदः सूक्तं १.९५

ऋग्वेदः - मण्डल १
← सूक्तं १.९४
सूक्तं १.९६ →
सूक्तं १.९५
कुत्स आङ्गिरसः

दे. अग्निः, औषसोऽग्निर्वा। त्रिष्टुप् ।

प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसि इदमादिके द्वे सूक्ते (आश्व.श्रौ.सू. ४.१३)

---

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।

हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥१॥

दशेमं त्वष्टुर्जनयन्त गर्भमतन्द्रासो युवतयो विभृत्रम् ।

तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयन्ति ॥२॥

त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।

पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशासद्वि दधावनुष्ठु ॥३॥

क इमं वो निण्यमा चिकेत वत्सो मातॄर्जनयत स्वधाभिः ।

बह्वीनां गर्भो अपसामुपस्थान्महान्कविर्निश्चरति स्वधावान् ॥४॥

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे ।

उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते ॥५॥*

उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः ।

स दक्षाणां दक्षपतिर्बभूवाञ्जन्ति यं दक्षिणतो हविर्भिः ॥६॥

उद्यंयमीति सवितेव बाहू उभे सिचौ यतते भीम ऋञ्जन् ।

उच्छुक्रमत्कमजते सिमस्मान्नवा मातृभ्यो वसना जहाति ॥७॥

त्वेषं रूपं कृणुत उत्तरं यत्सम्पृञ्चानः सदने गोभिरद्भिः ।

कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥८॥

उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।

विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ॥९॥

धन्वन्स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षाम् ।

विश्वा सनानि जठरेषु धत्तेऽन्तर्नवासु चरति प्रसूषु ॥१०॥

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥११॥

## सायणभाष्यम्

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

प्रथमे मण्डले पञ्चदशेऽनुवाके प्रथमं सूक्तं व्याख्यातम् ।
द्वे विरूपे' इत्येकादशर्चं द्वितीयं सूक्तम् । अत्रानुक्रम्यते- द्वे
एकादशौषसाय वाग्नये ' इति । ऋषिश्चान्यस्मात् ' इति
परिभाषया कुत्सस्यानुवृत्तेराङ्गिरसः कुत्सः ऋषिः ।
अनादेशपरिभाषया त्रिष्टुप् छन्दः । उषसि प्रातःकाले
हविर्भाक् योऽग्निरस्ति स देवता । यद्वा ।' आग्नेयं तत्'
इति पूर्वोत्रोक्तत्वात् तुह्यादिपरिभाषया इदमादीनि पञ्च
सूक्तानि केवलाग्निदेवत्यानि । अतोऽस्य सूक्तस्य
औषसगुणविशिष्टोऽग्निः शुद्धोऽग्निर्वा देवता इति
वाशब्दार्थः । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसि
इदमादिके द्वे सूक्ते । तथा च सूत्रितम् ' अथैतस्याः' इति
खण्डे- द्वे विरूपे इति सूक्ते ' ( आश्व. श्रौ. ४. १३ ) इति ।
आश्विनशस्त्रे चैते ' प्रातरनुवाकन्यायेन तस्यैव
समाम्नायस्य ' ( आश्व. श्रौ. ६. ५. ) इत्यतिदिष्टत्वात् ॥

द्वे विरू॑पे चरत॒ः स्वर्थे॑ अ॒न्यान्या॑ व॒त्समुप॑ धापयेते ।

हरि॑र॒न्यस्या॒ं भव॑ति स्व॒धावा॑ञ्छु॒क्रो अ॒न्यस्या॑ं ददृशे सु॒वर्चा॑ः ॥१

द्वे इति॑ । विरू॑पे॒ इति॒ विऽरू॑पे । च॒र॒त॒ः । स्वर्थे॒ इति॑ सु॒ऽअर्थे॑ । अ॒न्याऽअ॑न्या । व॒त्सम् । उप॑ । धा॒प॒ये॒ते॒ इति॑ ।

हरि॑ः । अ॒न्यस्या॑म् । भव॑ति । स्व॒धाऽवा॑न् । शु॒क्रः । अ॒न्यस्या॑म् । द॒दृ॒शे॒ । सु॒ऽवर्चा॑ः ॥१

द्वे इति । विरूपे इति विऽरूपे । चरतः । स्वर्थे इति सुऽअर्थे । अन्याऽअन्या । वत्सम् । उप । धापयेते इति ।

हरिः । अन्यस्याम् । भवति । स्वधाऽवान् । शुक्रः । अन्यस्याम् । ददृशे । सुऽवर्चाः ॥१

"स्वर्थे स्वरणे शोभनगमनागमने । यद्वा । अर्थः प्रयोजनम् । शोभनप्रयोजनोपेते "विरूपे विषमरूपे शुक्लकृष्णतया नानारूपे “द्वे अहोरात्रे "चरतः पुनःपुनः पर्यावर्तेते । ते चाहोरात्रे अग्नेः सूर्यस्य च जनन्यौ । तत्र रात्रेः पुत्रः सूर्यः । स हि गर्भवत् रात्रावन्तर्हितः सन् तस्याः चरमभागादुत्पद्यते। अह्नः पुत्रोऽग्निः । स हि तत्र विद्यमानोऽपि प्रकाशराहित्येन असत्कल्पः सन् तस्मात् अह्नः सकाशात् निर्मुक्तः प्रकाशमानं स्वात्मानं लभते । अनयोरेतयोः पुत्रत्वं च तैत्तिरीयैराम्नायते- तयोरेतौ वत्सौ । अग्निश्चादित्यश्च । रात्रेर्वत्सः । श्वेत आदित्यः । अह्नोऽग्निः । ताम्रो अरुणः' ( तै. आ. १. १०) इति । ते चाहोरात्रे “वत्सं स्वं स्वं पुत्रम्" “अन्यान्या परस्परव्यतिहारेण “उप “धापयेते स्वकीय रसं पाययतः । यद्रात्र्या कर्तव्यं स्वपुत्रस्यादित्यस्य रसस्य पायनं तदहः करोति । यदह्ना कर्तव्यं स्वपुत्रस्याग्नेः रसस्य पायनं तद्रात्रिः करोति । एतच्च सायंप्रातःकालीनाहुत्यभिप्रायम्

। श्रूयते च-’ तस्मादग्नये सायं हूयते सूर्याय प्रातः ' ( तै. ब्रा. २. १. २. ६ ) इति । यस्मादेवं तस्मात् "अन्यस्यां स्वजनन्याः अन्यस्याम् अहरात्मिकायामग्नेर्जनन्यां "हरिः रसहरणशील आदित्यः "स्वधावान् हविर्लक्षणान्नवान् "भवति । “शुक्रः निर्मलदीप्तिरग्निः स्वजनन्याः "अन्यस्यां रात्र्यामादित्यस्य जनन्यां "सुवर्चाः शोभनदीप्तियुक्तः सन् “ददृशे दृश्यते ॥ स्वर्थे । ऋ गतौ । ‘ उषिकुषिगार्तिभ्यस्थन्' इति भावे कर्मणि वा थन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । शोभनोऽर्थो ययोस्ते । ‘ आद्युदात्तं द्व्यच्छन्दसि ' इत्युत्तरपदाद्युदात्तत्वम् । अन्यान्या। ‘ कर्मव्यतिहारे सर्वनाम्नो हे भवत इति वक्तव्यं समासवच्च बहुलम् ' ( पा. म. ८. १. १२. ११) इति द्विर्भावः । बहुलग्रहणात् समासवद्भावाभावे । तस्य परमाम्रेडितम्' इति परस्याम्रेडितसंज्ञायाम् ' अनुदात्तं च ' इति आम्रेडितानुदात्तत्वम् । धापयेते । धेट् पाने '। ‘ आदेचः०' इति आत्वम् । ततो हेतुमति णिच् ।' अर्तिह्री ' ( पा. सू. ७,

३. ३६ ) इत्यादिना धातोः पुगागमः । तत्र हि लक्षणप्रतिपदोक्तपरिभाषा नास्तीति ज्ञापितं 'शाच्छासाह्वाव्या° ' इति कृतात्वानां निर्देशेन । स हि युक्प्राप्तिख्यापनार्थः । यदि तत्र लक्षणप्रतिपदोक्तपरिभाषया पुक् न प्राप्नोति सोऽनर्थकः स्यात् । तस्मात् अध्यापयति इत्यादाविव धापयेते इत्यत्रापि पुगागमः सिद्धः । ' निगरणचलनार्थेभ्यश्च । ( पा . सू . १. ३. ८७ ) इति प्राप्तस्य परस्मैपदस्य पादिषु धेट उपसंख्यानम् ' (पा. सू. १, ३. ८९. १) इति प्रतिषेधात् आत्मनेपदम् । हरिः । ' हृञ् हरणे'। औणादिकः इन्प्रत्ययः । ञ्नित्यादिर्नित्यम्' इत्यादाद्युदात्तत्वम् । भवति । ' एकान्याभ्यां समर्थाभ्याम् (पा. सू. ८. १. ६५) इति प्रथमायाः तिङ्विभक्तेः निघातप्रतिषेधः । ददृशे । दृशेः 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । सुवर्चाः । शोभनं वर्चस्तेजो यस्य । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् ॥

दशे॒मं त्वष्टु॑र्जनयन्त॒ गर्भ॒मतं॑न्द्रासो युव॒तयो॒ विभृं॑त्रम् ।

ति॒ग्मानीं॑कं॒ स्वयं॑शसं॒ जनें॑षु वि॒रोचं॑मानं॒ परिं षीं नयन्ति ॥ २

दशं॑ । इ॒मम् । त्वष्टुः॑ । ज॒न॒य॒न्त॒ । गर्भं॑म् । अतं॑न्द्रासः । यु॒व॒तयः॑ । विऽभृं॑त्रम् ।

ति॒ग्मऽअं॑नीं॑कम् । स्वऽयं॑शसम् । जनें॑षु । वि॒ऽरोचं॑मानम् । परिं॑ । सी॒म् । न॒य॒न्ति॒ ॥२

दश । इमम् । त्वष्टुः । जनयन्त । गर्भम् । अतन्द्रासः । युवतयः । विऽभृत्रम् ।

तिग्मऽअनीकम् । स्वऽयशसम् । जनेषु । विऽरोचमानम् । परि । सीम् । नयन्ति ॥२

“अतन्द्रासः स्वकार्ये जगतः पोषणेऽनलसाः आलस्यरहितः जागरूका इत्यर्थः । "युवतयः नित्यतरुण्यः जरामरणरहिता इत्यर्थः । एवंभूताः "दश प्राच्याद्या दशसंख्याकाः दिशः "गर्भं मेघेषु गर्भरूपेणान्तर्वर्तमानं “त्वष्टुः दीप्तात् मध्यमात् वायोः सकाशात् "जनयन्त वैद्युतमग्निम् उत्पादयन्ति । यद्वा दशसंख्याका अङ्गुलयस्त्वष्टुर्दीप्तस्य वायोः गर्भं स्वकारणभूते वायौ गर्भरूपेण वर्तमानम् । अग्नेर्हि वायुः कारणं ‘वायोरग्निः' (तै, आ. ८.१) इति श्रुतेः । एवंभूतम् "इमम् अग्निम् अरण्योः सकाशात् जनयन्त उत्पादयन्ति। कीदृश्योऽङ्गुलयः । अतन्द्रासः पुनःपुनः कर्मकरणे आलस्यरहिताः । युवतयः अपृथक्कृत्य वर्तमानाः । एकस्मिन्पाणौ संहत्यावस्थिता इत्यर्थः । कीदृशमग्निम् । “विभृत्रं सर्वेषु भूतेषु विहृतम् । जाठररूपेण विभज्य वर्तमानमित्यर्थः । "तिग्मानीकं तीक्ष्णमुखं तीक्ष्णतेजसम् । अत एव हि वैद्युताग्निदर्शने दृष्टिः प्रतिहन्यते ।

"स्वयशसं स्वायत्तयशस्कम् । अतिशयेन यशस्विनमित्यर्थः । “जनेषु जनपदेषु सर्वदेशेषु "विरोचमानं विशेषेण दीप्यमानम् । बहूनामुपकारकमित्यर्थः । एवंभूतं "सीम् एनमग्निं "परि परितः सर्वतः “नयन्ति स्वस्वोपकाराय सर्वे जनाः स्वकीयं देशं प्रापयन्ति ॥ त्वष्टुः । ‘ त्विष दीप्तौ ।' नप्तृनेष्टृत्वष्टृ' ( उ. सू. २. २५२ ) इत्यादिना उणादिषु तृनन्तः निपातितः । अतो नित्त्वादाद्युदात्तत्वम् । विभृत्रम् । हृञ् हरणे'। अस्मात् कर्मणि निष्ठा। छान्दसो रेफोपजनः । ‘ गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । ‘ हृग्रहोर्भः' इति भत्वम् । यद्वा औणादिकः क्प्र त्ययः । तिग्मानीकम् । ‘तिज निशाने '। युजिरुचितिजां कुत्वं च ' ( उ. सू. १, १४३ )इति मक् ।' अन प्राणने '।' अनिदृशिभ्यां च ' इति कीकन् । तिग्मं तीक्ष्णमनीकं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । परि षीम् । पूर्वपदात्' इति षत्वम् ॥

त्रीणि॒ जाना॒ परिं भूषन्त्यस्य समु॒द्र एकं दि॒व्येकंम॒प्सु ।

पूर्वा॒मनु॒ प्र दिशं॒ पार्थिंवानामृ॒तून्प्र॒शास॒द्वि दंधावनु॒ष्ठु ॥३

त्रीणिं । जानां । परिं । भू॒ष॒न्ति॒ । अ॒स्य॒ । स॒मु॒द्रे । एकंम् ।
दि॒वि । एकंम् । अ॒प्ऽसु ।

पूर्वांम् । अनुं । प्र । दिशंम् । पार्थिंवानाम् । ऋ॒तून् ।
प्र॒ऽशासंत् । वि । द॒धौ॒ । अ॒नु॒ष्ठु ॥३

त्रीणि । जाना । परि । भूषन्ति । अस्य । समुद्रे । एकम् ।
दिवि । एकम् । अप्ऽसु ।

पूर्वाम् । अनु । प्र । दिशम् । पार्थिवानाम् । ऋतून् ।
प्रऽशासत् । वि । दधौ । अनुष्ठु ॥३

“अस्य अग्नेः “त्रीणि त्रिसंख्याकानि “जाना जननानि जन्मानि ”परि “भूषन्ति परितः सर्वतोऽलंकुर्वन्ति । यद्वा परीत्येष समित्येतस्य स्थाने । अस्याग्नेस्त्रीणि जन्मानि संभवन्ति । "समुद्रे अब्धौ वडवानलरूपेण “एकं जन्म । “दिवि द्युलोके आदित्यात्मना “एकम् । "अप्सु । आपः इति अन्तरिक्षनाम । अन्तरिक्षे वैद्युताग्निरूपेणैकम् । एवमग्निस्त्रेधात्मानं विभज्य त्रिषु स्थानेषु वर्तते इत्यर्थः । तत्रादित्यात्मना वर्तमानः सोऽग्निः “ऋतूनु वसन्ताद्यान् षड्तून "प्रशासत् प्रकर्षेण विभक्ततया ज्ञापयन् "पार्थिवानां पृथिव्याः संबन्धिनां सर्वेषां प्राणिनां "पूर्वां प्राचीं “प्र “दिशं प्रकृष्टां ककुभम् । “अनुष्ठु इत्येतदव्ययं सम्यक्शब्दसमानार्थं सुष्ठ्विति यथा । सम्यगनुक्रमेण वि “दधौ कृतवान् । स्वतो भेदरहितयोरखण्डयोर्दिक्कालयोः प्राच्यादिभेदो वसन्तादिभेदश्च सूर्यगत्या निष्पाद्यते । अतः सूर्य एव तयोः कर्तेत्यर्थः ॥ जाना । जनी प्रादुर्भावे ' । घञ्। ‘ कर्षात्वतः° ' इत्यन्तोदात्तत्वे प्राप्ते

वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । शेश्छन्दसि बहुलम्'
इति शेर्लोपः । भूषन्ति । ' भूष अलंकारे'। भौवादिकः ।
यद्वा । भवतेर्लेटि सिब्बहुलं लेटि ' इति सिप् ।
आगमानुशासनस्यानित्यत्वात् इडभावः, संज्ञापूर्वकस्य
विधेरनित्यत्वात् गुणाभावश्च । दिवि । अप्सु । उभयत्र
ऊडिदम्' इति विभक्तेः उदात्तत्वम् । पार्थिवानाम् ।'
पृथिव्या ञाञौ ' इति प्राग्दीव्यतीयः अञ्प्रत्ययः ।
प्रशासत् । ' शासु अनुशिष्टौ ' । अस्मात् लटः शतृ ।'
जक्षित्यादयः षट्' इति अभ्यस्तसंज्ञायां नाभ्यस्ताच्छतुः ।
इति नुम्प्रतिषेधः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अनुष्ठु ।'
अपदुःसुषु स्थः ' ( उ. सू. १. २५) इति विधीयमानः
कुप्रत्ययो बहुलवचनात् तिष्ठतेरनुपूर्वादपि भवति ॥

क इ॒मं वों नि॒ण्यमा चिंकेत व॒त्सो मा॒तॄर्जंनयत स्व॒धाभिंः
।

ब॒ह्वी॒नां गर्भो॑ अ॒पसा॑मु॒पस्था॑न्म॒हान्क॒विर्निश्च॑रति स्व॒धावा॑न्
॥४

कः । इ॒मम् । व॒ः । नि॒ण्यम् । आ । चि॒के॒त॒ । व॒त्सः । मा॒तॄः
। ज॒न॒य॒त॒ । स्व॒धाभिः॑ ।

ब॒ह्वी॒नाम् । गर्भः॑ । अ॒पसा॑म् । उ॒पऽस्था॑त् । म॒हान् ।
क॒विः । निः । च॒र॒ति॒ । स्व॒धाऽवा॑न् ॥४

कः । इमम् । वः । निण्यम् । आ । चिकेत । वत्सः । मातॄः
। जनयत । स्वधाभिः ।

बह्वीनाम् । गर्भः । अपसाम् । उपऽस्थात् । महान् ।
कविः । निः । चरति । स्वधाऽवान् ॥४

हे ऋत्विग्यजमानाः “निण्यं निर्णीतम् । अन्तर्हितनामैतत्
। अबादिषु गर्भरूपेणान्तर्हितम् । तथा च मन्त्रान्तरम्-'
गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम्' (

ऋ. सं. १. ७०. २) इति । एवंभूतम् “इमम् अग्निं “वः युष्माकं मध्ये "कः “आ “चिकेत को जानाति । न कोऽपीत्यर्थः । सोऽयमग्निः “वत्सः मेघस्थानामपां वैद्युताग्निरूपेण पुत्रस्थानीयः सन् 'मातॄः तस्य मातृस्थानीयानि वृष्ट्युदकानि "स्वधाभिः हविर्लक्षणैरन्नैः "जनयत उत्पादयति । तथा च स्मर्यते- अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ' ( मनु. ३. ७६ ) इति । अपि च "बह्वीनां मेघस्थानामपां "गर्भः वैद्युतरूपेण गर्भस्थानीयः सोऽग्निः “अपसामुपस्थात् समुद्रात् “निश्चरति औषसाग्निरूपेणादित्यः सन्निर्गच्छति । कीदृशः । "महान् तेजसा प्रौढः "कविः क्रान्तदर्शी "स्वधावान् हविर्लक्षणान्नवान् । एक एवाग्निर्होमनिष्पादकलक्षणेन पार्थिवरूपेण वैद्युतात्मना औषसरूपेण आदित्यात्मना च विभज्य वर्तते इत्यर्थः ॥ चिकेत । ‘ कित ज्ञाने' । छान्दसो लिट् । जनयत । ‘ जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ' इति

मित्त्वात् ‘मितां ह्रस्वः' इति ह्रस्वत्वम् । पूर्ववत् छान्दसो लङ् । बह्वीनाम् । ‘ नित्यं छन्दसि ' ( पा. सू. ४. १. ४६ ) इति बहुशब्दात् ङीष् । ‘ ङ्याश्छन्दसि बहुलम् ' (पा. सू. ६. १. १७८) इति नाम उदात्तत्वम् । अपसाम् । ‘ आप्लृ व्याप्तौ ।' आपः कर्माख्यायां ह्रस्वो नुट् च वा ' ( उ. सू. ४. ६४७ ) इति बहुलवचनादकर्माख्यायामपि आप्नोतेः असिप्रत्ययः ह्रस्वश्च । उपस्थात् । उपतिष्ठन्त्यापोऽत्र इत्युपस्थः । ‘ आतश्चोपसर्गे' इति ‘कृत्यल्युटो बहुलम्' इति बहुलवचनात् अधिकरणे कप्रत्ययः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ।।

आ॒विष्ट्यो॑ वर्धते॒ चारु॑रासु जि॒ह्माना॑मू॒र्ध्वः स्वय॑शा उ॒पस्थे॑ ।

उ॒भे त्वष्टु॑र्बिभ्यतु॒र्जाय॑मानात्प्रती॒ची सिं॒हं प्रति॑ जोषयेते ॥ ५

आ॒विःऽत्य॑ः । व॒र्ध॒ते॒ । चारु॑ः । आ॒सु॒ । जि॒ह्मानां॑म् । ऊ॒र्ध्वः । स्वऽय॑शाः । उ॒पऽस्थे॑ ।

उ॒भे इति॑ । त्वष्टु॑ः । बि॒भ्य॒तु॒ः । जाय॑मानात् । प्र॒ती॒ची इति॑ । सिं॒हम् । प्रति॑ । जो॒ष॒ये॒ते॒ इति॑ ॥५

आविःऽत्यः । वर्धते । चारुः । आसु । जिह्मानाम् । ऊर्ध्वः । स्वऽयशाः । उपऽस्थे ।

उभे इति । त्वष्टुः । बिभ्यतुः । जायमानात् । प्रतीची इति । सिंहम् । प्रति । जोषयेते इति ॥५

"आसु मेघस्थास्वप्सु वैद्युतात्मना वर्तमानोऽग्निः “चारुः शोभनदीप्तिः सन् "आविष्ट्यो “वर्धते आविर्भूतः प्रकाशमानो वृद्धिं प्राप्नोति । किं कुर्वन् । "जिह्मानां

कुटिलानां मेघेषु तिर्यगवस्थितानां तासामपाम् "उपस्थे उत्सङ्गे "स्वयशाः स्वायत्तयशस्कोऽग्निः “ऊर्ध्वः ऊर्ध्वज्वलनः सन् । स्वकारणभूतास्वप्सु तिर्यगवस्थितास्वपि स्वयमूर्ध्वं ज्वलन्नित्यर्थः । तदुक्तं वैशेषिकैः-’ अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनम् अणुमनसोराद्यं कर्मैतान्यदृष्टकारितानि' इति । अपि च “उभे द्यावापृथिव्यौ त्वष्टुः दीप्तात् "जायमानात् उत्पद्यमानात्तस्मादग्नेः “बिभ्यतुः भयं प्रापतुः । तदनन्तरमुत्पन्नं “सिंहं सहनशीलमभिभवनशीलं तमग्निं "प्रतीची प्रत्यञ्चन्त्यौ प्रतिगच्छन्त्यौ आभिमुख्येन प्राप्नुवन्त्यौ "जोषयेते सेवेते । यास्कस्त्वाह- आविरावेदनात्तत्त्यो वर्धते चारुरासु चारु चरतेर्जिह्मं जिहीतेरूर्ध्व उच्छ्रितो भवति स्वयशा आत्मयशा उपस्थ उपस्थान उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते द्यावापृथिव्याविति वाहोरात्रे इति वारणी इति वापि चैते प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते' (निरु. ८. १५)

इति ॥ आविष्ट्यः । आविःशब्दात् छन्दसि ' (पा. सू. ४. २. १०४. १ ) इति शैषिकस्त्यप् । ह्रस्वात्तादौ तद्धिते ' (पा. सू. ८. ३. १०१ ) इति षत्वम् । आसु । इदमोऽन्वादेशे° ' इति अशादेशोऽनुदात्तः, विभक्तिश्च सुप्त्वादनुदात्ता इति सर्वानुदात्तत्वम् । न च ‘ ऊडिदम्' इति विभक्तेरुदात्तत्वं शङ्कनीयम् । अन्तोदात्तादिदंशब्दाद्धि तद्विधीयते । प्रतीची । प्रतिपूर्वात् अञ्चतेः ' ऋत्विक् ' इत्यादिना क्विन् ।' अनिदिताम्' इति नलोपः । ‘ अञ्चतेश्चोपसंख्यानम् ' इति ङीप् । अचः' इति अकारलोपे चौ ' इति दीर्घत्वम् । उदात्तनिविस्वरेण ङीप उदात्तत्वम् । ‘ वा छन्दसि ' इति पूर्वसवर्णदीर्घः । जोषयेते । ‘जुषी प्रीतिसेवनयोः । स्वार्थे णिच् ॥ ॥ १ ॥

उ॒भे भ॒द्रे जोंषयेते॒ न मेने॒ गावो॒ न वा॒श्रा उपं तस्थु॒रेवैंः ।

स दक्षा॑णा॒ं दक्ष॑पतिर्बभूवा॒ञ्जन्ति॒ यं द॑क्षिण॒तो ह॒विर्भि॑ः ॥६

उ॒भे इति॑ । भ॒द्रे इति॑ । जो॒ष॒ये॒ते॒ इति॑ । न । मेने॒ इति॑ । गाव॑ः । न । वा॒श्राः । उप॑ । त॒स्थुः॒ । एवैः॑ ।

सः । दक्षा॑णाम् । दक्ष॑ऽपतिः । ब॒भू॒व॒ । अ॒ञ्जन्ति॑ । यम् । द॒क्षि॒ण॒तः । ह॒विःऽभिः॑ ॥६

उभे इति । भद्रे इति । जोषयेते इति । न । मेने इति । गावः । न । वाश्राः । उप । तस्थुः । एवैः ।

सः । दक्षाणाम् । दक्षऽपतिः । बभूव । अञ्जन्ति । यम् । दक्षिणतः । हविःऽभिः ॥६

“उभे अहश्च रात्रिश्च । यद्वा उभे द्यावापृथिव्यौ । अरणी वा । भद्रे भजनीये शोभनाङ्ग्यौ “मेने स्त्रियौ "जोषयेते "न सेवेते इव । यथा शोभने स्त्रियौ चामरहस्ते राजानमुभयतः

सेवेते एवं द्यावापृथिव्यौ एनमग्निमुभयतः सेवेते इत्यर्थः ।
अपि च “वाश्राः हम्भारवं कुर्वत्यः "गावो “न गावो यथा
“एवैः स्वकीयैश्चरित्रैरादरातिशयेन स्वकीयान् वत्सान् “उप
“तस्थुः संगच्छन्ते तथेममग्निं द्यावापृथिव्यौ उपस्थिते
भवतः । पूर्वं सेवनमात्रमुक्तम् इदानीं पुन: गोनिदर्शनेन
तत्रैवादिरातिशयो द्योत्यते। अतः "सः अग्निः "दक्षाणां
सर्वेषां बलानां "दक्षपतिः बलाधिपतिः “बभूव आसीत् ।
बलानां मध्ये यदतिशयितं बलं तस्याधिपतिर्बभूवेत्यर्थः ।
"यम् अग्निं "दक्षिणतः आहवनीयस्य दक्षिणभागे
अवस्थिताः ऋत्विजः “हविर्भिः चरुपुरोडाशादिभिः
"अञ्जन्ति आर्द्रीकुर्वन्ति तर्पयन्ति सोऽग्निरिति
पूर्वेणान्वयः ॥ वाश्राः । ‘ वाशृ शब्दे'। ‘ स्फायितञ्चि° '
इत्यादिना रक् । एवैः । ‘ इण् गतौ ' ‘इण्शीङ्भ्यां वन्' इति
भावे वन्प्रत्ययः ।।

उद्यं॑यमीति सवि॒तेव॑ बा॒हू उ॒भे सिचौ॑ यतते भी॒म ऋ॒ञ्जन् ।

उच्छु॒क्रमत्क॑मजते सि॒मस्मा॒न्नवा॑ मा॒तृभ्यो॒ वस॑ना जहाति ॥७

उत् । य॒म्य॒मी॒ति॒ । स॒वि॒ताऽइ॑व । बा॒हू इति॑ । उ॒भे इति॑ । सिचौ॑ । य॒त॒ते॒ । भी॒मः । ऋ॒ञ्जन् ।

उत् । शु॒क्रम् । अत्क॑म् । अ॒ज॒ते॒ । सि॒मस्मा॑त् । नवा॑ । मा॒तृऽभ्यः॑ । वस॑ना । ज॒हा॒ति॒ ॥७

उत् । यम्यमीति । सविताऽइव । बाहू इति । उभे इति । सिचौ । यतते । भीमः । ऋञ्जन् ।

उत् । शुक्रम् । अत्कम् । अजते । सिमस्मात् । नवा । मातृऽभ्यः । वसना । जहाति ॥७

सवितेव सर्वस्य प्रेरकः आदित्यो थथा “बाहू
बाहुस्थानीयान् रश्मीनुद्गमयति तथायमौषसोऽग्निः
स्वकीयानि तेजांसि “उद्यंयमीति
भृशमुद्यतान्यूर्ध्वाभिमुखानि करोति । तदनन्तरं “भीमः
सर्वेषां भयंकरोऽग्निः “उभे 'सिचौ उभे द्यावापृथिव्यौ
“ऋञ्जन प्रसाधयन् स्वतेजसालंकुर्वन् “यतते स्वव्यापारे
प्रयतते । तदनन्तरं “सिमस्मात् सर्वस्माद्भूतजातात् “शुक्रं
दीप्तम् “अत्कं सारभूतं रसम् “उत् “अजते
रश्मिभिरूर्ध्वमादत्ते । अपि च “मातृभ्यः
स्वमातृस्थानीयेभ्यो वृष्ट्युदकेभ्यः सकाशात् “नवा नवानि
प्रत्याग्राणि ”वसना सर्वस्य जगतः आच्छादकानि तेजांसि
“जहाति उद्गमयति ॥ यंयमीति । ‘ यम उपरमे' । अस्मात्
यङ्लुकि 'नुगतोऽनुनासिकान्तस्य ' ( पा. सू. ७. ४. ८५ )
इति अभ्यासस्य नुगागमः । एतच्चानुस्वारोपलक्षणार्थम् ।
सिचौ । “ षिचिर् क्षरणे '। सिञ्चतः फलेन संयोजयतः
इति सिचौ द्यावापृथिव्यौ । ‘ क्विप् च ' इति क्विप् । यतते

।' यती प्रयत्ने । अत्कम् । ‘ अत सातत्यगमने '। ‘ इणभीकापाशल्यतिमर्चिभ्यः कन्' ( उ. सू. ३. ३२३) इति कन् । नित्त्वादाद्युदात्तत्वम् । सिमस्मात्। सिमशब्दः सर्वशब्दपर्यायः । नवा वसना । उभयत्र ‘शेश्छन्दसि बहुलम्' इति शेर्लोपः । जहाति । ‘ ओहाक् त्यागे' । जौहोत्यादिकः ।।

त्वे॒षं रू॒पं कृ॑णुत॒ उत्त॑रं॒ यत्सं॑म्पृञ्चा॒नः सद॑ने॒ गोभि॑र॒द्भिः ।

क॒विर्बु॒ध्नं परि॑ मर्मृज्यते॒ धीः सा दे॒वता॑ता॒ समि॑तिर्बभूव ॥ ८

त्वे॒षम् । रू॒पम् । कृ॒णु॒ते॒ । उत्ऽत॑रम् । यत् । स॒म्ऽपृ॒ञ्चा॒नः । सद॑ने । गोभिः॑ । अ॒त्ऽभिः ।

क॒विः । बु॒ध्नम् । परिं । म॒र्मृ॒ज्य॒ते॒ । धीः । सा । दे॒वऽतांता । सम्ऽइंतिः । ब॒भू॒व॒ ॥८

त्वेषम् । रूपम् । कृणुते । उत्ऽतरम् । यत् । सम्ऽपृञ्चानः । सदने । गोभिः । अत्ऽभिः ।

कविः । बुध्नम् । परि । मर्मृज्यते । धीः । सा । देवऽताता । सम्ऽइतिः । बभूव ॥८

“सदने अन्तरिक्षे “गोभिः गन्त्रीभिः "अद्भिः मेघस्थाभिः सह संपृञ्चानः वैद्युतरूपेण संयुक्तः सन् “त्वेषं दीप्तं सर्वैर्द्रष्टुमशक्यम् “उत्तरम् उत्कृष्टतरं “रूपं वैद्युतं प्रकाशं “यत् यदा “कृणुते करोति तदानीं “कविः क्रान्तदर्शी “धीः सर्वेषां धारकः सोऽग्निः “बुध्नं सर्वस्योदकस्य मूलभूतमन्तरिक्षं “परि “मर्मृज्यते परितो मार्ष्टि स्वतेजसाच्छादयति । तस्याग्नेः “सा "देवताता देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता

सती “समितिर्बभूव तेजसां संहतिर्भवति ॥ संपृञ्चानः । ‘पृची संपर्के'। रौधादिकः । अस्मात् लटः शानच् । ' श्नसोरल्लोपः' इति अकारलोपः । सीदन्त्यस्मिन् गन्धर्वादय इति सदनमन्तरिक्षम् । अधिकरणे ल्युट् । मर्मज्यते । ‘ मृजूष् शुद्धौ । अस्मात् यङि ‘ मर्मृज्यते मर्मृज्यमानास उपसंख्यानम् ' (पा. सू. ७. ४. ९१. १) इति निपातनात् अभ्यासस्य रुगागमः । देवताता । देवेन तता देवताता । तनोतेः कर्मणि निष्ठा ।' अनुदात्तोपदेश' ' इत्यादिना अनुनासिकलोपः । व्यत्ययेन आत्वम् ।' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

उ॒रु ते॒ ज्रय॒ः पर्ये॑ति बु॒ध्नं वि॒रोच॑मानं महि॒षस्य॒ धाम॑ ।

विश्वे॑भिरग्ने॒ स्वय॑शोभिरि॒द्धोऽद॑ब्धेभिः पा॒युभि॑ः

पाह्य॒स्मान् ॥९

उ॒रु । ते॒ । ज्रयः॑ । परि॑ । ए॒ति॒ । बु॒ध्नम् । वि॒ऽरोच॑मानम् । म॒हि॒षस्य॑ । धाम॑ ।

विश्वे॑भिः । अ॒ग्ने॒ । स्वय॑शःऽभिः । इ॒द्धः । अद॑ब्धेभिः । पा॒युऽभिः॑ । पा॒हि॒ । अ॒स्मान् ॥९

उरु । ते । ज्रयः । परि । एति । बुध्नम् । विऽरोचमानम् । महिषस्य । धाम ।

विश्वेभिः । अग्ने । स्वयशःऽभिः । इद्धः । अदब्धेभिः । पायुऽभिः । पाहि । अस्मान् ॥९

"महिषस्य महतः "ते तव "ज्रयः राक्षसादीनामभिभावुकं "विरोचमानं विशेषेण दीप्यमानम् “उरु विस्तीर्णं “धाम तेजः “बुध्नम् अपां मूलभूतमन्तरिक्षं “पर्येति परितो व्याप्नोति । हे "अग्ने "इद्धः अस्माभिः प्रज्वलितः सन् "विश्वेभिः सर्वैः "स्वयशोभिः स्वकीयैरात्मीयैस्तेजोभिः

"अस्मान् “पाहि रक्ष । कीदृशैः । "अदब्धेभिः राक्षसादिभिरहिंसितैः "पायुभिः पालनशक्तैः ॥ ज्रयः । ‘ जि ज्रि अभिभवे ' । असुन् । अदब्धेभिः । ‘ दम्भु दम्भे'। निष्ठायां यस्य विभाषा' इति इट्प्रतिषेधः । ‘ अनिदिताम् ' इति नलोपः । ‘ झषस्तथोर्धोऽधः' इति धत्वम् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । “ बहुलं छन्दसि ' इति भिस ऐसभावः ॥

धन्व॒न्स्रोतः॑ः कृणुते गा॒तुमू॒र्मिं शु॒क्रैरू॒र्मिभि॑र॒भि नं॑क्षति॒ क्षाम् ।

विश्वा॒ सना॑नि ज॒ठरे॑षु धत्ते॒ऽन्तर्नवा॑सु चरति प्र॒सूषु॑ ॥१०

धन्वं॑न् । स्रोतः॑ । कृ॒णु॒ते॒ । गा॒तुम् । ऊ॒र्मिम् । शु॒क्रैः । ऊ॒र्मिऽभिः॑ । अ॒भि । न॒क्ष॒ति॒ । क्षाम् ।

वि॒श्वा॑ । सना॑नि । ज॒ठरे॑षु । ध॒त्ते॒ । अ॒न्तः । नवा॑सु । च॒र॒ति॒ । प्र॒ऽसूषु॑ ॥१०

धन्वन् । स्रोतः । कृणुते । गातुम् । ऊर्मिम् । शुक्रैः । ऊर्मिऽभिः । अभि । नक्षति । क्षाम् ।

विश्वा । सनानि । जठरेषु । धत्ते । अन्तः । नवासु । चरति । प्रऽसूषु ॥१०

“धन्वन् नभसि "गातुं गमनशीलम् "ऊर्मिम् उदकसंघम् अयमग्निः "स्रोतः "कृणुते स्रोतसा प्रवाहरूपेण युक्तं करोति । "शुक्रैः निर्मलैः “ऊर्मिभिः तैर्जलसंघैः “क्षां भूमिम् "अभि "नक्षति अभिव्याप्नोति । स्वतेजोभिरन्तरिक्षे जलसंघमुत्पाद्य तेन सर्वा भूमिमभिवर्षतीत्यर्थः । पश्चात् "विश्वा सर्वाणि "सनानि । अन्ननामैतत् । सर्वाण्यन्नानि "जठरेषु “धत्ते अवस्थापयति । तदर्थं "नवासु वृष्ट्यनन्तरमुत्पन्नासु "प्रसूषु सर्वेषामन्नानां

प्रसवित्रीष्वोषधीषु पाकार्थम् "अन्तः "चरति मध्ये वर्तते । अन्तरवस्थितेन भौमाग्निना सर्वा ओषधयः पच्यन्ते ॥ धन्वन् । 'रिवि रवि धवि गत्यर्थाः । इदित्त्वात् नुम् । 'कनिन्युवृषि° ' इत्यादिना कनिन् ।' सुपां सुलुक् ' इति सप्तम्या लुक्। ' धन्वान्तरिक्षं धन्वन्त्यस्मादापः ' (निरु. ५. ५) इति यास्कः । नित्त्वात् आद्युदात्तत्वम् । गातुम् । ' गाङ् गतौ ।' कमिमनिजनि" ' इत्यादिना तुप्रत्ययः । ऊर्मिम् । " अर्तेरू च ' इति मिप्रत्ययः । मक्षति। ' नक्ष गतौ ॥

ए॒वा नों अग्ने स॒मिधां वृधा॒नो रे॒वत्पांवक॒ श्रवं॑से॒ वि भांहि ।

तन्नों मि॒त्रो वरुंणो मामहन्ता॒मदिं॑ति॒ः सिन्धुं॒ः पृथि॒वी उ॒त द्यौः ॥११

ए॒व । नः॒ । अ॒ग्ने॒ । स॒म्ऽइधा॑ । वृ॒धा॒नः । रे॒वत् । पा॒व॒क॒ ।
श्रव॑से । वि । भा॒हि॒ ।

तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः ।
सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥११

एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक ।
श्रवसे । वि । भाहि ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः ।
सिन्धुः । पृथिवी । उत । द्यौः ॥११

हे पावक शोधक “अग्ने "समिधा अस्माभिर्दत्तेन समिदादिद्रव्येण "एव एवमुक्तप्रकारेण “वृधानः वर्धमानः सन् "रेवत् रयिमते धनयुक्ताय “नः अस्माकं “श्रवसे अन्नाय "वि “भाहि विशेषेण दीप्यस्व । अस्माकं तादृशमन्नं प्रयच्छेत्यर्थः । "नः अस्माकं "तत् अन्नं मित्रादयः

"ममहन्तां पूजयन्तां रक्षन्त्वित्यर्थः । उतशब्दः समुच्चये । पृथिवी च द्यौश्चेत्यर्थः ॥ एव । ' निपातस्य च ' इति संहितायां दीर्घः । वृधानः । वृधेः अन्तर्भावितण्यर्थात् ताच्छीलिकः चानश् । 'बहुलं छन्दसि ' इति शपो लुक् । चानशः सार्वधातुकत्वेन ङित्त्वात् लघूपधगुणाभावः । लसार्वधातुकत्वाभावेनानुदात्तत्वाभावे चित्स्वर एव शिष्यते । रेवत् । रयिशब्दात् मतुप् । 'रयेर्मतौ बहुलम्' इति संप्रसारणम् । ' छन्दसीरः' इति मतुपो वत्दम् । " रेशब्दाच्च° ( का. ६. १. १७६. १ ) इति मतुप उदात्तत्वम् । 'सुपां सुलुक्' इति चतुर्थ्या लुक् ॥ ॥ २ ॥

- १.९५.५

## मण्डल

१

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |

# ऋग्वेदः सूक्तं १.९६

← सूक्तं १.९५

**ऋग्वेदः - मण्डल १**

सूक्तं १.९६

कुत्स आङ्गिरसः

सूक्तं १.९७ →

## दे. अग्निः, द्रविणोदा अग्निर्वा । त्रिष्टुप्

---

स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा ।

आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन्द्रविणोदाम् ॥१॥

स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम् ।

विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन्द्रविणोदाम् ॥२॥

तमीळत प्रथमं यज्ञसाधं विश आरीराहुतमृञ्जसानम् ।

ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन्द्रविणोदाम् ॥३॥

स मातरिश्वा पुरुवारपुष्टिर्विदद्गातुं तनयाय स्वर्वित् ।

विशां गोपा जनिता रोदस्योर्देवा अग्निं धारयन्द्रविणोदाम् ॥४॥

नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची ।

द्यावाक्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन्द्रविणोदाम् ॥५॥

रायो बुध्नः संगमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः ।

अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन्द्रविणोदाम् ॥६॥

नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम् ।

सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन्द्रविणोदाम् ॥७॥

द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् ।

द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥८॥

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥९॥

## सायणभाष्यम्

‘स प्रत्नथा ' इति नवर्चं तृतीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभम् । द्रविणोदस्त्वगुणविशिष्टोऽग्निः शुद्धाग्निर्वा देवता । तथा चानुक्रान्तम्-‘स प्रत्नथा नव द्रविणोदसः' इति । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः । व्यूढस्य दशरात्रस्य षष्ठेऽहन्याग्निमारुते इदं सूक्तं जातवेदस्यनिविद्धानम् । ‘ व्यूळ्हश्चेत् ' इति खण्डे सूत्रितं- स प्रत्नथेत्याग्निमारुतम् ' ( आश्व. श्रौ. ८.८) इति । ‘ स प्रत्नथा सहसा जायमान इति जातवेदस्यं समानोदर्कम् ' ( ऐ. ब्रा. ५, १५) इत्यादि ब्राह्मणम् । महापितृयज्ञे स्विष्टकृत्स्थानीयस्य कव्यवाहनस्य ‘स प्रत्नथा' इत्येषा याज्या । ‘दक्षिणाग्नेः ' इति खण्डे सूत्रितं- स प्रत्नथा सहसा जायमान इत्यग्निः स्विष्टकृत्कव्यवाहनः ' (आश्व. श्रौ. २. १९) इति ॥

स प्र॒त्नथा॒ सहं॑सा॒ जाय॑मानः स॒द्यः काव्या॑नि॒ बळ॑धत्त॒ विश्वा॑ ।

आप॑श्च मि॒त्रं धि॒षणा॑ च साध॑न्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दां ॥ १

सः । प्र॒त्नऽथा॑ । सह॑सा । जाय॑मानः । स॒द्यः । काव्या॑नि । बट् । अ॒ध॒त्त॒ । विश्वा॑ ।

आपः॑ । च॒ । मि॒त्रम् । धि॒षणा॑ । च॒ । सा॒ध॒न् । दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ॥१

सः । प्रत्नऽथा । सहसा । जायमानः । सद्यः । काव्यानि । बट् । अधत्त । विश्वा ।

आपः । च । मित्रम् । धिषणा । च । साधन् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥१

"सहसा बलेन “जायमानः निर्मथनेनोत्पद्यमानः "सः अग्निः "सद्यः तदानीमुत्पत्त्यनन्तरमेव “प्रत्नथा प्रत्न इव चिरंतन इव "विश्वा विश्वानि सर्वाणि "काव्यानि कवेः क्रान्तदर्शिनः प्रगल्भस्य कर्माणि "बट् सत्यम् "अधत्त अधारयत् । पूर्वं विद्यमान इवाग्निरुत्पत्तिसमकालमेव स्वकीयं हविर्वहनादिकं सर्वं कार्यमकरोदित्यर्थः । इममग्निं वैद्युतरूपेण वर्तमानं मेघेष्ववस्थिताः "आपश्च “धिषणा “च या माध्यमिका वाक् सा च "मित्रं सखिभूतं "साधन् साधयन्ति कुवन्ति । तमिमं “द्रविणोदां द्रविणस्य धनस्य दातारम् "अग्निं "देवाः ऋत्विजः “धारयन् गार्हपत्यादिरूपेण धारयन्ति । यद्वा । देवा एवेन्द्रादय इममग्निं द्रविणोदां हविर्लक्षणस्य धनस्य दातारं कृत्वा दूत्ये धारयन् धारयन्ति ।। प्रत्नथा । ‘ प्रत्नपूर्व विश्वेमात्थाल् छन्दसि ' इति इवार्थे थाल्प्रत्ययः । काव्यानि । कवेः कर्म काव्यम् । ‘ गुणवचनब्राह्मणादिभ्यः ०' इति ष्यञ् । ञित्त्वादाद्युदात्तत्वम् । साधन् । ‘ षिधु

संराद्धौ । ”णौ ‘ सिध्यतेरपारलौकिके' (पा. सू. ६. १, ४९ ) इति आत्वम् । लेटि अडागमः । ‘ इतश्च लोपः° इति इकारलोपः । ‘ छन्दस्युभयथा ' इति शपः आर्धधातुकत्वात् ‘ णेरनिटि ' इति णिलोपः। द्रविणोदाम् । द्रविणानि ददातीति द्रविणोदाः । द्रु गतौ । “द्रुदक्षिभ्यामिनन् ' । छान्दसः पूर्वपदस्य सुक् । “ अन्येभ्योऽपि दृश्यन्ते' इति ददातेः विच् । सकारान्तं त्वसुनि कृते निष्पद्यते ।। ।

स पूर्व॑या नि॒विदां॑ क॒व्यता॒योरि॒माः प्र॒जा अं॑जनय॒न्मनू॑नां ।

वि॒वस्व॑ता॒ चक्षं॑सा॒ द्यामु॒पश्च॑ दे॒वा अ॒ग्निं धा॑रयंद्रविणो॒दां ॥ २

सः । पूर्व॑या । नि॒ऽविदां॑ । क॒व्यतां॑ । आ॒योः । इ॒माः । प्र॒ऽजाः । अ॒ज॒न॒य॒त् । मनू॑नाम् ।

वि॒वस्वंता । चक्षंसा । द्याम् । अ॒पः । च॒ । दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ॥२

सः । पूर्वया । निऽविदा । कव्यता । आयोः । इमाः । प्रऽजाः । अजनयत् । मनूनाम् ।

विवस्वता । चक्षसा । द्याम् । अपः । च । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥२

"सः अग्निः "पूर्वया प्रथमया • अग्निर्देवेद्धः' इत्यादिकया "निविदा "कव्यता गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वता “आयोः मनोः संबन्धिनोक्थेन च स्तूयमानः सोऽग्निः "मनूनां संबन्धिनीः “इमाः "प्रजाः “अजनयत् उदपादयत् । मनुना स्तुतः सन् मानवीः सर्वाः प्रजा अजनयदित्यर्थः । तथा “विवस्वता विवासनवता विशेषेणाच्छादयता "चक्षसा आत्मीयेन तेजसा “द्यां द्युलोकम् "अपश्च अन्तरिक्षं च व्याप्नोतीति शेषः । अन्यत्

समानम् ॥ कव्यता । ‘ कु शब्दे । ‘ अचो यत्' इति भावे यत् । कव्यं कवनं स्तुतिं करोति । तत्करोति । ( पा. सू. ३. १. २६. ५) इति णिच् । तदन्तात् क्विप् । ‘ बहुलमन्यत्रापि संज्ञाच्छन्दसोः' इति णिलुक् । ततस्तुक् । धातुस्वरेणान्तोदात्तत्वम् । आयोः । इण् गतौ । ‘ छन्दसीणः' इति उष्प्रत्ययः ॥

तमींळत प्रथमं यंज्ञसाधं विश आरीराहुंतमृंजसानं ।

ऊर्जः पुत्रं भंरतं सृप्रदांनुं देवा अग्निं धांरयंद्रविणोदां ॥३

तम् । ईळत । प्रथमम् । यज्ञऽसाधंम् । विशः । आरीः । आऽहुंतम् । ऋञ्जसानम् ।

ऊर्जः । पुत्रम् । भरतम् । सृप्रऽदांनुम् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥३

तम् । ईळत । प्रथमम् । यज्ञऽसाधम् । विशः । आरीः । आऽहुतम् । ऋञ्जसानम् ।

ऊर्जः । पुत्रम् । भरतम् । सृप्रऽदानुम् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥३

हे "विशः सर्वे मनुष्याः "आरीः अग्निं स्वामिनं गच्छन्त्यो यूयं “तम् अग्निम् "ईळत स्तुध्वम् । कीदृशम् । "प्रथमं सर्वेषु देवेषु मुख्यं "यज्ञसाधं यज्ञस्य दर्शपूर्णमासादेः साधकं निष्पादकं “आहुतं हविर्भिस्तर्पितं “ऋञ्जसानं स्तोत्रैः प्रसाध्यमानं “ऊर्जः अन्नस्य "पुत्रम् । भुक्तेनान्नेन जाठराग्नेर्वर्धनात् अग्नेरपुत्रत्वम् । "भरतं हविषो भर्तारम् । यद्वा । प्राणरूपेण सर्वासां प्रजानां भर्तारम् । श्रूयते च- स्वदेहे । वा एष प्राणो भूत्वा प्रजा बिभर्ति तस्मादेष भरतः' इति । 'सृप्रदानुं सर्पणशीलदानयुक्तम् । अविच्छेदेन धनानि प्रयच्छन्तमित्यर्थः । देवाः इत्यादि

गतम् ॥ ईळत । ' ईड स्तुतौ' । लोटि व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि ' इति शपो लुगभावः । यज्ञसाधम् । यज्ञं साधयतीति यज्ञसात् । साधयतेः क्विप् । णेरनिटि ' इति णिलोपः । आरीः । 'ऋ गतौ'।' सूचिसूत्रि' (पा. म. ३. १. २२. ३) इत्यादिना यङ्। 'यङोऽचि च' इति चशब्देन बहुलग्रहणानुकर्षणात् अनैमित्तिको लुक् । प्रत्ययलक्षणेन द्विर्भावे उरदत्वहलादिशेषौ ।' रुग्रिकौ च लुकि ' इति रुक् । यङ्लुगन्तात् औणादिकः किप्रत्ययः । यणादेशे 'रो रि ' इति रेफलोपः । ' ढ्रलोपे पूर्वस्य ' इति दीर्घत्वम् । 'कृदिकारादक्तिनः' इति ङीष्। जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । व्यत्ययेन आद्युदात्तत्वम् । ऋञ्जसानम् । ऋञ्जतिः प्रसाधनकर्मा । ' ऋञ्जिवृधिमन्दिसहिभ्यः कित्' (उ. सू. २. २४४ ) इति कर्मणि असानच् । भरतम् । भृञ् भरणे'।' भृमृद्दशि ' इत्यादिना अतच् । सृप्रदानुम् । सृप्लृ गतौ ।स्फायितञ्चि'

' इत्यादिना रक् । सृप्रो दानुर्दानं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

स मा॑त॒रिश्वा॑ पुरु॒वार॑पुष्टिर्वि॒दद्गा॒तुं तन॑याय स्व॒र्वित् ।

वि॒शां गो॒पा ज॑नि॒ता रोद॑स्योर्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दां ॥४

सः । मा॒त॒रिश्वा॑ । पु॒रु॒वार॑ऽपुष्टिः । वि॒दत् । गा॒तुम् । तन॑याय । स्व॒ःऽवित् ।

वि॒शाम् । गो॒पाः । ज॒नि॒ता । रोद॑स्योः । दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒ण॒ःऽदाम् ॥४

सः । मातरिश्वा । पुरुवारऽपुष्टिः । विदत् । गातुम् । तनयाय । स्वःऽवित् ।

विशाम् । गोपाः । जनिता । रोदस्योः । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥४

“सः अग्निः “तनयाय अस्मदीयाय पुत्राय "गातुम् अनुष्ठानमार्गं "विदत् लम्भयतु । कीदृशः । “मातरिश्वा मातरि सर्वस्य जगतो निर्मातरि अन्तरिक्षे श्वसन वर्तमानः "पुरुवारपुष्टिः । पुरुभिर्बहुभिर्वारा वरणीया पुष्टिरभिवृद्धिर्यस्य स तथोक्तः । "स्वर्वित् स्वः स्वर्गस्य यागद्वारेण लम्भयिता “विशां सर्वासां प्रजानां “गोपाः गोपायिता रक्षिता "रोदस्योः द्यावापृथिव्योः "जनिता जनयितोत्पादयिता । देवाः इत्यादि गतम् ॥ मातरिश्वा । श्वन्नुक्षन्' इत्यादौ मातृशब्दोपपदात् ‘श्वस प्राणने' इत्यस्मात् कनिन्प्रत्ययान्तो निपात्यते। विदत् ।' विद्लृ लाभे'। अस्मात् अन्तर्भावितण्यर्थात् छान्दसो लुङ् । लृदित्त्वात् च्लेः अङादेशः । पादादित्वात् निघाताभावः ।

जनिता ।' जनिता मन्त्रे' (पा. सू. ६. ४. ५३ ) इति तृचि णिलोपो निपात्यते ॥

नक्तो॒षासा॒ वर्ण॑मा॒मेम्या॑ने धा॒पये॑ते॒ शिशु॒मेकं॑ समी॒ची ।

द्यावा॒क्षामा॑ रु॒क्मो अ॒न्तर्वि भा॑ति दे॒वा अ॒ग्निं धा॑रयंद्रविणो॒दां ॥५

नक्तो॒षसा॑ । वर्ण॑म् । आ॒मेम्या॑ने॒ इत्या॒ऽमेम्या॑ने । धा॒पये॑ते॒ इति॑ । शिशु॑म् । एक॑म् । स॒मी॒ची इति॑ स॒म्ऽई॒ची ।

द्यावा॒क्षामा॑ । रु॒क्मः । अ॒न्तः । वि । भा॒ति॒ । दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ॥५

नक्तोषसा । वर्णम् । आमेम्याने इत्याऽमेम्याने । धापयेते इति । शिशुम् । एकम् । समीची इति सम्ऽईची ।

द्यावाक्षामा । रुक्मः । अन्तः । वि । भाति । देवाः ।
अग्निम् । धारयन् । द्रविणःऽदाम् ॥५

"नक्तोषासा रात्रिरहश्च "वर्णं स्वकीयं स्वरूपम् "आमेम्याने परस्परं पुनःपुनर्हिंसन्त्यौ "समीची संगते संश्लिष्टे एवंभूते अहस्त्रियामे “एकं "शिशुम् अह्नः पुत्रमग्निं “धापयेते हवींषि पाययेते । "रुक्मः रोचमानः सोऽग्निः "द्यावाक्षामा द्यावापृथिव्योः "अन्तः मध्ये "वि “भाति विशेषेण प्रकाशते ।अन्यत् पूर्ववत् ॥ नक्तोषसा । नक्ता इति रात्रिनाम । नक्ता उषाश्च नक्तोषसा । ' सुपां सुलुक्' इति विभक्तेः आकारः । ‘ अन्येषामपि ' इति सांहितिकमुपधादीर्घत्वम्। ' देवताद्वन्द्वे च ' इति पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम् । आमेम्याने । “ मीङ् हिंसायाम् ' । अस्मात् यङ्लुगन्तात् व्यत्ययेन शानच् । ‘ अदादिवच्च' इति वचनात् शपो लुक् । ‘एरनेकाचः' इति यण् । “ अभ्यस्तानामादिः' इति आद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । धापयेते । ‘

धेट् पाने' । अस्मात् ण्यन्तात् “ निगरणचलन ' ( पा. सू. १. ३. ८७ ) इति प्राप्तस्य परस्मैपदस्य ‘पादिषु धेट उपसंख्यानम् ' (पा. सू. १. ३. ८९. १ ) इति वचनात् ‘न पादम्याङ्यम ' (पा. सू. १. ३. ८९ ) इति प्रतिषेधः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते । पादादित्वात् निघाताभावः । समीची। संपूर्वात् अञ्चतेः ‘ऋत्विक् ' इत्यादिना क्विन् । ‘अनिदिताम्' इति नलोपः । समः समि' (पा. सू. ६. ३. ९३ ) इति सम्यादेशः । ‘ अञ्चतेश्चोपसंख्यानम्' इति ङीप् । “ अचः' इति अकारलोपे “चौ ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। पदकारस्य त्वयमभिप्रायः । ‘ उद ईत् ' ( पा. सू. ६. ४. १३९ ) इति विधीयमानम् ईत्वं सम उत्तरस्याप्यञ्चतेर्व्यत्ययेन भवतीति । ‘बा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् । द्यावाक्षामा । ' दिवो द्यावा' इति द्यावादेशः । ‘सुपां सुलुक्' इति षष्ठ्याः डादेशः ।

देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥ ॥३॥

रा॒यो बु॒ध्नः सं॒गम॑नो॒ वसू॑नां य॒ज्ञस्य॑ के॒तुर्म॑न्म॒साध॑नो॒ वेः ।

अ॒मृ॒त॒त्वं रक्ष॑माणास एनं दे॒वा अ॒ग्निं धा॑रयंद्रविणो॒दां ॥६

रा॒यः । बु॒ध्नः । स॒म्ऽगम॑नः । वसू॑नाम् । य॒ज्ञस्य॑ । के॒तुः । म॒न्म॒ऽसाध॑नः । वेरिति॒ वेः ।

अ॒मृ॒त॒ऽत्वम् । रक्ष॑माणासः । ए॒न॒म् । दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ॥६

रायः । बुध्नः । सम्ऽगमनः । वसूनाम् । यज्ञस्य । केतुः । मन्मऽसाधनः । वेरिति वेः ।

अमृतऽत्वम् । रक्षमाणासः । एनम् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥६

योऽग्निः "रायः धनस्य “बुध्नः मूलभूतः । आहुतिद्वारा सर्वेषां धनानां कारणत्वात् । "वसूनां निवासहेतूनां धनानां "संगमनः संगमयिता स्तोतॄणां प्रापयिता "यज्ञस्य दर्शपूर्णमासादेः "केतुः केतयिता ज्ञापयिता "वेः आत्मानमभिगच्छतः पुरुषस्य "मन्मसाधनः मननीयस्याभिलषितस्य साधयिता “अमृतत्वं स्वकीयामरणत्वं रक्षमाणासः पालयन्तः "देवाः “एनं धनस्य दातारम् "अग्निं धारयन्ति ।। रायः । ‘ ऊडिदम्' इति विभक्तेरुदात्तत्वम् । संगमनः । नन्द्यादिलक्षणो ल्युः । वेः । वी गत्यादिषु । अस्मात् औणादिकः इप्रत्ययः टिलोपश्च ॥

नू चं पुरा च सदंनं रयीणां जातस्यं च जायंमानस्य च क्षां ।

सतश्चं गोपां भवंतश्च भूरेंर्देवा अग्निं धांरयंद्रविणोदां ॥७

नु । च । पुरा । च । सदंनम् । रयीणाम् । जातस्यं । च । जायंमानस्य । च । क्षाम् ।

सतः । च । गोपाम् । भवंतः । च । भूरेः । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥७

नु । च । पुरा । च । सदनम् । रयीणाम् । जातस्य । च । जायमानस्य । च । क्षाम् ।

सतः । च । गोपाम् । भवतः । च । भूरेः । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥७

नू च इति निपातसमुदायः अद्य इत्यस्यार्थे । 'नू चिदिति निपातः पुराणनवयोर्नु च' ( निरु. ४.१७) इति यास्कः । "नू “च अद्य अस्मिन्काले “पुरा “च "रयीणां सर्वेषां धनानां "सदनम् आवासस्थानं "जातस्य उत्पन्नस्य कार्यजातस्य “जायमानस्य उत्पद्यमानस्य "च "क्षां निवासयितारं "सतश्च सर्वत्र विद्यमानस्वभावस्य नित्यस्य चाकाशादेः “भवतश्च सद्भावं प्राप्नुवतः “भूरेः असंख्यातस्य अन्यस्य च भूतजातस्य "गोपां गोपायितारं रक्षितारं "द्रविणोदां धनप्रदं एवंगुणविशिष्टम् “अग्निं "देवाः “धारयन् हविर्वोढृत्वेन धारयन्ति । नू च । ऋचि तुनुघ°' इति दीर्घः। रयीणाम् । ‘ नामन्यतरस्याम्' इति नाम उदात्तत्वम् । क्षाम् । ‘क्षि निवासगत्योः '। अस्मात् णिच् । वृद्ध्यायादेशौ। ण्यन्तात् क्विप् । णेरनिटि' इति णिलोपः । ‘ वेरपृक्तलोपाद्वलि लोपो बलीयान्' इति पूर्वं ‘ लोपो व्योर्वलि' इति यलोपः । न च णिलोपस्य स्थानिवत्त्वं, न पदान्तद्विर्वचनवरेयलोप ' इति प्रतिषेधात् । यद्वा । ‘ क्षै जै

षै क्षये । अस्मात् क्विप् ।' आदेचः० ' इति आत्वम् । सतः । अस्तेः शतरि अदादित्वात् शपो लुक् । ‘ श्नसोरल्लोपः' इति अकारलोपः । ‘ शतुरनुमः' इति विभक्तेरुदात्तत्वम् ॥

द्र॒वि॒णो॒दा द्रवि॑णसस्तु॒रस्य॑ द्रविणो॒दाः सन॑रस्य॒ प्र यं॑सत् ।

द्र॒वि॒णो॒दा वी॒रव॑ती॒मिषं॑ नो द्रविणो॒दा रा॑सते दी॒र्घमायुः॑ ॥८

द्र॒वि॒णः॒ऽदाः । द्रवि॑णसः । तु॒रस्य॑ । द्र॒वि॒णः॒ऽदाः । सन॑रस्य । प्र । यं॒स॒त् ।

द्र॒वि॒णः॒ऽदाः । वी॒रऽव॑तीम् । इषं॑म् । नः॒ । द्र॒वि॒णः॒ऽदाः । रा॒स॒ते॒ । दी॒र्घम् । आयुः॑ ॥८

द्रविणःऽदाः । द्रविणसः । तुरस्य । द्रविणःऽदाः । सनरस्य । प्र । यंसत् ।

द्रविणःऽदाः । वीरऽवतीम् । इषम् । नः । द्रविणःऽदाः । रासते । दीर्घम् । आयुः ॥८

“द्रविणोदाः द्रविणस्य धनस्य बलस्य वा दाता अग्निः “तुरस्य त्वरमाणस्य चलतो जङ्गमस्य “द्रविणसः धनस्य बलस्य वा एकदेशं “प्र “यंसत् अस्मभ्यं प्रयच्छतु । तथा "द्रविणोदाः “सनरस्य सननीयस्य संभजनीयस्य स्थावररूपस्य धनस्यैकदेशं प्रयच्छतु । अपि च "द्रविणोदाः “वीरवतीं वीरैः पुत्रादिभिः युक्तम् "इषम् अन्नं "नः अस्मभ्यं प्रयच्छतु । तथा "द्रविणोदाः “दीर्घमायुः अस्मभ्यं “रासते प्रयच्छतु ।। तुरस्य । तुर त्वरणे ' । इगुपधलक्षणः कः । सनरस्य । वन षण संभक्तौ ' । ‘ कृदरादयश्च ' ( उ. सू. ५. ७१९ ) इति अरन्प्रत्ययः । यंसत् । ‘ यम उपरमे'। लेटि अडागमः । ‘ सिब्बहुलं लेटि' इति सिप् । रासते । “रा दाने ' । पूर्ववत् लेटि सिप् । व्यत्ययेन आत्मनेपदम् ॥

ए॒वा नों अग्ने स॒मिधां वृधा॒नो रे॒वत्पांवक॒ श्रवंसे॒ वि भांहि ।

तन्नों मि॒त्रो वरुंणो मामहंता॒मदिंति॒ः सिंधुः॑ पृथि॒वी उ॒त द्यौः ॥९

ए॒व । न॒ः । अ॒ग्ने॒ । स॒म्ऽइधां । वृ॒धा॒नः । रे॒वत् । पा॒व॒क॒ । श्रवंसे । वि । भा॒हि॒ ।

तत् । न॒ः । मि॒त्रः । वरुंणः । म॒म॒ह॒न्ता॒म् । अदिंतिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥९

एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥९

व्याख्यातेयं पूर्वसूक्ते। अक्षरार्थस्तु। हे शोधक “अग्ने एवमस्माभिर्दत्तेन समिदादिद्रव्येण "वृधानः वर्धमानः सन् “नः अस्माकं धनयुक्तायान्नाय विशेषेण प्रकाशस्व। अस्माकं "तत् अन्नं मित्रादयः “ममहन्तां पूजयन्तां रक्षन्त्वित्यर्थः । तथा “सिन्धुः अब्देवता द्यावापृथिव्यौ च ममहन्ताम् ॥४॥

१.९६.८

द्रविणं धनं बलं वापि प्रायच्छद्येन कर्मणा । तत्कर्म दृष्ट्वा कुत्सस्तु प्राहैनं द्रविणोदसम् ।।बृहद्देवता २.२५ ।।

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१४ १.४४ १.७४ १.१०४ १.१३४ १.१६४

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१५ १.४५ १.७५ १.१०५ १.१३५ १.१६५

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१६ १.४६ १.७६ १.१०६ १.१३६ १.१६६

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१७ १.४७ १.७७ १.१०७ १.१३७ १.१६७

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१८ १.४८ १.७८ १.१०८ १.१३८ १.१६८

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१९ १.४९ १.७९ १.१०९ १.१३९ १.१६९

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२० १.५० १.८० १.११० १.१४० १.१७०

| | | | | | |
|---|---|---|---|---|---|
| सूक्तं १.२१ | सूक्तं १.५१ | सूक्तं १.८१ | सूक्तं १.१११ | सूक्तं १.१४१ | सूक्तं १.१७१ |
| सूक्तं १.२२ | सूक्तं १.५२ | सूक्तं १.८२ | सूक्तं १.११२ | सूक्तं १.१४२ | सूक्तं १.१७२ |
| सूक्तं १.२३ | सूक्तं १.५३ | सूक्तं १.८३ | सूक्तं १.११३ | सूक्तं १.१४३ | सूक्तं १.१७३ |
| सूक्तं १.२४ | सूक्तं १.५४ | सूक्तं १.८४ | सूक्तं १.११४ | सूक्तं १.१४४ | सूक्तं १.१७४ |
| सूक्तं १.२५ | सूक्तं १.५५ | सूक्तं १.८५ | सूक्तं १.११५ | सूक्तं १.१४५ | सूक्तं १.१७५ |
| सूक्तं १.२६ | सूक्तं १.५६ | सूक्तं १.८६ | सूक्तं १.११६ | सूक्तं १.१४६ | सूक्तं १.१७६ |
| सूक्तं १.२७ | सूक्तं १.५७ | सूक्तं १.८७ | सूक्तं १.११७ | सूक्तं १.१४७ | सूक्तं १.१७७ |

# ऋग्वेदः सूक्तं १.९७

ऋग्वेदः - मण्डल १

← सूक्तं १.९६

सूक्तं १.९७

सूक्तं १.९८ →

कुत्स आङ्गिरसः

## दे. अग्निः, शुचिरग्निर्वा। गायत्री।

---

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् ।

अप नः शोशुचदघम् ॥१॥

सुक्षेत्रिया सुगातुया वसूया च यजामहे ।

अप नः शोशुचदघम् ॥२॥

प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः ।

अप नः शोशुचदघम् ॥३॥

प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम् ।

अप नः शोशुचदघम् ॥४॥

प्र यदग्नेः सहस्वतो विश्वतो यन्ति भानवः ।

अप नः शोशुचदघम् ॥५॥

त्वं हि विश्वतोमुख विश्वतः परिभूरसि ।

अप नः शोशुचदघम् ॥६॥

द्विषो नो विश्वतोमुखाति नावेव पारय ।

अप नः शोशुचदघम् ॥७॥

स नः सिन्धुमिव नावयाति पर्षा स्वस्तये ।

अप नः शोशुचदघम् ॥८॥

# सायणभाष्यम्

‘अप नः' इति अष्टर्चं चतुर्थं सूक्तं कुत्सस्यार्षं गायत्रम् । शुचिगुणकोऽग्निः शुद्धोऽग्निर्वा देवता'। तथा चानुक्रान्तम्-’ अप नोऽष्टौ शुचये गायत्रम् ' इति । विनियोगो लैङ्गिकः । अत्रेदमाख्यानम् । दीर्घजिह्वी नाम राक्षसी सर्वान् यज्ञान् बबाधे । तां हन्तुमिन्द्रोऽशक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीदेषा त्वया हन्तव्येति । स चावधीत् । तं वागभ्यवदत् अनुचितमिदं त्वया चरितं यत्त्वं सर्वेषां मित्रभूतः सन् क्रूरमकार्षीरिति । तमृषिं शोकः प्राप्नोत् । स ऋषिरनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत् । तथा च ताण्डकम्- दीर्घजिह्वी वा इदं रक्षो यज्ञहा यज्ञानवलिहत्यचरत् तामिन्द्रः कया चन मायया हन्तुं नाशंसत् अथ ह सुमित्रः कुत्सः कल्याण आस तमब्रवीत् ' (तां. १३. ६.९) इत्यादि । तस्मादेतत्सूक्तं शुगपनयनाय विनियोज्यम् । अत एव हि सूत्रकारेण भारद्वाजेन दशमेऽहनि कर्तव्ये शान्तिकर्मणि यजुर्वेदे पठितमेतत्सूक्तं विनियुज्यते - नव च स्रुवाहुतीरप नः शोशुचदघम्' इति ॥

अपं न॒: शोशुं॑चद॒घमग्नें शुशु॒ग्ध्या र॒यिं ।

अपं न॒: शोशुं॑चद॒घं ॥१

अपं । न॒: । शोशुं॑चत् । अ॒घम् । अग्नें । शु॒शु॒ग्धि । आ । र॒यिम् ।

अपं । न॒: । शोशुं॑चत् । अ॒घम् ॥१

अप । नः । शोशुचत् । अघम् । अग्ने । शुशुग्धि । आ । रयिम् ।

अप । नः । शोशुचत् । अघम् ॥१

हे "अग्ने "नः अस्माकम् "अघं पापम् "अप "शोशुचत् अस्मत्तो निर्गत्यास्मदीयं शत्रुं शोचयतु । यद्वा । अस्मदीयं पापं शोशुचत् शोकग्रस्तं सद्विनश्यतु । अपि चास्माकं

"रयिं धनम् “आ समन्तात् “शुशुग्धि प्रकाशय । उक्तार्थमपि वाक्यमादरातिशयद्योतनाय पुनः पठ्यते । अवश्यमस्माकमघं विनश्यत्विति ॥ शोशुचत् । शुच शोके । अस्मात् यङ्लुगन्तात् लेटि अडागमः ।' अदादिवञ्च ' इति वचनात् शपो लुक् । ‘ अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । अघं शोशुचच्च रयिं शुशुग्धि चेति चार्थप्रतीतेः ‘चादिलोपे विभाषा' इति निघातप्रतिषेधः । शुशुग्धि । शुच दीप्तौ । लोटि ‘बहुलं छन्दसि ' इति शपः श्लुः । “हुझल्भ्यो हेर्धिः । ‘ चोः कुः' इति कुत्वम् ॥

सु॒क्षे॒त्रि॒या सु॑गातु॒या व॑सू॒या च॑ यजामहे ।

अप॑ न॒ः शोशु॑चद॒घं ॥२

सु॒ऽक्षे॒त्रि॒या । सु॒ऽगा॒तु॒ऽया । व॒सु॒ऽया । च॒ । य॒जा॒म॒हे॒ ।

अपं । न॒ः । शोशुंचत् । अ॒घम् ॥२

सुऽक्षेत्रिया । सुगातुऽया । वसुऽया । च । यजामहे ।

अप । नः । शोशुचत् । अघम् ॥२

“सुक्षेत्रिया शोभनक्षेत्रेच्छया "सुगातुया शोभनमार्गेच्छया "वसूया "च धनेच्छया निमितभूतया च "यजामहे अग्निं हविर्भिः पूजयामः । यद्वा सुक्षेत्रिया देवयजनलक्षणशोभनदेशसंबन्धिना हविषा अग्निं यजामहे। "नः अस्माकम् "अघम् “अप "शोशुचत् विनश्यतु ॥ सुक्षेत्रिया। शोभनं क्षेत्रं सुक्षेत्रम् । तद्विषयेच्छा सुक्षेत्रिया ।' सुप आत्मनः क्यच् '। न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोर्निषेधः । व्यत्ययेन इत्वम् । क्यजन्तात् ' अ प्रत्ययात्' इति भावे अकारप्रत्ययः । ततः टाप् । ‘ सुपां सुलुक् ' इति तृतीयाया लुक् । एवमुत्तरत्रापि । यद्वा । शोभनं क्षेत्रमस्यास्तीति सुक्षेत्रम् ।

इयाडियाजीकाराणामुपसंख्यानम् ' ( पा. सू. ७. १. ३९. १) इति तृतीयाया डियाजादेशः ॥

प्र यद्भन्दि॑ष्ठ एषा॒ं प्रास्माका॑सश्च सू॒रयः॑ ।

अप॑ न॒ः शोशु॑चद॒घं ॥३

प्र । यत् । भन्दि॑ष्ठः । ए॒षा॒म् । प्र । अ॒स्माका॑सः । च॒ । सू॒रयः॑ ।

अप॑ । न॒ः । शोशु॑चत् । अ॒घम् ॥३

प्र । यत् । भन्दिष्ठः । एषाम् । प्र । अस्माकासः । च । सूरयः ।

अप । नः । शोशुचत् । अघम् ॥३

“यत् यथा “एषां स्तोतॄणां मध्येऽयं कुत्सः “प्र “भन्दिष्ठः प्रकर्षेण स्तोतृतमः एवम् "अस्माकासः आस्माकीनाः "सूरयः स्तोतारः “च प्रकर्षेण स्तोतृतमा भवन्ति । अन्यत् समानम् ॥ भन्दिष्ठः । भन्दतिः स्तुतिकर्मा । भदि कल्याणे सुखे च ' इति तु धातुः । अस्मात् तृजन्तात् ‘तुश्छन्दसि ' इति इष्ठन् । तुरिष्ठेमेयःसु ' इति तृलोपः । अस्माकासः । अस्माकं संबन्धिनः आस्माकाः । तस्मिन्नणि च युष्माकास्माकौ ' ( पा. सू. ४. ३. २ ) इति आस्माकादेशः । छान्दसोऽणप्रत्ययस्य लोपः । संज्ञापूर्वकस्य विधेरनित्यत्वात् वृद्ध्यभावः। आजसेरसुक्' स्थानिवदादेशेऽपि मकारात् परस्य आकारस्य उदात्तत्वम् । यद्वा । षष्ठीबहुवचनेऽस्माकंशब्दस्य मध्योदात्तस्य दृष्टत्वात् स एव आचार्येण अतिदिश्यते ॥

प्र यत्तें अग्ने सू॒रयो॒ जायेंमहि॒ प्र तें व॒यं ।

अपं न॒ः शोशुं॑चद॒घं ॥४

प्र । यत् । ते॒ । अ॒ग्ने॒ । सू॒रयः॑ । जायें॑महि । प्र । ते॒ । व॒यम्
।

अपं । न॒ः । शोशुं॑चत् । अ॒घम् ॥४

प्र । यत् । ते । अग्ने । सूरयः । जायेमहि । प्र । ते । वयम्
।

अप । नः । शोशुचत् । अघम् ॥४

हे "अग्ने "यत् यस्मात् "ते तव "सूरयः स्तोतारः प्रजायन्ते पुत्रपौत्रादिरूपेण बहुविधा भवन्ति ततः “वयं च "ते तव स्तोतारः सन्तः “प्र “जायेमहि पुत्रपौत्रादिभिरुपेता भवेम ॥ जायेमहि । प्रार्थनायां लिङ्। श्यनि ‘ ज्ञाजनोर्जा ' इति जादेशः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् ॥

प्र यद॒ग्नेः सहं॑स्वतो वि॒श्वतो॒ यंतिं भा॒नवः॑ ।

अपं न॒ः शोशुं॑चद॒घं ॥५

प्र । यत् । अ॒ग्नेः । सहं॑स्वतः । वि॒श्वतः॑ । यन्तिं । भा॒नवः॑ ।

अपं । न॒ः । शोशुं॑चत् । अ॒घम् ॥५

प्र । यत् । अग्नेः । सहस्वतः । विश्वतः । यन्ति । भानवः ।

अप । नः । शोशुचत् । अघम् ॥५

“सहस्वतः सहनवतः शत्रूनभिभवतः "अग्नेः "भानवः दीप्तयः "विश्वतः सर्वतः सर्वस्मादपि प्रदेशात् "प्र "यन्ति प्रकर्षेणोद्गच्छन्ति। "यत् यस्मादेवं तस्मात्तेनाग्नितेजसा अस्मदीयम् "अघं नश्यतु । यन्ति । ' इणो यण् ' (पा. सू. ६. ४. ८१ ) इति यणादेशः ॥

त्वं हि विं॑श्वतोमुख वि॒श्वतः॑ परि॒भूरसिं ।

अपं न॒ः शोशुं॑चद॒घं ॥६

त्वम् । हि । वि॒श्व॒त॒ःऽमु॒ख॒ । वि॒श्वतः॑ । प॒रि॒ऽभूः । असिं ।

अपं । न॒ः । शोशुं॑चत् । अ॒घम् ॥६

त्वम् । हि । विश्वतःऽमुख । विश्वतः । परिऽभूः । असि ।

अप । नः । शोशुचत् । अघम् ॥६

हे अग्ने "त्वं "हि त्वं खलु विश्वतोमुखः सर्वतोज्वालः । तव मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहतिरस्ति । अतो हे "विश्वतोमुख अग्ने "विश्वतः सर्वतः सर्वस्मादप्युपद्रवजातात् "परिभूरसि अस्माकं परिग्रहीता भव । रक्षको भवेत्यर्थः । अन्यत् समानम् ।।

द्विषों नो विश्वतोमु॒खाति॑ ना॒वेवं पारय ।

अपं न॒: शोशुं॑चद॒घं ॥७

द्विषः॑ । न॒: । वि॒श्व॒त॒:ऽमु॒ख॒ । अति॑ । ना॒वाऽइं॑व । पा॒र॒य॒ ।

अपं । न॒: । शोशुं॑चत् । अ॒घम् ॥७

द्विषः । नः । विश्वतःऽमुख । अति । नावाऽइव । पारय ।

अप । नः । शोशुचत् । अघम् ॥७

हे "विश्वतोमुख सर्वतोमुखाग्ने "नावेव नावा नदीमिव "द्विषः शत्रून् "नः अस्मान् "अति “पारय अतिक्रमय्य शत्रुरहितं प्रदेशं प्रापय ॥ नावेव । ‘सावेकाचः' इति विभक्तेरुदात्तत्वम् । पारय । ‘ पार तीर कर्मसमाप्तौ ॥

स नः॒ सिंधुंमिव ना॒वयातिं पर्षा स्व॒स्तयें ।

अपं नः॒ शोशुंचद॒घं ॥८

सः । न॒ः । सिन्धुंम्ऽइव । ना॒वयां । अतिं । प॒र्ष॒ । स्व॒स्तयें
।

अपं । न॒ः । शोशुंचत् । अ॒घम् ॥८

सः । नः । सिन्धुम्ऽइव । नावया । अति । पर्ष । स्वस्तये
।

अप । नः । शोशुचत् । अघम् ॥८

पूर्वोक्त एवार्थः पुनरपि दाढर्याय प्रार्थ्यते । हे अग्ने "सः त्वं "नः अस्मान् "नावया नावा “सिन्धुमिव नदीमिव "स्वस्तये क्षेमार्थम् "अति "पर्ष शत्रून् अतिक्रमय्य पालय ।

शत्रुरहितं प्रदेशम् अस्मान् प्रापयेत्यर्थः । त्वत्प्रसादात् "नः अस्माकम् “अघं पापं च “अप “शोशुचत् अस्मत्तोऽपक्रम्यास्मच्छत्रुः शोकयुक्तो भवतु ॥ नावया । आङ्याजयारां चोपसंख्यानम् ' (पा. म. ७. १. ३९. १ ) इति तृतीयाया अयारादेशः ।' उपोत्तमं रिति' ( पा. सू. ६. १. २१७ ) इति अकारस्य उदात्तत्वम् । पर्ष । ‘पॄ पालनपूरणयोः '। लोटि ‘बहुलं छन्दसि ' इति शपः श्लोरभावः। ‘ सिब्बहुलं लेटि' इति बहुलवचनात् सिप् । गुणः । द्व्यचोऽतस्तिङः ‘ इति दीर्घत्वम् ॥ ॥ ५ ॥

# ऋग्वेदः सूक्तं १.९८

← सूक्तं १.९७

ऋग्वेदः - मण्डल १

सूक्तं १.९८

कुत्स आङ्गिरसः

सूक्तं १.९९ →

## दे. अग्निः, वैश्वानरोऽग्निर्वा। त्रिष्टुप्

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।

इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥१॥

पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।

वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम् ॥२॥

वैश्वानर तव तत्सत्यमस्त्वस्मान्रायो मघवानः सचन्ताम् ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥३॥

## सायणभाष्यम्

‘वैश्वानरस्य' इति तृचं पञ्चमं सूक्तं कुत्सस्यार्षं त्रैष्टुभम् । वैश्वानरगुणकोऽग्निः शुद्धाग्निर्वा देवता । तथा चानुक्रान्तम्- वैश्वानरस्य तृचं वैश्वानरीयम्' इति । व्यूढस्य चतुर्थेऽहन्याग्निमारुते इदं सूक्तं वैश्वानरीयनिविद्धानम् । ‘ व्यूळ्हश्चेत्' इति खण्डे सूत्रितम्- वैश्वानरस्य सुमतौ क ईं व्यक्ताः' ( आश्व. श्रौ. ८. ८) इति ॥

वै॒श्वा॒न॒रस्य॑ सुम॒तौ स्या॑म॒ राजा॒ हि कं॒ भुव॑नानामभि॒श्रीः ।

इ॒तो जा॒तो विश्व॑मि॒दं वि च॑ष्टे वैश्वान॒रो य॑तते॒ सूर्ये॑ण ॥१

वै॒श्वा॒न॒रस्य॑ । सु॒ऽम॒तौ । स्या॒म॒ । राजा॑ । हि । क॒म् ।
भुव॑नानाम् । अ॒भि॒ऽश्रीः ।

इ॒तः । जा॒तः । विश्व॑म् । इ॒दम् । वि । च॒ष्टे॒ । वै॒श्वा॒न॒रः ।
य॒त॒ते॒ । सूर्ये॑ण ॥१

वैश्वानरस्य । सुऽमतौ । स्याम । राजा । हि । कम् ।
भुवनानाम् । अभिऽश्रीः ।

इतः । जातः । विश्वम् । इदम् । वि । चष्टे । वैश्वानरः ।
यतते । सूर्येण ॥१

"वैश्वानरस्य विश्वेषां नराणां लोकान्तरनेतृत्वेन स्वामित्वेन वा संबन्धिनोऽग्नेः "सुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ "स्याम अनुग्राह्यत्वेन वर्तमाना भवेम । "हि "कम् इत्येतत् हिशब्दार्थे । स हि वैश्वानरः "अभिश्रीः

अभिश्रयणीयः अभिमुख्येन सेवितव्यः सन् “भुवनानां सर्वेषां भूतजातानां "राजा स्वामी भवति । यः "वैश्वानरः अग्निः “इतः अस्मादरणिद्वयात् जातमात्रः एव "इदं सर्वं जगत् "वि “चष्टे विशेषेण पश्यति प्रातरुद्यता "सूर्येण च "यतते संयतते संगच्छते । ‘ उद्यन्तं वावादित्यमग्निरनुसमारोहति' (तै. ब्रा. २. १. २. १०) इति तैत्तिरीयकम् । यद्वा । पार्थिवस्याग्नेस्तेजांस्युद्गच्छन्ति सूर्यकिरणाश्चाधोमुखं प्रसरन्ति । तयोः संगमनं दृष्ट्वा ‘वैश्वानरो यतते सूर्येण ' इति ऋषिर्ब्रूते । तथा च यास्कः-’ अमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसंगं दृष्ट्वैमवक्ष्यत् ' ( निरु. ७. २३ ) इति । एवंभूतस्य महानुभावस्य वैश्वानरस्य सुमतौ स्यामेति संबन्धः ॥ वैश्वानरस्य । विश्वेषां नराणां संबन्धी । “ नरे संज्ञायाम् ' ( पा. सू. ६. ३. १२९ ) इति पूर्वपदस्य दीर्घत्वम् । ‘ तस्येदम्' इति अण् । सुमतौ । शोभना मतिः सुमतिः । ‘ तादौ च° ' इति गतेः प्रकृतिस्वरे प्राप्ते ‘ मन्क्तिन्° '

इत्यादिना उत्तरपदान्तोदात्तत्वम् । ननु तत्र ‘ कारकात्' इत्यनुवृत्तेर्गतेरुत्तरस्य क्तिनो न प्राप्नोति । एवं तर्हि मतिर्मननम् । भावे क्तिन् । शोभनं मननं यस्यां बुद्धौ सा सुमतिः । ‘ नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । चष्टे । ‘ चक्षिङ् व्यक्तायां वाचि' । अयं पश्यतिकर्मा च । अदादित्वात् शपो लुक् ।' स्कोः संयोगाद्योः' इति कलोपः । यतते । ‘ यती प्रयत्ने ' ॥

चातुर्मास्यान्वारम्भणीया वैश्वानरपार्जन्या । तस्यां वैश्वानरस्य हविषः ‘पृष्टो दिवि ' इति याज्या । ‘ चातुर्मास्यानि ' इति खण्डे सूत्रितं - पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पर्जन्याय प्रगायत ' ( आश्व. श्रौ. २. १५) इति ॥

पृ॒ष्टो दि॒वि पृ॒ष्टो अ॒ग्निः पृ॑थि॒व्यां पृ॒ष्टो विश्वा॒ ओष॑धी॒रा वि॑वेश ।

वै॒श्वा॒न॒रः सहं॑सा पृ॒ष्टो अ॒ग्निः स नो॒ दिवा॒ स रि॒षः पां॑तु॒ नक्तं॑ ॥२

पृ॒ष्टः । दि॒वि । पृ॒ष्टः । अ॒ग्निः । पृ॒थि॒व्याम् । पृ॒ष्टः । विश्वाः॑ । ओष॑धीः । आ । वि॒वे॒श॒ ।

वै॒श्वा॒न॒रः । सहं॑सा । पृ॒ष्टः । अ॒ग्निः । सः । न॒ः । दिवां॑ । सः । रि॒षः । पा॒तु॒ । नक्तं॑म् ॥२

पृष्टः । दिवि । पृष्टः । अग्निः । पृथिव्याम् । पृष्टः । विश्वाः । ओषधीः । आ । विवेश ।

वैश्वानरः । सहसा । पृष्टः । अग्निः । सः । नः । दिवा । सः । रिषः । पातु । नक्तम् ॥२

अयं वैश्वानरः "अग्निः "दिवि द्युलोके आदित्यात्मना "पृष्टः संस्पृष्टः यद्वा निषिक्तो निहितो वर्तते । तथा “पृथिव्यां भूमौ गार्हपत्यादिरूपेण "पृष्टः संस्पृष्टो निहितो वा । तथा

"विश्वाः सर्वाः “ओषधीः "पृष्टः संस्पृष्टः सः अग्निः “आ “विवेश पाकार्थमन्तः प्रविष्टवान् । अन्तःप्रविष्टेन पार्थिवेनाग्निना' हि सर्वा ओषधयः पच्यन्ते। "सहसा परेषामसाधारणेन बलेन “पृष्टः संस्पृष्टः वैश्वानरः “नः अस्मान् "दिवा अह्नि “रिषः हिंसतः शत्रोः "पातु रक्षतु । तथा “सः वैश्वानरः "नक्तं रात्रवप्यस्मान् हिंसकात् पातु ॥ पृष्टः । ‘ स्पृश संस्पर्शने '। छान्दसः सकारलोपः । यद्वा । ‘ पृषु सेचने ' । निष्ठायां यस्य विभाषा ' इति इट्प्रतिषेधः । दिवि । ‘ ऊडिदम्' इति विभक्तेरुदात्तत्वम् । पृथिव्याम् ।' उदात्तयणः ' इति विभक्तिरुदात्ता । रिषः । रिष हिंसायाम् ' । ‘ क्विप् च' इति क्विप् ।' सावेकाचः' इति पञ्चम्या उदात्तत्वम् ।

वैश्वा॑नर॒ तव॒ तत्स॒त्यमं॑स्त्व॒स्मान्रायो॑ म॒घवा॑नः सचंतां ।

तन्नों मि॒त्रो वरुं॑णो मामहंता॒मदिं॑तिः॒ सिंधुः॑ पृथि॒वी उ॒त द्यौः ॥३

वैश्वां॑नर । तवं॑ । तत् । स॒त्यम् । अ॒स्तु । अ॒स्मान् । रायः॑ । म॒घऽवां॑नः । स॒च॒न्ता॒म् ।

तत् । नः॒ । मि॒त्रः । वरुं॑णः । म॒म॒ह॒न्ता॒म् । अदिं॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥३

वैश्वानर । तव । तत् । सत्यम् । अस्तु । अस्मान् । रायः । मघऽवानः । सचन्ताम् ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥३

हे "वैश्वानर “तव "तत् त्वदीयं तत् अस्माभिः क्रियमाणं कर्म "सत्यमस्तु अवितथफल भवतु । ततः "अस्मान् "मघवानः मघवन्तः धनवन्तः "रायः धनवदतिप्रियाः पुत्राः

"सचन्तां सेवन्ताम् । एवं यदस्माभिः प्रार्थितं "नः अस्मदीयं "तत् "मित्रः अहरभिमानी देवः "वरुणः रात्र्यभिमानी "अदितिः अदीना देवमाता "सिन्धुः स्यन्दनशीलोदकाभिमानी देवः । उतशब्दः समुच्चये । एते सर्वे मित्रादयः “ममहन्तां पूजयन्ताम् पालयन्तामित्यर्थः ॥ ॥ ६ ॥

## टिप्पणी



| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| --- | --- | --- | --- | --- | --- |
| १.१४ | १.४४ | १.७४ | १.१०४ | १.१३४ | १.१६४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१५ | १.४५ | १.७५ | १.१०५ | १.१३५ | १.१६५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१६ | १.४६ | १.७६ | १.१०६ | १.१३६ | १.१६६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१७ | १.४७ | १.७७ | १.१०७ | १.१३७ | १.१६७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१८ | १.४८ | १.७८ | १.१०८ | १.१३८ | १.१६८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१९ | १.४९ | १.७९ | १.१०९ | १.१३९ | १.१६९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२० | १.५० | १.८० | १.११० | १.१४० | १.१७० |

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|
| १.२१ | १.५१ | १.८१ | १.१११ | १.१४१ | १.१७१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२२ | १.५२ | १.८२ | १.११२ | १.१४२ | १.१७२ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२३ | १.५३ | १.८३ | १.११३ | १.१४३ | १.१७३ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२४ | १.५४ | १.८४ | १.११४ | १.१४४ | १.१७४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२५ | १.५५ | १.८५ | १.११५ | १.१४५ | १.१७५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२६ | १.५६ | १.८६ | १.११६ | १.१४६ | १.१७६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२७ | १.५७ | १.८७ | १.११७ | १.१४७ | १.१७७ |

# ऋग्वेदः सूक्तं १.९९

ऋग्वेदः - मण्डल १

← सूक्तं १.९८

सूक्तं १.९९

वार्षागिराः ऋज्राश्वाऽम्बरीष-सहदेव-भयमान-सुराधसः

सूक्तं १.१०० →

## दे. इन्द्रः। त्रिष्टुप्।

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।

स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥१॥

**सायणभाष्यम्**

‘जातवेदसे ' इति एकर्चं षष्ठं सूक्तं मरीचिपुत्रस्य कश्यपस्यार्षं त्रैष्टुभम् । जातवेदोगुणकोऽग्निः शुद्धाग्निर्वा देवता । तथा चानुक्रान्तम्- जातवेदस एका जातवेदस्यमेतदादीन्येकभूयांसि सूक्तसहस्रमेतत्तु कश्यपार्षम्' इति । अहर्गणेषु द्वितीयादिष्वहःस्वाग्निमारुते जातवेदस्यनिविद्धानात् पूर्वमेषा शंसनीया । सूत्रितं च-’ जातवेदसे सुनवाम सोममित्याग्निमारुते जातवेदस्यानाम् ' (आश्व. श्रौ. ७. १ ) इति ॥

जा॒तवे॑दसे सुनवाम॒ सोम॑मरातीय॒तो नि द॑हाति॒ वेदः॑ ।

स नः॑ पर्ष॒दति॑ दु॒र्गाणि॒ विश्वा॑ ना॒वेव॒ सिंधुं॑ दुरि॒तात्य॒ग्निः ॥१

जा॒तऽवे॑दसे । सु॒न॒वा॒म॒ । सोम॑म् । अ॒रा॒ति॒ऽय॒तः । नि । द॒हा॒ति॒ । वेदः॑ ।

सः । नः॒ । प॒र्ष॒त् । अति॑ । दुः॒ऽगानि॑ । विश्वा॑ । ना॒वाऽइ॑व । सिन्धु॑म् । दुः॒ऽइ॒ता । अति॑ । अ॒ग्निः ॥१

जातऽवेदसे । सुनवाम । सोमम् । अरातिऽयतः । नि । दहाति । वेदः ।

सः । नः । पर्षत् । अति । दुःऽगानि । विश्वा । नावाऽइव । सिन्धुम् । दुःऽइता । अति । अग्निः ॥१

“जातवेदसे जातानामुत्पत्तिमतां सर्वेषां वेदित्रे यद्वा जातैः सर्वैः प्राणिभिर्ज्ञायमानाय जातधनाय जातप्रज्ञाय वा अग्नये लतारूपं "सोमं "सुनवाम अभिषुणुयाम । जातवेदोगुणकमग्निं यष्टुं सोमाभिषवं करवामेत्यर्थः । सः अग्निः "अरातीयतः अरातिं शत्रुमिवास्मानाचरतः शत्रोः

"वेदः धनं “नि "दहाति नितरां दहतु भस्मीकरोतु । अपि च "सः अग्निः "नः अस्मान् "विश्वा विश्वानि सर्वाणि “दुर्गाणि दुर्गमनानि भोक्तुमशक्यानि दुःखानि "अति “पर्षत् अतिपारयतु अतिक्रमय्य दुःखरहितं सुखं प्रापयतु । तत्र दृष्टान्तः । “नावेव "सिन्धुम् । यथा कश्चित् कर्णधारो ग्राहादिभिर्दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत् । तथा “दुरिता दुरितानि दुःखहेतुभूतानि पापानि अस्मान् "अग्निः "अति पारयतु । दुःखनिमित्तात् पापादपि अस्मानुत्तारयत्वित्यर्थः । अत्र निरुक्तं-जातवेदाः कस्मात् जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो वा जातविद्यो वा जातप्रज्ञो वा यत्तज्जातःपशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति हि ब्राह्मणम्' ( निरु. ७. १९) इत्यादि ।। जातवेदसे । जातानि वेत्तीति जातवेदाः। गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात् कारकपूर्वात् वेत्तेरसुन् पूर्वपदप्रकृतिस्वरत्वं च ।

अरातीयतः । न विद्यते रातिर्दानमस्मिन्नित्यरातिः शत्रुः । तमिव अस्मानाचरति । 'उपमानादाचारे ' ( पा. सू. ३. १. १०) इति उपमानभूतात् कर्मणः क्यच् । क्यजन्तात् लटः शतृ । ‘ शतुरनुमः' इति ङसः उदात्तत्वम् । दहाति । ‘ दह भस्मीकरणे '। लेटि आडागमः । विद्यते लभ्यते इति वेदः धनम् । विद्लृ लाभे '। औणादिकः कर्मणि असुन् । पर्षत् । ‘ पॄ पालनपूरणयोः' । अस्मात् अन्तर्भावितण्यर्थात् लेटि अडागमः । ‘ सिब्बहुलं लेटि' इति सिप् । दुर्गाणि । दुःखेन गम्यते एष्विति ‘सुदुरोरधिकरणे ' इति गमेः डः ॥ ॥ ७ ॥

**टिप्पणी**

<u>जातवेदा उपरि पौराणिकाः संदर्भाः</u>

# ऋग्वेदः सूक्तं १.१००

ऋग्वेदः - मण्डल १

← सूक्तं १.९९

सूक्तं १.१००

सूक्तं १.१०१ →

वार्षागिराः ऋज्राश्वाम्बरीष - सहदेव - भयमान - सुराधसः।

## दे. इन्द्रः। त्रिष्टुप्

स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट् ।

सतीनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विन्द्र ऊती ॥१॥

यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति ।

वृषन्तमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो भवत्विन्द्र ऊती ॥२॥

दिवो न यस्य रेतसो दुघानाः पन्थासो यन्ति शवसापरीताः ।

तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान्नो भवत्विन्द्र ऊती ॥३॥

सो अङ्गिरोभिरङ्गिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन् ।

ऋग्मिभिरृग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विन्द्र ऊती ॥४॥

स सूनुभिर्न रुद्रेभिरृभ्वा नृषाह्ये सासह्वाँ अमित्रान् ।

सनीळेभिः श्रवस्यानि तूर्वन्मरुत्वान्नो भवत्विन्द्र ऊती ॥५॥

स मन्युमीः समदनस्य कर्तास्माकेभिर्नृभिः सूर्यं सनत् ।

अस्मिन्नहन्सत्पतिः पुरुहूतो मरुत्वान्नो भवत्विन्द्र ऊती ॥६॥

तमूतयो रणयञ्छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्राम् ।

स विश्वस्य करुणस्येश एको मरुत्वान्नो भवत्विन्द्र ऊती ॥७॥

तमप्सन्त शवस उत्सवेषु नरो नरमवसे तं धनाय ।

सो अन्धे चित्तमसि ज्योतिर्विदन्मरुत्वान्नो भवत्विन्द्र ऊती ॥८॥

स सव्येन यमति व्राधतश्चित्स दक्षिणे संगृभीता कृतानि ।

स कीरिणा चित्सनिता धनानि मरुत्वान्नो भवत्विन्द्र ऊती ॥९॥

स ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्वद्य ।

स पौंस्येभिरभिभूरशस्तीर्मरुत्वान्नो भवत्विन्द्र ऊती ॥१०॥

स जामिभिर्यत्समजाति मीळ्हेऽजामिभिर्वा पुरुहूत एवैः ।

अपां तोकस्य तनयस्य जेषे मरुत्वान्नो भवत्विन्द्र ऊती ॥११॥

स वज्रभृद्दस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा ।

चम्रीषो न शवसा पाञ्चजन्यो मरुत्वान्नो भवत्विन्द्र ऊती ॥१२॥

तस्य वज्रः क्रन्दति स्मत्स्वर्षा दिवो न त्वेषो रवथः शिमीवान् ।

तं सचन्ते सनयस्तं धनानि मरुत्वान्नो भवत्विन्द्र ऊती ॥१३॥

यस्याजस्रं शवसा मानमुक्थं परिभुजद्रोदसी विश्वतः सीम् ।

स पारिषत्क्रतुभिर्मन्दसानो मरुत्वान्नो भवत्विन्द्र ऊती ॥१४॥

न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः ।

स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती ॥१५॥

रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य ।

वृषण्वन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु ॥१६॥

एतत्त्यत्त इन्द्र वृष्ण उक्थं वार्षागिरा अभि गृणन्ति राधः ।

ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ॥१७॥

दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत् ।

सनत्क्षेत्रं सखिभिः श्वित्न्येभिः सनत्सूर्यं सनदपः सुवज्रः ॥१८॥

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम् ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥१९॥

## सायणभाष्यम्

' स यो वृषा ' इति एकोनविंशत्यृचं सप्तमं सूक्तम् । अत्रानुक्रम्यते-' स यो वृषैकोना वार्षागिरा ऋज्राश्वाम्बरीषसहदेवभयमानसुराधसः ' इति । वृषागिरो महाराजस्य पुत्रभूताः ऋज्राश्वादयः पञ्च राजर्षयः सह इदं सूक्तं ददृशुः । अतस्तेऽस्य सूक्तस्य ऋषयः । उक्तं ह्यार्षानुक्रमण्याम्- सूक्तं स यो वृषेत्येतत् पञ्च वार्षागिरा विदुः । नियुक्ता नामधेयैः स्वैरपि चैतत्त्यदित्यृचि ' इति । अनादेशपरिभाषया त्रिष्टुप् । इन्द्रो देवता । दशरात्रस्य षष्ठेऽहनि मरुत्वतीये इदं सूक्तम् । तथा च सूत्रितं-' यं त्वं

रथमिन्द स यो वृषेन्द्र मरुत्व इति तिस्र इति मरुत्वतीयम् '
( आश्व. श्रौ. ८. १) हृति ।।

स यो वृषा॒ वृष्ण्ये॑भिः॒ समो॑का म॒हो दि॒वः पृ॑थि॒व्याश्च॑ स॒म्राट् ।

स॒ती॒नसं॑त्वा॒ हव्यो॒ भरे॑षु म॒रुत्वा॑न्नो भव॒त्विंद्र॑ ऊ॒ती ॥१

सः । यः । वृषा॑ । वृष्ण्ये॑भिः । सम्ऽओ॑काः । म॒हः । दि॒वः । पृ॒थि॒व्याः । च॒ । स॒म्ऽराट् ।

स॒ती॒नऽसं॑त्वा । हव्यः॑ । भरे॑षु । म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥१

सः । यः । वृषा । वृष्ण्येभिः । सम्ऽओकाः । महः । दिवः । पृथिव्याः । च । सम्ऽराट् ।

सतीनऽसत्वा । हव्यः । भरेषु । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥१

“यः इन्द्रः “वृषा कामानां वर्षिता "वृष्ण्येभिः वृष्णि भवैर्वीर्यैः “समोकाः सम्यक् समवेतः संगतः "महः महतः “दिवः द्युलोकस्य “पृथिव्याः प्रथिताया भूमेः “च “सम्राट् ईश्वरः “सतीनसत्वा । सतीनम् इति उदकनाम । उदकस्य सत्वा सादयिता गमयिता “भरेषु संग्रामेषु “हव्यः सर्वैः स्तोतृभिराह्वातव्यः एवंभूतः “मरुत्वान् मरुद्भिर्युक्तः “सः “इन्द्रः “नः अस्माकम् “ऊती ऊतये रक्षणाय “भवतु ॥ वृष्ण्येभिः । वृषञ्शब्दात् ‘ भवे छन्दसि ' इति यत् । ‘ अल्लोपोऽनः' इति अकारलोपः । ‘ ये चाभावकर्मणोः' इति प्रकृतिभावस्तु व्यत्ययेन न भवति । महः । ‘ मह पूजायाम् । क्विप् । यद्वा । महच्छब्दे अच्छब्दलोपः ।' सावेकाचः' इति विभक्तेरुदात्तत्वम् । सम्राट्।' मो राजि समः क्वौ ' ( पा. सू. ८. ३. २५) इति राजतौ क्विबन्ते

उत्तरपदे समो मकारस्य मकारादेशः । मकारस्य च मकारवचनमनुस्वारबाधनार्थम् । सतीनसत्वा । ‘ षद्लृ विशरणगत्यवसादनेषु । मेघेषु निषीदतीति सतीनं वृष्ट्युदकम् । औणादिकः ईनप्रत्ययस्तकारान्तादेशश्च । यद्वा । सती माध्यमिका वाक् । सा इना ईश्वरा यस्य तत्सतीनम् । व्यत्ययेन पुंवद्भावाभावः । तत्सत्वा । सदेः अन्तर्भावितण्यर्थात् ‘प्र ईरसद्योस्तुट् च ' ( उ. सू. ४. ५५६ ) इति औणादिको वनिप् तुडागमश्च । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । मरुत्वान् । ‘झयः' इति मतुपो वत्वम् । ऊती । ऊतियूति° ' इत्यादिना क्तिनः उदात्तत्वम् । ‘सुपां सुलुक्' इति चतुर्थ्याः पूर्वसवर्णदीर्घः ॥

यस्याना॑प्तः॒ सूर्य॑स्येव॒ यामो॒ भरे॑भरे वृत्र॒हा शुष्मो॒ अस्ति॑ ।

वृष॑तमः॒ सखि॑भिः॒ स्वेभि॒रेवै॑र्म॒रुत्वा॑न्नो भव॒त्विंद्र॑ ऊ॒ती ॥२

यस्यं । अनांप्तः । सूर्यस्यऽइव । यामः॑ । भरेंऽभरे ।
वृ॒त्र॒ऽहा । शुष्मः॑ । अस्तिं ।

वृषंन्ऽतमः । सखिंऽभिः । स्वेभिः॑ । एवैः॑ । म॒रुत्वांन् । न॒ः
। भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥२

यस्य । अनाप्तः । सूर्यस्यऽइव । यामः । भरेऽभरे ।
वृत्रऽहा । शुष्मः । अस्ति ।

वृषन्ऽतमः । सखिऽभिः । स्वेभिः । एवैः । मरुत्वान् । नः
। भवतु । इन्द्रः । ऊती ॥२

“यस्य इन्द्रस्य “यामः गतिः "अनाप्तः परैरप्राप्ता “सूर्यस्येव
। यथा सूर्यस्य गतिरन्यैर्न प्राप्तुं शक्यते तद्वत्। 'स्वेभिः
आत्मीयैः “एवैः गमनशीलैः “सखिभिः मित्रभूतैर्मरुद्भिः
सह “वृषन्तमः अतिशयेन कामानां वर्षिता "भरेभरे सर्वेषु
संग्रामेषु “वृत्रहा शत्रूणां हन्ता “शुष्मः सर्वेषामसुराणां

शोषकः एवंभूतो यः इन्द्रः “अस्ति विद्यते सः “मरुत्वान् “इन्द्रः "नः अस्माकं रक्षणाय “भवतु ॥ यामः । ‘ या प्रापणे '। अर्तिस्तुसु° ' इत्यादिना भावे मन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । शुष्मः । शुष शोषणे'। ‘ अविसिविसिशुषिभ्यः कित्' ( उ. सू. १. १४१ ) इति मन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । अस्ति । यद्वृत्तयोगादनिघातः । वृषन्तमः । वृषञ्शब्दादुत्तरस्य तमपो ‘नाद्धस्य' (पा. सू. ८. २. १७) इति नुट् । एवैः । ‘ इण् गतौ ।' इणशीङ्भ्यां वन्' ॥

दि॒वो न यस्य॒ रेतं॑सो॒ दुघा॑ना॒ः पंथा॑सो॒ यंति॒ शव॒साप॑रीताः ।

त॒रद्द्वे॑षाः सास॒हिः पौंस्ये॑भिर्म॒रुत्वा॑न्नो भव॒त्विंद्रं॑ ऊ॒ती ॥३

दि॒वः । न । यस्य॑ । रेतं॑सः । दुघा॑नाः । पन्था॑सः । यन्तिं॑ । शवं॑सा । अपं॑रिऽइताः ।

त॒रत्ऽद्वे॑षाः । स॒स॒हिः । पौंस्ये॑भिः । म॒रुत्वा॑न् । नः॒ ।
भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥३

दिवः । न । यस्य । रेतसः । दुघानाः । पन्थासः । यन्ति ।
शवसा । अपरिऽइताः ।

तरत्ऽद्वेषाः । ससहिः । पौंस्येभिः । मरुत्वान् । नः ।
भवतु । इन्द्रः । ऊती ॥३

“यस्य इन्द्रस्य “पन्थासः रश्मयः “रेतसः वृष्ट्युदकानि “दुघानाः दुहन्तः प्रवर्षन्तः “यन्ति निर्गच्छन्ति द्युलोकादितस्ततः प्रसरन्ति । तत्र दृष्टान्तः । “दिवो “न । यथा द्योतमानस्य सूर्यस्य किरणा वृष्टिं कुर्वन्तः नभःस्थलान्निर्गच्छन्ति तद्वत् । कीदृशा रश्मयः । “शवसा बलेन सहिताः “अपरीताः परैरनभिगताः दुष्प्रापा इत्यर्थः । सोऽयम् इन्द्रः “तरद्द्वेषाः द्वेषांसि शत्रूंस्तरन् जितशत्रुक इत्यर्थः । “पौंस्येभिः बलैः “ससहिः शत्रूणामभिभविता

एवंभूतः “मरुत्वान् “इन्द्रः “नः अस्माकं रक्षणाय “भवतु ॥
रेतसः । रेत इति उदकनाम। रीयते गच्छतीति रेतः । ‘ री
गतिरेषणयोः । ‘ स्रुरीभ्यां तुट् च ' ( उ. सू. ४. ६४१ ) इति
असुन् तुडागमश्च । शसो व्यत्ययेन ङसादेशः । दुघानाः ।
‘दुह प्रपूरणे'। कर्तरि लटः शानच् । अदादित्वात् शपो लुक्
। व्यत्ययेन घत्वम् । वृषादेराकृतिगणत्वात् आद्युदात्तत्वम्
। पन्थासः । पतन्तीति पन्थानो रश्मयः । ‘ पतेस्थ च ' (
उ. सू ४. ४५२ ) इति इनिप्रत्ययस्थकारान्तादेशश्च । जसि‘
पथिमथ्यृभुक्षामात् ' इति व्यत्ययेन आत्वम् । ‘
आजसेरसुक्' । यद्वा । पन्थान इत्यत्र वर्णव्यापत्त्या
नकारस्य सकारः । ‘ पथिमथोः सर्वनामस्थाने ' इति
आद्युदात्तत्वम् । ससहिः । ‘ षह अभिभवे । ‘
उत्सर्गश्छन्दसि ' इति वचनात् ‘ आदृगमहन ' इति
किप्रत्ययः । लिङ्वद्भावात् द्विर्वचनम् ॥

सो अंगिंरोभि॒रंगिंरस्तमो भू॒द्वृषा॒ वृषंभि॒ः सखिंभि॒ः सखा॒ सन् ।

ऋ॒ग्मिभिंर्ऋ॒ग्मी गा॒तुभि॒र्ज्येष्ठों म॒रुत्वांन्नो भव॒त्विंद्रं ऊ॒ती ॥ ४

सः । अङ्गिंरःऽभिः । अङ्गिंरःऽतमः । भू॒त् । वृषां । वृषंऽभिः । सखिंऽभिः । सखां । सन् ।

ऋ॒ग्मिऽभिः॑ । ऋ॒ग्मी । गा॒तुऽभिः॑ । ज्येष्ठः॑ । म॒रुत्वांन् । न॒ः । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥४

सः । अङ्गिरःऽभिः । अङ्गिरःऽतमः । भूत् । वृषा । वृषऽभिः । सखिऽभिः । सखा । सन् ।

ऋग्मिऽभिः । ऋग्मी । गातुऽभिः । ज्येष्ठः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥४

“सः इन्द्रः “अङ्गिरोभिः । अङ्गन्ति गच्छन्तीति अङ्गिरसो गन्तारः । तेभ्योऽपि “अङ्गिरस्तमः “भूत् अतिशयेन गन्ता भवति । “वृषभिः "वृषा वर्षितृभ्योऽप्यतिशयेन वर्षिता “सखिभिः समान ख्यानेभ्यो मित्रभूतेभ्योऽपि "सखा अतिशयेन हितकारी एवंभूतः “सन् “ऋग्मिभिः अर्चनीयेभ्योऽपि “ऋग्मी अर्चनीयो भवति । “गातुभिः गातव्येभ्यः स्तोतव्येभ्योऽपि “ज्येष्ठः अतिशयेन स्तोतव्यः एवंगुणविशिष्टः “मरुत्वान् “इन्द्रः रक्षणाय “भवतु ॥
अङ्गिरोभिः । ‘अगि रगि लगि गत्यर्थाः' । अङ्गिरा अप्सराः ( उ. सू. ४. ६७५-६७६ ) इति औणादिकः असुन्प्रत्ययो निपात्यते । इदमादिषु सर्वत्र पञ्चम्यर्थे तृतीया । ऋग्मिभिः । ऋच स्तुतौ ' । संपदादिलक्षणो भावे क्विप् । मत्वर्थीयो मिनिः । पदत्वात् कुत्वं जश्त्वं च । गातुभिः ।' गा स्तुतौ ।' कमिमनिजनि' इत्यादिना कर्मणि तुप्रत्ययः ॥

स सू॒नुभि॒र्न रु॒द्रेभि॒र्ऋभ्वा॑ नृ॒षाह्ये॑ सास॒ह्वाँ अ॒मित्रा॑न् ।

सनी॑ळेभिः श्रव॒स्या॑नि॒ तूर्व॑न्म॒रुत्वा॑न्नो भव॒त्विंद्र॑ ऊ॒ती ॥५

सः । सू॒नुऽभिः॑ । न । रु॒द्रेभिः॑ । ऋभ्वा॑ । नृ॒ऽसह्ये॑ ।
स॒स॒ह्वान् । अ॒मित्रा॑न् ।

सऽनी॑ळेभिः । श्र॒व॒स्या॑नि । तूर्व॑न् । म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒
। इन्द्रः॑ । ऊ॒ती ॥५

सः । सूनुऽभिः । न । रुद्रेभिः । ऋभ्वा । नृऽसह्ये ।
ससह्वान् । अमित्रान् ।

सऽनीळेभिः । श्रवस्यानि । तूर्वन् । मरुत्वान् । नः । भवतु
। इन्द्रः । ऊती ॥५

"सूनुभिर्न पुत्रैरिव "रुद्रेभिः रुद्रपुत्रैर्मरुद्भिर्युक्तः “ऋभ्वा महान् एवंभूतः “सः इन्द्रः “नृषाह्ये नृभिः पुरुषैः सोढव्ये संग्रामे “अमित्रान् शत्रून् “ससह्वान् अभिभूतवान् । अपि च "सनीळेभिः समाननिलयैर्मरुद्भिः सह “श्रवस्यानि । श्रव इत्यन्ननाम । तद्धेतुभूतान्युदकानि “तूर्वन् मेघात् प्रच्यावयन “मरुत्वान् “इन्द्रः अस्माकं रक्षणाय भवतु ॥

नृषाह्ये । ‘ षह मर्षणे ' । ‘ शकिसहोश्च । (पा. सू. ३. १. ९९ ) इति कर्मणि यत् । अन्येषामपि दृश्यते' इति संहितायां धात्वकारस्य दीर्घत्वम् ।' यतोऽनावः' इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । ससह्वान् ।' षह अभिभवे । लिटः क्वसुः । अभ्यासदीर्घत्वं छान्दसम् । अमित्रान् । मित्राणि एषु न सन्तीति अमित्राः । ‘ नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । सनीळेभिः । समानं नीळं येषां ते सनीळाः । समानस्य च्छन्दसि' इति सभावः ॥ ॥ ८ ॥

स मं॒न्यु॒मीः स॒मदं॑नस्य क॒र्तास्माकें॑भि॒र्नृभि॒ः सूर्यं॑ सनत् ।

अ॒स्मिन्नह॒न्त्सत्पं॑तिः पुरुहू॒तो म॒रुत्वां॑न्नो भव॒त्विंद्रं॑ ऊ॒ती ॥ ६

सः । म॒न्यु॒ऽमीः । स॒ऽमदं॑नस्य । क॒र्ता । अ॒स्माकें॑भिः । नृऽभिः॑ । सूर्यं॑म् । स॒न॒त् ।

अ॒स्मिन् । अहं॑न् । सत्ऽपं॑तिः । पु॒रु॒ऽहू॒तः । म॒रुत्वां॑न् । न॒ः । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥६

सः । मन्युऽमीः । सऽमदनस्य । कर्ता । अस्माकेभिः । नृऽभिः । सूर्यम् । सनत् ।

अस्मिन् । अहन् । सत्ऽपतिः । पुरुऽहूतः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥६

शत्रुभिरपहृतासु गोषु तैः सह युद्धार्थं विनिर्गताः ऋज्राश्वादयोऽनेन सूक्तेनेन्द्रमस्तुवन् । “सः इन्द्रः “मन्युमीः मन्योः कोपस्य निर्माता । यद्वा । अभिमन्यमानस्य शत्रोर्हिंसकः । अपि च “समदनस्य संग्रामस्य “कर्ता “सत्पतिः सतां पालयिता “पुरुहूतः बहुभिर्यजमानैराहूतः एवंगुणविशिष्टः सः “अस्मिन् “अहन् अस्मिन् दिवसे "अस्माकेभिः आस्माकैः अस्मदीयैः “नृभिः पुरुचैः “सूर्यं सूर्यप्रकाशं “सनत् संभक्तं करोतु । शत्रुपुरुषैस्तु दृष्टिनिरोधकमन्धकारं संयोजयतु । स च “मरुत्वान् “इन्द्रः अस्माकं रक्षणाय “भवतु ।। मन्युमीः । मन्युं मिनातीति मन्युमीः । “ मीञ् हिंसायाम् । क्विप् । समदनस्य । सह माद्यन्त्यस्मिन्निति समदनः संग्रामः । ‘ मदी हर्षे ' । अधिकरणे ल्युट् ।' सहस्य सः संज्ञायाम् ( पा. सू. ६. ३. ७८ ) इति सभावः । अस्माकेभिः । ‘ तस्मिन्नणि च युष्माकास्माकौ ' इति अणि अस्मच्छब्दस्य अस्माकादेशः । संज्ञापूर्वकस्य विधेरनित्यत्वात् वृद्ध्यभावः। ‘ बहुलं

छन्दसि ' इति भिस ऐसभावः । स्वरस्तु ' प्रास्माकासश्च सूरयः ' ( ऋ. सं. १. ९७. ३ ) इत्यत्रोक्तः । सनत् । ‘ वन षण संभक्तौ '। लेटि अडागमः । अहन् ।' सुपां सुलुक् ' इति सप्तम्या लुक् । सत्पतिः । ‘ पत्यावैश्वर्ये ' इति पूर्वपदप्रकृतिस्वरत्वम् । ।

तमूतयों रणयंछूरंसातौ तं क्षेमंस्य क्षितयः कृण्वत त्रां ।

स विश्वंस्य करुणंस्येश एकों मरुत्वांन्नो भवत्विंद्रं ऊती ॥७

तम् । ऊतयः । रणयत् । शूरंऽसातौ । तम् । क्षेमंस्य । क्षितयः । कृण्वत । त्राम् ।

सः । विश्वंस्य । करुणंस्य । ईशे । एकः । मरुत्वांन् । नः । भवतु । इन्द्रः । ऊती ॥७

तम् । ऊतयः । रणयत् । शूरऽसातौ । तम् । क्षेमस्य । क्षितयः । कृण्वत । त्राम् ।

सः । विश्वस्य । करुणस्य । ईशे । एकः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥७

“तम् इन्द्रं “शूरसातौ शूरैर्वीरपुरुषैः संभजनीये संग्रामे “ऊतयः गन्तारो मरुतः “रणयन् रमयन्ति । यद्वा । प्रहर भगवो जहि वीरयस्व' इत्येवंरूपं शब्दमिन्द्रमुद्दिश्य कुर्वन्ति । अपि च “क्षितयः मनुष्याः “तम् इन्द्रं “क्षेमस्य रक्षणीयस्य सर्वस्य धनस्य “त्रां त्रातारं रक्षितारं “कृण्वत कुर्वन्ति । देवतान्तरादस्य कोऽतिशयः इति चेत् उच्यते । “सः इन्द्रः “विश्वस्य सर्वस्य “करुणस्य अभिमतफलनिष्पादनरूपस्य कर्मणः “एकः असहाय एव “ईशे ईष्टे । अन्यत् पूर्ववत् ॥ ऊतयः । अवतेर्गत्यर्थात् ‘ कृत्यल्युटो बहुलम् ' इति कर्तरि क्तिन् । तितुत्र' इति

इट्प्रतिषेधः । ‘ ज्वरत्वर' ' इत्यादिना वकारस्योपधायाश्च ऊठ् ।' ऊतियूति० ' इत्यादिना क्तिन उदात्तत्वम् । यद्वा । कर्तरि क्तिच् । रणयन् । रमतेर्हेतुमण्णिजन्तात् वर्तमाने छान्दसो लङ् । अन्त्यविकारश्छान्दसः । यद्वा । रण शब्दार्थः ।। अस्मात् णिजन्तात् पूर्ववत् लङ् । त्राम् ।' त्रैङ् पालने' । त्रायते इति त्राः । ‘ क्विप् च ' इति चशब्देन दृशिग्रहणानुकर्षणान्निरुपपदादपि क्विप् । करुणस्य ।' डुकृञ् करणे '।' कृवृतॄदारिभ्य उनन् । (उ. सू. ३. ३३३ ) इति भावे उनन् । व्यत्ययेन प्रत्ययाद्युदात्तत्वम् । ईशे । 'ईश ऐश्वर्ये । ‘ लोपस्त आत्मनेपदेषु ' इति तलोपः ॥

तमप्स॑न्त॒ शव॑स उत्स॒वेषु॒ नरो॒ नर॒मव॑से॒ तं धना॑य ।

सो अ॒न्धे चि॒त्तम॑सि॒ ज्योति॑र्विदन्म॒रुत्वा॑न्नो भव॒त्विन्द्र॑ ऊ॒ती ॥८

तम् । अ॒प्स॒न्त॒ । शव॑सः । उ॒त्ऽस॒वेषु॑ । नरः॑ । नर॑म् । अव॑से । तम् । धना॑य ।

सः । अ॒न्धे । चि॒त् । तम॑सि । ज्योतिः॑ । वि॒द॒त् । म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥८

तम् । अप्सन्त । शवसः । उत्ऽसवेषु । नरः । नरम् । अवसे । तम् । धनाय ।

सः । अन्धे । चित् । तमसि । ज्योतिः । विदत् । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥८

“नरः नेतारः स्तोतारः “शवसः बलस्य संबन्धिषु "उत्सवेषु संग्रामेषु “नरं जयस्य नेतारं “तम् इन्द्रम् “अप्सन्त आप्नुवन्ति । किमर्थम् । “अवसे अन्नार्थं रक्षणार्थं वा । तथा “धनाय धनार्थं च “तम् इन्द्रं प्राप्नुवन्ति । यस्मात् “सः इन्द्रः “तमसि दृष्टिप्रतिबन्धके “अन्धे “चित् आध्यानरहिते

चित्तव्यामोहकरेऽपि संग्रामे “ज्योतिः विजयलक्षणं प्रकाशं "विदत् लम्भयति । तस्मात् तमेव प्राप्नुवन्तीत्यर्थः । अन्यत् समानम् ॥ अप्सन्त । आप्लृ व्याप्तौ । लङि व्यत्ययेन आत्मनेपदम् । व्यत्ययेन क्सप्रत्ययः । व्यत्ययेन धातोर्ह्रस्वत्वम् । विदत् । “विद्लृ लाभे'। 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने छान्दसो लुङ् । लुदित्त्वात् च्लेः अङादेशः । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः ॥

स स॒व्येनं यमति॒ व्राधंतश्चि॒त्स दंक्षि॒णे संगृंभीता कृ॒तानिं ।

स की॒रिणां चि॒त्सनिंता॒ धनांनि म॒रुत्वांन्नो भव॒त्विंद्रं ऊ॒ती ॥९

सः । स॒व्येनं । य॒म॒ति॒ । व्राधंतः । चि॒त् । सः । द॒क्षि॒णे । सम्ऽगृंभीता । कृ॒तानिं ।

सः । की॒रिणा॑ । चि॒त् । सनि॑ता । धना॑नि । म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥९

सः । सव्येन । यमति । व्राधतः । चित् । सः । दक्षिणे । सम्ऽगृभीता । कृतानि ।

सः । कीरिणा । चित् । सनिता । धनानि । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥९

“सः इन्द्रः “सव्येन वामहस्तेन एकहस्तेन “व्राधतश्चित् हिंसतः महतः शत्रूनपि “यमति नियमयति । तथा "सः इन्द्रः "दक्षिणे दक्षिणपार्श्वस्थेन हस्तेनैकेन यजमानैः “कृतानि हवींषि “संगृभीता संगृह्णाति । अपि च “सः इन्द्रः “कीरिणा “चित् कीर्तयित्रा स्तोत्रा च स्तुतः सन् “धनानि सनिता प्रदानशीलो भवति । हविष्प्रदातॄणामिव स्तोतॄणामपि धनं प्रयच्छतीत्यर्थः । शिष्टं स्पष्टम् ॥ यमति । ‘ यम उपरमे ' । णिचि अमन्तत्वात् मित्त्वे ‘ मितां ह्रस्वः'

इति ह्रस्वत्वम् । छन्दस्युभयथा ' इति शप आर्धधातुकत्वात् ' णेरनिटि ' इति णिलोपः । व्राधतः । ‘वृधु वृद्धौ । अस्मात् अतिप्रत्ययः औणादिकः आमागमश्च । वृषादित्वादाद्युदात्तत्वम् । संगृभीता । ‘ ग्रह उपादाने ' । लिङि ‘ बहुलं छन्दसि ' इति विकरणस्य लुक् । ‘ लिङः सलोपः । इति सलोपः । ग्रहिज्यादिना संप्रसारणम् । ‘ हृग्रहोर्भः ' इति भत्वम् । “द्व्यचोऽतस्तिङः' इति दीर्घः । सनिता । ‘ षणु दाने ' । ताच्छीलिकः तृन् । धनानि । “न लोकाव्यय ' इति षष्ठीप्रतिषेधः ।।

स ग्रामेंभि॒: सनिंता॒ स रथेंभिर्वि॒दे विश्वांभिः कृ॒ष्टिभि॒र्न्व१॒॑द्य ।

स पौंस्येंभिरभि॒भूरशंस्तीर्म॒रुत्वांन्नो भव॒त्विंद्रं ऊ॒ती ॥१०

सः । ग्रामेंभिः । सनिंता । सः । रथेंभिः । वि॒दे । विश्वांभिः । कृ॒ष्टिऽभिः॑ । नु । अ॒द्य ।

सः । पौंस्येंभिः । अ॒भि॒ऽभूः । अशंस्तीः । म॒रुत्वां॑न् । न॒ः । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥१०

सः । ग्रामेभिः । सनिता । सः । रथेभिः । विदे । विश्वाभिः । कृष्टिऽभिः । नु । अद्य ।

सः । पौंस्येभिः । अभिऽभूः । अशस्तीः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥१०

“सः इन्द्रः "ग्रामेभिः मरुत्संघैः सह "सनिता फलानां प्रदाता भवति । “सः च "अद्य अस्मिन्नहनि “नु क्षिप्रं “विश्वाभिः “कृष्टिभिः सर्वैर्मनुष्यैः “रथेभिः इन्द्रसंबन्धिभिः रथैः करणभूतैः “विदे विज्ञायते । अपि च “सः इन्द्रः पौंस्येभिः स्वकीयैर्बलैः "अशस्तीः अशंसनीयान् शत्रून्

“अभिभूः अभिभवन् वर्तते । "मरुत्वान् सः “इन्द्रः “नः अस्माकं रक्षणाय “भवतु ॥ ग्रामेभिः । ‘ बहुलं छन्दसि ' इति भिस ऐसभावः । ‘ग्रामादीनां च ' (फि. सू. ३८ ) इत्याद्युदात्तत्वम् । विदे। ‘ विद ज्ञाने'। कर्मणि लट् ।' बहुलं छन्दसि' इति विकरणस्य लुक् । ' लोपस्त आत्मनेपदेषु' इति तलोपः ॥ ॥ ९ ॥

स जा॒मिभि॒र्यत्स॒मजा॑ति मी॒ळ्हेऽजा॑मिभिर्वा पुरुहू॒त एवैः॑ ।

अ॒पां तो॒कस्य॒ तन॑यस्य जे॒षे म॒रुत्वा॑न्नो भव॒त्विंद्रं॑ ऊ॒ती ॥ ११

सः । जा॒मिऽभिः॑ । यत् । स॒म्ऽअजा॑ति । मी॒ळ्हे । अजा॑मिऽभिः । वा॒ । पु॒रु॒ऽहू॒तः । एवैः॑ ।

अ॒पाम् । तो॒कस्यं । तनंयस्य । जे॒षे । म॒रुत्वांन् । न॒ः ।
भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥११

सः । जामिऽभिः । यत् । सम्ऽअजाति । मीळ्हे ।
अजामिऽभिः । वा । पुरुऽहूतः । एवैः ।

अपाम् । तोकस्य । तनयस्य । जेषे । मरुत्वान् । नः ।
भवतु । इन्द्रः । ऊती ॥११

“पुरुहूतः बहुभिर्यजमानैराहूतः “सः इन्द्रः “मीळ्हे संग्रामे । मीळ्हम् इति धननाम् । तद्धेतुत्वात् संग्रामोऽपि मीळ्हशब्देनोच्यते । “जामिभिः बन्धुभिः “अजामिभिर्वा बान्धवरहितैर्वा “एवैः युद्धार्थं मरुद्भिः सह “यत् यदा “समजाति संगच्छते । तेषाम् उभयविधानाम् “अपाम् इन्द्रं प्राप्नुवतां पुरुषाणां “तोकस्य पुत्रस्य “तनयस्य तत्पुत्रस्य च "जेषे जयप्राप्तये सः “इन्द्रः भवति । किमु वक्तव्यम् अस्माकं स्तोतृतमानां जयो भवतीति । अन्यत् समानम् ।

समजाति । अज गतिक्षेपणयोः । लेटि आडागमः । जेषे । ' जि जये । औणादिकः सप्रत्ययः । चतुर्थ्यर्थे सप्तमी । यद्वा । ' जेषृ णेषृ प्रेषृ गतौ । क्विप् च ' इति क्विप् । ‘सावेकाचः' इति विभक्तेरुदात्तत्वम् ॥

स व॑ज्र॒भृद्द॑स्यु॒हा भी॒म उ॒ग्रः स॒हस्र॑चेताः श॒तनी॑थ॒ ऋभ्वा॑ ।

च॒म्री॒षो न शव॑सा॒ पांच॑जन्यो म॒रुत्वा॑न्नो भव॒त्विन्द्र॑ ऊ॒ती ॥
१२

सः । व॒ज्र॒ऽभृत् । द॒स्यु॒ऽहा । भी॒मः । उ॒ग्रः । स॒हस्र॑ऽचेताः । श॒तऽनी॑थः । ऋभ्वा॑ ।

च॒म्री॒षः । न । शव॑सा । पाञ्च॑ऽजन्यः । म॒रुत्वा॑न् । न॒ः । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥१२

सः । वज्रऽभृत् । दस्युऽहा । भीमः । उग्रः । सहस्रऽचेताः । शतऽनीथः । ऋभ्वा ।

चम्रीषः । न । शवसा । पाञ्चऽजन्यः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥१२

“सः इन्द्रः “वज्रभृत् अन्यैर्धर्तुमशक्यस्य वज्रस्य भर्ता “दस्युहा दस्यूनामुपक्षपयितॄणामसुराणां हन्ता “भीमः सर्वेषां भयहेतुः “उग्रः उद्गूर्णतेजाः “सहस्रचेताः बहुविधज्ञानः सर्वज्ञ इत्यर्थः । “शतनीथः बहुस्तुतिर्बहुविधप्रापणो वा “ऋभ्वा उरु भासमानो महान् वा “चम्रीषो “न चम्वां चमसे रसात्मनावस्थितः सोम इव “शवसा बलेन “पाञ्चजन्यः । गन्धर्वा अप्सरसो देवा असुरा रक्षांसि पञ्चजनाः । निषादपञ्चमाश्चत्वारो वर्णा वा । तेषु रक्षकत्वेन भवः । एवंभूतः सः “मरुत्वान् “इन्द्रः “नः अस्माकं रक्षणाय “भवतु । । दस्युहा । ' बहुलं

छन्दसि ' इति हन्तेः क्विप् । भीमः । ' ञिभी भये ' । ' भीमादयोऽपादाने ' ( पा. सू. ३. ४. ७४) इति अपादाने ' भियः षुग्वा ' ( उ. सू – १.१४५) इति मक् । शतनीथः । ' णीञ् प्रापणे ' । ' हनिकुषिनीरमिकाशिभ्यः क्थन् ' ( उ सू. २. १५९) इति क्थन्प्रत्ययः । चम्रीषः । ' इष गतौ ' । चम्वामिष्यति गच्छतीति चम्रीषः । इगुपधलक्षणः कप्रत्ययः । वर्णव्यापत्त्या रेफो दीर्घश्च । यद्वा चमेरौणादिक ईषन्प्रत्ययः । पूर्ववत् रेफः । पाञ्चजन्यः । भवार्थे बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम् ' ( का. ४. ३.५८. १) इति ञ्यप्रत्ययः । ञित्त्वात् आद्युदात्तत्वम् ।।

तस्य॒ वज्रः॑ क्रंदति॒ स्मत्स्व॒र्षा दि॒वो न त्वे॒षो र॒वथः॒ शिमीं॑वान् ।

तं सं॑चंते स॒नय॒स्तं धना॑नि म॒रुत्वा॑न्नो भव॒त्विंद्र॑ ऊ॒ती ॥१३

तस्यं । वज्रः॑ । क्र॒न्द॒ति॒ । स्मत् । स्व॒ःऽसाः । दि॒वः । न ।
त्वे॒षः । र॒वथः॑ । शिमीं॑ऽवान् ।

तम् । स॒च॒न्ते॒ । स॒नयः॑ । तम् । धनां॑नि । म॒रुत्वां॑न् । न॒ः ।
भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥१३

तस्य । वज्रः । क्रन्दति । स्मत् । स्वःऽसाः । दिवः । न ।
त्वेषः । रवथः । शिमीऽवान् ।

तम् । सचन्ते । सनयः । तम् । धनानि । मरुत्वान् । नः ।
भवतु । इन्द्रः । ऊती ॥१३

“तस्य इन्द्रस्य “वज्रः कुलिशः “स्मत् भृशं “क्रन्दति
शत्रूनाक्रन्दयति रोदयतीत्यर्थः । य इन्द्रः “स्वर्षाः
शोभनस्योदकस्य दाता “दिवो “न दिवः संवन्धी सूर्य इव
“त्वेषः दीप्तः “रवथः शब्दस्य गर्जनलक्षणस्य कर्ता
“शिमीवान् । शिमी इति कर्मनाम । लोकानुग्राहकेण

कर्मणा युक्तः “तम् इन्द्रं “सनयः धनस्य दानानि “सचन्ते सेवन्ते । तथा “तं “धनानि च सेवन्ते । सः “मरुस्वान् “इन्द्रः “नः अस्माकं रक्षणाय “भवतु ॥ क्रन्दति । कदि क्रदि क्लदि आह्वाने रोदने च । ‘छन्दस्युभयथा ' इति शप आर्धधातुकत्वात् ‘णेरनिटि ' इति णिलोपः । स्वर्षाः । सुपूर्वात् अर्तेः विच् । सुष्ठु अर्ति' गच्छतीति स्वरुदकम् । तत्सनोतीति स्वर्षाः।' षणु दाने '। ‘ जनसनखनक्रमगमो विट् । ‘ विड्वनोरनुनासिकस्यात् ' इति आत्वम् । सनोतेरनः ' ( पा. सू. ८, ३. १०८ ) इति षत्वम् । त्वेषः । ‘ त्विष दीप्तौ । पचाद्यच् । रवथः । ‘ रु शब्दे'।' शीङ्शपिगमिवञ्चिजीविप्राणिभ्योऽथः । ( उ. सू. ३. ३९३ ) इति अथप्रत्ययः । गुणावादेशौ । सनयः । सनोतेर्भावे औणादिक इप्रत्ययः ।।

यस्याजंस्रं शवंसा मानंमुक्थं पंरिभुजद्रोदंसी विश्वतः सीं ।

स पा॑रिष॒त्क्रतु॑भिर्मं॑दसा॒नो म॒रुत्वा॑न्नो भव॒त्विंद्र॑ ऊ॒ती ॥१४

यस्य॑ । अज॑स्रम् । शव॑सा । मान॑म् । उ॒क्थम् ।
प॒रि॒ऽभु॒जत् । रोद॑सी॒ इति॑ । वि॒श्वतः॑ । सी॒म् ।

सः । पा॒रि॒ष॒त् । क्रतु॑ऽभिः । म॒न्द॒सा॒नः । म॒रुत्वा॑न् । न॒ः ।
भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥१४

यस्य । अजस्रम् । शवसा । मानम् । उक्थम् ।
परिऽभुजत् । रोदसी इति । विश्वतः । सीम् ।

सः । पारिषत् । क्रतुऽभिः । मन्दसानः । मरुत्वान् । नः ।
भवतु । इन्द्रः । ऊती ॥१४

“यस्य इन्द्रस्य “उक्थं प्रशस्यं “शवसा “मानं बलेन सर्वस्य परिच्छेदकं सर्वेषां बलस्योपमानभूतं वा “रोदसी द्यावापृथिव्यौ "विश्वतः “सीं सर्वतः “अजस्रम् अनवरतं “परिभुजत् परितः सर्वतो भुनक्ति पालयति “सः इन्द्रः

“क्रतुभिः अस्माभिः कृतैर्यागैः “मन्दसानः मोदमानः सन् 'पारिषत् अस्मान् दुरितात् पारयतु । उक्थम् । ‘वच परिभाषणे '। ‘ पातृतुदिवचि°' इत्यादिना कर्मणि थक् । ‘ वचिस्वपि° ' इत्यादिना संप्रसारणम् । परिभुजत् ।' भुज पालनाभ्यवहारयोः '। लेटि अडागमः । व्यत्ययेन शः । पारिषत् ।' पार तीर कर्मसमाप्तौ । लेटि अडागमः। ‘ सिब्बहुलं लेटि' इति सिप् । तस्य आर्धधातुकत्वात् इट् । व्यत्ययेन णिलोपः। मन्दसानः । मदि स्तुतिमोदसदस्वप्नकान्तिगतिषु । ‘ ऋञ्जिवृधिमन्दिसहिभ्यः कित्' ( उ. सू. २. २४४ ) इति असानच्प्रत्ययः ॥

न यस्यं दे॒वा दे॒वता॒ न मर्ता॒ आपंश्च॒न शवंसो॒ अंतंमा॒पुः ।

स प्र॒रिक्वा॒ त्वक्षं॑सा॒ क्ष्मो दि॒वश्च॑ म॒रुत्वा॑न्नो भव॒त्विंद्र॑ ऊ॒ती ॥१५

न । यस्य॑ । दे॒वाः । दे॒वता॑ । न । मर्ताः॑ । आपः॑ । च॒न । शव॑सः । अन्त॑म् । आ॒पुः ।

सः । प्र॒ऽरिक्वा॑ । त्वक्षं॑सा । क्ष्मः । दि॒वः । च॒ । म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥१५

न । यस्य । देवाः । देवता । न । मर्ताः । आपः । चन । शवसः । अन्तम् । आपुः ।

सः । प्रऽरिक्वा । त्वक्षसा । क्ष्मः । दिवः । च । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥१५

“देवता देवस्य दानादिगुणयुक्तस्य “यस्य इन्द्रस्य “शवसः बलस्य “अन्तम् अवसानं “देवाः वस्वाद्या देवगणाः “न “आपुः न आनशिरे तथा “मर्ताः मनुष्याः “आपश्चन

आपोऽपि “न प्रापुः । “सः तादृश इन्द्रः “त्वक्षसा शत्रूणां तनूकर्त्रा आत्मीयेन बलेन “क्ष्मः पृथिव्याः “दिवश्च स्वर्गस्य च “प्ररिक्वा प्रकर्षेण रेचको भवति । लोकद्वयादप्यस्य बलमतिरिच्यते इत्यर्थः । मरुद्भिर्युक्तः सः “इन्द्रः “नः अस्माकम् "उती ऊतये रक्षणाय “भवतु ॥ देवता । देव एव देवता । ' देवात्तल्' इति स्वार्थे तल् । ‘सुपां सुलुक्' इति षष्ठ्याँ लुक् । मर्ताः । ‘मृङ् प्राणत्यागे'।' असिहसि ' इत्यादिना तन्प्रत्ययः । नितित्वादाद्युदात्तत्वम् । प्ररिक्वा । ‘ रिचिर् विरेचने '। ‘ अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । अन्त्यविकारश्छान्दसः । त्वक्षसा। ‘ तक्षू त्वक्षू तनूकरणे '। असुन् । नित्त्वादाद्युदात्तत्वम् । क्ष्मः । क्ष्मा इति पृथिवीनाम । अतो धातोः' इत्यत्र ‘आतः' इति योगविभागात् इष्टसिद्धिः इत्यभिधानात् ङसि भसंज्ञायामाकारलोपः । यद्वा । 'क्ष्मायी विधूनने' । अस्मात् ' क्विप् च' इति क्विप् । वेरपृक्तलोपात् पूर्वं वलि

लोपः। अन्यत् समानम्। उदात्तनिवृत्तिस्वरेण विभक्तेः उदात्तत्वम् ॥ ॥ १० ॥

रो॒हिच्छ्या॒वा सु॒मदं॑शुर्लला॒मीर्द्यु॒क्षा रा॒य ऋ॒ज्राश्वं॑स्य ।

वृषं॑ण्वंत॒ं बिभ्रं॑ती धू॒र्षु रथं॑ म॒ंद्रा चिं॑केत॒ नाहुं॑षीषु वि॒क्षु ॥१६

रो॒हित् । श्या॒वा । सु॒मत्ऽअं॑शुः । ल॒ला॒मीः । द्यु॒क्षा । रा॒ये । ऋ॒ज्रऽअं॑श्वस्य ।

वृषं॑ण्ऽवन्तम् । बिभ्रं॑ती । धूः॒ऽसु । रथं॑म् । म॒न्द्रा । चि॒के॒त॒ । नाहुं॑षीषु । वि॒क्षु ॥१६

रोहित् । श्यावा । सुमत्ऽअंशुः । ललामीः । द्युक्षा । राये । ऋज्रऽअश्वस्य ।

"सुपर्णाः । रश्मिनामैतत् । शोभनपतनाः "एते सूर्यरश्मयः "आरोधने सर्वस्यावरके व्याप्ते “दिवः अन्तरिक्षस्य "मध्ये "आसते वर्तन्ते । "ते सूर्यरश्मयः पथः मार्गात् "वृकम् अरण्यश्वानं “सेधन्ति निषेधन्ति निवारयन्ति । कीदृशम् । "यह्वतीः महतीः "अपः तरन्तम् अतिक्रामन्तम् । कूपपतनात्पूर्वं त्रितं दृष्टा एनं भक्षयितुं कश्चिदरण्यश्वा महतीं नदीं तितीर्षुः आजगाम । स च सूर्यरश्मीन् दृष्ट्वा अयमवसरो न भवतीति निववृते । अतो रश्मयो वृकं निषेधन्तीत्युच्यते । यास्कपक्षे तु आप इत्यन्तरिक्षनाम। यह्वतीरपो महदन्तरिक्षं पथः पथा द्वादशराश्यात्मना मार्गेण तरन्तं वृकं चन्द्रमसं सूर्यरश्मयो निषेधन्ति । अहनि हि सूर्यरश्मिभिः निरुद्धश्चन्द्रमा निष्प्रभो दृश्यते । अतो निष्प्रभं कुर्वन्तीत्यर्थः ॥ आरोधने। आरुध्यते आव्रियतेऽनेनेति आरोधनम् । करणे ल्युट्। सेधन्ति । ‘षिधु गत्याम्'। अयं केवलोऽपि निपूर्वार्थे द्रष्टव्यः । पथः । पञ्चम्येकवचने • भस्य टेर्लोपः' इति टिलोपः ।

उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । यास्कपक्षे तु तृतीयार्थे व्यत्ययेन पञ्चमी । यह्वतीः । यह्व इति महन्नाम । अस्मादाचारार्थे ‘ सर्वप्रातिपदिकेभ्यः‘ (पा. म. ३. १. ११. ३) इति क्विप् । ततो लटः शतृ ।' उगितश्च' इति ङीप् । आगमानुशासनस्यानित्यत्वात नुमभावः । ‘शतुरनुमः' इति नदीस्वरो व्यत्ययेन न प्रवर्तते ॥

नव्यं॒ तदु॒क्थ्यं॑ हि॒तं देवा॑सः सुप्रवाच॒नम् ।

ऋ॒तम॑र्षन्ति॒ सिन्ध॑वः स॒त्यं ता॑तान॒ सूर्यो॑ वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥१२

नव्य॑म् । तत् । उ॒क्थ्य॑म् । हि॒तम् । देवा॑सः । सु॒ऽप्र॒वा॒च॒नम् ।

ऋ॒तम् । अ॒र्ष॒न्ति॒ । सिन्धंवः । स॒त्यम् । त॒ता॒न॒ । सूर्यः । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इतिं ॥१२

नव्यम् । तत् । उक्थ्यम् । हितम् । देवासः । सुऽप्रवाचनम् ।

ऋतम् । अर्षन्ति । सिन्धवः । सत्यम् । ततान । सूर्यः । वित्तम् । मे। अस्य । रोदसी इति ॥१२॥

हे "देवासः देवाः "नव्यं नवतरम् "उक्थ्यं प्रशस्यं स्तुत्यर्हं "सुप्रवाचनं सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यम् एवंभूतं “तत् भवदीयं बलं “हितं युष्मासु निहितम् । अतो युष्मदीयेन बलेन “सिन्धवः स्यन्दनशीला नद्यः “ऋतम् उदकम् "अर्षन्ति आलस्यराहित्येन सर्वदा प्रेरयन्ति । अशोष्याः सत्यः प्रवहन्तीत्यर्थः । तथा "सूर्यः "सत्यं सर्वदा विद्यमानं स्वकीयं तेजः "ततान आतनोति विस्तारयति । अन्यत् समानम् ॥ सुप्रवाचनम् । वच परिभाषणे ' । अस्मात्

ण्यन्तात् 'अन्येभ्योऽपि दृश्यते 'इति स्वलर्थे युच् । अर्षन्ति । अतेर्लेटि • सिब्बहुलं लेटि' इति सिप् । गुणः । ततान । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् ॥
अग्ने तव त्यदुक्थ्य देवेष्वस्त्याप्यम् । स नः सुत्तो मनुष्वदा देवान्यक्षि विदुष्टरो वित्तं मै अस्य रोदसी ॥ १२ ॥

अग्ने॒ तव॒ त्यदु॒क्थ्यं॑ दे॒वेष्व॒स्त्याप्यं॑म् ।

स नः॑ स॒त्तो मं॑नु॒ष्वदा दे॒वान्यं॑क्षि वि॒दुष्टं॑रो वि॒त्तं में॑ अ॒स्य रों॑दसी ॥१३

अग्नें॑ । तवं॑ । त्यत् । उ॒क्थ्यं॑म् । दे॒वेषुं॑ । अ॒स्ति॒ । आप्यं॑म् ।

सः । न॒ः । स॒त्तः । म॒नु॒ष्वत् । आ । दे॒वान् । य॒क्षि॒ । वि॒दुःऽतं॑रः । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इतिं॑ ॥१३

अग्ने । तव । त्यत् । उक्थ्यम् । देवेषु । अस्ति । आप्यम् ।

सः । नः । सत्तः । मनुष्वत् । आ । देवान् । यक्षि ।
विदुःऽतरः । वित्तम् । मे । अस्य । रोदसी इति ॥ १३ ॥

हे अग्ने तव “उक्थ्यं प्रशस्यं “त्यत् श्रुतिप्रसिद्धम्' "आप्यम् । आपिर्बन्धुः । तस्य भावः । बान्धवं “देवेषु दानादिगुणयुक्तेष्विन्द्रादिषु "अन्ति विद्यते । तस्मात् “सः तादृशः “विदुष्टरः विद्वत्तरस्त्वं "नः अस्माकं यज्ञे सत्तः निषण्णः सन् 'देवान् तानिन्द्रादीन् “आ शास्त्रमर्यादया “यक्षि यज हविर्भिः पूजय । तत्र दृष्टान्तः । “मनुष्वत् । यथा मनूनां यज्ञे तद्वत् । अन्यत् पूर्ववत् ॥ आप्यम् । ‘ आप्लृ व्याप्तौ ' । अस्मात् ण्यन्तात् ' अच इः' इति इप्रत्ययः । ब्राह्मणादित्वात् ष्यन् । सत्तः । 'नसत्तनिषत्त' (पा. सू. ८. २. ६१ ) इति निपातनात् निष्ठानत्वाभावः । छान्दसो निशब्दलोपो द्रष्टव्यः । मनुष्वत् । मनेरौणादिक

उसिप्रत्ययः । तत्र तस्येव' ( पा सू. ५. १. ११६) इति षष्ठ्यर्थे वतिः । ‘ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् ' (पा. सू. १. ४. १८. ३) इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः । यक्षि । 'बहुलं छन्दसि ' इति शपो लुक् । व्रश्चादिपत्वे कुत्वषत्वे । विदुष्टरः । विद्वस्शब्दात् तरपि अयस्मयादिवेन भत्वात् ' वसोः संप्रसारणम्' इति संप्रसारणम् । ‘शासिवसिघसीनां च' इति षण्वम् ॥

स॒त्तो होतां मनु॒ष्वदा दे॒वाँ अच्छां वि॒दुष्टंरः ।

अ॒ग्निर्ह॒व्या सुंषूदति दे॒वो दे॒वेषु॒ मेधिंरो वि॒त्तं में अ॒स्य रोंदसी ॥१४

स॒त्तः । होतां । म॒नु॒ष्वत् । आ । दे॒वान् । अच्छं । वि॒दुःऽतंरः ।

अ॒ग्निः । ह॒व्या । सु॒सू॒द॒ति॒ । दे॒वः । दे॒वेषुं । मेधिंरः ।
वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इतिं ॥१४

सत्तः । होता । मनुष्वत् । आ । देवान् । अच्छ ।
विदुःऽतरः ।

अग्निः । हव्या । सुसूदति । देवः । देवेषु । मेधिरः ।
वित्तम् । मे। अस्य । रोदसी इति ॥ १४ ॥

"मनुष्वत् मनोरिवास्माकं यज्ञे "सत्तः निषण्णः “होता
देवानामाह्वाता “विदुष्टरः विद्वत्तरः “देवः दानादिगुणयुक्तः
"देवेषु सर्वेष्विन्द्रादिषु मध्ये "मेधिरः मेधावी एवंभूतः
"अग्निः तान् "देवान् "अच्छ आभिमुख्येन “हव्या हव्यानि
अस्मदीयानि हवींषि । मर्यादायामाकारः । शास्त्रमर्यादया
यथाशास्त्रं “सुषूदति प्रेरयतु । अन्यत् समानम् ॥ सुषूदति
। ‘षूद क्षरणे' । लेटि अडागमः । ‘ बहुलं छन्दसि ' इति

शपः श्लुः । मेधिरः । मेधारथाभ्यामिरनिरची वक्तव्यौ ' ( पा. सू. ५. २. १०९. ३ ) इति मत्वर्थीय इरन् ।

ब्रह्मां कृणोति वरुंणो गातुविदं तमींमहे ।

व्यूंर्णोति हृदा मतिं नव्यों जायतामृतं वित्तं में अस्य रोंदसी ॥१५

ब्रह्मां । कृणोति । वरुंणः । गातुऽविदंम् । तम् । ईमहे ।

वि । ऊर्णोति । हृदा । मतिम् । नव्यः । जायताम् । ऋतम् । वित्तम् । मे । अस्य । रोदसी इतिं ॥१५

ब्रह्म । कृणोति । वरुणः । गातुऽविदम् । तम् । ईमहे ।

वि । ऊर्णोति । हृदा । मतिम् । नव्यः । जायताम् । ऋतम् । वित्तम् । मे । अस्य । रोदसी इति ॥ १५ ॥

यः “वरुणः अनिष्टस्य निवारयिता देवः "ब्रह्म परिवृढं तद्रक्षणरूपं कर्म "कृणोति करोति "तं तादृशं "गातुविदं गातोर्मार्गस्य दुःखनिवारकस्य लम्भयितारं वरुणम् “ईमहे अभिमतफलं याचामहे । ईमहे इति याञ्चाकर्मा। तस्मै वरुणाय अयमस्मदीयः स्तोता हृदा हृदयेन “मतिं मननीयां स्तुतिं व्यूर्णोति विवृणोति प्रकाशयति उच्चारयतीत्यर्थः। सोऽयं "नव्यः स्तुत्यो वरुणोऽस्माकम् “ऋतं “जायतां सत्यभूतोऽस्तु ॥ ब्रह्म। ' अन्येषामपि दृश्यते ' इति सांहितिको दीर्घः । गातुविदम् ।' विद्लृ लाभे'। अन्तर्भावितण्यर्थात् क्विप् । ईमहे ।' ईङ् गतौ '।' बहुलं छन्दसि ' इति विकरणस्य लुक् । हृदा । 'पदन्' इत्यादिना हृदयशब्दस्य हृदादेशः ॥ ॥ २२ ॥

अ॒सौ यः पन्थां आदि॒त्यो दि॒वि प्र॒वाच्यं कृ॒तः ।

न स दे॑वा अति॒क्रमे॒ तं म॑र्तासो॒ न प॑श्यथ वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥१६

अ॒सौ । यः । पन्था॑ः । आ॒दि॒त्यः । दि॒वि । प्र॒ऽवाच्य॑म् । कृ॒तः ।

न । सः । दे॒वा॒ः । अ॒ति॒ऽक्रमे॑ । तम् । म॒र्ता॒स॒ः । न । प॒श्य॒थ॒ । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥१६

असौ । यः । पन्थाः । आदित्यः । दिवि । प्रऽवाच्यम् । कृतः ।।

न । सः । देवाः । अतिऽक्रमे । तम् । मर्तासः । न । पश्यथ । वित्तम् । मे । अस्य । रोदसी इति ॥ १६ ॥

“पन्थाः सततगामी । यद्वा । ब्रह्मलोकं गच्छतामुपासकानां मार्गभूतः । सूर्यद्वारेण ते विरजाः प्रयान्ति' (मु. उ. १. २. ११ ) इति श्रुतेः । एवंभूतः “यः

“असौ "आदित्यः दिवि द्युलोके "प्रवाच्यं प्रकर्षण वचनं यथा भवति तथा “कृतः निर्मितः । यथा सर्वैः प्राणिभिर्दृश्यते तथा वर्तमानः इत्यर्थः । हे देवाः सः अयमादित्यो युष्माभिरपि “न ”अतिक्रमे अतिक्रमितुं न शक्यः । युष्मज्जीवनस्य तदायत्तत्वात् । सति हि सूर्ये वसन्तादयः काला निष्पद्यन्ते । कालेषु च यागाः क्रियन्ते । यागेषु च सत्सु भवतां जीवनम् । अतो युष्माभिरप्यसौ नातिक्रमितव्यः । एवं च सति हे मर्तासः पापकृतो मनुष्याः तं महानुभावं सूर्यं “न “पश्यथ सूर्यं न जानीथ। एतच्च कूपे पातयित्वा निर्गतौ एकतद्वितौ प्रति निन्दनम् । अहमेव मन्त्रद्रष्टा तं सूर्यं जानामि पापकृतौ युवां न जानीथः इति । पन्थाः ।' पत्लृ गतौ'। 'पतेस्थ च' इति इनिप्रत्ययः । “पथिमथ्यृभुक्षामात्' इति आत्वम् । ‘इतोऽत्सर्वनामस्थाने' (पा. सू. ७. १.८६) इति अत्वम् इकारस्य ।' थो न्यः' (पा. सू. ७. १. ८७)। 'पथिमथोः सर्वनामस्थाने' इत्याद्युदातत्वम्। प्रवाच्यम् । वक्तेर्ण्यन्तात्

‘अचो यत्' इति भावे यत् ।' यतोऽनावः' इत्याद्युदात्तत्वम् । अतिक्रमे । ‘ क्रमु पदविक्षेपे '। ‘कृत्यार्थं तवैकेन्' इति केन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।।

त्रि॒तः कूपेऽवं॑हितो दे॒वान्हं॑वत ऊ॒तयें ।

तच्छुं॑श्राव॒ बृह॒स्पतिः॑ कृ॒ण्वन्नं॑हूर॒णादु॒रु वि॒त्तं में अ॒स्य रोंदसी ॥१७

त्रि॒तः । कूपें । अवंऽहितः । दे॒वान् । ह॒व॒ते॒ । ऊ॒तयें ।

तत् । शु॒श्रा॒व॒ । बृह॒स्पतिः॑ । कृ॒ण्वन् । अं॒हू॒र॒णात् । उ॒रु । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इतिं ॥१७

त्रितः । कूपे । अवऽहितः । देवान् । हवते । ऊतये ।

तत् । शुश्राव। बृहस्पतिः। कृण्वन् । अंहूरणात् । उरु।
वित्तम् । मे। अस्य । रोदसी इति ॥१७॥

“कूपेऽवहितः पातितः “त्रितः एतत्संज्ञः ऋषिः “ऊतये रक्षणाय “देवान् “हवते स्तुतिभिराकारयति । यदेतत् त्रितस्याह्वानं बृहस्पतिः बृहतां महतां देवानां रक्षकः एतत्संज्ञो देवः एतत् आह्वानं “शुश्राव श्रुतवान् । किं कुर्वन् । “अंहूरणात् अंहसः पापरूपादस्मात् कूपपातादुन्नीय “उरु विस्तीर्णं शोभनं कृण्वन् कुर्वन् ॥ हवते । ह्वयतेर्लटि ‘ बहुलं छन्दसि' इति संप्रसारणम् । शब्गुणावादेशाः । ऊतये ।' ऊतियूति इत्यादिना क्तिन उदात्तत्वम् । बृहस्पतिः । ‘ तदबृहतोः करपत्योः ' ( पा. सू. ६. १. १५७.ग. ) इति पारस्करादिषु पाठात् सुट्तलोपौ ।' उभे वनस्पत्यादिषु" ' इति पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम् । अंहूरणात् । “अहि गतौ । इदित्वात् नुम् । ‘ स्वर्जिपिञ्ज्यादिभ्य ऊरोलची ' (उ. सू.

४. ५३० ) इति भावे ऊरप्रत्ययः । दुःखप्राप्तिहेतुभावा गतिरस्यास्तीति पामादिलक्षणो मत्वर्थीयो नः ( पा. सू. ५. २. १०० )। आङ्पूर्वात् हन्तेर्वा रूपमुन्नेयम् ॥

अ॒रु॒णो मां स॒कृद्वृकः॑ प॒था यन्तं॑ द॒दर्श॒ हि ।

उज्जिं॑हीते नि॒चाय्या॑ तष्टे॑व पृष्ट्याम॒यी वि॒त्तं मे॑ अ॒स्य रोदसी ॥१८

अ॒रु॒णः । म॒ । स॒कृत् । वृकः॑ । प॒था । यन्त॑म् । द॒दर्श॑ । हि ।

उत् । जि॒ही॒ते॒ । नि॒ऽचाय्य॑ । तष्टा॑ऽइव । पृ॒ष्टि॒ऽआ॒म॒यी । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥१८

अरुणः । मा । सकृत् । वृकः । पृथा । यन्तम् । ददर्श । हि ।

उत् । जिहीते। निऽचाय्य । तष्टाऽइव । पृष्टिऽआमयी।
वित्तम् । मे। अस्य । रोदसी इति ॥ १८॥

अरुणवर्णः लोहितवर्णः ."वृकः अरण्यश्वा "सकृत् एकवारं “पथा “यन्तं मार्गेण गच्छन्तं मां “ददर्श “हि दृष्टवान् । हिः पादपूरणः। “निचाय्य दृष्ट्वा च मां जिघृक्षुः सन् उज्जिहीते उद्गच्छति स्म। तत्र दृष्टान्तः । “तष्टेव “पृष्ट्यामयी। यथा तक्षणजनितपृष्ठक्लेशः तष्टा वर्धकिः तदपनोदनाय ऊर्ध्वाभिमुखो भवति तद्वत् । हे द्यावापृथिव्यौ मदीयमिदं दुःखं “वित्तं जानीतम् । यद्वा । वृक इति विवृतज्योतिष्कः चन्द्रमाः उच्यते । अरुणः आरोचमानः कृत्स्नस्य जगतः प्रकाशकः मासकृत् मासार्धमासर्त्वयनसंवत्सरादीन् कालविशेषान् कुर्वन् । तिथिविभागज्ञानस्य चन्द्रगत्यधीनत्वात् । स चन्द्रमाः आकाशमार्गे यन्तं गच्छन्तं नक्षत्रगणं ददर्श । हिरवधारणे। नक्षत्रगणमेव ददर्श न कूपपतितं मामित्यनादरो द्योत्यते ।

यदि मां पश्येत् उद्धरेत् कूपात् । निचाय्य नक्षत्रगणं दृष्ट्वा चोज्जिहीते । येन नक्षत्रेण संयुज्यते तेन सहोद्गच्छति । न मामभिगच्छतीत्यर्थः । अन्यत् पूर्ववत् । अत्र मासकृत् इति यास्कः एकं पदं मन्यते शाकल्यस्तु पदद्वयम् । तस्मिन्पक्षेऽयमर्थः । दक्षप्रजापतेर्दुहितृभूताः स्वभार्याः अश्विन्याद्यास्तारकाः पुनःपुनर्ददर्श। मां सकृदेव पश्यतीति सकृद्दृष्ट्वा चोज्जिहीते। ताराभिः सहोर्ध्वमेव गच्छति । न मां कूपादुत्तारयति । अत इदमनुचितम् । हे द्यावापृथिव्यौ मदीयमिमं वृत्तान्तं जानीतम् ॥ अत्र निरुक्तं-' वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा । अरुण आरोचन: मासकृन्मासानां चार्धमासानां च कर्ता भवति चन्द्रमा वृकः पथा यन्तं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी' (निरु. ५.२०-२१) इति । सकृत् । एकस्य सकृञ्च' ( पा. सू. ५. ४.१९) इति क्रियाभ्यावृत्तिगणने निपातितः । वृकः

। वृञ् वरणे'। सृवृभूशुचिमुषिभ्यः कित् ' ( उ. सू. ३. ३२१ ) इति कप्रत्ययः । जिहीते । “ओहाङ गतौ ' । जौहोत्यादिकः । ‘भृञामित्' इति अभ्यासस्य इत्वम् । निचाय्य । 'चायृ पूजानिशामनयोः । अत्र दर्शनार्थो धातूनामनेकार्थत्वात् । समासेऽनम्पूर्वे क्त्वो ल्यप्'। पृष्टयामयी। ‘स्पृश संस्पर्शने। 'स्पृश्यतेऽनेनेति स्पृष्टिः । छान्दसो वर्णलोपः । पृष्टावामयः पृष्ट्यामयः । तद्वान् पृष्ट्यामयी।।

ए॒नाङ्गू॒षेणं व॒यमिन्द्रंवन्तो॒ऽभि ष्यांम वृ॒जने॒ सर्वंवीराः ।

तन्नों मि॒त्रो वरुंणो मामहन्ता॒मदिंति॒ः सिन्धुः पृथि॒वी उ॒त द्यौः ॥१९

ए॒ना । आ॒ङ्गू॒षेणं । व॒यम् । इन्द्रंऽवन्तः । अ॒भि । स्या॒म॒ । वृ॒जनें । सर्वंऽवीराः ।

तत् । न॒: । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः ।
सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥१९

एना । आङ्गूषेण । वयम् । इन्द्रऽवन्तः । अभि । स्याम ।
वृजने । सर्वऽवीराः ।

तत् । नः। मित्रः। वरुणः। ममहन्ताम् । अदितिः । सिन्धुः
। पृथिवी । उत । द्यौः ॥१९॥

"एना अनेन "आङ्गूषेण आघोषणयोग्येन स्तोत्रेण
हेतुभूतेन "इन्द्रवन्तः अनुग्राहकेणेन्द्रेण युक्ताः "सर्ववीराः
सर्वैर्वीरैः पुत्रैः पौत्रादिभिश्चोपेताः सन्तः "वयं वृजने संग्रामे
"अभि "ष्याम शत्रूनभिभवेम । "तत् इदमस्मदीयं वचनं
मित्रादयः "ममहन्तां पूजयन्तु पालयन्त्वित्यर्थः । उतशब्दो
देवतासमुच्चये। अत्र यास्कः-' आङ्गूषः स्तोम आघोषः ।
अनेन स्तोमेन वयमिन्द्रवन्तः' (निरु. ५.११) इति । एना ।
' द्वितीयाटौःस्वेनः '(पा. सू. २. ४. ३४) इति तृतीयायाम्

इदम एनादेशः ।' सुपां सुलुक् ' इति विभक्तेः आजादेशः । चित्स्वरेणान्तोदात्तत्वम्। आङ्गूषेण । आङ्पूर्वात् घुषेः कर्मणि घञ् । आङो ङकारलोपाभावश्छान्दसः । घोषशब्दस्य गूषभावश्च पृषोदरादित्वात् । थाथादिना उत्तरपदान्तोदात्तत्वम् । स्याम । अस्तेः प्रार्थनायां लिङि' असोरल्लोपः' इति अकारलोपः । ' उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (पा. सू. ८. ३. ८७ ) इति षत्वम् ॥ ॥ २३ ॥ ॥ १५ ॥

**भाष्यम्**

चन्द्रमा अप्स्व१न्तरा सुपर्णो धावते दिवि.
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी.. (१)
उदकमय मंडल में वर्तमान सुंदर किरणों वाला

चंद्रमा आकाश में दौड़ता है. हे सुवर्णमयी चंद्रकिरणो! कुएं से ढकी होने के कारण मेरी इंद्रियां तुम्हारे अग्रभाग को नहीं प्राप्त करती. हे धरती और आकाश! हमारे इस स्तोत्र को जानो. (१)

अर्थमिद्वा उ अर्थिन आ जाया युवते पतिम्.
तुञ्जाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी.. (२)
धन चाहने वाले लोगों को निश्चित रूप से धन मिल रहा है. दूसरों की स्त्रियां अपने पतियों को समीप ही पाती हैं, उनसे समागम करती हैं एवं गर्भ में वीर्य धारण करके संतान उत्पन्न करती हैं. हे धरती और आकाश! मेरे इस कष्ट को जानो. (२)

मो षु देवा अदः स्व१रव पादि दिवस्परि.
मा सोम्यस्य शंभुवः शूने भूम कदा चन वित्तं मे

अस्य रोदसी.. (३).

हे देवो! स्वर्ग में वर्तमान हमारे पूर्वपुरुष वहां से पतित न हों. सोमपान योग्य पितर के सुख के निमित्त पुत्र से रहित कभी न हों. हे धरती और आकाश! मेरी इस बात को समझो. (३)

यज्ञं पृच्छाम्यवमं स तद्दूतो वि वोचति.

क्व ऋतं पूर्व्यं गतं कस्तद्बिभर्ति नूतनो वित्तं मे अस्य रोदसी.. (४)

मैं देवों में आदिभूत एवं यज्ञ के योग्य अग्नि से निवेदन करता हूं कि वे मेरी बात देवों के दूत के रूप में उन्हें बता दें. हे अग्नि! तुम पूर्वकाल में स्तोताओं का जो कल्याण करते थे, वह कहां गए? उस गुण को अब कौन धारण करता है? हे धरती और आकाश! मेरी यह बात जानो. (४)

अमी ये देवाः स्थन त्रिष्वा रोचने दिवः.
कद्व ऋतं कदनृतं क्व प्रत्ना व आहुतिर्वित्तं मे अस्य रोदसी.. (५)
हे देवो! सूर्य द्वारा प्रकाशित तीनों लोकों में तुम वर्तमान रहो. तुम्हारा सत्य, असत्य एवं प्राचीन आहुति कहां है? हे धरती और आकाश! मेरी यह बात जानो. (५)

कद्व ऋतस्य धर्णसि कद्वरुणस्य चक्षणम्.
कदर्यम्णो महस्पथाति क्रामेम दूढ्यो वित्तं मे अस्य रोदसी.. (६)
हे देवो! तुम्हारा सत्यधारण कहां है? वरुण की कृपादृष्टि कहां है? महान्
अर्यमा का वह मार्ग कहां है, जिस पर चलकर हम पापबुद्धि शत्रुओं से दूर जा सकें? हे धरती और आकाश! हमारी इस बात को जानो. (६)

अहं सो अस्मि यः पुरा सुते वदामि कानि चित्.
तं मा व्यन्त्याध्यो३ वृको न तृष्णजं मृगं वित्तं मे
अस्य रोदसी.. (७)
हे देवो! मैं वही हूं, जिसने प्राचीनकाल में तुम्हारे
निमित्त सोम निचोड़े जाने पर कुछ स्तोत्र बोले थे.
जिस प्रकार प्यासे हिरन को व्याघ्र खा जाते हैं,
उसी प्रकार मानसिक कष्ट मुझे खा रहे हैं. हे धरती
और आकाश! मेरे इस कष्ट को जानो. (७)

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः.
मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो
वित्तं मे अस्य रोदसी.. (८)
हे इंद्र! कुएं की आसपास की दीवारें मुझे उसी
प्रकार दुःखी कर रही हैं, जिस प्रकार दो सौतें बीच
में स्थित अपने पति को कष्ट देती हैं. हे शतक्रतु!

जिस तरह चूहा सूत को काटता है, उसी प्रकार दुःख मुझे खा रहे हैं. हे धरती और आकाश! मेरी यह बात जानो. (८)

अमी ये सप्त रश्मयस्तत्रा मे नाभिरातता.
त्रितस्तद्वेदाप्त्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी.. (९)
ये जो सूर्य की सात किरणें हैं, उन में मेरी नाभि संबद्ध है. आप्त्य ऋषि अर्थात् मैं यह जानता हूं और कुएं से निकलने के लिए सूर्यकिरणों की स्तुति करता हूं. हे धरती और आकाश! मेरी यह बात जानो. (९)

अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः.
देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी.. (१०)

आकाश में स्थित इंद्र, वरुण, अग्नि, अर्यमा और सविता-पांच कामवर्षी देव हमारे प्रशंसनीय स्तोत्र को एक साथ देवों के समीप ले जावें और लौट आवें. हे धरती और आकाश! मेरी यह बात जानो. (१०)

सुपर्णा एत आसते मध्य आरोधने दिवः.
ते सेधन्ति पथो वृकं तरन्तं यह्वतीरपो वित्तं मे अस्य रोदसी.. (११)
सूर्य की रश्मियां सबको आवरण करने वाले आकाश में वर्तमान हैं. वे विशाल जल को पार करने वाले भेड़िए को रोकती हैं. हे धरती और आकाश! मेरी यह बात जानो. (११)

नव्यं तदुक्थ्यं हितं देवासः सुप्रवाचनम्.
ऋतमर्षन्ति सिन्धवः सत्यं तातान सूर्यो वित्तं मे

अस्य रोदसी.. (१२)
हे देवो! तुम में छिपे हुए नवीन, स्तुत्य एवं वर्णनीय बल के कारण बहने
वाली नदियां जल प्रवाहित करती एवं सूर्य अपना नित्य वर्तमान तेज फैलाता है. हे धरती और आकाश! हमारी इस बात को जानो. (१२)

अग्ने तव त्यदुक्थ्यं देवेष्वस्त्याप्यम्.
स नः सत्तो मनुष्वदा देवान्यक्षि विदुष्टरो वित्तं मे अस्य रोदसी.. (१३)
हे अग्नि! देवों के साथ तुम्हारी प्रशंसनीय प्राचीन बंधुता है एवं तुम अत्यंत ज्ञाता हो. मनु के यज्ञ के समान ही हमारे यज्ञों में भी बैठकर देवों की हवि के द्वारा पूजा करो. हे धरती और आकाश! हमारी यह बात जानो. (१३)

सत्तो होता मनुष्वदा देवाँ अच्छा विदुष्टरः.
अग्निर्हव्या सुषूदति देवो देवेषु मेधिरो वित्तं मे अस्य रोदसी.. (१४)
मनु के यज्ञ के समान हमारे यज्ञ में स्थित, देवों को बुलाने वाले, परम ज्ञानी, देवों में अधिक मेधावी अग्नि देव देवों को शास्त्रीय मर्यादा के अनुसार हमारे हव्य की ओर प्रेरित करें. हे धरती और आकाश! हमारी यह बात जानो. (१४)

ब्रह्मा कृणोति वरुणो गातुविदं तमीमहे.
व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं मे अस्य रोदसी.. (१५)
वरुण अनिष्ट का निवारण करते हैं. हम उन मार्गदर्शक वरुण से अभिमत फल मांगते हैं. हमारा स्तोता मन उन वरुण की मननीय स्तुति करता है. वे ही स्तुति योग्य वरुण हमारे लिए सच्चे बनें. हे

धरती और आकाश! हमारी बात जानो. (१५)

असौ यः पन्था आदित्यो दिवि प्रवाच्यं कृतः.
न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी.. (१६)
हे देवगण! जो सूर्य आकाश में सततगामी मार्ग के समान सबके द्वारा देखे जाते हैं, उनका अतिक्रमण तुम भी नहीं कर सकते. हे मानवो! तुम उन्हें नहीं जानते. हे धरती और आकाश! हमारी बात जानो. (१६)

त्रितः कूपेऽवहितो देवान्हवत ऊतये.
तच्छुश्राव बृहस्पतिः कृण्वन्नंहुरणादुरु वित्तं मे अस्य रोदसी.. (१७) ।
कुएं में गिरा हुआ त्रित ऋषि अपनी रक्षा के लिए देवों को बुलाता है. बृहस्पति ने उसे पाप रूप कुएं

से निकालकर उसकी पुकार सुनी. हे धरती और आकाश! हमारी बात जानो. (१७)

अरुणो मा सकृद्वृक: पथा यन्तं ददर्श हि.
उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी.. (१८)
लाल रंग के वृक ने मुझे एक बार मार्ग में जाते हुए देखा. वह मुझे देखकर इस प्रकार ऊपर उछला, जिस प्रकार पीठ की वेदना वाला काम करते-करते सहसा उठ पड़ता है. हे धरती और आकाश! मेरे इस कष्ट को जानो. (१८)

एनाङ्गूषेण वयमिन्द्रवन्तोऽभि ष्याम वृजने सर्ववीराः.
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः.. (१९)

घोषणा योग्य इस स्तोत्र के कारण इंद्र का अनुग्रह पाए हुए हम लोग पुत्र, पौत्रों आदि के साथ संग्राम में शत्रुओं को हरावें. मित्र, वरुण, अदिति, सिंधु, पृथ्वी एवं आकाश हमारी इस प्रार्थना का आदर करें. (१९)

**टिप्पणी**

१.१०५.१ चन्द्रमा अप्स्वन्तरा इति। (तु. यो अप्सु चन्द्रमा इव सोमश्चमूषु ददृशे- ऋ. ८.८२.८ ) आपः पुण्यानां समूहः(अथवा व्यूहः) अस्ति। तस्य अपरसंज्ञा नक्षत्राणि अस्ति। तेषु मध्ये चन्द्रमसः

भ्रमणस्य किं तात्पर्यमस्ति। तैत्तिरीयारण्यके
५.१२.१ कथनमस्ति यत् पञ्चमे प्रवर्ग्ये चन्द्रमा
नक्षत्राणां अधिपतिः भवति। चन्द्रमारहिता नक्षत्राः
अनुशासनरहिताः सन्ति। मेघरूपस्य अपसः
च्यावकः विद्युद्भवति।

कथासरित्सागरे १०.६.२९ एवं पञ्चतन्त्रे ३.८१
हस्तिना जलमध्ये शशांकस्य प्रतिबिम्बं दृष्ट्वा
अनुशासने बन्धनस्य कथा अस्ति।

न वो हिरण्यनेमयः पदा विन्दन्ति विद्युतः इति।
नेमिः - रथचक्रस्य परिधिः। यद्यपि आपः विद्यमानाः
सन्ति, किन्तु तेषां च्यावकः विद्युतः नास्ति। अतएव,
पुण्याः फलिता न भविष्यन्ति।

१.१०५.७ वृको न तृष्णजं मृगं इति। वृकोपरि

टिप्पणी

१.१०५.११ ते सेधन्ति पथो वृकं इति।

१.१०५.१८ अरुणो मा सकृद् वृकः इति

त्रितोपरि टिप्पणी

पुराणेषु त्रितस्य उल्लेखं आत्रेयः - अत्रिपुत्रस्य रूपेण अस्ति। अत्र्युपरि टिप्पणी पठनीयमस्ति। वैदिकवाङ्मये ये अन्ये त्रिकाः उपलब्धाः सन्ति, तेषु ऋग्वेदे ७.५९ त्र्यम्बकः उल्लेखनीयः अस्ति, यस्मिन् संदर्भे त्र्यम्बकोपरि टिप्पणी पठनीयः अस्ति। अन्यः त्रिकः मित्रः-वरुण-अर्यमा देवतानां अस्ति।



पृथ्व्याः सूर्यस्य परितः भ्रमणम्



पृथ्व्याः घूर्णनम्

## मण्डल

### १

सूक्तं १.१
सूक्तं १.२
सूक्तं १.३
सूक्तं १.४
सूक्तं १.५
सूक्तं १.६

सूक्तं १.३१
सूक्तं १.३२
सूक्तं १.३३
सूक्तं १.३४
सूक्तं १.३५
सूक्तं १.३६

सूक्तं १.६१
सूक्तं १.६२
सूक्तं १.६३
सूक्तं १.६४
सूक्तं १.६५
सूक्तं १.६६

सूक्तं १.९१
सूक्तं १.९२
सूक्तं १.९३
सूक्तं १.९४
सूक्तं १.९५
सूक्तं १.९६

सूक्तं १.१२१
सूक्तं १.१२२
सूक्तं १.१२३
सूक्तं १.१२४
सूक्तं १.१२५
सूक्तं १.१२६

सूक्तं १.१५१
सूक्तं १.१५२
सूक्तं १.१५३
सूक्तं १.१५४
सूक्तं १.१५५
सूक्तं १.१५६

सूक्तं १.१८१
सूक्तं १.१८२
सूक्तं १.१८३
सूक्तं १.१८४
सूक्तं १.१८५
सूक्तं १.१८६

# ऋग्वेदः सूक्तं १.१०६

← सूक्तं १.१०५

ऋग्वेदः - मण्डल १

सूक्तं १.१०६

कुत्स आङ्गिरसः

सूक्तं १.१०७ →

## दे. विश्वे देवाः । जगती, ७ त्रिष्टुप्

इन्द्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे ।

रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥१॥

त आदित्या आ गता सर्वतातये भूत देवा वृत्रतूर्येषु शम्भुवः ।

रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥२॥

अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा ।

रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥३॥

नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे ।

रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥४॥

बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत्ते मनुर्हितं तदीमहे ।

रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥५॥

इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाळ्ह ऋषिरह्वदूतये ।

रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥६॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥७॥

# सायणभाष्यम्

षोडशेऽनुवाके दश सूक्तानि । तत्र ‘इन्द्रम्' इति सप्तर्चं प्रथमं सूक्तम् । अत्रानुक्रम्यते ---‘इन्द्रं मित्रं सप्त त्रिष्टुबन्तम् ' इति। अनुवर्तमानत्वात् कुत्स ऋषिः। त्रितस्तु वाविशिष्टत्वात् तत्रैव विकल्पितो नानुवर्तते । अन्त्या त्रिष्टुप् । शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । विश्वे देवा देवतेत्युक्तम् । विनियोगो लैङ्गिकः ।।

इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमू॒तये॒ मारु॑त॒ं शर्धो॒ अदि॑तिं हवामहे ।

रथ॒ं न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ १

इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । अ॒ग्निम् । ऊ॒तये॑ । मारु॑तम् । शर्धः॑ । अदि॑तिम् । ह॒वा॒म॒हे॒ ।

रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् । न॒ः । अं॒ह॑सः । निः । पि॒पु॒र्त॒न॒ ॥१

इन्द्रम् । मित्रम् । वरुणम् । अग्निम् । ऊतये । मारुतम् । शर्धः । अदितिम् । हवामहे ।

रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥१

"ऊतये रक्षणाय वयमिन्द्रादीन् "मारुतं "शर्धः मरुत्समूहरूपं बलं च "हवामहे आह्वयामहे । "वसवः निवासयितारः "सुदानवः शोभनदानाः इन्द्रादयः "विश्वस्मात् सर्वस्मात् "अंहसः पापात् "नः अस्मान् "निष्पिपर्तन निर्गमय्य पालयत। तत्र दृष्टान्तः ।"रथं "न "दुर्गात् । गन्तुमशक्यान्निम्नोन्नतात् स्थानात् सारथयो यथा रथं पालयन्ति तद्वत् ॥ पिपर्तन। ' पृ इत्येके'। लोटि 'तप्तनप्तनथनाश्च इति तस्य तनबादेशः । पित्त्वेन

ङित्त्वाभावात् गुणः ।“ अर्तिपिपर्त्योश्च ' इति अभ्यासस्य इत्वम् ॥

त आदित्या आ गंता सर्वतांतये भूत देवा वृत्रतूर्येषु शम्भुवः ।

रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ २

ते । आदित्याः । आ । गत । सर्वऽतातये । भूत । देवाः । वृत्रऽतूर्येषु । शम्ऽभुवः ।

रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥२

ते । आदित्याः । आ । गत । सर्वऽतातये । भूत । देवाः । वृत्रऽतूर्येषु । शम्ऽभुवः ।

रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥२

हे "आदित्याः अदितेः पुत्राः “देवाः ते यूयं “सर्वतातये सर्वैर्वीरपुरुषैस्तताय विस्तारिताय युद्धाय । युद्धेऽस्माकं साहाय्यं कर्तुमित्यर्थः । “आ “गत आगच्छत । अपि च "वृत्रतूर्येषु । संग्रामनामैतत् । संग्रामेषु “शंभुवः सुखस्य भावयितारः “भूत भवत ॥ गत । गमेर्लोटि ‘बहुलं छन्दसि ' इति शपो लुक् ॥

अवंन्तु नः पि॒तरः॑ सुप्रवाच॒ना उ॒त दे॒वी दे॒वपुं॑त्रे ऋता॒वृधां ।

रथं॒ न दु॒र्गाद्वंसवः सुदानवो॒ विश्वं॒स्मान्नो॒ अंहं॑सो॒ निष्पिंपर्तन ॥ ३

अव॑न्तु । नः॒ । पि॒तरः॑ । सु॒ऽप्र॒वा॒च॒नाः । उ॒त । दे॒वी इति॑ ।
दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे । ऋ॒त॒ऽवृधा॑ ।

रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् ।
नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न॒ ॥३

अवन्तु । नः । पितरः । सुऽप्रवाचनाः । उत । देवी इति ।
देवपुत्रे इति देवऽपुत्रे । ऋतऽवृधा ।

रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् ।
नः । अंहसः । निः । पिपर्तन ॥३

“नः अस्मान् “पितरः अग्निष्वात्तादयः “अवन्तु रक्षन्तु । कीदृशाः। 'सुप्रवाचनाः सुखेन प्रवक्तुं स्तोतुं शक्याः । “उत अपि च “देवपुत्रे देवाः सर्वे पुत्रस्थानीया ययोस्ते “ऋतावृधा ऋतस्य सत्यस्य यज्ञस्य वा वर्धयित्र्यौ “देवी देवनादिगुणयुक्ते द्यावापृथिव्यौ अस्मान् रक्षताम्। अन्यत्

समानम् ॥ देवी । वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् । ऋतावृधा । वृधेरन्तर्भावितण्यर्थात् क्विप्। सुपां सुलुक्' इति विभक्तेः आकारः ॥

नरा॒शंसं॑ वा॒जिनं॑ वा॒जयं॑न्नि॒ह क्ष॒यद्वी॑रं पू॒षणं॑ सु॒म्नैरी॑महे ।

रथं॒ न दु॒र्गाद्वं॑सवः सुदानवो॒ विश्वं॑स्मान्नो॒ अंहं॑सो॒ निष्पिं॑पर्तन ॥ ४

नरा॒शंसं॑म् । वा॒जिनं॑म् । वा॒जयं॑न् । इ॒ह । क्ष॒यत्ऽवीं॑रम् । पू॒षणं॑म् । सु॒म्नैः । ई॒म॒हे॒ ।

रथं॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्वं॑स्मात् । नः॒ । अंहं॑सः । निः । पि॒प॒र्त॒न ॥४

नराशंसम् । वाजिनम् । वाजयन् । इह । क्षयत्ऽवीरम् । पूषणम् । सुम्नैः । ईमहे ।

रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥४

“नराशंसं नरैः शंसनीयं “वाजिनम् अन्नवन्तमग्निं “वाजयन् उपवाजयन् प्रज्वलयन् “इह अस्मिन् काले स्तौमीति शेषः । तथा “क्षयद्वीरम् अतिबलिनं यस्मिन् सर्वे वीराः क्षीयन्ते एवंरूपं “पूषणं पोषकं देवं “सुम्नैः सुखकरैः स्तोत्रैर्हेतुभूतैः “ईमहे याचामहे अभीष्टं प्रार्थयामहे ॥ नराशंसम् । ' उभे वनस्पत्यादिषु' इति युगपदुभयपदप्रकृतिस्वरत्वम् । नरशब्दः ‘ऋदोरप्' इति अबन्त आद्युदात्तः। निपातनात् दीर्घः । शंसशब्दो घञन्त आद्युदात्तः । वाजयन् ।‘वज व्रज गतौ' । अस्मात् णिच् । क्षयद्वीरम् । ‘ क्षि क्षये '। लटः शतृ । शपि प्राप्ते व्यत्ययेन शः । तस्य छन्दस्युभयथा' इति आर्धधातुकत्वेन ङित्त्वाभावात् गुणायादेशौ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः । अतो गुणे इति

पररूपत्वे ' एकादेश उदात्तेन ' इति एकादेश उदात्तः ।
क्षयन्तो वीरा यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।।

बृहंस्पते॒ सद॒मिन्नः॑ सु॒गं कृंधि॒ शं योर्यत्ते॒ मनुंर्हितं॒ तदींमहे ।

रथं॒ न दु॒र्गाद्वंसवः सुदानवो॒ विश्वंस्मान्नो॒ अंहंसो॒ निष्पिंपर्तन ॥ ५

बृहंस्पते । सदंम् । इत् । न॒ः । सु॒ऽगम् । कृ॒धि॒ । शम् । योः । यत् । ते॒ । मनुः॑ऽहितम् । तत् । ई॒म॒हे॒ ।

रथंम् । न । दु॒ःऽगात् । व॒स॒व॒ः । सु॒ऽदा॒न॒व॒ः । विश्वंस्मात् । न॒ः । अंहंसः । निः । पि॒प॒र्त॒न॒ ॥५

बृहस्पते । सदम् । इत् । नः । सुऽगम् । कृधि । शम् । योः । यत् । ते । मनुःऽहितम् । तत् । ईमहे ।

रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥५

“बृहस्पते “सदमित् सदैव "नः अस्माकं "सुगम् सुखनामैतत् । सुखं “कृधि कुरु । अपि च “ते तव स्वभूतं “शं शमनीयानां रोगाणामुपशमनं “योः पृथक्कर्तव्यानां भयानां यावनं पृथक्करणं “मनुर्हितं मनुना ब्रह्मणा हितं त्वय्यवस्थापितम् । यद्वा । मनुष्याणामनुकूलम् । एवंविधं शमनं यावनं च “यत् अस्ति “तदीमहे याचामहे ॥ सुगम् । सुष्ठु गम्यतेऽस्मिन्निति सुगम् । सुदुरोरधिकरणे ' इति गमेर्डः । शं योः इत्येतत् पदद्वयं यास्केनैवं व्याख्यातं - ‘ शमनं च रोगाणां यावनं च भयानाम् ' (निरु. ४. २१ ) इति । मनुर्हितम् । मनेरौणादिक उसिन्प्रत्ययः । तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ।।

इन्द्रं॒ कुत्सो॑ वृत्र॒हणं॒ शची॒पतिं॑ का॒टे निबा॑ळ्ह॒
ऋषि॑रह्व॒दू॒तये॑ ।

रथ॒ं न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन
॥ ६

इन्द्र॑म् । कुत्सः॑ । वृ॒त्र॒ऽहन॑म् । शची॒३॒ऽपति॑म् । का॒टे ।
निऽबा॑ळ्हः । ऋषिः॑ । अ॒ह्व॒त् । ऊ॒तये॑ ।

रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ । विश्व॑स्मात् ।
नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न॒ ॥६

इन्द्रम् । कुत्सः । वृत्रऽहनम् । शचीऽपतिम् । काटे ।
निऽबाळ्हः । ऋषिः । अह्वत् । ऊतये ।

रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् ।
नः । अंहसः । निः । पिपर्तन ॥६

काटः इति कूपनाम । तस्मिन् “निबाळ्हः निपातितः “कुत्सः “ऋषिः “ऊतये रक्षणाय “इन्द्रम् “अह्वत् आह्वयति स्म । कीदृशम् । “वृत्रहणं वृत्राणां शत्रूणां हन्तारं “शचीपतिम् । शचीति कर्मनाम । सर्वेषां कर्मणां पालयितारम् । यद्वा । शच्या देव्याः भर्तारम् ॥ शचीपतिम् । वनस्पत्यादिषु पाठादुभयपदप्रकृतिस्वरत्वम् । शचीशब्दः शार्ङ्गरवादिङीनन्त आद्युदात्तः । निबाळ्हः । ‘ बाहृ प्रयत्ने । नीत्युपसर्गवशात् पतने वर्तते । निष्ठायाम् ' अनित्यमागमशासनम्' इति इडभावः। ढत्वधत्वादीनि । यद्वा ।' क्षुब्धस्वान्त° ' ( पा. सू. ७. २. १८) इत्यादौ भृशार्थे इडभावो निपात्यते । अत्र च बाढशब्दो भृशत्वोपेते' पतने सामर्थ्याद्वर्तते । ‘ गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अह्वत् । ‘ लिपिसिचिह्वश्च' (पा. सू. ३. १. ५३ ) इति लुङि च्लेरादेशः । ‘ आतो लोप इटि च' इत्याकारलोपः ॥

दे॒वैर्नो॑ दे॒व्यदि॑ति॒र्नि पा॑तु दे॒वस्त्रा॒ता त्रा॑यता॒मप्र॑युच्छन् ।

तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ७

दे॒वैः । नः॒ । दे॒वी । अदि॑तिः । नि । पा॒तु॒ । दे॒वः । त्रा॒ता । त्रा॒य॒ता॒म् । अप्र॑ऽयुच्छन् ।

तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥७

देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥७

“देवी दानादिगुणयुक्ता “अदितिः अखण्डनीया अदीना वा देवमाता “देवैः दानादिगुणयुक्तैः स्वकीयैः पुत्रैः सह “नः अस्मान् “नि “पातु नितरां रक्षतु । "देवः दीप्यमानः “त्राता सर्वेषां रक्षकः सविता “अप्रयुच्छन् अप्रमाद्यन् अस्मद्रक्षणे जागरूकः सन्त्रायताम् अस्मान् पालयतु । यदनेन सूक्तेनास्माभिः प्रार्थितं “नः अस्मदीयं “तत् मित्रादयः षड्देवताः “ममहन्तां पूजयन्तु ॥ त्रायताम् । ‘त्रैङ् पालने '। भौवादिकः । अप्रयुच्छन् । युच्छ प्रमादे'। अस्मात् लटः शतृ । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ॥ २४ ॥

**टिप्पणी**

१.१०६.४ नराशंसं वाजिनं वाजयन्निह इति

नराशंसोपरि टिप्पणी

नराशंसोपरि टिप्पणी  (दर्पणं)

# ऋग्वेदः सूक्तं १.१०७

ऋग्वेदः - मण्डल १

← सूक्तं १.१०६

सूक्तं १.१०७

कुत्स आङ्गिरसः

सूक्तं १.१०८ →

## दे. विश्वे देवाः। त्रिष्टुप्।

---

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः ।

आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत् ॥१॥

उप नो देवा अवसा गमन्त्वङ्गिरसां सामभि स्तूयमानाः ।

इन्द्र इन्द्रियैर्मरुतो मरुद्भिरादित्यैर्नो अदितिः शर्म यंसत् ॥२॥

तन्न इन्द्रस्तद्वरुणस्तदग्निस्तदर्यमा तत्सविता चनो धात् ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥३॥

## सायणभाष्यम्

‘ यज्ञो देवानाम् ' इति तृचं द्वितीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभं वैश्वदेवम्। ‘ यज्ञस्तृचम्' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

य॒ज्ञो दे॒वानां॒ प्रत्ये॑ति सु॒म्नमादि॑त्यासो॒ भव॑ता मृळ॒यन्तः॑ ।

आ वो॒ऽर्वाची॑ सुम॒तिर्व॑वृत्याद॒ंहोश्चि॒द्या व॑रिवो॒वित्त॒रास॑त् ॥
१

य॒ज्ञः । दे॒वाना॑म् । प्रति॑ । ए॒ति॒ । सु॒म्नम् । आदि॑त्यासः ।
भव॑त । मृ॒ळ॒यन्तः॑ ।

आ । व॒ः । अ॒र्वाची॑ । सु॒ऽम॒तिः । व॒वृ॒त्या॒त् । अं॒होः । चि॒त् । या । व॒रि॒वो॒वित्ऽत॑रा । अस॑त् ॥१

यज्ञः । देवानाम् । प्रति । एति । सुम्नम् । आदित्यासः ।
भवत । मृळयन्तः ।

आ । वः । अर्वाची । सुऽमतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्ऽतरा । असत् ॥१

अस्मदीयः “यज्ञो “देवानाम् इन्द्रादीनां “सुम्नं सुखं “प्रत्येति प्राप्नोतु । अपि च हे "आदित्यासः आदित्याः “मृळयन्तः अस्मान् सुखयन्तः “भवत । तथा “वः युष्माकं “सुमतिः शोभना मतिः भद्रानुग्रहपरा बुद्धिः "अर्वाची अस्मदभिमुखी “आ “ववृत्यात् आवर्तताम् । "या मतिः

“अंहोश्चित् दारिद्र्यं प्राप्तस्यापि पुरुषस्य “वरिवोवित्तरा । वरिवः इति धननाम । अतिशयेन धनस्य लम्भयित्री “असत् भवेत् । सैषा मतिरस्मान् रक्षतुं वर्ततामित्यर्थः ॥ भवत । आमन्त्रितं पूर्वमविद्यमानवत्' इति आदिल्यास इति पादादौ वर्तमानस्य आमन्त्रितस्य अविद्यमानवत्वेनास्य पादादित्वात् ‘ ०अपादादौ इति पर्युदासात् निघाताभावः । मृळ्यन्तः । ‘ मृड सुखने '। प्यन्तात् लटः शतृ । शप् । छन्दस्युभयथा ' इति शतुः आर्धधातुकत्वेन अदुपदेशात् लसार्वधातुकानुदात्तत्वाभावे शतुः स्वरः शिष्यते । ववृत्यात् । वृतु वर्तने । लिङि व्यत्ययेन परस्मैपदम् । बहुलं छन्दसि ' इति शपः श्लुः । अंहोः । ‘ अहि गतौ ' । इदित्त्वात् नुम् । औणादिक उप्रत्ययः । वरिवोवित्तरा ।' विद्लृ लाभे'। अस्मादन्तर्भावितण्यर्थात् क्विप् । तत आतिशायनिक तरप् । असत् ।' अस भुवि '। लेटि अडागमः ॥

उप॑ नो दे॒वा अव॒सा ग॑म॒न्त्वङ्गि॑रसां॒ साम॑भिः स्तू॒यमा॑नाः ।

इन्द्र॑ इन्द्रि॒यैर्म॒रुतो॑ म॒रुद्भि॑रादि॒त्यैर्नो॒ अदि॑तिः॒ शर्म॑ यंसत् ॥ २

उप॑ । नः॒ । दे॒वाः । अव॑सा । आ । ग॒म॒न्तु॒ । अङ्गि॑रसाम् । साम॑ऽभिः । स्तू॒यमा॑नाः ।

इन्द्रः॑ । इ॒न्द्रि॒यैः । म॒रुतः॑ । म॒रुत्ऽभिः॑ । आ॒दि॒त्यैः । नः॒ । अदि॑तिः । शर्म॑ । य॒ंस॒त् ॥२

उप । नः । देवाः । अवसा । आ । गमन्तु । अङ्गिरसाम् । सामऽभिः । स्तूयमानाः ।

इन्द्रः । इन्द्रियैः । मरुतः । मरुत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥२

“देवाः दानादिगुणयुक्ताः सर्वे देवाः “अवसा रक्षणेनास्मभ्यं दातव्येनान्नेन वा युक्ताः “नः अस्मान् स्तोतॄन् “उप “आ “गमन्तु उपागच्छन्तु प्राप्नुवन्तु । कथंभूताः। “अङ्गिरसाम् एतत्संज्ञकानामृषीणां संबन्धिभिः “सामभिः प्रगीतैर्मन्त्रैः “स्तूयमानाः । अपि च “इन्द्रः इन्द्रियैः । धननामैतत् । स्वसंबन्धिभिरस्मभ्यं दातव्यैर्धनैः सहास्मानागच्छतु । तथा “मरुतः सप्तगणरूपा एकोनपञ्चाशत्संख्याकाः ‘ ईदृङ् चान्यादृङ् च ' इत्येवमादिनामानो देवाः “मरुद्भिः स्वावयवभूतैः प्राणापानादिरूपेण वर्तमानैः वायुभिः सहास्मानागच्छन्तु। तथा “अदितिः अखण्डनीया अदीना वा देवमाता “आदित्यैः स्वकीयैः पुत्रैः सह “नः अस्मभ्यं “शर्म सुखं “यंसत् यच्छतु ॥ गमन्तु । लोटि बहुलं छन्दसि' इति शपो लुक् । ‘ छन्दस्युभयथा ' इति झेः आर्धधातुकत्वेन ङित्त्वाभावात् ‘ गमहन' इत्यादिना उपधालोपाभावः । यंसत् । यम उपरमे '। लेटि अडागमः ।' सिब्बहुलं लेटि' इति सिप् ॥

तन्न॒ इन्द्र॒स्तद्वरु॑ण॒स्तद॒ग्निस्तद॑र्य॒मा तत्स॑वि॒ता चनो॑ धात् ।

तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः᳚ पृथि॒वी उ॒त द्यौः ॥ ३

तत् । नः॒ । इन्द्रः᳚ । तत् । वरु॑णः । तत् । अ॒ग्निः । तत् । अ॒र्य॒मा । तत् । स॒वि॒ता । चनः᳚ । धा॒त् ।

तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः᳚ । पृ॒थि॒वी । उ॒त । द्यौः ॥३

तत् । नः । इन्द्रः । तत् । वरुणः । तत् । अग्निः । तत् । अर्यमा । तत् । सविता । चनः । धात् ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥३

यदस्माभिः प्रार्थ्यमानमन्नमस्ति । चन इत्यन्ननाम । “तत् तादृशं "चनः अन्नं “नः अस्मभ्यम् “इन्द्रः “धात् दधातु ददातु । एवं “तद्वरुणः इत्यादावपि योज्यम् । तत् इदमिन्द्रादिभिर्दत्तमस्मदीयमन्नं मित्रादयः “ममहन्तां पूजयन्तु पालयन्वित्यर्थः ॥ चनः । ‘ चायृ पूजानिशामनयोः । ‘चायेरन्ने ह्रस्वश्च ' ( उ. सू. ४. ६३९) इति असुन् नुडागमश्च धातोर्ह्रस्वत्वं च । वलि लोपः। नित्त्वादाद्युदात्तत्वम् । धात् । छन्दसि लुङ्लङलिटः' इति प्रार्थनायां लुङ् । ‘ गातिस्था' इति सिचो लुक् ॥ ॥ २५ ॥

# ऋग्वेदः सूक्तं १.१०८



## दे. इन्द्राग्नी। त्रिष्टुप्

य इन्द्राग्नी चित्रतमो रथो वामभि विश्वानि भुवनानि चष्टे ।

तेना यातं सरथं तस्थिवांसाथा सोमस्य पिबतं सुतस्य ॥१॥

यावदिदं भुवनं विश्वमस्त्युरुव्यचा वरिमता गभीरम् ।

तावाँ अयं पातवे सोमो अस्त्वरमिन्द्राग्नी मनसे युवभ्याम् ॥२॥

चक्राथे हि सध्र्यङ्नाम भद्रं सध्रीचीना वृत्रहणा उत स्थः ।

ताविन्द्राग्नी सध्र्यञ्चा निषद्या वृष्णः सोमस्य वृषणा वृषेथाम् ॥३॥

समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा ।

तीव्रैः सोमैः परिषिक्तेभिरर्वागेन्द्राग्नी सौमनसाय यातम् ॥४॥

यानीन्द्राग्नी चक्रथुर्वीर्याणि यानि रूपाण्युत वृष्ण्यानि ।

या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सुतस्य ॥५॥

यदब्रवं प्रथमं वां वृणानोऽयं सोमो असुरैर्नो विहव्यः ।

तां सत्यां श्रद्धामभ्या हि यातमथा सोमस्य पिबतं सुतस्य ॥६॥

यदिन्द्राग्नी मदथः स्वे दुरोणे यद्ब्रह्मणि राजनि वा यजत्रा ।

अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥७॥

यदिन्द्राग्नी यदुषु तुर्वशेषु यद्द्रुह्युष्वनुषु पूरुषु स्थः ।

अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥८॥

यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः ।

अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥९॥

यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः ।

अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥१०॥

यदिन्द्राग्नी दिवि ष्ठो यत्पृथिव्यां यत्पर्वतेष्वोषधीष्वप्सु ।

अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥११॥

यदिन्द्राग्नी उदिता सूर्यस्य मध्ये दिवः स्वधया मादयेथे ।

अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥१२॥

एवेन्द्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥१३॥

## सायणभाष्यम्

‘ य इन्द्राग्नी ' इति त्रयोदशर्चं तृतीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभमैन्द्राग्नम् । तथा चानुक्रान्तं -- ‘य इन्द्राग्नी सप्तोनैन्द्राग्नं तु ' इति । विनियोगो लैङ्गिकः ॥

य इंन्द्राग्नी चि॒त्रतं॑मो॒ रथों वाम॒भि विश्वां॑नि॒ भुवं॑नानि॒ चष्टें ।

तेना यां॑तं स॒रथं॑ तस्थि॒वांसाथा॒ सोमं॑स्य पिबतं सु॒तस्यं ॥ १

यः । इ॒न्द्र॒ा॒ग्नी॒ इतिं । चि॒त्रऽतं॑मः । रथः॑ । वा॒म् । अ॒भि ।
विश्वां॑नि । भुवं॑नानि । चष्टें ।

तेनं । आ । या॒त॒म् । स॒ऽरथं॑म् । त॒स्थि॒ऽवांसां । अथं ।
सोमं॑स्य । पि॒ब॒त॒म् । सु॒तस्यं ॥१

यः । इन्द्राग्नी इति । चित्रऽतमः । रथः । वाम् । अभि ।
विश्वानि । भुवनानि । चष्टे ।

तेन । आ । यातम् । सऽरथम् । तस्थिऽवांसा । अथ ।
सोमस्य । पिबतम् । सुतस्य ॥१

हे “इन्द्राग्नी “चित्रतमः अतिशयेन चायनीयः “वां युवयोः संबन्धी “यः “रथः “विश्वानि “भुवनानि भूतजातानि' “अभि “चष्टे आभिमुख्येन पश्यति । सुवर्णमयत्वात् रत्नखचितत्वाच्च स्वप्रभाभिः कृत्स्नं जगद्भासयतीत्यर्थः । “तेन रथेन “आ “यातम् अस्मद्यज्ञमागच्छतम् । तत्किं पर्यायेण । नेत्याह । “सरथं समानमेकं रथं “तस्थिवांसा युगपदेव आस्थितवन्तौ युवामागच्छतं न पर्यायेणेत्यर्थः। “अथ आगमनानन्तरं “सुतस्य ऋत्विग्भिरभिषुतं “सोमस्य सोमं स्वांशलक्षणं तदेकदेशं वा “पिबतम् ॥ वाम् । “ युष्मदस्मदोः षष्ठीचतुर्थी० ' ( पा. सू. ८. १. २०) इत्यादिना षष्ठीद्विवचनस्य वामादेशः । सर्वानुदात्तत्वम् । चष्टे ।' चक्षिङ् व्यक्तायां वाचि'। अत्र प्रकाशनार्थः । अदादित्वात् शपो लुक् । ‘ स्कोः संयोगाद्योः' इति कलोपः । ‘ तास्यनुदात्तेत्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते । यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः। सरथम् । समानश्चासौ रथश्च सरथः । ‘ समानस्य च्छन्दसि°' इति

सभावः। ‘परादिश्छन्दसि बहुलम्'
इत्युत्तरपदाद्युदात्तत्वम्। तस्थिवांसा । ‘ ष्ठा गतिनिवृत्तौ ।
लिटः क्वसुः । द्विर्वचनम् ।‘शर्पूर्वाः खयः'।
‘वस्वेकाजाद्धसाम्' इति इडागमः । ‘ आतो लोप इटि च '
इति आकारलोपः। सुपां सुलुक्' इति आकारः। सोमस्य ।
‘ क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात्
चतुर्थ्यर्थे षष्ठी ॥

यावं॑दि॒दं भुवं॑नं॒ विश्व॒मस्त्यु॑रु॒व्यचा॑ वरि॒मता॑ गभी॒रम् ।

तावाँ॑ अ॒यं पात॑वे॒ सोमो॑ अ॒स्त्वर॑मिन्द्राग्नी॒ मन॑से
यु॒वभ्या॑म् ॥ २

याव॑त् । इ॒दम् । भुव॑नम् । विश्व॑म् । अस्ति॑ । उ॒रु॒ऽव्यचा॑ ।
व॒रि॒मता॑ । ग॒भी॒रम् ।

ताावा॑न् । अ॒यम् । पात॑वे । सोम॑ः । अ॒स्तु॒ । अर॑म् ।
इ॒न्द्रा॒ग्नी॒ इति॑ । मन॑से । यु॒वऽभ्या॑म् ॥२

यावत् । इदम् । भुवनम् । विश्वम् । अस्ति । उरुऽव्यचा ।
वरिमता । गभीरम् ।

तावान् । अयम् । पातवे । सोमः । अस्तु । अरम् ।
इन्द्राग्नी इति । मनसे । युवऽभ्याम् ॥२

“विश्वं सर्वम् “इदं “भुवनं जगत् "यावत् “अस्ति
यावत्प्रमाणं भवति । कीदृशम् । “उरुव्यचा
विस्तीर्णव्यापनम् । सर्वव्यापकमित्यर्थः । तथा “वरिमता
वरिम्णा उरत्वेनात्मीयेन गौरवेण “गभीरं गाम्भीर्योपेतम् ।
हे “इन्द्राग्नी “पातवे युवाभ्यां पातुं “सोमः “तावान् “अस्तु
तावत्प्रमाणो भवतु। तथा “मनसे युवयोरन्तःकरणाय
"अरं स सोमः पर्याप्तो भवतु ॥ उरुव्यचा ।' व्यच
व्याजीकरणे'। असुन्। ‘ व्यचेः कुटादित्वमनसि ' इति

वचनात् ङित्त्वाभावेन संप्रसारणाभावः । ‘स्वमोर्नपुंसकात्' (पा. सू. ७. १. २३) इति सोर्लुकि प्राप्ते ‘सुपां सुलक्' इति व्यत्ययेन डादेशः । वरिमता। 'पृथ्वादिभ्य इमनिज्वा' इति उरुशब्दात् तस्य भावः इत्यर्थे इमनिच् । ‘प्रियस्थिर' इत्यादिना उरुशब्दस्य वरादेशः । पुनरपि भावप्रत्ययोत्पत्तिश्छान्दसी । सुपां सुलुक्' इति तृतीयाया लुक् । यद्वा । तृतीयायाश्छान्दसः तुडागमः । तावान् । तत्परिमाणमस्य । ‘ यत्तदेतेभ्यः परिमाणे वतुप् ' ( पा. सू. ५. २. ३९ )। ‘ आ सर्वनाम्नः' इति आत्वम् । पातवे । “पा पाने'। तुमर्थे सेसेन्” इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । अरम् । ‘ वालमूललध्वलमङ्गुलीनां वा लो रमापद्यत इति वक्तव्यम् ' ( पा. म. ८. २. १८) इति लत्वविकल्पः । युवभ्याम् । व्यत्ययेन आत्वाभावे ‘ शेष लोपः' इति दकारलोपः ॥

च॒क्राथे॒ हि स॒ध्र्य१॒ङ्नाम॑ भ॒द्रं स॑ध्रीची॒ना वृ॑त्रहणा उ॒त स्थः॑
।

तावि॑न्द्राग्नी स॒ध्र्य॑ञ्चा नि॒षद्या॒ वृष्णः॒ सोम॑स्य वृष॒णा
वृ॑षेथाम् ॥ ३

च॒क्राथे॒ इति॑ । हि । स॒ध्र्य॑क् । नाम॑ । भ॒द्रम् । स॒ध्री॒ची॒ना ।
वृ॒त्र॒ऽह॒नौ॒ । उ॒त । स्थ॒ः ।

तौ । इ॒न्द्रा॒ग्नी॒ इति॑ । स॒ध्र्य॑ञ्चा । नि॒ऽसद्य॑ । वृष्णः॑ ।
सोम॑स्य । वृ॒ष॒णा॒ । आ । वृ॒षे॒था॒म् ॥३

चक्राथे इति । हि । सध्र्यक् । नाम । भद्रम् । सध्रीचीना ।
वृत्रऽहनौ । उत । स्थः ।

तौ । इन्द्राग्नी इति । सध्र्यञ्चा । निऽसद्य । वृष्णः ।
सोमस्य । वृषणा । आ । वृषेथाम् ॥३

हे “इन्द्राग्नी "भद्रं कल्याणं "नाम स्वकीयं नामधेयं 'सध्र्यक् सहगतमिन्द्राग्नी इत्येवं संयुक्तं “चक्राथे युवां कृतवन्तौ । “उत अपि च हे “वृत्रहणौ वृत्रस्यासुरस्य हन्ताराविन्द्राग्नी “सध्रीचीना सहाञ्चन्तौ वृत्रवधार्थं संगतौ “स्थः भवथः । “हि यस्मादेवं तस्मात् हे “वृषणा कामानां वर्षिताराविन्द्राग्नी “तौ युवां सध्र्यञ्चौ सहितावेव सन्तौ “निषद्य वेद्यामुपविश्य “वृष्णः सेक्तुः “सोमस्य आत्मीयं भागम् “आ “वृषेथां स्वकीये उदरे आसिञ्चेथाम् ॥

सध्र्यक् । सहशब्दोपपदादञ्चतेः ‘ऋत्विक्' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोपः। ‘सहस्य सध्रिः । ‘ अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम् ' ( पा. सू. ६. ३. ९५. १ ) इति वचनात् सध्र्यादेशोऽन्तोदात्तः । यणादेशे ‘उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । सध्रीचीना। विभाषाञ्चेरदिक्स्त्रियाम्' इति स्वाथै खः । ‘ सुपां सुलुक्' इति विभक्तेः आजादेशः । वृत्रहणौ ।

संहितायाम् आवादेशे ‘ लोपः शाकल्यस्य ' इति वलोपः । वृषेथाम् । वृष सेचने'। व्यत्ययेन शः आत्मनेपदं च ।।

समिं॑द्धेष्व॒ग्निष्वां॑नजा॒ना य॒तस्रुं॑चा ब॒र्हिरुं॑ तिस्तिरा॒णा ।

ती॒व्रैः सोमै॒ः परिं॑षिक्तेभिर॒र्वागेन्द्रा॑ग्नी सौमन॒साय॑ं यातम् ॥ ४

सम्ऽइं॑द्धेषु । अ॒ग्निषुं॑ । आ॒न॒जा॒ना । य॒तऽस्रुं॑चा । ब॒र्हिः । उ॒ं इतिं॑ । ति॒स्ति॒रा॒णा ।

ती॒व्रैः । सोमैः॑ । परिं॑ऽसिक्तेभिः । अ॒र्वाक् । आ । इ॒न्द्रा॒ग्नी॒ इतिं॑ । सौ॒म॒न॒साय॑ं । या॒त॒म् ॥४

सम्ऽइद्धेषु । अग्निषु । आनजाना । यतऽस्रुचा । बर्हिः । ऊं इति । तिस्तिराणा ।

तीव्रैः । सोमैः । परिऽसिक्तेभिः । अर्वाक् । आ । इन्द्राग्नी इति । सौमनसाय । यातम् ॥४

“अग्निषु गार्हपत्यादिषु अन्वाधानादिना “समिद्धेषु सम्यगिद्धेषु दीप्तेषु सत्सु “आनजाना हवींष्याज्येनाञ्जन्तौ यतस्रुचा तदनन्तरं यागार्थं गृहीतस्रुचौ “बर्हिरु वेद्यां बर्हिरपि "तिस्तिराणा आस्तीर्णं कृतवन्तौ अध्वर्युप्रतिप्रस्थातारौ एवंभूतावभूताम् । तथा सति हे इन्द्राग्नी “तीव्रैः क्षिप्रं मदकरैः “परिषिक्तेभिः परितः सर्वेषु ग्रहचमसादिष्वासिक्तैः “सोमैः हेतुभूतैः “अर्वाक् अस्मदभिमुखम् ॥ “यातम् आगच्छतम् । किमर्थम् । “सौमनसाय सौमनस्याय अस्माकमनुग्रहायेत्यर्थः ॥ आनजाना । ‘ अञ्जू व्यक्तिम्रक्षणगतिषु । लिटः कानच् । “अनिदिताम्' इति नलोपः। द्विर्भावे ‘अत आदेः' इति अभ्यासस्य दीर्घः। तस्मान्नुड्द्विहलः' इति अद्विहलोऽपि व्यत्ययेन नुट् ।

तिस्तिराणा। स्तृञ् आच्छादने । पूर्ववत् कानच् । ‘ ऋत इद्धातोः' इति इत्वम् । द्विर्वचने शर्पूर्वाः खयः' । सुपां सुलुक् ' इति सर्वत्र विभक्तेः आकारः ।
चित्त्वादन्तोदात्तत्वम् ॥

यानींन्द्राग्नी च॒क्रथुंर्वी॒र्याणि॒ यानिं रू॒पाण्यु॒त वृष्ण्यांनि ।

या वां प्र॒त्नानिं स॒ख्या शि॒वानि॒ तेभि॒ः सोमंस्य पिबतं सु॒तस्यं ॥ ५

यानिं । इ॒न्द्रा॒ग्नी॒ इतिं । च॒क्रथुः॑ । वी॒र्याणि । यानिं । रू॒पाणिं । उ॒त । वृष्ण्यांनि ।

या । वा॒म् । प्र॒त्नानिं । स॒ख्या । शि॒वानिं । तेभिः॑ । सोमंस्य । पि॒ब॒त॒म् । सु॒तस्यं ॥५

यानि । इन्द्राग्नी इति । चक्रथुः । वीर्याणि । यानि ।
रूपाणि । उत । वृष्ण्यानि ।

या । वाम् । प्रत्नानि । सख्या । शिवानि । तेभिः ।
सोमस्य । पिबतम् । सुतस्य ॥५

हे “इन्द्राग्नी “यानि “वीर्याणि वृत्रवधादिरूपाणि “चक्रथुः कृतवन्तौ युवां “यानि च “रूपाणि निरूप्यमाणानि गवाश्वादीनि भूतजातानि कृतवन्तौ । इन्द्राग्निभ्यां हि सर्वं जगत् सृज्यते । इन्द्रः सूर्यात्मना वृष्टिं सृजत्यग्निश्चाहुतिद्वारा वृष्टयुत्पादकः। वृष्टेः सकाशात् सर्वे प्राणिन उत्पद्यन्ते । “उत अपि च यानि “वृष्ण्यानि वृष्णि भवानि वृष्टिप्रदानादिरूपाणि कर्माणि कृतवन्तौ । तथा “वां युवयोः संबन्धीनि “प्रत्नानि चिरंतनानि "शिवानि शोभनानि “या यानि “सख्या सखित्वानि सन्ति । “तेभिः तैः सर्वैः सहितौ युवां “सुतस्य “सोमस्य अभिषुतं सोमं

“पिबतम् ॥ सख्या । सख्युर्भावः सख्यम् । ‘ सख्युर्यः' इति यप्रत्ययः । ‘ शेश्छन्दसि बहुलम्' इति शेर्लोपः । तेभिः । ‘ बहुलं छन्दसि' इति भिस ऐसभावः । ‘ सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तत्वस्य ‘ न गोश्वन्सावववर्ण ' इति प्रतिषेधः ॥ ॥ २६ ॥

यदब्रंवं प्रथ॒मं वां॑ वृणा॒नो॒३॒ऽयं सोमो॒ असुं॑रैर्नो वि॒हव्यः॑ ।

तां स॒त्यां श्र॒द्धाम॒भ्या हि या॒तमथा॒ सोमंस्य पिबतं सु॒तस्यं ॥ ६

यत् । अब्रंवम् । प्र॒थ॒मम् । वा॒म् । वृ॒णा॒नः । अ॒यम् । सोमः॑ । असुं॑रैः । नः॒ । वि॒ऽहव्यः॑ ।

ताम् । स॒त्याम् । श्र॒द्धाम् । अ॒भि । आ । हि । या॒तम् । अथं । सोमंस्य । पि॒ब॒त॒म् । सु॒तस्यं ॥६

यथा॒ क्षया॑म॒ सर्व॑वीरया वि॒शा तन्न॑ः शर्धा॑य धासथा॒ स्वि॑न्द्रि॒यम् ॥ २

आ । न॒ः । य॒ज्ञाय॑ । त॒क्ष॒त॒ । ऋ॒भु॒ऽमत् । वय॑ः । क्रत्वे॑ । दक्षा॑य । सु॒ऽप्र॒जाव॑तीम् । इष॑म् ।

यथा॑ । क्षया॑म । सर्व॑ऽवीरया । वि॒शा । तत् । न॒ः । शर्धा॑य । धा॒स॒थ॒ । सु । इ॒न्द्रि॒यम् ॥२

आ । नः । यज्ञाय । तक्षत । ऋभुऽमत् । वयः । क्रत्वे । दक्षाय । सुऽप्रजावतीम् । इषम् ।

यथा । क्षयाम । सर्वऽवीरया । विशा । तत् । नः । शर्धाय । धासथ । सु । इन्द्रियम् ॥२

हे ऋभवः “नः अस्माकं “यज्ञाय यज्ञार्थं “ऋभुमत् उरुभासनयुक्तं “वयः हविर्लक्षणमन्नम् “आ “तक्षत आ समन्तादुत्पादयत । एतदेव विव्रियते। “क्रत्वे

क्रतवेऽस्मदीयाय कर्मणे “दक्षाय बलाय च ।। तादर्थ्ये चतुर्थी। एतदुभयार्थं "सुप्रजावती शोभनाभिः पुत्रपौत्रादिलक्षणाभिः प्रजाभिर्युक्ताम् “इषम् अन्नम् आ तक्षत इति शेषः । अपि च “सर्ववीरया सर्वैर्वीरैः पुत्रादिभिरुपेतया "विशा प्रजया सह “यथा येन प्रकारेण “क्षयाम सुखेन निवसाम “तत् तादृशम् “इन्द्रियम् । धननामैतम् । धनं “नः अस्मभ्यं “शर्धाय बलार्थं “सु “धासथ सुष्ठु धत्त प्रयच्छतेत्यर्थः ॥ ऋभुमत् । उरु भाति' इति नैरुक्तव्युत्पत्त्या (निरु. ११. १५) ऋभुशब्दः प्रकाशमात्रवाची। ‘ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । क्रत्वे । जसादिषु च्छन्दसि वावचनम्' इति ‘घेर्ङिति ' इति गुणाभावे यणादेशः । क्षयाम् । ‘क्षि निवासगत्योः' । व्यत्ययेन शप् । धासथ । धाञो लेटि अडागमः। ‘सिब्बहुलं लेटि' इति सिप् । अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् ।।

आ तं॑क्षत सा॒तिम॒स्मभ्यं॑मृभवः सा॒तिं रथा॑य सा॒तिमर्व॑ते नरः ।

सा॒तिं नो॒ जैत्री॒ं सं मं॑हेत वि॒श्वहा॑ जा॒मिमजा॑मि॒ं पृत॑नासु स॒क्षणिं॑म् ॥ ३

आ । त॒क्ष॒त॒ । सा॒तिम् । अ॒स्मभ्यं॑म् । ऋ॒भ॒व॒ः । सा॒तिम् । रथा॑य । सा॒तिम् । अर्व॑ते । न॒र॒ः ।

सा॒तिम् । न॒ः । जैत्री॑म् । सम् । म॒हे॒त॒ । वि॒श्वहा॑ । जा॒मिम् । अजा॑मिम् । पृत॑नासु । स॒क्षणिं॑म् ॥३

आ । तक्षत । सातिम् । अस्मभ्यम् । ऋभवः । सातिम् । रथाय । सातिम् । अर्वते । नरः ।

सातिम् । नः । जैत्रीम् । सम् । महेत । विश्वहा । जामिम् । अजामिम् । पृतनासु । सक्षणिम् ॥३

हे “नरः यज्ञस्य नेतारः “ऋभवः “अस्मभ्यम् अनुष्ठातृभ्यः “सातिं संभजनीयमन्नं धनं वा “आ “तक्षत । अ समन्तात्कुरुत। तथा अस्मदीयाय “रथाय “रंहणशीलाय पुत्रादये रथायैव वा “सातिं संभजनीयं धनम् आतक्षत । तथा “अर्वते अश्वाय “सातिं संभजनीयमन्नं धनं वा अश्वयोग्यम् आतक्षतेत्येव । किं च “विश्वहा सर्वेष्वहःसु “नः अस्माकं “जैत्रीं जयशीलामपरिमितत्वेन सर्वाधिकां “सातिं संभजनीयं धनं “सं “महेत । सर्वो जनः सम्यक् पूजयतु। वयं च “पृतनासु संग्रामेषु “जामिं सहजातम् “अजामिं सहानुत्पन्नं शत्रुं वा “सक्षणिम् अस्मानभिभवन्तं युष्मत्प्रसादादभिभवेमेति शेषः ॥ सातिम् । ‘ ऊतियूतिजूतिसाति° ' इत्यादिना क्तिन उदात्तत्वम् । महेत । मह पूजायाम् । सक्षणिम् । “षह अभिभवे । औणादिकः सनिप्रत्ययः । ढत्वकत्वषत्वानि ॥

ऋ॒भु॒क्षण॒मिन्द्र॒मा हु॑व ऊ॒तय॑ ऋ॒भून्वाजा॑न्म॒रुत॒ः सोम॑पीतये ।

उ॒भा मि॒त्रावरु॑णा नू॒नम॒श्विना॒ ते नो॑ हिन्वन्तु सा॒तये॑ धि॒ये जि॒षे ॥ ४

ऋ॒भु॒क्षण॑म् । इन्द्र॑म् । आ । हु॒वे॒ । ऊ॒तये॑ । ऋ॒भून् । वाजा॑न् । म॒रुत॑ः । सोम॑ऽपीतये ।

उ॒भा । मि॒त्रावरु॑णा । नू॒नम् । अ॒श्विना॑ । ते । न॒ः । हि॒न्व॒न्तु॒ । सा॒तये॑ । धि॒ये । जि॒षे ॥४

ऋभुक्षणम् । इन्द्रम् । आ । हुवे । ऊतये । ऋभून् । वाजान् । मरुतः । सोमऽपीतये ।

उभा । मित्रावरुणा । नूनम् । अश्विना । ते । नः । हिन्वन्तु । सातये । धिये । जिषे ॥४

“ऋभुक्षणम् । महन्नामैतत् । महान्तम् “इन्द्रम् "आ “हुवे आह्वयामि। किमर्थम्। “ऊतये रक्षणार्थम् । तथा “ऋभून्वाजान् । ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः। तत्र प्रथमोत्तमवाचकशब्दाभ्यां मध्यमोऽपि लक्ष्यते । अतः शब्दद्वयेन त्रयोऽप्युच्यन्ते । तदुक्तं यास्केन - ‘ प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन' (निरु. ११. १६) इति । एवंविधानृभून् “मरुतः च “सोमपीतये सोमपानायाह्वयामि । तथा “उभा युगलरूपेण संहत्य वर्तमानौ द्वौ मित्रावरुणावश्विनौ च “नूनम् अवश्यं सोमपानायाह्वयामीति शेषः । अपि च आहूताश्चेन्द्रादयः “नः अस्मान् “हिन्वन्तु प्रेरयन्तु गमयन्त्वित्यर्थः । किमर्थम् । “सातये संभजनीयाय धनाय “धिये धनसाध्याय कर्मणे “जिषे जेतुं शत्रूणां जयार्थं च ॥ ऋभुक्षणम् । उरुभासमाने स्थाने क्षियति निवसतीति ऋभुक्षाः । उरुपूर्वाद्धातेः ' मृगय्वादयश्च' ( उ. सू. १. ३७ ) इति कुप्रत्ययः । ‘ आतो लोप इटि च ' इति आकारलोपः

पूर्वपदस्य ऋभावश्च । ऋभुशब्दोपपदात् ' क्षि निवासगत्योः' इत्यस्मात् ‘ पतेस्थ च ' इति विधीयमान इनिप्रत्ययो बहुलवचनात् भवति । टिलोपः । ‘ इतोऽत्सर्वनामस्थाने ' ( पा. सू. ७. १. ८६ ) इति अत्वम् इकारस्य । ‘ वा षपूर्वस्य निगमे ' इति विकल्पनात् उपधादीर्घाभावः । यद्वा । अर्तेः भुक्षिनक्। कित्त्वाद्गुणाभावः । अत एव न अवगृह्यते । सोमपीतये । 'पा पाने '। 'स्थागापापचो भावे ' इति भावे क्तिन् । ‘ घुमास्था° ' इति ईत्वम् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । हिन्वन्तु । ' हि गतौ वृद्धौ च ' । अस्मात् अन्तर्भावितण्यर्थात् लोटि स्वादित्वात् श्नुः । जिषे। ‘जि जये। ‘ तुमर्थे सेसेन्” इति क्सेप्रत्ययः ॥

ऋ॒भुर्भरा॑य॒ सं शि॑शातु सा॒तिं सं॑मर्य॒जिद्वाजो॑ अ॒स्माँ अ॑विष्टु
।

तन्नों मि॒त्रो वरुं॑णो मामहन्ता॒मदिं॑ति॒ः सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ५

ऋ॒भुः । भरा॑य । सम् । शि॒शा॒तु॒ । सा॒तिम् । स॒म॒र्य॒ऽजित् । वाजः॑ । अ॒स्मान् । अ॒वि॒ष्टु॒ ।

तत् । न॒ः । मि॒त्रः । वरुं॑णः । म॒म॒ह॒न्ता॒म् । अदिं॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥५

ऋभुः । भराय । सम् । शिशातु । सातिम् । समर्यऽजित् । वाजः । अस्मान् । अविष्टु ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥५

“ऋभुः प्रथमोऽस्माकं “सातिं संभजनीयं धनं “भराय संग्रामार्थं “सं “शिशातु सम्यक् तीक्ष्णीकरोतु । संग्रामोचितं धनमस्मभ्यं प्रयच्छत्वित्यर्थः । तथा

“समर्यजित् । मर्या मनुष्याः । तैः सह वर्तते इति समर्यः संग्रामः । तत्र शत्रूणां जेता “वाजः एतत्संज्ञस्तृतीयश्च “अस्मान् स्तोतॄन् “अविष्टु अवतु संग्रामाद्रक्षत्वित्यर्थः । यदनेन सूक्तेन प्रार्थितमस्मदीयं “तत् मित्रादयः “ममहन्तां पूजयन्तु ॥ शिशातु । ‘ शो तनूकरणे'। बहुलं छन्दसि ' इति विकरणस्य श्लुः। ‘आदेचः' इति आत्वम् । द्विर्भावः । ह्रस्वत्वे ‘बहुलं छन्दसि ' इति अभ्यासस्य इत्वम् । अविष्टु । अवतेर्लोटि ‘सिब्बहुलं लेटि' इति बहुलग्रहणात् सिप् । इडागमः । षत्वष्टुत्वे ॥ ॥ ३२ ॥

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.७ १.३७ १.६७ १.९७ १.१२७ १.१५७ १.१८७

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.८ १.३८ १.६८ १.९८ १.१२८ १.१५८ १.१८८

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.९ १.३९ १.६९ १.९९ १.१२९ १.१५९ १.१८९

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१० १.४० १.७० १.१०० १.१३० १.१६० १.१९०

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.११ १.४१ १.७१ १.१०१ १.१३१ १.१६१ १.१९१

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१२ १.४२ १.७२ १.१०२ १.१३२ १.१६२

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१३ १.४३ १.७३ १.१०३ १.१३३ १.१६३

# ऋग्वेदः सूक्तं १.११२

← सूक्तं १.१११

**ऋग्वेदः - मण्डल १**

सूक्तं १.११२

कुत्स आङ्गिरसः

सूक्तं १.११३ →

दे. १ (आद्यपादस्य) द्यावापृथिव्यौ, १ (द्वितीयपादस्य) अग्निः, १ (उत्तरार्धस्य) अश्विनौ, २-२५ अश्विनौ । जगती, २४-२५ त्रिष्टुप्।

---

0:00 / 0:00

*धवित्र होमम् Dhavitra Homam*

ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।

याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम् ॥१॥

युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे ।

याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतम् ॥२॥

युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।

याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतम् ॥३॥

याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।

याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम् ॥४॥

याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे ।

याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥५॥

याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः ।

याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम् ॥६॥

याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये ।

याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥७॥

याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः ।

याभिर्वर्तिकां ग्रसिताममुञ्चतं ताभिरू षु ऊतिभिरश्विना गतम् ॥८॥

याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम् ।

याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥९॥

याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतम् ।

याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१०॥

याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत् ।

कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥११॥

याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे ।

याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतम् ॥१२॥

याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।

याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१३॥

याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।

याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१४॥

याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः ।

याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१५॥

याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।

याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतम् ॥१६॥

याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना ।

याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतम् ॥१७॥

याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः ।

याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१८॥

याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम् ।

याभिः सुदास ऊहथुः सुदेव्यं ताभिरू षु ऊतिभिरश्विना गतम् ॥१९॥

याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम् ।

ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतम् ॥२०॥

याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम् ।

मधु प्रियं भरथो यत्सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतम् ॥२१॥

याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।

याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतम् ॥२२॥

याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् ।

याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥२३॥

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।

अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ॥२४॥

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥२५॥

## सायणभाष्यम्

‘ईळे ' इति पञ्चविंशत्यृचं सप्तमं सूक्तम् । आङ्गिरसस्य कुत्सस्यार्षम् । चतुर्विंशीपञ्चविंश्यौ त्रिष्टुभौ शिष्टास्त्रयोविंशतिर्जगत्यः । आद्यः पादो द्यावापृथिव्यः । द्वितीय आग्नेयः । शिष्टं सूक्तमाश्विनम् । तथा चानुक्रान्तम्-‘ईळे पञ्चाधिकाश्विनमाद्यौ पादौ लिङ्गोक्तदेवतावन्त्ये त्रिष्टुभौ ' इति । प्रवर्ग्ये अभिष्टवेऽप्येतत्सूक्तम् ॥ सूत्रितं च--’ग्रावाणेवेळे द्यावापृथिवी इति' (आश्व. श्रौ. ४. ६ ) इति । प्रातरनुवाके

चाश्विने क्रतौ जागते छन्दस्येतत्सूक्तम् । सूत्रितं च -’अगन्म महातारिष्मेळे द्यावापृथिवी इति जागतम् ' ( आश्व. श्रौ. ४. १५ ) इति । आश्विनशस्त्रेऽप्येतत् ‘ प्रातरनुवाकन्यायेन ' ( आश्व. श्रौ. ६. ५) इति अतिदेशात् । तथा अप्तोर्यामे सन्ति चत्वार्यतिरिक्तोक्थानि। तत्राच्छावाकातिरिक्तोक्थे एतत्सूक्तम् ।' यस्य पशवः' इति खण्डे सूत्रितम्-‘ईळे द्यावापृथिवी उभा उ नूनम् ' (आश्व. श्रौ. ९. ११ ) इति ।।

ईळे॒ द्यावा॑पृथि॒वी पू॒र्वचि॑त्तये॒ऽग्निं घ॒र्मं सु॒रुचं॒ याम॑न्नि॒ष्टये॑ ।

याभि॒र्भरे॑ का॒रमंशा॑य॒ जिन्व॑थ॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तं ॥१

ईळे॑ । द्यावा॑पृथि॒वी इति॑ । पू॒र्वऽचि॑त्तये । अ॒ग्निम् । घ॒र्मम् । सु॒ऽरुच॑म् । याम॑न् । इ॒ष्टये॑ ।

याभिः॑ । भरे॑ । का॒रम् । अंशा॑य । जिन्व॑थः । ताभिः॑ । ऊं॒ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१

ईळे । द्यावापृथिवी इति । पूर्वऽचित्तये । अग्निम् । घर्मम् । सुऽरुचम् । यामन् । इष्टये ।

याभिः । भरे । कारम् । अंशाय । जिन्वथः । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१

अहं “द्यावापृथिवी द्यावापृथिव्यौ “ईळे स्तौमि । किमर्थम् । “पूर्वचित्तये पूर्वमेवाश्विनोः प्रज्ञापनाय । ते ह्यश्विनोः प्रत्यासन्ने । यद्वा । द्यावापृथिवी अश्विनौ स्तौमि पूर्वचित्तये अन्यदीयात्स्तोत्रात्पूर्वमेवास्मदीयस्य स्तोत्रस्य प्रबोधनाय । तथा चोक्तं - ’तत्कावश्विनौ द्यावापृथिव्यावित्येके' ( निरु. १२. १) इति । अपि च “यामन् यामनि अश्विनोरागमने सति “इष्टये तदीययागार्थमाहवनीयरूपेण स्थापितम् “अग्निं स्तौमीति शेषः । कीदृशमग्निम् । “घर्मं

प्रवृञ्जनेन दीप्तं “सुरुचम् अत एव शोभनकान्तियुक्तम् । हे अश्विनौ “भरे । संग्रामनामैतत् । संग्रामे “अंशाय युष्मदीयभागाय जयप्राप्त्यर्थं “याभिः ऊतिभिः पालनैः सहागत्य “कारम् । कारशब्दः शङ्खवाचीत्यभियुक्ताः संगिरन्ते । कारं शब्दकारिणं शङ्खं “जिन्वथः मुखेनापूरयथः “ताभिः तादृशैः “ऊतिभिः पालनैः सह। “उ इति समुच्चये । अस्मानपि सुष्ठु “आ “गतम् आगच्छतम् ॥ ईळे । ‘ईड स्तुतौ ' । उत्तमैकवचनम् इट् । अदादित्वात् शपो लुक् । अनुदात्तेत्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । द्यावापृथिवी । द्यौश्च पृथिवी च । ‘दिवो द्यावा' इति द्यावादेश आद्युदात्तो निपातितः । पृथिवीशब्दो ङीपन्तः अन्तोदात्तः । ‘देवताद्वन्द्वे च ' इति उभयपदप्रकृतिस्वरत्वम् । ‘°अपृथिवी ' इति पर्युदासात् ‘नोत्तरपदेऽनुदात्तादौ ' इति निषेधाभावः। ‘वा छन्दसि ' इति पूर्वसवर्णदीर्घत्वम् । पूर्वचित्तये । ‘चिती संज्ञाने' । अस्मात् अन्तर्भावितण्यर्थात् भावे क्तिन् । मरुवृधादित्वात्

पूर्वपदान्तोदात्तत्वम् । सुरुचम् । ‘रुच दीप्तावभिप्रीत्यां च' संपदादिलक्षणो भावे क्विप् । शोभना रुग्यस्य । ‘नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यामन् । ' या प्रापणे ' । आतो मनिन् ' इति ‘कृत्यल्युटो बहुलम्' इति बहुलवचनात् भावे मनिन् । कारम् । क्रियतेऽनेनेति कारः । करणे घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । जिन्वथः । ‘जिवि प्रीणनार्थः । अत्र प्रीणनहेतुभूतमापूरणं लक्ष्यते । धनेनापूरितो हि पुरुषः प्रीतो भवति । इदित्त्वात् नुम् । भौवादिकः । शपः पित्त्वादनुदात्तत्वम् । तिङः अदुपदेशात् लसार्वधातुकस्वरेण धातुस्वरः शिष्यते ।' यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । तत्र हि व्यवहितेऽपि कार्यमिष्यते (का. ८. १. ६६ ) इत्युक्तम् । ऊ षु ।“ इकः सुञि' इति दीर्घत्वम् । सुञः' इति पत्वम् । ईषाअक्षादित्वात् सुञ उकारस्य प्रकृतिभावः । ऊतिभिः । अवतेर्भावे क्तिन् । ज्वरत्वर' इत्यादिना वकारस्य उपधायाश्च ऊठ् ।ऊतियूति' इत्यादिना निपातनात् क्तिन

उदात्तत्वम् । गतम् । गमेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । ' अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः ॥

युवोर्दानायं सुभरां असश्चतो रथमा तंस्थुर्वचसं न मंतंवे ।

याभिर्धियोऽवंथः कर्मन्निष्टये ताभिंरू षु ऊतिभिंरश्विना गंतं ॥२

युवोः । दानायं । सुऽभराः । असश्चतः । रथंम् । आ । तस्थुः । वचसम् । न । मन्तंवे ।

याभिः । धियः । अवंथः । कर्मन् । इष्टयें । ताभिः । ऊं इतिं । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२

युवोः । दानाय । सुऽभराः । असश्चतः । रथम् । आ । तस्थुः । वचसम् । न । मन्तवे ।

याभिः । धियः । अवथः । कर्मन् । इष्टये । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२

“सुभराः शोभनस्तोत्रभरणाः “असश्चतः अन्यत्रानासक्ताः स्तोतारो हे अश्विनौ “युवोः युवयोः “रथम् “आ “तस्थुः आतिष्ठन्ति प्राप्नुवन्ति । किमर्थम् । “दानाय युष्मत्कर्तृकदानार्थम् । धनलाभायेत्यर्थः । तत्र दृष्टान्तः । “वचसं “न यथा न्यायोपेतेन वचसा वाक्येन युक्तं विपश्चितं “मन्तवे बुभुत्सितार्थप्रतिपत्तये स्तोतारः प्राप्नुवन्ति तद्वत् । अपि च “कर्मन् कर्मणि “इष्टये यागार्थं प्रवृत्तान् “धियः ध्यातॄन विशिष्टज्ञानोपेतान् "याभिः “ऊतिभिः पालनैः “अवथः युवां रक्षथः । ताभिरित्यादि पूर्ववत् ॥ वचसम् । अर्शआदित्वात् मत्वर्थीयः अच् । मन्तवे । ‘मन ज्ञाने'। ‘कमिमनिजनि” ' इत्यादिना तुप्रत्ययः । धियः । ध्यायन्तीति धियः स्तोतारः । ‘ध्यै चिन्तायाम् । ‘क्विप् च ' इति क्विप् । चशब्देन दृशिग्रहणानुकर्षणात् संप्रसारणम्

। कर्मन् । ‘सुपां सुलुक्' इति सप्तम्या लुक् । 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेधः ॥

यु॒वं तासां॑ दि॒व्यस्य॑ प्र॒शास॑ने वि॒शां क्ष॑यथो अ॒मृत॑स्य म॒ज्मना॑ ।

याभि॑र्धे॒नुम॒स्वं१॒॑ पिन्व॑थो नरा॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तं ॥३

यु॒वम् । तासा॑म् । दि॒व्यस्य॑ । प्र॒ऽशास॑ने । वि॒शाम् । क्ष॒य॒थः॒ । अ॒मृत॑स्य । म॒ज्मना॑ ।

याभिः॑ । धे॒नुम् । अ॒स्वम् । पिन्व॑थः । न॒रा॒ । ताभिः॑ । ऊं॒ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥३

युवम् । तासाम् । दिव्यस्य । प्रऽशासने । विशाम् । क्षयथः । अमृतस्य । मज्मना ।

याभिः । धेनुम् । अस्वम् । पिन्वथः । नरा । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥३

हे “नरा नेताराविश्विनौ “दिव्यस्य दिवि भवस्य स्वर्गसमुत्पन्नस्य “अमृतस्य सोमस्य पानेनोत्पन्नेन “मज्मना बलेन युक्तौ “युवं युवां “तासां यास्त्रिषु लोकेषु वर्तन्ते तासां सर्वासां “विशां प्रजानां प्रशासने प्रकृष्टानुशासने शिक्षणे “क्षयथः । ऐश्वर्यकर्मायम् । ईशाथे समर्थौ भवथः । यद्वा । मज्मना अन्येषामसाधारणेन बलेन विशां प्रजानां दिविभवस्यामृतस्य वृष्ट्युदकस्य “प्रशासने प्रदाने क्षयथः ईश्वरौ भवथः । अपि च “याभिः “ऊतिभिः रक्षाभिः "अस्वं प्रसवासमर्थां “धेनुं गां शयुनाम्ने ऋषये “पिन्वथः सिञ्चथः पयसा पूरितवन्तावित्यर्थः । ताभिरूतिभिरित्यादि पूर्ववत् ॥ अस्वम् ।' पूङ् प्राणिगर्भविमोचने '। सवनं सूः । संपदादिलक्षणो भावे क्विप् । नास्ति सूः यस्याम् इति असूः । ‘नञ्सुभ्याम् '

इत्युत्तरपदान्तोदात्तत्वम् । अमि ‘ओः सुपि ' इति यणादेशः । उदात्तस्वरितयोर्यण: ' इति परस्यानुदात्तस्य स्वरितत्वम् । पिन्वथः । पिवि सेचने '। इदित्त्वात् नुम् । भौवादिकः ॥

याभि॒: परिं॑ज्मा॒ तनं॑यस्य म॒ज्मनां॑ द्विमा॒ता तू॒र्षु त॒रणिं॑र्वि॒भूषं॑ति ।

याभिं॑स्त्रि॒मं॑तु॒रभं॑वद्विचक्ष॒णस्ताभिं॑रू॒ षु ऊ॒तिभिं॑रश्वि॒ना गं॑तं ॥४

याभिः॑ । परिं॑ऽज्मा । तनं॑यस्य । म॒ज्मनां॑ । द्वि॒ऽमा॒ता । तू॒र्षु । त॒रणिः॑ । वि॒ऽभूषं॑ति ।

याभिः॑ । त्रि॒ऽमन्तुः॑ । अभं॑वत् । वि॒ऽच॒क्ष॒णः । ताभिः॑ । ऊं॒ इतिं॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥४

याभिः । परिऽज्मा । तनयस्य । मज्मना । द्विऽमाता । तूर्षु । तरणिः । विऽभूषति ।

याभिः । त्रिऽमन्तुः । अभवत् । विऽचक्षणः । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥४

“परिज्मा परितो गन्ता वायुः “तनयस्य आत्मीयस्य पुत्रस्याग्नेः । अग्निर्हि व्यानवृत्त्यात्मना वर्तमानेन वायुना मथ्यमानः सन् जायते । तथा च श्रूयते-' अथ यः प्राणापानयोः संधिः स व्यानः। अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति ' ( छा. उ. १. ३. ३; ५) इति । यद्वा । सृष्ट्यादौ वायुसकाशादुत्पन्नत्वादग्नेः पुत्रत्वम् । आम्नायते च-’वायोरग्निः' ( तै. आ. ८. १ ) इति । एवं स्वपुत्रस्याग्नेः “मज्मना बलेन युक्तः सन् “द्विमाता द्वयोर्लोकयोः निर्माता । अग्निः पृथिवीस्थानो

वायुरन्तरिक्षस्थानः । उभयर्मिलितयोः
उभयनिर्मातृत्वमुपपन्नम् । यद्वा । द्विमातेति तनयस्य
विशेषणम् । ‘सुपां सुलुक् । इति षष्ठ्याः सुः ।
द्विमातृकस्य द्वाभ्यामरणिभ्यां जातस्य। एवंभूतो वायुर्हे
अश्विनौ “याभिः ऊतिभिः हेतुभूतैः पालनैः “तूर्षु तरीतृषु
धावत्सु मध्ये “तरणिः अतिशयेन तरीता शीघ्रगामी
'विभूषति विभवति व्याप्तो भवति । यद्वा । विशेषेण
सर्वमलंकरोति । अपि च ”त्रिमन्तुः त्रयाणां मन्ता त्रिविधेषु
पाकयज्ञहविर्यज्ञसोमयज्ञेष्वासादितज्ञानः कक्षीवान्
“याभिः युष्मदीयाभिरूतिभिः “विचक्षणः
विशिष्टज्ञानयुक्तः “अभवत् । “ताभिः सर्वाभिः “ऊतिभिः
अस्मानागच्छतम् ॥ परिज्मा । परिपूर्वात् अज
गतिक्षेपणयोः' इत्यस्मात् ‘श्वन्नुक्षन् ' इत्यादौ निपात्यते ।
तूर्षु । ‘तॄ प्लवनतरणयोः । ‘बहुलं छन्दसि ' इति उत्वम् ।
हलि च ' इति दीर्घः । यद्वा । त्वरतेः क्विप् । ज्वरत्वर'
इत्यादिना वकारोपधयोः ऊठ् । ‘सावेकाचः' इति

विभक्तेरुदात्तत्वम् । विभूषति । भवतेर्लेटि अडागमः । ‘सिब्बहुलं लेटि' इति सिप् । यद्वा । ‘भूष अलंकारे'। भौवादिकः । विचक्षणः । ‘अनुदात्तेतश्च हलादेः' इति युच् ॥

याभी॑ रे॒भं निवृ॑तं सि॒तम॒द्भ्य उद्वन्द॑न॒मैर॑यतं॒ स्व॑र्दृ॒शे ।

याभि॒ः कण्वं॒ प्र सिषा॑सन्त॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तं ॥५

याभिः॑ । रे॒भम् । निऽवृ॑तम् । सि॒तम् । अ॒त्ऽभ्यः । उत् । वन्द॑नम् । ऐर॑यतम् । स्वः॑ । दृ॒शे ।

याभिः॑ । कण्व॑म् । प्र । सिसा॑सन्तम् । आव॑तम् । ताभिः॑ । ऊ॒ं इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥५

याभिः । रेभम् । निऽवृतम् । सितम् । अत्ऽभ्यः । उत् । वन्दनम् । ऐरयतम् । स्वः । दृशे ।

याभिः । कण्वम् । प्र । सिसासन्तम् । आवतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥५

हे अश्विनौ "याभिः “ऊतिभिः "रेभम् एतत्संज्ञम् ऋषिं “निवृतम् असुरैः कूपे अप्सु निवारितं "सितं तदीयैः पाशैर्बद्धमेवंभूतमृषिम् “अद्भ्यः सकाशात् "उत् "ऐरयतम् उदगमयतम् । तथा “वन्दनम् एतत्संज्ञमृषिं च तथाभूतमुदैरयतम् । किमर्थम् । “स्वः आदित्यं “दृशे द्रष्टुम् । अपि च "कण्वम् असुरैः अन्धकारे प्रक्षिप्तं “सिषासन्तम् आलोकं संभक्तुमिच्छन्तं “याभिः ऊतिभिः “प्र “आवतं प्रकर्षेण अरक्षतम् । ताभिरित्यादि समानम् ॥ रेभम् । ‘रेभृ शब्दे'। रेभते स्तौतीति रेभः । पचाद्यच् । निवृतम् । वृञ् वरणे'। अस्मात् अन्तर्भावितण्यर्थात्

कर्मणि निष्ठा । ' गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सितम् । 'षिञ् बन्धने '। अद्भ्यः । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । वन्दनम् ।' वदि अभिवादनस्तुत्योः'। वन्दते स्तौतीति वन्दनः । नन्द्यादिलक्षणो ल्युः । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । स्वरित्येतद्द्विवश्चादित्यस्य च साधारणनामधेयम् । तदुक्तं यास्केन -- ’स्वरादित्यो भवति सु अरणः सु ईरणः' (निरु. २. १४) इति । स्वरादिनिपातम् ' ( पा. सू. १. १. ३७ ) इति अव्ययत्वात् सुपो लुक् । दृशे । 'दृशे विख्ये च' इति दृशेः तुमर्थे केप्रत्ययान्तो निपात्यते । सिषासन्तम् । 'वन षण संभक्तौ ' । सनि सनीवन्तर्ध' इत्यादिना विकल्पनात् इडभावः । 'जनसनखनां सञ्झलोः' इति आत्वम् । द्विर्भावे अभ्यासस्य ह्रस्वत्वम् ।' सन्यतः । इति इत्वम् ॥ ॥ ३३ ॥

याभि॒रंत॑कं॒ जसं॑माना॒मारं॑णे भु॒ज्युं याभिं॑रव्य॒थिभिं॑र्जिजि॒न्वथुः॑ ।

याभिः॑ क॒र्कंधुं॑ व॒य्यं॑ च॒ जिन्वं॑थ॒स्ताभिं॑रू॒ षु ऊ॒तिभिं॑रश्वि॒ना गं॑तं ॥६

याभिः॑ । अन्तं॑कम् । जसं॑मानम् । आ॒ऽअरं॑णे । भु॒ज्युम् । याभिः॑ । अ॒व्य॒थिऽभिः॑ । जि॒जि॒न्वथुः॑ ।

याभिः॑ । क॒र्कन्धुं॑म् । व॒य्यं॑म् । च॒ । जिन्वं॑थः । ताभिः॑ । ऊ॒म् इतिं॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥६

याभिः । अन्तकम् । जसमानम् । आऽअरणे । भुज्युम् । याभिः । अव्यथिऽभिः । जिजिन्वथुः ।

याभिः । कर्कन्धुम् । वय्यम् । च । जिन्वथः । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥६

आरणम् अगाधं कूपादि । तत्रासुरैः प्रक्षिप्तं “जसमानं तैर्हिंस्यमानम् “अन्तकं शत्रूणामन्तकरम् एतत्संज्ञं राजर्षिं हे अश्विनौ 'याभिः “ऊतिभिः अवथः रक्षथः । तथा “भुज्युं सर्वस्य पालकमेतत्संज्ञं समुद्रमध्ये निमग्नं तुग्र्यं तुग्रस्य पुत्रं राजर्षिं “याभिः ऊतिभिः रक्षणहेतुभूताभिः “अव्यथिभिः व्यथारहिताभिर्नौभिः "जिजिन्वथुः युवामतर्पयतम् । एतच्च मन्त्रान्तरे' ‘तुग्रो ह भुज्युमश्विनोदमेघे' (ऋ. सं. १. ११६. ३ ) इत्यादिके विस्पष्टयिष्यते । अपि च "कर्कन्धुं "वय्यं "च एतत्संज्ञकौ चासुरैः पीड्यमानौ "याभिः ऊतिभिः "जिन्वथः प्रीणयथः । गतमन्यत् ॥ जसमानम् । जसु हिंसायाम् । यकि प्राप्ते व्यत्ययेन शप् । आरणे । आङ्पूर्वात् अर्तेः ल्युट्। जिजिन्वथुः । जिविः प्रीणनार्थः । लिटि अथुसि रूपम् ॥

याभिः॑ शु॒चंतिं॑ ध॒न॒सां सु॑ष॒ंसदं॑ त॒प्तं घ॒र्मम॒म्याव॑ंत॒मत्र॑ये ।

याभिः पृश्निंगुं पुरुकुत्समावंतं ताभिंरू षु ऊतिभिंरश्विना गंतं ॥७

याभिः । शुचन्ति । धनऽसाम् । सुऽसंसदंम् । तप्तम् । घर्मम् । ओम्याऽवंन्तम् । अत्रंये ।

याभिः । पृश्निंऽगुम् । पुरुऽकुत्संम् । आवंतम् । ताभिः । ऊं इतिं । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥७

याभिः । शुचन्ति । धनऽसाम् । सुऽसंसदम् । तप्तम् । घर्मम् । ओम्याऽवन्तम् । अत्रये ।

याभिः । पृश्निऽगुम् । पुरुऽकुत्सम् । आवतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥७

हे अश्विनौ “धनसां धनस्य संभक्तारं "शुचन्तिम् एतन्नामानं "सुषंसदम् । संसीदन्त्यस्मिन्निति संसत् गृहम् । शोभनसंसदं "याभिः ऊतिभिरकुरुतम् । तथा “अत्रये

याभिश्चोतिभिः “तप्तं प्रवृञ्जनेन संतप्तं “घर्मं महावीरम्
“ओम्यावन्तं सुखयुक्तं सुखेन स्प्रष्टुं शक्यमकुरुतम् । यद्वा
। शतद्वारे यन्त्रगृहे असुरैः पीड्यमानाय घर्मं दीप्तं
पीडासाधनमग्निं तप्तं तापकारिणम् ओम्यावन्तं
सुखवन्तम् अकुरुतम्। यथा अस्मै सुखं भवति तथा
हिमेनोदकेन तमग्निमवारयेथाम् । यास्कपक्षे तु अत्रये
हविषामत्त्रेऽग्नये हविरुत्पत्त्यर्थं सूर्यकिरणसंतप्तं घर्मं
नैदाघम् अहः ओम्यावन्तं तृप्तिहेतुवृष्ट्युदकोपेतं
कृतवन्तौ इति योज्यम् । अपि च "याभिः ऊतिभिः
"पृश्निगुं "पुरुकुत्सं च "अवतम् अरक्षतम् । “ताभिः
सर्वाभिः “ऊतिभिः अस्मानागच्छतम् ॥ शुचन्तिम् । शुच
दीप्तौ । औणादिको झिच् । धनसाम् ।'
जनसनखनक्रमगमो विट्'। ‘विड्वनोरनुनासिकस्यात् '
इति आत्वम् । सुषंसदम् । शोभना संसद्यस्य ।
नञ्सुभ्याम् इत्युत्तरपदान्तोदात्तत्वम् । ओम्यावन्तम् ।
अवतेः ‘ अन्येभ्योऽपि दृश्यन्ते ' इति मनिन् । ज्वरत्वर ।

इत्यादिना वकारस्य उपधायाश्च ऊठ् । गुणः । छन्दसि च ' इत्यर्हार्थे यप्रत्ययः । ‘नस्तद्धिते' इति टिलोपः । ये चाभावकर्मणोः' इति प्रकृतिभावस्तु व्यत्ययेन न प्रवर्तते । पृश्निगुम् । पृश्नयो नानावर्णा गावो यस्य स तथोक्तः । ‘गोस्त्रियोरुपसर्जनस्य ' (पा. सू. १. २. ४८) इति गोशब्दस्य ह्रस्वत्वम् ।।

याभि॒: शची॑भिर्वृषणा परा॒वृजं॒ प्रांधं श्रो॒णं चक्षं॑स॒ एत॑वे कृ॒थः ।

याभि॒र्वर्ति॑कां ग्रसि॒ताममुं॑चतं॒ ताभिं॑रू॒ षु ऊ॒तिभिं॑रश्वि॒ना गं॑तं ॥८

याभि॑: । शची॑भिः । वृ॒ष॒णा॒ । प॒रा॒ऽवृजं॑म् । प्र । अ॒न्धम् । श्रो॒णम् । चक्षं॑से । एत॑वे । कृ॒थः ।

याभिः॑ । वर्ति॑काम् । ग्र॒सि॒ताम् । अमुं॑ञ्चतम् । ताभिः॑ । ऊ॒ं इतिं । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥८

याभिः । शचीभिः । वृषणा । पराऽवृजम् । प्र । अन्धम् । श्रोणम् । चक्षसे । एतवे । कृथः ।

याभिः । वर्तिकाम् । ग्रसिताम् । अमुञ्चतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥८

हे "वृषणा कामानां वर्षितारावश्विनौ “याभिः "शचीभिः कर्मभिः प्रज्ञाभिर्वा “परावृजम् एतन्नामकमृषिं पङ्गुं सन्तमपङ्गुमकुरुतम् । तथा "अन्धं दृष्टिरहितं सन्तमृज्राश्वमृषिं "चक्षसे प्रकाशाय सम्यक् चक्षुषा दर्शनाय याभिरूतिभिः “प्र “कृथः प्रकर्षेण कुरुथः । याभिश्च “श्रोणं विगुणजानुकमेव सन्तमृषिम् “एतवे गन्तुं प्र कृथः प्रकर्षेण कृतवन्तौ । अपि च "याभिः ऊतिभिः "वर्तिकां चटकसदृशस्य पक्षिणः स्त्रियं “ग्रसितां वृकेण

ग्रस्ताम् "अमुञ्चतं वृकास्यान्निर्मुक्तामकुरुतम् । यास्कपक्षे तु वृकेण विवृतज्योतिष्केण सूर्येण याभिर्ग्रस्तां वर्तिकां प्रत्यहमावर्तमानामुषसं तस्मादमोचयतम् इति योज्यम् । “ताभिः सर्वाभिः “ऊतिभिः अस्मानप्यागच्छतम् ॥ वृषणा । वृष सेचने '।' कनिन्युवृषि' ' इत्यादिना कनिन् । परावृजम् । ' वृजी वर्जने ' । परावृणक्ति तपसा पापं विनाशयतीति परावृक् । ‘क्विप् च ' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । एतवे । “तुमर्थे सेसेन्' इत्येतेः तवेन्प्रत्ययः । कृथः । डुकृञ् करणे'।' बहुलं छन्दसि ' इति विकरणस्य लुक् ।। याभिः सिन्धु मधुमन्तुमसञ्चतं वसिष्ठं याभिरजरोवर्जिन्वतम् । ।

याभि॒ः सिंधुं॒ मधुंमंत॒मसंश्चत॒ं वसिंष्ठ॒ं याभिंरजरा॒वजिंन्वतं ।

याभि॒: कुत्सं॑ श्रु॒तर्यं॒ नर्य॒मावं॑त॒ं ताभिं॑रू॒ षु ऊ॒तिभिं॑रश्वि॒ना गं॑तं ॥९

याभिः॑ । सिन्धुं॑म् । मधुं॑ऽमन्तम् । असं॑श्चतम् । वसिं॑ष्ठम् । याभिः॑ । अ॒ज॒रौ॒ । अजिं॑न्वतम् ।

याभिः॑ । कुत्सं॑म् । श्रु॒तर्यं॑म् । नर्यं॑म् । आवं॑तम् । ताभिः॑ । ऊ॒ं इतिं॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥९

याभिः । सिन्धुम् । मधुऽमन्तम् । असश्चतम् । वसिष्ठम् । याभिः । अजरौ । अजिन्वतम् ।

याभिः । कुत्सम् । श्रुतर्यम् । नर्यम् । आवतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥९

हे अश्विनौ "सिन्धुं स्यन्दनशीलां नदीं "मधुमन्तं मधुसदृशेनोदकेन पूर्णां "याभिः ऊतिभिः “असश्चतम् अगमयतं प्रावाहयतमित्यर्थः । हे "अजरौ

जरारहितावश्विनौ "वसिष्ठम् ऋषिं "याभिः ऊतिभिः "अजिन्वतम् अप्रीणयतम् । “याभिः च कुत्सादीन् त्रीन् ऋषीन् "आवतम् अरक्षतम् । "ताभिः सर्वाभिः “ऊतिभिः अस्मानपि सुष्ठ्वागच्छतम् ॥ मधुमन्तम् । मधुशब्दात् भूम्नि मतुप् । लिङ्गव्यत्ययः । असश्चतम् । सश्चतिर्गतिकर्मा । अस्मात् अन्तर्भावितण्यर्थात् लुङ् ॥

याभिर्विश्पलां धनसामंथर्व्यं सहस्रंमीळ्ह आजावजिन्वतं ।

याभिर्वशंमश्व्यं प्रेणिमावंतं ताभिरू षु ऊतिभिंरश्विना गंतं ॥१०

याभिः । विश्पलाम् । धनऽसाम् । अथर्व्यम् । सहस्रंऽमीळ्हे । आजौ । अजिन्वतम् ।

याभि॑ः । वशं॑म् । अ॒श्व्यम् । प्रे॒णिम् । आवं॑तम् । ताभि॑ः ।
ऊं॒ इतिं॑ । सु । ऊ॒तिऽभि॑ः । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१०

याभिः । विश्पलाम् । धनऽसाम् । अथर्व्यम् ।
सहस्रऽमीळ्हे । आजौ । अजिन्वतम् ।

याभिः । वशम् । अश्व्यम् । प्रेणिम् । आवतम् । ताभिः ।
ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१०

हे अश्विनौ “धनसां धनं संभजमानाम् "अथर्व्यम् अगच्छन्तीं छिन्नजङ्घात्वेन गन्तुमसमर्थाम् । थर्वतिर्गतिकर्मा । "विश्पलाम् एतत्संज्ञामगस्त्यपुरोहितस्य खेलस्य संबन्धिनीं "सहस्रमीळ्हे । मीळ्हमिति धननाम । बहुधनोपेते "आजौ संग्रामे "याभिः ऊतिभिः "अजिन्वतं गन्तुं समर्थामकुरुतम् । एतच्च ' चरित्रं हि वेरिवाच्छेदि पर्णम् ' ( ऋ. सं. १. ११६. १५ ) इत्यत्र विस्पष्टयिष्यते । "याभिः च "अश्व्यम् अश्वाख्यस्य पुत्रं "प्रेणिं स्तुतेः

प्रेरयितारं "वशम् एतत्संज्ञम् ऋषिम् "आवतम् अरक्षतम् । “ताभिः सर्वाभिः “ऊतिभिः सहास्मानप्यागच्छतम् ॥ प्रेणिम् । 'प्रेणृ गतिप्रेरणश्लेषणेषु' । औणादिक इप्रत्ययः ॥ ॥ ३४ ॥

याभि॑ः सुदानू औशि॒जाय॑ व॒णिजे॑ दी॒र्घश्र॑वसे॒ मधु॒ कोशो॒ अक्ष॑रत् ।

क॒क्षीव॑तं स्तो॒तारं॒ याभि॒राव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तं ॥११

याभि॑ः । सु॒दा॒नू॒ इति॑ सुऽदानू । औ॒शि॒जाय॑ । व॒णिजे॑ । दी॒र्घऽश्र॑वसे । मधु॑ । कोश॑ः । अक्ष॑रत् ।

क॒क्षीव॑न्तम् । स्तो॒तार॑म् । याभि॑ः । आव॑तम् । ताभि॑ः । ऊं॒ इति॑ । सु । ऊ॒तिऽभि॑ः । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥११

याभिः । सुदानू इति सुऽदानू । औशिजाय । वणिजे । दीर्घऽश्रवसे । मधु । कोशः । अक्षरत् ।

कक्षीवन्तम् । स्तोतारम् । याभिः । आवतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥११

उशिक्संज्ञा दीर्घतमसः पत्नी तस्याः पुत्रो दीर्घश्रवा नाम कश्चिदृषिरनावृष्टयां जीवनार्थमकरोत् `वाणिज्यम् । स च वर्षणार्थमश्विनौ तुष्टाव । तौ च अश्विनौ मेघं प्रेरितवन्तौ। अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे सुदानू शोभनदानावश्विनौ "औशिजाय उशिक्पुत्राय "वणिजे वाणिज्यं कुर्वते दीर्घश्रवसे एतत्संज्ञाय ऋषये “याभिः युष्मदीयाभिः ऊतिभिः हेतुभूताभिः "कोशः मेघः "मधु माधुर्योपेतं वृष्टिजलम् "अक्षरत् असिञ्चत् युष्मत्प्रसादादपेक्षिता वृष्टिर्जातेत्यर्थः । अपि च उशिजः पुत्रं "स्तोतारं कक्षीवन्तम् एतत्संज्ञमृर्षिं "याभिः ऊतिभिः "आवतम्

अरक्षतम् । “ताभिः सर्वाभिः “ऊतिभिः सहास्मानप्यागच्छतम् ॥ कक्षीवन्तम् । कक्ष्या रज्जुरश्वस्य । तया युक्तः कक्षीवान् । ‘आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवत्' इति निपातनात् मतुपो वत्वम् । संप्रसारणम् ॥

याभीं र॒सां क्षोदं॑सो॒द्नः पिंपि॒न्वथुं॑रन॒श्वं याभी॒ रथ॒मावं॑तं जि॒षे ।

याभिं॑स्त्रि॒शोकं॑ उ॒स्रियां॑ उ॒दाजं॑त॒ ताभिं॑रू॒ षु ऊ॒तिभिं॑रश्वि॒ना गं॑तं ॥१२

याभिः॑ । र॒साम् । क्षोदं॑सा । उ॒द्नः । पि॒पि॒न्वथुः॑ । अ॒न॒श्वम् । याभिः॑ । रथं॑म् । आवं॑तम् । जि॒षे ।

याभिः । त्रिऽशोकः । उस्रियाः । उत्ऽआजंत । ताभिः ।
ऊं इतिं । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१२

याभिः । रसाम् । क्षोदसा । उद्नः । पिपिन्वथुः । अनश्वम्
। याभिः । रथम् । आवतम् । जिषे ।

याभिः । त्रिऽशोकः । उस्रियाः । उत्ऽआजत । ताभिः ।
ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१२

‘रसा नदी भवति रसतेः शब्दकर्मणः ' ( निरु. ११. २५)
इति यास्कः । हे अश्विनौ "याभिः ऊतिभिः हेतुभूताभिः
"रसां नदीमनावृष्ट्या जलरहितां "क्षोदसा कूलानि
संपिंषता "उद्नः उदकेन “पिपिन्वथुः युवां पूरितवन्तौ ।
तथा "अनश्वम् अश्वैर्वियुक्तमात्मीयं रथं "जिषे जेतुं "याभिः
ऊतिभिः "अवतम् अगम्यतम् । अपि च “याभिः ऊतिभिः
कण्वपुत्रः "त्रिशोकः ऋषिः "उस्रियाः अपहृताः गाः
“उदाजत उदगमयत् असुरसकाशात् लेभे । "“ताभिः

सर्वाभिः "ऊतिभिः सह अस्मानप्यागच्छतम् ।। क्षोदसा । 'क्षुदिर् संपेषणे'। औणादिकः असुन् । उद्नः । तृतीयैकवचनस्य 'सुपां सुपो भवन्ति ' इति शसादेशः । 'पद्दन' इत्यादिना उदकशब्दस्य उदन्भावः । भसंज्ञायाम् अल्लोपोऽनः' इति अकारलोपः । पिपिन्वथुः । 'पिवि सेचने'। इदित्त्वात् नुम् । जिषे । 'जि जये। 'तुमर्थे सेसेन् इति क्से प्रत्ययः । उदाजत । अज गतिक्षेपणयोः ॥

याभि॒ः सूर्यँ परिया॒थः प॑रा॒वतिं मं॑धा॒तारं॒ क्षैत्रं॑पत्ये॒ष्वाव॑तं ।

याभि॒र्विप्रं॒ प्र भ॒रद्वा॑ज॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना गं॑तं ॥१३

याभि॑ः । सूर्य॑म् । प॒रि॒ऽया॒थः । प॒रा॒ऽवति॑ । म॒न्धा॒तार॑म् । क्षैत्रं॑ऽपत्येषु । आव॑तम् ।

याभिः᳚ । विप्र॑म् । प्र । भ॒रत्ऽवा॑जम् । आव॑तम् । ताभिः᳚ ।
ऊं॒ इति॑ । सु । ऊ॒तिऽभिः᳚ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१३

याभिः । सूर्यम् । परिऽयाथः । पराऽवति । मन्धातारम् ।
क्षैत्रऽपत्येषु । आवतम् ।

याभिः । विप्रम् । प्र । भरत्ऽवाजम् । आवतम् । ताभिः ।
ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१३

हे अश्विनौ "परावति दूरदेशे स्थितं सूर्यं तमोरूपेण स्वर्भानुनावृतमादित्यं तस्मात्तमसो मोचयितुं "याभिः ऊतिभिः "परियाथः युवां परितो गच्छथः । तथा “मन्धातारम् ऋषिं "क्षैत्रपत्येषु । क्षेत्राणां पतिरधिपतिः क्षेत्रपतिः । तत्संबन्धिषु कर्मसु "आवतम् अरक्षतम् । अपि च "याभिः ऊतिभिः “विप्रं मेधाविनं “भरद्वाजम् ऋषिमन्नप्रदानेन “प्र “आवतं प्रकर्षेणारक्षतम् । “ताभिः

सर्वाभिः “ऊतिभिः सह रक्षणार्थमस्मानप्यागच्छतम् ।
क्षैत्रपत्येषु । ब्राह्मणादेराकृतिगणत्वात् कर्मण्यर्थे प्यञ् ॥

याभिर्म॒हाम॑तिथि॒ग्वं क॑शो॒जुवं॒ दिवो॑दासं शंबर॒हत्य॒ आव॑तं
।

याभिः॑ पू॒र्भिद्ये॑ त्र॒सद॑स्यु॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना
ग॑तं ॥१४

याभिः॑ । म॒हाम् । अ॒ति॒थि॒ऽग्वम् । क॒श॒ःऽजुव॑म् ।
दिवः॑ऽदासम् । श॒म्ब॒र॒ऽहत्ये॑ । आव॑तम् ।

याभिः॑ । पूः॒ऽभिद्ये॑ । त्र॒सद॑स्युम् । आव॑तम् । ताभिः॑ । ऊं॒
इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१४

याभिः । महाम् । अतिथिऽग्वम् । कशःऽजुवम् ।
दिवःऽदासम् । शम्बरऽहत्ये । आवतम् ।

याभिः । पूःऽभिद्ये । त्रसदस्युम् । आवतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१४

हे अश्विनौ “महां महान्तम् “अतिथिग्वम् अतिथिभिर्गन्तव्यं "कशोजुवम् असुरभीत्या उदकं प्रवेष्टु गन्तारम् एवंभूतं “दिवोदासम् एतत्संज्ञकं राजर्षिं “शम्बरहत्ये । शम्ब आयुधम् । तद्युक्तः शम्बरोऽसुरः। तस्य हनने विषयभूते सति 'याभिः ऊतिभिः "अवतम् अरक्षतम्। अपि च "याभिः ऊतिभिः “पूर्भिद्ये पुराणि नगराणि भिद्यन्तेऽस्मिन्निति पूर्भिद्यः संग्रामः । तस्मिन् “त्रसदस्युम् एतत्संज्ञकम् ऋषिं पुरुकुत्सपुत्रम् "आवतम् अरक्षतम् । ताभिरित्यादि पूर्ववत् ॥ महाम् । महान्तमित्यस्य छान्दसो वर्णलोपः । कशोजुवम् । कशः इत्युदकनाम । ‘कश गतिशासनयोः'। असुन्। कशांस्युदकानि जवतीति कशोजूः ।। जु इति सौत्रो धातुर्गत्यर्थः । ‘क्विब्वचि° ' ( उ. सू. २. २१५) इत्यादिना

क्विब्दीर्घौ। दिवोदासम् । ‘दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः ' ( का. ६. ३. २१. ५) इति अलुक् । ‘दिवोदासादीनां छन्दस्युपसंख्यानम् ' ( पा. सू. ६. २. ९१. १) इति पूर्वपदाद्युदात्तत्वम् । शम्बरहत्ये । ‘हनस्त च ' इति हन्तेर्भावे क्यप् ; तसंनियोगेन तकारान्तादेशश्च । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

याभि॑र्व॒म्रं वि॑पिपा॒नमु॑पस्तु॒तं क॒लिं याभि॑र्वि॒त्तजा॑निं दु॒व॒स्यथ॑ ।

याभि॒र्व्य॑श्वमु॒त पृथि॒मावं॑त॒ं ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना गं॑तं ॥१५

याभि॑ः । व॒म्रम् । वि॒ऽपि॒पा॒नम् । उ॒प॒ऽस्तु॒तम् । क॒लिम् । याभि॑ः । वि॒त्तऽजा॑निम् । दु॒व॒स्यथ॑ः ।

याभिः॑ । विऽअ॑श्वम् । उ॒त । पृथि॑म् । आव॑तम् । ताभिः॑ ।
ऊ॒ं इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१५

याभिः । वम्रम् । विऽपिपानम् । उपऽस्तुतम् । कलिम् ।
याभिः । वित्तऽजानिम् । दुवस्यथः ।

याभिः । विऽअश्वम् । उत । पृथिम् । आवतम् । ताभिः ।
ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१५

हे अश्विनौ “वम्रं विखनसः पुत्रमेतत्संज्ञमृषिं “विपिपानं विशेषेण पार्थिवं रसं पिबन्तं "याभिः ऊतिभिः अरक्षतम् । कीदृशम् । “उपस्तुतं समीपस्थैः सम्यक् स्तुतमिति स्तूयमानम् । तथा “वित्तजानिं लब्धभार्यं “कलिम् एतत्संज्ञमृषिं “याभिः ऊतिभिः “दुवस्यथः रक्षथः । "उत अपि च “व्यश्वं विगताश्वं “पृथिम् एतत्संज्ञं वैनं राजर्षिं 'याभिः ऊतिभिः “आवतम् अरक्षतम् । अन्यत् पूर्ववत् ॥
विपिपानम् । ‘पा पाने'। ताच्छीलिकः चानश् । बहुलं

छन्दसि ' इति शपः श्लुः । 'बहुलं छन्दसि । इति अभ्यासस्य इत्वम्। उपस्तुतम्। स्तौतेः कर्मणि निष्ठा । प्रवृद्धादित्वादुत्तरपदान्तोदात्तत्वम् (पा. सू. ६. २. १४७ )। वित्तजानिम् । वित्ता लब्धा जाया येन स तथोक्तः । ‘जायाया निङ्' (पा.सू . ५. ४. १३४ ) इति समासान्तो निङादेशः । लोपो ब्योर्वलि ' इति वलिः लोपः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । व्यश्वम् । विगतोऽश्वो यस्मात्स तथोक्तः । बहुव्रीहिस्वरेण पूर्वपदस्योदात्तत्वे ‘उदात्तस्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् ॥ ॥ ३५ ॥

याभि॑र्नरा श॒यवे॒ याभि॒रत्र॑ये॒ याभिः॑ पु॒रा मन॑वे गा॒तुमी॒षथुः॑ ।

याभि॒: शारी॒राजं॑त॒ं स्यूमं॑रश्मये॒ ताभिं॑रू॒ षु ऊ॒तिभिं॑रश्वि॒ना गं॑तं ॥१६

याभिः॑ । न॒रा॒ । श॒यवे॑ । याभिः॑ । अत्र॑ये । याभिः॑ । पु॒रा । मनं॑वे । गा॒तुम् । ई॒षथुः॑ ।

याभिः॑ । शारीः॑ । आजं॑तम् । स्यूमं॑ऽरश्मये । ताभिः॑ । ऊं॒ इतिं । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१६

याभिः । नरा । शयवे । याभिः । अत्रये । याभिः । पुरा । मनवे । गातुम् । ईषथुः ।

याभिः । शारीः । आजतम् । स्यूमऽरश्मये । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१६

हे “नरा नेतारावश्विनौ "पुरा पूर्वस्मिन्काले "शयवे एतत्संज्ञकाय ऋषये "गातुं दुःखान्निर्गमनलक्षणं मार्गं “याभिः ऊतिभिः “ईषथुः युवां वाञ्छितवन्तौ

कृतवन्तावित्यर्थः । किं तत् । सामर्थ्यात् ‘शयवे चिन्नासत्या शचीभिः ' ( ऋ. सं. १. ११६. २२ ) इत्यस्यामृचि प्रतिपादितम् । तथा “अत्रये ऋषये शतद्वारे यन्त्रगृहेऽसुरैः पीड्यमानाय संतापकारिणः अग्नेः शीतेनोदकेन शीतकरणलक्षणं गातुं दुःखनिर्गमनहेतुभूतं मार्गं "याभिः ऊतिभिर्युवामिष्टवन्तौ । एतच्च हिमेनाग्निं घ्रंसमवारयेथाम्' (ऋ. सं. १. ११६. ८) इत्यादौ प्रसिद्धम् । तथा “मनवे एतन्नाम्ने राजर्षये "याभिः ऊतिभिः यवादिधान्यवापनादिरूपं गातुं दारिद्र्यनिर्गमनहेतुं मार्गं युवां कृतवन्तौ । तथा च मन्त्रान्तरं- यवं वृकेणाश्विना वपन्ता ' ( ऋ. सं. १. ११७. २१ ) इति । अपि च स्यूमरश्मये स्यूतः संबद्धः रश्मिर्दीप्तिर्यस्य तस्मै एतत्संज्ञकाय ऋषये "याभिः ऊतिभिः “शारीः । शरो नाम वेणुविशेषः । तद्विकारभूता इषूः "आजतं शत्रून्प्रति प्रैरयतम् । ताभिरूतिभिरित्यादि पूर्ववत् ॥ नरा। ‘नृ नये'। ‘ऋदोरप्'। ‘सुपां सुलुक् ' इति विभक्तेः आकारः । शयवे

।' शीङ् स्वप्ने । भृमृशीतृचरि° ' ( उ. सू. १. ७. ) इत्यादिना उप्रत्ययः । ईषथुः । 'इषु इच्छायाम्'। लिटि अथुसि '°असवर्णे' ( पा. सू. ६. ४. ७८) इति पर्युदासात् अभ्यासस्य इयङादेशाभावे सवर्णदीर्घः । शारीः । विकारार्थे शरशब्दात् " अनुदात्तादेश्च' इति अञ् । ' टिड्ढाणञ्" ' इति ङीप् । स्यूमरश्मये । 'षिबु तन्तुसंताने' । सिवेः औणादिको मन्प्रत्ययः ।' च्छ्वोः शूठ्' इति ऊठ् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

याभि॒ः पठ॑र्वा॒ जठ॑रस्य म॒ज्मना॒ग्निर्नादी॑देच्चि॒त इ॒द्धो अज्म॒न्ना ।

याभि॒ः शर्या॑त॒मव॑थो महाध॒ने ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तं ॥१७

याभि॑ः । पठ॑र्वा । जठ॑रस्य । म॒ज्मना॑ । अ॒ग्निः । न ।
अदी॑देत् । चि॒तः । इ॒द्धः । अज्म॑न् । आ ।

याभि॑ः । शर्या॑तम् । अव॑थः । म॒हा॒ऽध॒ने । ताभि॑ः । ऊ॒ं इति॑
। सु । ऊ॒तिऽभि॑ः । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१७

याभिः । पठर्वा । जठरस्य । मज्मना । अग्निः । न ।
अदीदेत् । चितः । इद्धः । अज्मन् । आ ।

याभिः । शर्यातम् । अवथः । महाऽधने । ताभिः । ऊं इति
। सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१७

हे अश्विनौ “जठरस्य । ‘ जठरमुदरं भवति
जग्धमस्मिन्ध्रियते ' ( निरु. ४, ७ ) इति यास्कः ।
जठरोपलक्षितस्य शरीरस्य "मज्मना बलेन युक्तः सन्
"पठर्वा एतत्संज्ञो राजर्षिः “अज्मन् । संग्रामनामैतत् ।
अज्मनि संग्रामे युष्मदीयाभिः “याभिः ऊतिभिः “आ

समन्तात् “अदीदेत् अदीप्यत । तत्र दृष्टान्तः । “चितः काष्ठैरभिचितः “इद्धः यज्ञगृहे ऋत्विग्भिः प्रज्वालितः अग्निर्न । यथा अग्निः प्रकाशते तद्वदित्यर्थः । अपि च “शर्यातं मानवमिन्द्रेण सह स्पर्धमानं “महाधने । संग्रामनामैतत् । महता धनेनोपेते संग्रामे “याभिः ऊतिभिः "अवथः रक्षथः । ताभिरित्यादि गतम् ॥ अदीदेत् । दीदेतिश्छान्दसो दीप्तिकर्मा । अज्मन् ।' अज गतिक्षेपणयोः' । अजन्ति क्षिपन्त्यस्मिन्बाणानिति अधिकरणे औणादिको मनिन् । ‘वलादावार्धधातुके विकल्प इष्यते' (का. २. ४. ५६. २) इति वचनात् वीभावाभावः । ‘सुपां सुलुक् ' इति सप्तम्या लुक् । महाधने ।' आन्महतः' इति आत्वम् ॥

याभिरंगिरो मनंसा निरण्यथोऽग्रं गच्छंथो विवरे गोअंर्णसः ।

याभि॒र्मनुं॒ शूरं॑मि॒षा स॒मावं॑त॒ं ताभिं॑रू॒ षु ऊ॒तिभिं॑रश्वि॒ना गं॑तं ॥१८

याभिः॑ । अ॒ङ्गि॒र॒ः । मनं॑सा । नि॒ऽर॒ण्यथः॑ । अग्रं॑म् । गच्छं॑थः । वि॒ऽव॒रे । गोऽअं॑र्णसः ।

याभिः॑ । मनुं॑म् । शूरं॑म् । इ॒षा । स॒म्ऽआवं॑तम् । ताभिः॑ । ऊ॒ं इतिं॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१८

याभिः । अङ्गिरः । मनसा । निऽरण्यथः । अग्रम् । गच्छथः । विऽवरे । गोऽअर्णसः ।

याभिः । मनुम् । शूरम् । इषा । सम्ऽआवतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१८

अङ्गिरः इत्येतदामन्त्रितं वाक्यात् बहिर्भूतम् । तेन चात्मानं संबोध्य स्तुतावृषिं प्रेरयति। हे “अङ्गिरः अङ्गिरसां गोत्रज त्वमश्विनौ स्तुहि। हे अश्विनौ मनसा मननीयेन

स्तोत्रेण प्रीतौ सन्तौ युवां “याभिः ऊतिभिः "निरण्यथः स्तोतॄन् नितरां रमयथः । यद्वा ! मनसैव करणभूतेन रमयथः । तथा “गोअर्णसः गोरूपस्यारणीयस्य धनस्य पणिभिर्गुहायां निहितस्य “विवरे विवरणे गुहाद्वारस्योद्घाटनेन प्रकाशने विषयभूते सति याभिः ऊतिभिः सह युवाम् “अग्रं सर्वेभ्यो देवेभ्यः पुरस्तात् “गच्छथः । अपि च “शूरं वीर्यवन्तं “मनुम् “इषा पृथिव्यामुप्तेन यवादिधान्यरूपेणान्नेन “याभिः ऊतिभिः “समावतं सम्यगरक्षतम् । “ताभिः सर्वाभिः “ऊतिभिः सहास्मानप्यागच्छतम् ॥ निरण्यथः। निरमयथ इत्यस्य वर्णव्यापत्त्या एतद्रूपम् । विवरे । ' ग्रहवृद्दनिश्चिगमश्च ' इति भावे अप् । थाथादिना उत्तरपदान्तोदात्तत्वम् ॥

याभि॒: पत्नीं॑र्वि॒म॒दायं न्यू॒हथु॒रा घं वा॒ याभिं॑रु॒णीरशिं॑क्षतं ।

याभिः॑ सु॒दासं॑ ऊ॒हथुः॑ सुदे॒व्यं१॒ ताभिं॑रू॒ षु ऊ॒तिभिं॑रश्वि॒ना गंतं ॥१९

याभिः॑ । पत्नीः॑ । वि॒ऽम॒दायं । नि॒ऽऊ॒हथुः॑ । आ । घ॒ । वा॒ । याभिः॑ । अ॒रु॒णीः । अशिं॑क्षतम् ।

याभिः॑ । सु॒ऽदासें । ऊ॒हथुः॑ । सु॒ऽदे॒व्यंम् । ताभिः॑ । ऊँ॒ इतिं । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१९

याभिः । पत्नीः । विऽमदाय । निऽऊहथुः । आ । घ । वा । याभिः । अरुणीः । अशिक्षतम् ।

याभिः । सुऽदासे । ऊहथुः । सुऽदेव्यम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१९

हे अश्विनौ “विमदाय एतन्नाम्ने ऋषये “याभिः युष्मदीयाभिः ऊतिभिः “पत्नीः भार्याः पुरुमित्रस्य दुहितरं “न्यूहथुः नितरां युवां प्रापितवन्तौ । “ध इति पादपूरणः ।

तथा “याभिः ऊतिभिः “अरूणीः अरुणवर्णाः आरोचमाना गाः “आ आभिमुख्येन अशिक्षतम् अदत्तम् । तथा पिजवनपुत्राय “सुदासे कल्याणदानाय राज्ञे “सुदेव्यं प्रशस्तं धनं “याभिः ऊतिभिः “ऊहथुः प्रापितवन्तौ । ताभिरित्यादि गतम् ॥ पत्नीः । अमो व्यत्ययेन शसादेशः । न्यूहथुः । वह प्रापणे'। अथुसि यजादित्वात् संप्रसारणम् । द्विर्वचनादि । सुदासे । शोभनं ददातीति सुदाः । असुन् । सुदेव्यम् । दिगादित्वाद्यत् (पा. सू. ४. ३. ५४ )। तित्स्वरितम् ' इति स्वरितत्त्वम् ॥

याभि॒: शंतांती॒ भवंथो द॒दाशुषें भु॒ज्युं याभि॒रवंथो॒ याभि॒रध्रिंगुं ।

ओ॒म्यावंतीं सु॒भरांमृ॒तस्तु॒भं ताभिंरू॒ षु ऊ॒तिभिंरश्वि॒ना गंतं ॥२०

याभिः॑ । शन्ता॑ती॒ इति॒ शम्ऽता॑ती । भव॑थः । द॒दा॒शुषे॑ । भु॒ज्युम् । याभिः॑ । अव॑थः । याभिः॑ । अध्रिं॑ऽगुम् ।

ओ॒म्याऽव॑तीम् । सु॒ऽभरा॑म् । ऋ॒त॒ऽस्तुभ॑म् । ताभिः॑ । ऊ॒ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥२०

याभिः । शन्ताती इति शम्ऽताती । भवथः । ददाशुषे । भुज्युम् । याभिः । अवथः । याभिः । अध्रिऽगुम् ।

ओम्याऽवतीम् । सुऽभराम् । ऋतऽस्तुभम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२०

हे अश्विनौ “ददाशुषे हवींषि दत्तवते यजमानाय "याभिः ऊतिभिः “शंताती सुखस्य कर्तारौ “भवथः । “याभिः च ऊतिभिः “भुज्युं तुग्रस्य पुत्रम् “अवथः । “याभिः च “अध्रिगुम् । अधिगुर्देवानां शमिता । ' अध्रिगुश्चापापश्च उभौ देवानां शमितारौ ' (तै. ब्रा. ३. ६. ६. ४ ) इति श्रुतेः ।

अपि च “ऋतस्तुभम्। ऋतं सत्यं स्तोभत्युच्चारयतीति ऋतस्तुप् । एतत्संज्ञमृषिम् “ओम्यावतीम् । ओम्या इति सुखनाम । तद्युक्तां “सुभरां सुखेन भरणीयाम् इषं याभिः ऊतिभिः प्रापयथः। “ताभिः सर्वाभिः “ऊतिभिः सहास्मानप्यागच्छतम् ॥ शंताती। ‘शिवशमरिष्टस्य करे' (पा. सू. ४. ४. १४३ ) इति तातिल्प्रत्ययः । ‘लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । ददाशुषे । “दा दाने '। लिटः क्वसुः । ‘वसोः संप्रसारणम्' इति संप्रसारणम् । “शासिवसिघसीनां च ' इति षत्वम् ॥ ॥ ३६ ॥

याभिः॑ कृ॒शानु॒मसं॑ने दुव॒स्यथो॑ ज॒वे याभि॒र्यूनो॒ अर्वं॑त॒मावं॑तं ।

मधुं॑ प्रि॒यं भं॑रथो॒ यत्स॒रड्भ्य॒स्ताभिं॑रू॒ षु ऊ॒तिभिं॑रश्वि॒ना गं॑तं ॥२१

याभिः॑ । कृ॒शानु॑म् । अस॑ने । दु॒व॒स्यथः॑ । ज॒वे । याभिः॑ । यूनः॑ । अर्व॑न्तम् । आव॑तम् ।

मधु॑ । प्रि॒यम् । भ॒र॒थ॒ः । यत् । स॒रट्ऽभ्यः॑ । ताभिः॑ । ऊ॒ँ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥२१

याभिः । कृशानुम् । असने । दुवस्यथः । जवे । याभिः । यूनः । अर्वन्तम् । आवतम् ।

मधु । प्रियम् । भरथः । यत् । सरट्ऽभ्यः । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२१

स्वानादिषु सोमपालेषु' मध्ये कृशानुरेकः सोमपालः । तथा च तैत्तिरीयकं- हस्त सुहस्त कृशानवेते वः सोमक्रयणाः ' (तै. सं. १. २.७) इति । तं “कृशानुम् “असने। इषवोऽस्यन्तेऽस्मिन्नित्यसनः संग्रामः । तस्मिन् संग्रामे हे अश्विनौ “याभिः ऊतिभिः दुवस्यथः रक्षथः ।

तथा “याभिः च “जवे वेगे प्रवृत्तं “यूनः तरुणस्य पुरुकुत्सस्य “अर्वन्तम् अश्वम् “आवतम् अरक्षतम् । अपि च “यत् “मधु क्षौद्रं “प्रियं सर्वेषामनुकूलवेद्यं तत् “सरड्भ्यः मधुमक्षिकाभ्यः याभिः च ऊतिभिः "भरथः संपादयथः । “ताभिः सर्वाभिः “ऊतिभिः सहास्मानप्यागच्छतम् ॥ असने । ‘असु क्षेपणे ' । ' करणाधिकरणयोश्च ' इति अधिकरणे ल्युट् । सरड्भ्यः । ‘सृ गतौ । सर्तेररटिः ।।

याभि॒र्नरं॑ गोषु॒युधं॑ नृ॒षाह्ये॒ क्षेत्र॑स्य सा॒ता तन॑यस्य॒ जिन्व॑थः ।

याभी॒ रथाँ॒ अव॑थो॒ याभि॒रर्व॑त॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना गं॑तं ॥२२

याभिः॑ । नर॑म् । गो॒षु॒ऽयुध॑म् । नृ॒ऽसह्ये॑ । क्षेत्र॑स्य । सा॒ता । तन॑यस्य । जिन्व॑थः ।

याभिः॑ । रथा॑न् । अव॑थः । याभिः॑ । अर्व॑तः । ताभिः॑ । ऊं॒ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥२२

याभिः । नरम् । गोषुऽयुधम् । नृऽसह्ये । क्षेत्रस्य । साता । तनयस्य । जिन्वथः ।

याभिः । रथान् । अवथः । याभिः । अर्वतः । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२२

हे अश्विनौ “गोषुयुधं गोविषयं युद्धं कुर्वन्तं “नरं यज्ञस्य नेतारं यजमानं “याभिः ऊतिभिः “नृषाह्ये नृभिः सोढव्ये संग्रामे “जिन्वथः प्रीणयथः रक्षथः इत्यर्थः । तथा “क्षेत्रस्य गृहादिरूपस्य । तनयशब्दो धनवाची । “तनयस्य धनस्य च “साता सातये संभजनार्थं "याभिः ऊतिभिः यजमानं

रक्षथ:,। 'याभिः च यजमानानां “रथान् रक्षथः । तदीयान् “अर्वतः अश्वांश्च याभिः “अवथः । “ताभिः सर्वाभिः “ऊतिभिः सहास्मानप्यागच्छतम् ॥ गोषयुधम् । 'युध संप्रहारे ' । गोषु युध्यते इति गोषुयुत् । तत्पुरुषे कृति बहुलम्' इति अलुक् । नृषाह्ये । ' षह मर्षणे '। ‘शकिसहोश्च' इति यत् । अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । कृदुत्तरपदप्रकृतिस्वरत्वम् । साता । ' वन षण संभक्तौ । भावे क्तिन् । ‘जनसनखनां सञ्झलोः ' इति आत्वम् । ‘ऊतियूति' इत्यादिना क्तिन उदात्तत्वं निपातितम् ।' सुपां सुलुक् ' इति चतुर्थ्यां डादेशः । जिन्वथः । जिविः प्रीणनार्थः । भौवादिकः । इदित्त्वात् नुम् । रथान् ।' दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । ‘आतोऽटि नित्यम्' इति सानुनासिक आकारः ।।

याभि॒: कुत्सं॑मार्जुने॒यं शं॑तक्रतू॒ प्र तु॒र्वीतिं॒ प्र चं

द॒भीति॒मावं॑तं ।

याभि॑र्ध्व॒सं॑तिं॑ पुरु॒षं॑ति॒मावं॑त॒ं ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना गं॑तं ॥२३

याभिः॑ । कुत्सं॑म् । आ॒र्जु॒ने॒यम् । श॒त॒क्र॒तू॒ इति॑ शतऽक्रतू । प्र । तु॒र्वीतिं॑म् । प्र । च॒ । द॒भीतिं॑म् । आवं॑तम् ।

याभिः॑ । ध्व॒सन्तिं॑म् । पु॒रु॒ऽसन्तिं॑म् । आवं॑तम् । ताभिः॑ । ऊ॒ं इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥२३

याभिः । कुत्सम् । आर्जुनेयम् । शतक्रतू इति शतऽक्रतू । प्र । तुर्वीतिम् । प्र । च । दभीतिम् । आवतम् ।

याभिः । ध्वसन्तिम् । पुरुऽसन्तिम् । आवतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२३

हे “शतक्रतू बहुविधकर्माणावश्विनौ "आर्जुनेयम् । अर्जुन इतीन्द्रस्य नाम । तथा च वाजसनेयकम् - ’एतद्वा इन्द्रस्य गुह्यं नाम यदर्जुनः' इति । तस्य पुत्रं “कुत्सं "याभिः ऊतिभिः “प्र “आवतं प्रकर्षेणारक्षतम् । तथा “तुर्वीतिं “दभीतिं “च याभिः ऊतिभिः “प्र आवतम् । अपि च “याभिः “ध्वसन्तिम् एतत्संज्ञ “पुरुषन्तिम् एतन्नामानं च ऋषिम् “आवतम् अरक्षतम् । “ताभिः सर्वाभिः “ऊतिभिः सहास्मानपि सुष्ठ्वागच्छतम् ॥ आर्जुनेयम् ।' शुभ्रादिभ्यश्च ' ( पा. सू. ४. १. १२३ ) इति चशब्दोऽनुक्तसमुच्चयार्थं इत्युक्तत्वात् ढक् । तुर्वीतिम् । ' तुर्वी हिंसार्थः । शत्रूंस्तुर्वतीति तुर्वीतिः । औणादिक ईतिप्रत्ययः । दभीतिम् । ‘दम्भु दम्भे'। औणादिकः कीतिप्रत्ययः । ध्वसन्तिम् । ‘ध्वंसु गतौ च ' । औणादिको झिङ्प्रत्ययः। ‘अनिदिताम्' इति नलोपः । ‘झोऽन्तः' । पुरुषन्तिम् । पुरु सनोति ददातीति पुरुषन्तिः । ‘क्तिच्क्तौ

च संज्ञायाम् ' इति क्तिच् ।' न क्तिचि दीर्घश्च' इति अनुनासिकलोपोपधादीर्घयोर्निषेधः ॥

अप्नंस्वतीमश्विना॒ वाचंम॒स्मे कृ॒तं नों दस्रा वृषणा मनी॒षां ।

अ॒द्यू॒त्येऽवंसे॒ नि ह्वंये वां वृ॒धे चं नो भवत॒ं वाजंसातौ ॥२४

अप्नंस्वतीम् । अ॒श्वि॒ना॒ । वाचंम् । अ॒स्मे इतिं । कृ॒तम् । न॒ः । द॒स्रा॒ । वृ॒ष॒णा॒ । म॒नी॒षाम् ।

अ॒द्यू॒त्यें । अवंसे । नि । ह्व॒ये॒ । वा॒म् । वृ॒धे । च॒ । न॒ः । भ॒व॒त॒म् । वाजंऽसातौ ॥२४

अप्नस्वतीम् । अश्विना । वाचम् । अस्मे इति । कृतम् । नः । दस्रा । वृषणा । मनीषाम् ।

अद्यूत्ये । अवसे । नि । ह्वये । वाम् । वृधे । च । नः । भवतम् । वाजऽसातौ ॥२४

हे अश्विनौ “अस्मे अस्माकं “वाचम् “अप्नस्वतीम् । अप्न इति कर्मनाम । विहितैः कर्मभिः संयुक्तां “कृतं कुरुतम् । तथा “नः अस्माकं “मनीषां बुद्धिं हे “वृषणा कामानां वर्षकौ “दस्रा शत्रूणामुपक्षपयितारावश्विनौ वेदार्थज्ञानसमर्थां कुरुतम् । अपि च यस्मात् युवामेवंगुणविशिष्टौ तस्मात् “वां युवाम् “अवसे रक्षणाय “नि “ह्वये नितरामाह्वये । कदा । “अद्यूत्ये द्योतनरहिते प्रकाशनरहिते रात्रेः पश्चिमे यामे । तस्मिन् काले हि प्रातरनुवाकाश्विनशस्त्रयोरिदं सूक्तं पठ्यते । आहूतौ “च युवां “वाजसातौ वाजस्यान्नस्य संभजने । यद्वा । संग्रामनामैतत् । संग्रामे “नः अस्माकं "वृधे वर्धनाय “भवतम् ॥ अप्नस्वतीम् । ‘आपः कर्माख्यायां ह्रस्वो नुट् च वा' इति असुन् नुडागमश्च । तदस्यास्ति' इति मतुप् ।

‘मादुपधायाः' इति मतुपो वत्वम् । तसौ मत्वर्थे ' इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः । अस्मे । 'सुपां सुलुक् ' इति षष्ठ्याः शेआदेशः । कृतम् । करोतेर्लोटि ‘बहुलं छन्दसि । इति विकरणस्य लुक् । अद्यूत्ये । ‘द्युत दीप्तौ' ।' ऋहलोर्ण्यत्' इति भावे ण्यत् । वर्णव्यापत्त्या ऊकारः । द्यूत्यं प्रकाशनमस्मिन्नास्तीति बहुव्रीहौ व्यत्ययेनान्तस्वरितत्वम् । नि ह्वये । निसमुपविभ्यो ह्वः' इति आत्मनेपदम् । वृधे । “वृधु वृद्धौ'। संपदादिलक्षणो भावे क्विप् । 'सावेकाचः० इति विभक्तेरुदात्तत्वम् ॥

द्युभि॑र॒क्तुभिः॒ परि॑ पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः ।

तन्नो॑ मि॒त्रो वरु॑णो मामहंता॒मदि॑तिः॒ सिंधु॑ः पृथि॒वी उ॒त द्यौः ॥२५

द्युऽभिः॑ । अ॒क्तुऽभिः॑ । परिं॑ । पा॒त॒म् । अ॒स्मान् ।
अरिं॑ष्टेभिः । अ॒श्वि॒ना॒ । सौभं॑गेभिः ।

तत् । न॒ः । मि॒त्रः । वरुं॑णः । म॒म॒ह॒न्ता॒म् । अदिं॑तिः ।
सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥२५

द्युऽभिः । अक्तुऽभिः । परि । पातम् । अस्मान् ।
अरिष्टेभिः । अश्विना । सौभगेभिः ।

तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः ।
सिन्धुः । पृथिवी । उत । द्यौः ॥२५

हे अश्विनौ “द्युभिः दिवसैः "अक्तुभिः रात्रिभिश्च "अस्मान् स्तोतॄन् “परि “पातं परितो रक्षतं सर्वदास्मान् रक्षतमित्यर्थः । तथा “अरिष्टेभिः अहिंसितैः “सौभगेभिः सुभगत्वैः सुभगत्वापादकैर्धनैः अस्मान् रक्षतम् । यस्माभिः प्रार्थितं “नः अस्मदीयं “तत् मित्रादयः

षड्देवताः “ममहन्तां पूजयन्तु । उतशब्दः समुच्चये ॥ द्युभिः । ‘दिव उत्' इति उत्वम् । “ दिवो झल्' ( पा. सू. ६. १. १८३ ) इति ‘सावेकाचः° ' इति प्राप्तस्य विभक्त्युदात्तत्वस्य प्रतिषेधः । अरिष्टेभिः । ‘रिष हिंसायाम् । निष्ठा ' इति क्तः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। 'बहुलं छन्दसि इति भिसः ऐसभावः । अश्विना । ‘सुपां सुलुक्' इति विभक्तेः आकारः । ‘आमन्त्रितस्य च ' इति सर्वानुदात्तत्वम् । सौभगेभिः। शोभनो भगः श्रीर्यस्यासौ सुभगः । तस्य भावः सौभगम् । ‘सुभगान्मन्त्रे' इत्युद्गात्रादिषु पाठात् अञ्प्रत्ययः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ' इति उभयपदवृद्धिर्न भवति, तस्याः ‘सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति विकल्पितत्वात् । पूर्ववत् ऐसभावः । ‘ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् ॥ ॥ ३७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क भूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके सप्तमोऽध्यायः समाप्तः ।

## मण्डल

### १

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |

कामयितव्यं “तत् कर्म “शंस्यम् अस्माभिः प्रशंसनीयं “राध्यम् आराधनीयं “च । किं पुनस्तत्कर्म । “विद्वांसा जानन्तौ युवां "निधिमिव निक्षिप्तं धनमिव "अपगूळ्हम् अरण्ये निर्जने देशे कूपमध्ये असुरैः निगूढं “वन्दनाय वन्दनमृषिं “दर्शतात् अध्वगैः पिपासुभिर्द्रष्टव्यात् कूपात् "उत् “ऊपथुः उदहार्ष्टम् । एवं “यत् एतत् कूपादुद्धरणं तदित्यर्थः ॥ शंस्यम् । 'शंसु स्तुतौ । अस्मात् ण्यन्तात् ' अचो यत्' इति यत् ।' यतोऽनावः' इत्याद्युदात्तत्वम् । अभिष्टिमत् । अभिपूर्वात् “इष गतौ' इत्यस्माद्भावे क्तिन् ।' मन्त्रे वृष ' इति क्तिन उदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । शकन्ध्वादित्वात् पररूपत्वम् । तादौ च ' इति तु गतिस्वरस्य सर्व विधीनां छन्दसि विकल्पितत्वादप्रवृत्तिः । ततो मतुप् । अन्तोदात्तादुत्तरस्य तस्य ‘ह्रस्वनुड्भ्याम्' इत्युदात्तत्वम् । वरूथम् । ‘जॄवृञ्भ्यामूथन् । विद्वांसा। ‘सुपां सुलुक्' इति विभक्तेराकारः। अपगूळ्हम् । ‘गुहू

संवरणे ' । कर्मणि निष्ठा ।' यस्य विभाषा' इति इट्प्रतिषेधः । ढत्वधत्वष्टुत्वढलोपदीर्घाः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । दर्शतात् । 'भृमृदृशि° ' इत्यादिना अतच्। ऊपथुः। 'डुवप् बीजतन्तुसंताने'। लिटि अथुसि यजादित्वात् संप्रसारणम् । द्विर्वचनादि। वन्दनाय । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी ॥

तद्वां नरा स॒नये॒ दंसं उ॒ग्रमा॒विष्कृंणोमि तन्य॒तुर्न वृ॒ष्टिं ।

द॒ध्यङ् ह॒ यन्मध्वांथर्व॒णो वा॒मश्वंस्य शी॒र्ष्णा प्र यदींमु॒वाचं ॥१२

तत् । वा॒म् । न॒रा॒ । स॒नयें । दंसः॑ । उ॒ग्रम् । आ॒विः । कृ॒णो॒मि॒ । त॒न्य॒तुः । न । वृ॒ष्टिम् ।

द॒ध्यङ् । ह॒ । यत् । मधु॑ । आ॒थ॒र्व॒णः । वा॒म् । अश्व॑स्य । शी॒र्ष्णा । प्र । यत् । ई॒म् । उ॒वाच॑ ॥१२

तत् । वाम् । नरा । सनये । दंसः । उग्रम् । आविः । कृणोमि । तन्यतुः । न । वृष्टिम् ।

दध्यङ् । ह । यत् । मधु । आथर्वणः । वाम् । अश्वस्य । शीर्ष्णा । प्र । यत् । ईम् । उवाच ॥१२

अत्रेयमाख्यायिका । इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदि इमाम् अन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच । ततोऽश्विनौ अश्वस्य शिरश्छित्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्राश्व्यं शिरः प्रत्यधत्ताम् । तेन च दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास । तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत् । अथाश्विनौ तस्य स्वकीयं मानुषं शिरः

प्रत्यधत्तामिति शाट्यायनवाजसनेययोः प्रपञ्चेनोक्तम् । तदेतत्प्रतिपाद्यते । हे “नरा नरौ अश्विनौ "वां युवयोः संबन्धि उग्रम् उद्गूर्णमन्यैर्दुःशकं “दंसः । कर्मनामैतत् । युवाभ्यां पुरा कृतं “तत् कर्म “सनये धनलाभार्थम् “आविष्कृणोमि प्रकटीकरोमि । तत्र दृष्टान्तः। “तन्यतुः “न यथा मेघस्थः शब्दः “वृष्टिं मेघान्तर्वर्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत् । किं तत्कर्म । अथर्वणः पुत्रः “दध्यङ् एतत्संज्ञः ऋषिः “अश्वस्य “शीर्ष्णा युष्मत्सामर्थ्येन प्रतिहितेन शिरसा “वां युवाभ्याम् “ईम् इमां मधुविद्यां “यत् “ह यदा खलु “प्र “उवाच प्रोक्तवान् । तदानीमाश्वस्य शिरसः संधानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसंधानलक्षणं च “यत् भवदीयं कर्म तत् आविष्कृणोमीत्यर्थः ॥ सनये ।' षणु दाने ' । ‘खनिकषिकस्यञ्जसिवसिध्वनिस्तनिवनिसनिग्रन्थिचरिभ्यश्च' ( उ. सू. ४. ५७९ ) इति इप्रत्ययः । तन्यतुः । ‘तनु विस्तारे'। ऋतन्यञ्जि०' ( उ. सू. ४. ४४२ ) इत्यादिना

यतुच्। यद्वा । स्तन शब्दे'। बाहुलकात् यतुच् । छान्दसः सलोपः। वृष्टिम् । वृष्यते सिच्यते अनेनेति वृष्टिः । ‘मन्त्रे वृष०' इत्यादिना क्तिन उदात्तत्वम् । आथर्वणः । अपत्यार्थे अणि 'अन्' (पा. सू. ६. ४. १६७) इति प्रकृतिभावात् टिलोपाभावः । शीर्ष्णा ।' शीर्षश्छन्दसि' (पा. सू. ६, १. ६० ) इति शिरःशब्दपर्यायः शीर्षञ्शब्दोऽन्तोदात्तो निपात्यते। अल्लोपे सति उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

अजो॑हवीन्नासत्या क॒रा वां॑ म॒हे याम॑न्पुरुभुजा॒ पुरं॑धिः ।

श्रु॒तं तच्छासु॑रिव वध्रिम॒त्या हिर॑ण्यहस्तमश्विनावदत्तं ॥१३

अजो॑हवीत् । ना॒स॒त्या॒ । क॒रा । वा॒म् । म॒हे । याम॑न् । पु॒रु॒ऽभु॒जा॒ । पुर॑म्ऽधिः ।

श्रु॒तम् । तत् । शासुः॑ऽइव । व॒ध्रि॒ऽम॒त्याः । हिर॑ण्यऽहस्तम् । अ॒श्वि॒नौ॒ । अ॒द॒त्त॒म् ॥१३

अजोहवीत् । नासत्या । करा । वाम् । महे । यामन् । पुरुऽभुजा । पुरम्ऽधिः ।

श्रुतम् । तत् । शासुःऽइव । वध्रिऽमत्याः । हिरण्यऽहस्तम् । अश्विनौ । अदत्तम् ॥१३

वध्रिमती नाम कस्यचिद्राजर्षेः पुत्री नपुंसकभर्तृका । सा पुत्रलाभार्थमश्विनावाजुहाव । तदाह्वानं श्रुत्वाश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः । तदेतदाह । “पुरुभुजा बहूनां पालकौ प्रभूतहस्तौ वा हे नासत्यावश्विनौ “महे महनीये पूजनीये “यामन् यामनि । याति गच्छतीति याम स्तोत्रम् । तस्मिन्सति “करा अभिमतफलस्य कर्तारौ “वां युवां पुरंधिः बहुधीः वध्रिमती । वध्रिः पुत्रोत्पादनाशक्तः पण्डकः । तद्वती एतत्संज्ञा राजपुत्री “अजोहवीत् । पुनः

पुनः स्तुत्या पुत्रलाभार्थम् आहूतवती । युवां च "वध्रिमत्याः तत् "आह्वानं "श्रुतम् अशृणुतम् । तत्र दृष्टान्तः। "शासुरिव । यथा शासुः आचार्यस्य वचनं शिष्योऽवहितः सन् ऐकाग्र्येण शृणोति तद्वत् ।श्रुत्वा च हे "अश्विनौ तस्यै "हिरण्यहस्तं सुवर्णमयपाणिं हितरमणीयपाणिं वा एतत्संज्ञं पुत्रम् "अदत्तं प्रयच्छतम् ॥ अजोहवीत् । ह्वयतेर्यङ्लुगन्तात् लङ्। यङो वा' इति तिप ईडागमः । करा । करोतेः पचाद्यच् । 'सुपां सुलुक्°' इति विभक्तेः आकारः । यामन् । 'अतो मनिन्क्वनिब्वनिपश्च' इति मनिन् ।' सुपां सुलुक्' इति सप्तम्या लुक् । श्रुतम् । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । शासुः । शास्तुः । 'शासु अनुशिष्टौ । 'शंसिशसिशासि° '(उ. सू. २. २५० ) इत्यादिना संज्ञायां तृन् । इडभावः । छान्दसस्तलोपः ॥

आ॒स्नो वृक॑स्य॒ वर्ति॑काम॒भीके॑ यु॒वं न॑रा नासत्यामुमुक्तं ।

उ॒तो क॒विं पु॑रुभुजा यु॒वं ह॒ कृप॑माणमकृणुतं वि॒चक्षे॑ ॥१४

आ॒स्नः । वृक॑स्य । वर्ति॑काम् । अ॒भीके॑ । यु॒वम् । न॒रा॒ । ना॒स॒त्या॒ । अ॒मु॒मु॒क्त॒म् ।

उ॒तो इति॑ । क॒विम् । पु॒रु॒ऽभु॒जा॒ । यु॒वम् । ह॒ । कृप॑माणम् । अ॒कृ॒णु॒त॒म् । वि॒ऽचक्षे॑ ॥१४

आस्नः । वृकस्य । वर्तिकाम् । अभीके । युवम् । नरा । नासत्या । अमुमुक्तम् ।

उतो इति । कविम् । पुरुऽभुजा । युवम् । ह । कृपमाणम् । अकृणुतम् । विऽचक्षे ॥१४

वर्तिका चटकसदृशस्य पक्षिणः स्त्री । तामरण्ये वर्तमानेन शुना ग्रस्तां पुरा किल अश्विनौ अमोचयताम् । तदेतदाह । हे “नरा नेतारौ नासत्यावश्विनौ "युवं युवाम् “अभीके अभिगते वृकवर्तिकयोः संग्रामे “वृकस्य विकर्तकस्य शुनः आस्नः आस्यात् “वर्तिकां चटकसदृशीम् “अमुमुक्तम् अमोचयतम्। यास्कस्त्वाह । पुनःपुनर्वर्तते प्रतिदिवसमावर्तते इति वर्तिका उषाः। तां वृकेण आवरकेण सर्वजगत्प्रकाशेनाच्छादयित्रा सूर्येण ग्रस्तां तदीयमुखादश्विनावमुञ्चतामिति । “उतो अपि च “पुरुभुजा महाबाहू प्रभूतहस्तौ वा “युवं “ह युवां खलु “कृपमाणं स्तुवन्तं "कविम् एतत्संज्ञमन्धमृषिं “विचक्षे विशेषेण द्रष्टुं समर्थम् “अकृणुतम् अकुरुतम् ।। आस्नः। ‘पद्दन्' इत्यादिना आस्यस्य" आसन्नादेशः । ‘अल्लोपोऽनः इति अकारलोपे उदात्तनिवृत्तिस्वरेण ‘ऊडिदम्' इति विभक्तेरुदात्तत्वम् । अमुमुक्तम् । मुचेरन्तर्भावितण्यर्थात् लङि ‘बहुलं छन्दसि' इति विकरणस्य श्लुः। कृपमाणम् ।

कृपिः स्तुतिकर्मा तुदादिषु द्रष्टव्यः । विकरणस्वरे प्राप्ते 'वृषादीनां च' इत्याद्युदात्तत्वम् । विचक्षे । “तुमर्थे सेसेन्' इति सेन्प्रत्ययः । ‘स्कोः संयोगाद्योः' इति सलोपः ॥

चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायां ।

सद्यो जंघामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तं ॥ १५

चरित्रम् । हि । वेःऽइव । अच्छेदि । पर्णम् । आजा । खेलस्य । परिऽतक्म्यायाम् ।

सद्यः । जङ्घाम् । आयसीम् । विश्पलायै । धने । हिते । सर्तवे । प्रति । अधत्तम् ॥१५

चरित्रम् । हि । वेःऽइव । अच्छेदि । पर्णम् । आजा । खेलस्य । परिऽतक्म्यायाम् ।

सद्यः । जङ्घाम् । आयसीम् । विश्पलायै । धने । हिते । सर्तवे । प्रति । अधत्तम् ॥१५

अगस्त्यपुरोहितः खेलो नाम राजा । तस्य संबन्धिनी विश्पला नाम स्त्री संग्रामे शत्रुभिश्छिन्नपादा आसीत्। पुरोहितेनागस्त्येन स्तुतावश्विनौ रात्रावागत्य अयोमयं पादं समधत्ताम् । तदेतदाह। "आजा आजौ संग्रामे अगस्त्यपुरोहितस्य “खेलस्य संबन्धिन्याः विश्पलाख्यायाः “चरित्रं चरणं “वेरिव वेः पक्षिणः “पर्णं पतत्रमिव "अच्छेदि “हि पुरा छिन्नमभूत् खलु । हे अश्विनौ युवामगस्त्येन स्तुतौ सन्तौ “परितक्म्यायाम् । परितक्म्या रात्रिः ।' परित एनां तकति ( निरु. ११. २५) इति यास्कः । एनामुभयतः सूर्यो गच्छतीति तस्यार्थः । रात्रावागत्य “सद्यः तदानीमेव “हिते शत्रुषु निहिते “धने जेतव्ये विषयभूते सति “सर्तवे सर्तुं गन्तुं “विश्पलायै 'आयसीम् अयोमयीं "जङ्घां जङ्घोपलक्षितं पादं “प्रत्यधत्तम् । संधानमेकीकरणं

कृतवन्तावित्यर्थः ॥ चरित्रम् । अर्तिलूधूसूखनसहचर इत्रः' इति करणे इत्रः । आजा । ‘सुपां सुलुक्' इति विभक्तेर्डादेशः । आयसीम् । अयःशब्दाद्विकारार्थे ‘प्राणिरजतादिभ्योऽञ्' (पा. सू. ४. ३. १५४ )। टिड्ढाणञ्” ' इति ङीप्॥ ॥ १० ॥

श॒तं मे॒षान्वृ॒क्यें चक्षदा॒नमृ॒ज्राश्वं॒ तं पि॒तांधं चंकार ।

तस्मां अ॒क्षी नांसत्या वि॒चक्ष॒ आधंत्तं दस्रा भिषजावन॒र्वन् ॥१६

श॒तम् । मे॒षान् । वृ॒क्यें । च॒क्ष॒दा॒नम् । ऋ॒ज्रऽअंश्वम् । तम् । पि॒ता । अ॒न्धम् । च॒का॒र॒ ।

तस्मैं । अ॒क्षी इतिं । ना॒स॒त्या॒ । वि॒ऽचक्षें । आ । अ॒ध॒त्त॒म् । द॒स्रा॒ । भि॒ष॒जौ॒ । अ॒न॒र्वन् ॥१६

शतम् । मेषान् । वृक्ये । चक्षदानम् । ऋज्रऽअश्वम् । तम् । पिता । अन्धम् । चकार ।

तस्मै । अक्षी इति । नासत्या । विऽचक्षे । आ । अधत्तम् । दस्रा । भिषजौ । अनर्वन् ॥१६

वृषागिरः पुत्रः ऋज्राश्वो नाम राजर्षिः। तस्य समीपे अश्विनोर्वाहनभूतो रासभो वृकीभूत्वावतस्थे । स च तस्या आहारार्थमेकोत्तरशतसंख्याकान् पौरजनानां स्वभूतान्मेषान्शकलीकृत्य प्रददौ । ऋज्राश्वः शतमेकं च मेषान्' (ऋ. सं. १. ११७. १८) इति मन्त्रान्तरे दर्शनात् । एवं पौराणामहिते प्रवृत्तं पिता शापेन नेत्रहीनमकरोत् । तेन स्तूयमानावश्विनौ अस्मद्वाहननिमित्तम् अस्य आन्ध्यं जातमिति जानन्तौ तस्मै अक्षिणी प्रायच्छतामिति । तदेतदाह । अत्र तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यः ऋज्राश्वः “शतं शतसंख्याकान् “मेषान् “वृक्ये आत्मना

पोषितायै वृकस्त्रियै शकलीकृत्य प्रादात् "तं "चक्षदानम् । क्षदतिः अत्तिकर्मा अत्र शकलीकरणार्थः । शकलीकृत्य दत्तवन्तम् "ऋज्राश्वं "पिता शापेन "अन्धं दृष्टिहीनं "चकार कृतवान् । हे "नासत्या सत्यस्वभावौ सत्यस्य नेतारौ वा "भिषजौ देवानां वैद्यभूतौ । अश्विनौ वै देवानां भिषजौ ' ( ऐ. ब्रा. १. १८; तै. सं. २. ३. ११) इति श्रुतेः । "दस्रा दर्शनीयौ एतत्संज्ञौ वा हे अश्विनौ "अनर्वन् अनर्वणी द्रष्टव्यं प्रति पितृशापात् गमनरहिते "अक्षी चक्षुषी "विचक्षे विविधं द्रष्टुं समर्थे "तस्मै ऋज्राश्वाय "आधत्तम् व्यधत्तम् अकुरुतम् ॥ वृक्ये । वृकोऽरण्यश्वा । तस्य स्त्री वृकी ।" जातेरस्त्रीविषयात् ' ( पा. सू. ४. १. ६३ ) इति ङीष् । " जसादिषु च्छन्दसि वावचनम् ' इति चतुर्थ्येकवचनस्य आडभावे यणादेशे 'उदात्तस्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । चक्षदानम् । क्षदेर्लिटः कानच् । चित्स्वरः । अक्षी । ई च द्विवचने' (पा. सू. ७. १. ७७ ) इति परत्वात् अक्षशब्दस्य ईकारान्तादेशः । स

चोदात्तः । तस्मिन्कृते ‘सकृद्गतौ विप्रतिषेधे ' ( परिभा. ४०) इति परिभाषया पुनः नुम् न भवति। विचक्षे । चक्षेः संपदादिलक्षणो भावे क्विप् । अनर्वन् । 'ऋ गतौ । अस्मात् ‘अन्येभ्योऽपि दृश्यन्ते' इति दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वात् भावे वनिप् । अर्व गमनं विषयं प्रति एनयोः नास्तीति बहुव्रीहौ नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ‘सुपां सुलुक्' इति द्विवचनस्य लुक् । छान्दो नलोपाभावः ॥

आ वा॒ं रथं॑ दुहि॒ता सूर्य॑स्य॒ कार्ष्मे॑वातिष्ठ॒दर्व॑ता॒ जयं॑ती ।

विश्वे॑ दे॒वा अन्वं॑मन्यंत हृ॒द्भिः समु॑ श्रि॒या नां॑सत्या सचेथे ॥ १७

आ । वा॒म् । रथ॑म् । दु॒हि॒ता । सूर्य॑स्य । कार्ष्मं॑ऽइव । अ॒ति॒ष्ठ॒त् । अर्व॑ता । जय॑न्ती ।

वि॒श्वे॑ । दे॒वाः । अनु॑ । अ॒म॒न्य॒न्त॒ । हृ॒त्ऽभिः॑ । सम् । ऊ॒ं इति॑ । श्रि॒या । ना॒स॒त्या॒ । स॒चे॒थे॒ इति॑ ॥१७

आ । वाम् । रथम् । दुहिता । सूर्यस्य । कार्ष्मऽइव । अतिष्ठत् । अर्वता । जयन्ती ।

विश्वे । देवाः । अनु । अमन्यन्त । हृत्ऽभिः । सम् । ऊं इति । श्रिया । नासत्या । सचेथे इति ॥१७

सविता स्वदुहितरं सूर्याख्यां सोमाय राज्ञे प्रदातुमैच्छत् । तां सूर्यां सर्वे देवा वरयामासुः । ते अन्योन्यमूचुः । आदित्यमवधिं कृत्वा आजिं धावाम। योऽस्माकं मध्ये उज्जेष्यति तस्येयं भविष्यतीति । तत्राश्विनावुदजयताम् । सा च सूर्या जितवतोस्तयोः रथमारुरोह। अत्र 'प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् ' (ऐ. ब्रा. ४. ७) इत्यादिकं ब्राह्मणम् अनुसंधेयम् । इदं चाख्यानं सूर्याविवाहस्य स्तावकेन 'सत्येनोत्तभिता भूमिः' (ऋ. सं. १०.८५, १ )

इति सूक्तेन विस्पष्टयिष्यते । हे अश्विनौ “वां युवयोः “रथं “कार्ष्मेव । कार्ष्मशब्दः काष्ठवाची । यथा काष्ठम् अजिधावनस्य अवधितया निर्दिष्टं लक्ष्यम् आशुगामी कश्चित् सर्वेभ्यो धावद्भ्यः पूर्वं प्राप्नोति एवमेव सर्वेभ्यो देवेभ्यः पूर्वम् “अर्वता शीघ्रमवधिं प्राप्नुवता युष्मदीयेनाश्वेन करणभूतेन युवाभ्यां “जयन्ती जीयमाना “सूर्यस्य सवितुः "दुहिता “आ “अतिष्ठत् आरूढवती । “विश्वे सर्वे इतरे “देवाः एतत् आरोहणस्थानं “हृद्भिः हृदयैः “अन्वमन्यन्त अन्वजानन् । तदानीं हे नासत्यावश्विनौ “श्रिया ऋक्सहस्रलाभरूपया संपदा कान्त्या वा युवां “सं “सचेथे संगच्छेथे ॥ जयन्ती । व्यत्ययेन कर्मणि शतृप्रत्ययः । हृद्भिः। ‘पद्दन्' इत्यादिना हृदयशब्दस्य हृद्भावः । सचेथे । ‘षच समवाये । स्वरितेत्त्वादात्मनेपदम् ॥

यदयां॑तं॒ दिवो॑दासाय व॒र्तिर्भ॒रद्वा॑जायाश्विना॒ हयं॑ता ।

रे॒वदु॑वाह सच॒नो रथो॑ वां वृष॒भश्च॑ शिंशु॒मार॑श्च यु॒क्ता ॥१८

यत् । अयां॑तम् । दिवः॑ऽदासाय । व॒र्तिः । भ॒रत्ऽवा॑जाय ।
अ॒श्वि॒ना॒ । हयं॑न्ता ।

रे॒वत् । उ॒वा॒ह॒ । स॒च॒नः । रथः॑ । वा॒म् । वृ॒ष॒भः । च॒ ।
शिं॒शु॒मारः॑ । च॒ । यु॒क्ता ॥१८

यत् । अयातम् । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय ।
अश्विना । हयन्ता ।

रेवत् । उवाह । सचनः । रथः । वाम् । वृषभः । च ।
शिंशुमारः । च । युक्ता ॥१८

हे अश्विनौ “हयन्ता स्तुतिभिराहूयमानौ युवां “भरद्वाजाय संभ्रियमाणहविर्लक्षणान्नाय यजमानाय "दिवोदासाय एतत्संज्ञाय राजर्षये अभीष्टं फलं दातुं “वर्तिः तदीयं गृहं “यत् यदा “अयातम् अगच्छतं तदानीं “रेवत् धनयुक्तम् अन्नं “वां युवयोः “सचनः सेवन: “रथः “उवाह । तस्मै दिवोदासाय प्रापयामास । अपि च तस्मिन् रथे 'वृषभः अनड्वान् “शिंशुमारः ग्राहः “च परस्परविरुद्धावपि स्वसामर्थ्यप्रकटनाय "युक्ता’ वाहनतया संयुक्तावास्ताम् ॥ दिवोदासाय । ‘दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः' ( का. ६. ३. २१.५ ) इत्यलुक् । ‘दिवोदासादीनां छन्दस्युपसंख्यानम् । इति पूर्वपदाद्युदात्तत्वम् । भरद्वाजाय । भृञ् भरणे । अस्माद्व्यत्ययेन कर्मणि शतृप्रत्ययः। शतुः ‘छन्दस्युभयथा ' इति आर्धधातुकत्वेन लसार्वधातुकानुदात्तत्वाभावात् प्रत्ययाद्युदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हयन्ता । ह्वेञः कर्मणि लटो व्यत्ययेन शतृ । ‘बहुलं छन्दसि ' इति संप्रसारणम् ।

शपि गुणे छान्दसः अयादेशः । रेवत् । रयिशब्दात् मतुप् । ‘रयेर्मतौ बहुलम् ' इति संप्रसारणम् । छन्दसीरः' इति मतुपो वत्वम् । ‘रयिशब्दाच्च ' ( का. ६. १. १७६. १) इति मतुप उदात्तत्वम् । सचनः । षच सेवने '। ‘अनुदात्तेतश्च हलादेः' इति युच् । युक्ता । ‘सुपां सुलु ' इति विभक्तेः आकारः ।।

र॒यिं सुं॒क्ष॒त्रं स्वंप॒त्यमायुः सु॒वीर्यं॑ नासत्या॒ वहंता ।

आ ज॒ह्नावी॒ समंन॒सोप॒ वाजै॒स्त्रिरह्नों भा॒गं दधंतीमयातं ॥ १९

र॒यिम् । सु॒ऽक्ष॒त्रम् । सु॒ऽअ॒प॒त्यम् । आयुः॑ । सु॒ऽवीर्यंम् । ना॒स॒त्या॒ । वहंन्ता ।

आ । जु॒ह्नावीं॑म् । स॒ऽमं॑नसा । उप॑ । वाजैः॑ । त्रिः । अह्नः॑ ।
भा॒गम् । दधं॑तीम् । अ॒या॒त॒म् ॥१९

रयिम् । सुऽक्षत्रम् । सुऽअपत्यम् । आयुः । सुऽवीर्यम् ।
नासत्या । वहन्ता ।

आ । जह्नावीम् । सऽमनसा । उप । वाजैः । त्रिः । अह्नः ।
भागम् । दधतीम् । अयातम् ॥१९

हे नासत्यावश्विनौ “सुक्षत्रं शोभनबलं “रयिं धनं “स्वपत्यं शोभनैः पुत्रादिभिरुपेतं “सुवीर्यं शोभनवीर्योपेतम् “आयुः । अन्ननामैतत् । एवंगुणविशिष्टमन्नं च “वहन्ता धारयन्तौ युवां “समनसा समानमनस्कौ सन्तौ “जह्नावीं जह्नोर्महर्षेः संबन्धिनीं प्रजाम् “आ “अयातम् अभिमुख्येनागच्छतम् । कीदृशीं “वाजैः हविर्लक्षणैरन्नैरुपेताम् । “अह्नः । अत्र अहःशब्देन तत्रानुष्ठेयः सोमयागो लक्ष्यते । तस्य प्रातःसवनादिरूपेण “त्रिः त्रिधा विभक्तं “भागम् अंशं

“दधतीं बिभ्रतीम् । अनुसवनं हविर्भिर्यजमानामित्यर्थः ॥ सुक्षत्रम् । बहुव्रीहौ ‘नञ्सुभ्याम्' इति उत्तरपदान्तोदात्तत्वम् । सुवीर्यम् । ‘वीरवीर्यौ च' इति बहुव्रीहौ उत्तरपदाद्युदात्तत्वम् । जह्नावीम् । जह्नुशब्दात् तस्येदम्' इत्यर्थे अण् । ‘टिड्ढाणञ्' इति ङीप् । जाह्नवी । ह्रस्वदीर्घयोर्विनिमयः पृषोदरादित्वात् । उक्तं च-- ‘वर्णागमो वर्णविपर्ययश्च ' ( का. ६. ३. १०९ ) इति । अत एव मध्योदात्तत्वम् ॥

परिंविष्टं जाहुषं वि॒श्वतः॑ सीं सु॒गेभि॒र्नक्तं॑मूहथू॒ रजों॑भिः ।

वि॒भिं॒दुनां॑ नासत्या॒ रथें॑न॒ वि पर्वं॑ताँ अजर॒यू अं॑यातं ॥२०

परिं॑ऽविष्टम् । जा॒हु॒षम् । वि॒श्वतः॑ । सी॒म् । सु॒ऽगेभिः॑ । नक्तं॑म् । ऊ॒ह॒थुः॒ । रजः॑ऽभिः ।

वि॒ऽभि॒न्दुनां । ना॒स॒त्या॒ । रथेंन । वि । पर्वंतान् । अ॒ज॒र॒यू इतिं । अ॒या॒त॒म् ॥२०

परिऽविष्टम् । जाहुषम् । विश्वतः । सीम् । सुऽगेभिः । नक्तम् । ऊहथुः । रजःऽभिः ।

विऽभिन्दुना । नासत्या । रथेन । वि । पर्वतान् । अजरयू इति । अयातम् ॥२०

जाहुषो नाम कश्चिद्राजा । “विश्वतः सर्वतः “परिविष्टं शत्रुभिः परिवृतं तं राजानं हे नासत्यावश्विनौ "अजरयू जरारहितौ नित्यतरुणौ युवां “विभिन्दुना विशेषेण सर्वस्य भेदकेनात्मीयेन “रथेन "नक्तं रात्रौ "सुगेभिः सुष्ठु गन्तुं शक्यैः “रजोभिः रञ्जकैर्मार्गैः “ऊहथुः तस्मात् शत्रुसमूहान्निरगमयतम् । “सीम् इत्येतत् पादपूरणम्। निर्गतेन तेन सह “पर्वतान् शत्रुभिरारोढुमशक्यान् शिलोच्चयान् “वि “अयातं विशेषेणागच्छतम् ॥ परिविष्टम्

। ‘विश प्रवेशने '। कर्मणि निष्ठा । ‘गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सुगेभिः । ‘सुदुरोरधिकरणे ' इति गमेर्डः । विभिन्दुना । भिदिर् विदारणे'। औणादिक उप्रत्ययो नुमागमश्च । अजरयू । न जरा अजरा तामात्मन इच्छतः। सुप आत्मनः क्यच्' । ‘न च्छन्दस्यपुत्रस्य ' इति इत्वदीर्घयोर्निषेधः । ‘क्याच्छन्दसि ' इति उप्रत्ययः ॥ ॥ ११ ॥

एक॑स्या॒ वस्तो॑रावतं॒ रणा॑य॒ वश॑मश्विना स॒नये॑ स॒हस्रा॑ ।

निर॑हतं दु॒च्छुना॒ इन्द्र॑वन्ता पृथु॒श्रव॑सो वृषणा॒वरा॑तीः ॥२१

एक॑स्याः । वस्तोः॑ । आ॒व॒त॒म् । रणा॑य । वश॑म् । अ॒श्वि॒ना॒ । स॒नये॑ । स॒हस्रा॑ ।

निः । अ॒ह॒त॒म् । दु॒च्छुनाः॑ । इन्द्रं॑ऽवन्ता । पृ॒थु॒ऽश्रवं॑सः ।
वृ॒ष॒णौ॒ । अरा॑तीः ॥२१

एकस्याः । वस्तोः । आवतम् । रणाय । वशम् । अश्विना ।
सनये । सहस्रा ।

निः । अहतम् । दुच्छुनाः । इन्द्रऽवन्ता । पृथुऽश्रवसः ।
वृषणौ । अरातीः ॥२१

हे अश्विनौ “वशम् एतत्संज्ञमृषिम् “एकस्याः “वस्तोः
एकस्याह्नः “रणाय रमणीयाय “सहस्रा सहस्रसंख्याकाय
“सनये धनलाभाय “आवतम् अरक्षतम् । स ऋषिः प्रत्यहं
यथा सहस्रसंख्यं धनं लभते तथा रक्षितवन्तावित्यर्थः ।
अपि च हे “वृषणौ कामानां वर्षितारावश्विनौ “इन्द्रवन्ता
इन्द्रेण संयुक्तौ युवां “दुच्छुनाः दुष्टसुखान् दुःखस्य कर्तॄन्
"पृथुश्रवसः विस्तीर्णयशसः “अरातीः शत्रून् “निरहत
निःशेषेणावधिष्टम् । यद्वा । कानीनस्य पृथुश्रवःसंज्ञस्य

राज्ञः शत्रूनिति योज्यम् ॥ सहस्रा । ‘सुपां सुलुक्' ' इति चतुर्थ्या डादेशः । अहतम् । लङि थसस्तम्। अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । दुच्छुनाः । शुनमिति सुखनाम। दुष्टं सुखं यासां तास्तथोक्ताः । ‘परादिश्छन्दसि बहुलम् इत्युत्तरपदाद्युदात्तत्वम् ॥

श॒रस्य॑ चिदार्च॒त्कस्या॑व॒तादा नी॒चादु॒च्चा च॑क्रथु॒ः पात॑वे॒ वाः ।

श॒यवे॑ चिन्नासत्या॒ शची॑भि॒र्जसु॑रये स्त॒र्यँ॑ पिप्यथु॒र्गां ॥२२

श॒रस्य॑ । चि॒त् । आ॒र्च॒त्ऽकस्य॑ । अ॒व॒तात् । आ । नी॒चात् । उ॒च्चा । च॒क्र॒थु॒ः । पात॑वे । वारिति॒ वाः ।

श॒यवे॑ । चि॒त् । ना॒स॒त्या॒ । शची॑भिः । जसु॑रये । स्त॒र्य॑म् । पि॒प्य॒थु॒ः । गाम् ॥२२

शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वारिति वाः ।

शयवे । चित् । नासत्या । शचीभिः । जसुरये । स्तर्यम् । पिप्यथुः । गाम् ॥२२

“आर्चत्कस्य ऋचत्कपुत्रस्य “शरस्य एतत्संज्ञस्यापि स्तोतुः पिपासितस्य “पातवे पानार्थं “नीचात् नीचीनात् "अवतात् कूपात् “उच्चा, उच्चैरुपरिष्टात् “वाः उदकं हे अश्विनौ युवाम् “आ “चक्रथुः आभिमुख्येन कृतवन्तौ । तथा हे नासत्यावश्विनौ “शचीभिः युष्मदीयैः कर्मभिः परिचरणैः "जसुरये श्रान्ताय “शयवे “चित् शयुनाम्ने ऋषये “स्तर्यं निवृत्तप्रसवां “गाम् अग्निहोत्रार्थस्य पयसो दोग्ध्रीं “पिप्यथुः पयसा युवामापूरितवन्तौ ॥ पातवे ।' पा पाने '।' तुमर्थे सेसेन्° ' इति तवेन्प्रत्ययः । जसुरये । जसु हिंसायाम्'। जसिसहोरुरिन्' (उ. सू. २. २३१ )। स्तर्यम्।

स्तीर्यते आच्छाद्यते प्रसवसामर्थ्याभावेन इति स्तरीः । ‘अवितृस्तृतन्त्रिभ्य ईः ( उ. सू. ३. ४३८ ) इति ईकारप्रत्ययः । ‘वाच्छन्दसि ' इति अमि पूर्वत्वस्य विकल्पितत्वात् अभावे यणादेशः । ‘उदात्तस्वरितयोर्यणः०' इति परस्यानुदात्तस्य स्वरितत्वम् । पिप्यथुः । ‘प्यायी वृद्धौ'। लिटि व्यत्ययेन परस्मैपदम् । लिड्यङोश्च' (पा. सू. ६. १. २९ ) इति पीभावः ॥

अ॒व॒स्य॒ते स्तु॑व॒ते कृ॑ष्णि॒याय॑ ऋजू॒य॒ते ना॑सत्या॒ शची॑भिः ।

प॒शुं न न॒ष्टमि॑व॒ दर्श॑नाय विष्णा॒प्वं॑ ददथु॒र्विश्व॑काय ॥२३

अ॒व॒स्य॒ते । स्तु॒व॒ते । कृ॒ष्णि॒याय॑ । ऋ॒जु॒ऽय॒ते । ना॒स॒त्या॒ । शची॑भिः ।

प॒शुम् । न । न॒ष्टम्ऽइ॑व । दर्श॑नाय । वि॒ष्णा॒प्व॑म् । द॒द॒थुः॒ । विश्व॑काय ॥२३

अवस्यते । स्तुवते । कृष्णियाय । ऋजुऽयते । नासत्या । शचीभिः ।

पशुम् । न । नष्टम्ऽइव । दर्शनाय । विष्णाप्वम् । ददथुः । विश्वकाय ॥२३

“अवस्यते अवनं रक्षणमात्मन इच्छते । “स्तुवते स्तुतिं कुर्वते "कृष्णियाय । कृष्णो नाम कश्चित् । तस्य पुत्राय “ऋजूयते आर्जवमिच्छते "विश्वकाय एतत्संज्ञाय ऋषये हे नासत्यौ युवां “शचीभिः आत्मीयैः कर्मभिः “विष्णाप्वं नाम विनष्टं पुत्रं “दर्शनाय दर्शनार्थं “ददथुः दत्तवन्तौ । तत्र दृष्टान्तः । “पशुं न “नष्टमिव । एक उपमार्थीयः पूरकः । यथा कश्चिद्विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत् ॥ अवस्यते । अवःशब्दात् “ सुप आत्मनः क्यच् '।

शतुरनुमः' इति विभक्तेरुदात्तत्वम् । कृष्णियाय ।
कृष्णशब्दादपत्यार्थे छान्दसो घच् ॥

दश॒ रात्री॒रशिं॑वेना॒ नव॒ द्यूनवं॑नद्धं श्नथि॒तम॒प्स्वं१॒॑तः ।

विप्रुं॑तं रे॒भमु॒दनि॒ प्रवृं॑क्त॒मुन्निं॑न्यथुः॒ सोमं॑मिव स्रु॒वेणं ॥२४

दशं । रात्रीः॑ । अशिं॑वेन । नवं । द्यून् । अवं॑ऽनद्धम् ।
श्न॒थि॒तम् । अ॒प्ऽसु । अ॒न्तरिति॑ ।

विऽप्रुं॑तम् । रे॒भम् । उ॒दनिं॑ । प्रऽवृं॑क्तम् । उत् । नि॒न्य॒थुः॒ ।
सोमं॑म्ऽइव । स्रु॒वेणं ॥२४

दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धम् ।
श्नथितम् । अप्ऽसु । अन्तरिति ।

विऽप्रुतम् । रेभम् । उदनि । प्रऽवृक्तम् । उत् । निन्यथुः । सोमम्ऽइव । स्रुवेण ॥२४

पुरा खलु रेभमृषिं पाशैर्बद्ध्वा असुराः कूपे कस्यचिद्दिवसस्य सायंकाले प्रचिक्षिपुः । स च अश्विनौ स्तुवन् दश रात्रीः नवाहानि च कूपमध्ये तथैवावतस्थे । दशमेऽहनि प्रातः अश्विनौ तं कूपात उदतारयतामिति । तदाह । “अप्सु कूपान्तर्वर्तमानासु “अन्तः मध्ये असुरैः पातितम् “अशिवेन दुःखहेतुना दाम्ना “अवनद्धं बद्धं “श्नथितं शत्रुभिर्हिंसितं "दश “रात्रीः दशसंख्याका निशाः “नव “द्यून नवसंख्याकान्यहानि च । अत्यन्तसंयोगे द्वितीया । एतावन्तं कालं तत्रैव कूपेऽवस्थितम् अत एव “उदनि उदके “विप्रुतं विप्लुतं व्याक्षिप्तसर्वाङ्गं “प्रवृक्तम् । लुप्तोपममेतत् । प्रवृञ्जनेन संतप्तं घर्ममिव व्यथया संतप्यमानम् एवंभूतं “रेभं हे अश्विनौ युवाम् उन्निन्यथुः तस्मात्कूपात् उन्नीतम् उत्तीर्णं कृतवन्तौ । तत्र दृष्टान्तः ।

“सोममिव यथा अग्निहोत्रहोमार्थम् अभिषुतं सोमरसं कूपसदृशे अग्निहोत्रस्थालीमध्ये वर्तमानं "स्रुवेण अध्वर्युः उन्नयति ऊर्ध्वं नयति तद्वत् ॥ अवनद्धम्। ‘णह बन्धने' । कर्मणि निष्ठा । “नहो धः ' ( पा. सू. ८. २. ३४)। ‘झषस्तथोर्धोऽधः' इति निष्ठातकारस्य धत्वम् । ‘गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । श्नथितम् । श्नथ हिंसार्थः'। निष्ठा । विप्रुतम् । ‘प्रुङ् गतौ '। अवनद्धवत् प्रत्ययस्वरौ । कपिलकादित्वात् लत्वविकल्पः । उदनि । ‘पद्दन' इत्यादिना उदकशब्दस्य उदन्भावः ॥

प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः ।

उत पश्यंन्नश्नुवंदीर्घमायुरस्तंमिवेज्जंरिमाणं जगम्यां ॥२५

प्र । वाम् । दंसांसि । अश्विनौ । अवोचम् । अस्य । पतिः । स्याम् । सुऽगवः । सुऽवीरः ।

उ॒त । पश्यं॑न् । अ॒श्नु॒वन् । दी॒र्घम् । आयुः॑ । अस्तं॑म्ऽइव । इत् । ज॒रि॒माणं॑म् । ज॒ग॒म्या॒म् ॥२५

प्र । वाम् । दंसांसि । अश्विनौ । अवोचम् । अस्य । पतिः । स्याम् । सुऽगवः । सुऽवीरः ।

उत । पश्यन् । अश्नुवन् । दीर्घम् । आयुः । अस्तम्ऽइव । इत् । जरिमाणम् । जगम्याम् ॥२५

एवमनेन सूक्तेन अश्विनोर्महिमानं प्रशस्य अधुना मन्त्रद्रष्टा स्वाभीष्टं प्रार्थयते । हे “अश्विनौ “वां युवयोः "दंसांसि पुरा कृतानि कर्माणि "प्र “अवोचम् इत्थम् उक्तवानस्मि । सोऽहं "सुगवः शोभनगोयुक्तः “सुवीरः शोभनवीरश्च भूत्वा “अस्य राष्ट्रस्य “पतिः अधिपतिः “स्यां भवेयम् । "उत अपि च पश्यन् अक्षिभ्यां पश्यन् । उपलक्षणमेतत् । सर्वैरिन्द्रियैः स्वस्वविषयदर्शनसमर्थैः दीर्घं “वर्षशतरूपेण आयतम् “आयुः जीवितं च "अश्नुवन् प्राप्नुवन्नहम्

“अस्तमिव यथा गृहं स्वामी निष्कण्टकं प्रविशति एवं “जरिमाणं जरां “जगम्यां कण्टकराहित्येन प्राप्नुयाम् । वृद्धः सन् चिरकालं निवसेयमित्यर्थः ॥ स्याम् । अस्तेः प्रार्थनायां लिङ् । यासुट् । ‘श्नसोरल्लोपः' इत्यकारलोपः। अश्नुवन् । 'अशू व्याप्तौ । व्यत्ययेन शतृ । जरिमाणम् । ‘जॄष वयोहानौ'। अस्मादौणादिकः इमनिच् । जगम्याम् । गमेः प्रार्थनायां लिङि ‘बहुलं छन्दसि ' इति विकरणस्य श्लुः ॥ ॥ १२ ॥

**टिप्पणी**

अश्विनौ उपरि टिप्पणी

का॒रो॒त॒राच्छ॒फादश्वं॑स्य॒ वृष्ण॑ः श॒तं कुं॒भाँ अं॑सिंचतं॒ सुरां॑याः ॥७

कथनमस्ति यत् अश्वस्य यः शफः अस्ति, तत् एकः कारोतरः, छन्नकः, निःस्यन्दकः अस्ति। अस्मात् कारोतरात् शतानां कुंभपरिमाणानां सुरायाः सिञ्चनं भवति।

पुराणेषु सार्वत्रिकरूपेण आख्यानमस्ति यत् यदा सूर्यः वडवारूपधारिण्या स्वपत्न्या संज्ञा सह मिथुनं करोति एवं तस्याः नासिकायां वीर्यसेकं करोति, तदैव अश्विनोः प्रादुर्भावं भवति। ध्यानसाधकेषु सुविदितमस्ति यत् यदा ध्यानस्य प्रभावं नासिकायाः श्वासवायोरुपरि पतति, तदा देहस्य क्रियाप्रणाल्यां बहवः परिवर्तनाः घटन्ति। नायं अनिवार्यमस्ति यत्

सूर्येणैव संज्ञया सह मिथुनं भविष्यति। सूर्यः यम-नियमस्य पालनकर्ता सामान्यसाधकः अस्ति। श्वासे परिवर्तनस्य प्रभावं अयं अस्ति यत् देहे चेतनायाः गतिः ऊर्ध्वमुखी भवति। ये पादाः सन्ति, तेभ्यः कस्यचित् द्रवस्य निस्सरणं भवति एवं अस्य द्रवस्य गतिः शिरोगामी भवति। अयं प्रतीयते यत् अस्मिन् ऋचायां पादयोः संज्ञा शफौ अस्ति एवं यस्य द्रवस्य निःसरणं भवति, तस्य संज्ञा सुरा अस्ति। केन कारणेन अश्विनोः स्वरूपं द्विवचनीयं अस्ति, अयं अन्वेषणीयं अस्ति।

मन्त्रेषु अश्विन्योः विशिष्टानां कृत्यानां उल्लेखं यत्रतत्रास्ति। सौत्रामणीयागे अश्विन्योः कार्यं सुरायाः शोधनं सोमस्य सीमातः करणमस्ति, अयं प्रतीयते। न सुरा देवानां प्रियमस्ति। किन्तु मनुष्याणां सर्वं व्यापारं सुरायाः माध्यमेन एव भवति। सुरायाः

शोधनस्य नैसर्गिकं प्रयासं अपि भवति। एके मन्त्रे कथनमस्ति - रेतो मूत्रं विजहाति इति। सुरातः रेतसः ग्रहणं, मूत्रस्य विसर्जनं जीवस्य देहे स्वाभाविकरूपेण भवति। यदा सुरायाः गतिः पादेभ्यः शिरं प्रति भवति, अयमपि नैसर्गिकं अस्ति। अस्यां क्रियायां बाह्यप्रयत्नेन परिवर्तनं संभवं नास्ति। किन्तु, सुरायाः पादेभ्यः शिरोपर्यन्तं वहने ये प्रतिरोधाः सन्ति, तेषां अपनयनं साधकस्य कर्तव्यमस्ति। उदाहरणार्थं, एकः प्रतिरोधः ऊरौ अस्ति। अस्मिन्संदर्भे लक्ष्मीनारायणसंहितायां १.५२१ कथनमस्ति - उरू ध्यायेद् गजहस्तसमौ इति । पादेभ्यः शिरोपर्यन्तं वहनं द्रवस्य साधारणं वहनं नास्ति, अपितु नैरन्तर्येण द्रवस्य न्यून एण्ट्रांपी ग्रहणस्य प्रक्रिया अस्ति। शिरः न्यूनतम अव्यवस्थायाः, न्यूनतम एण्ट्रांपेः केन्द्रं अस्ति।

मन्त्रे कथनमस्ति - सोममद्भ्यो व्यपिबच्छन्दसा हंसः शुचिषत् इति।

अद्भ्यः क्षीरं व्यपिबत् क्रुङ्ङागिरसो धिया इति।

अयं संकेतमस्ति यत् सुरायाः शोधनं द्विस्तरयोपरि संभवमस्ति - हंसस्तरे एवं क्रौञ्चस्तरे।

## मण्डल

### १

सूक्त १.१

सूक्त १.२

सूक्त १.३

सूक्त १.४

सूक्त १.५

सूक्त १.६

सूक्त १.३१

सूक्त १.३२

सूक्त १.३३

सूक्त १.३४

सूक्त १.३५

सूक्त १.३६

सूक्त १.६१

सूक्त १.६२

सूक्त १.६३

सूक्त १.६४

सूक्त १.६५

सूक्त १.६६

सूक्त १.९१

सूक्त १.९२

सूक्त १.९३

सूक्त १.९४

सूक्त १.९५

सूक्त १.९६

सूक्त १.१२१

सूक्त १.१२२

सूक्त १.१२३

सूक्त १.१२४

सूक्त १.१२५

सूक्त १.१२६

सूक्त १.१५१

सूक्त १.१५२

सूक्त १.१५३

सूक्त १.१५४

सूक्त १.१५५

सूक्त १.१५६

सूक्त १.१८१

सूक्त १.१८२

सूक्त १.१८३

सूक्त १.१८४

सूक्त १.१८५

सूक्त १.१८६

सूक्तं १.७ | सूक्तं १.३७ | सूक्तं १.६७ | सूक्तं १.९७ | सूक्तं १.१२७ | सूक्तं १.१५७ | सूक्तं १.१८७

सूक्तं १.८ | सूक्तं १.३८ | सूक्तं १.६८ | सूक्तं १.९८ | सूक्तं १.१२८ | सूक्तं १.१५८ | सूक्तं १.१८८

सूक्तं १.९ | सूक्तं १.३९ | सूक्तं १.६९ | सूक्तं १.९९ | सूक्तं १.१२९ | सूक्तं १.१५९ | सूक्तं १.१८९

सूक्तं १.१० | सूक्तं १.४० | सूक्तं १.७० | सूक्तं १.१०० | सूक्तं १.१३० | सूक्तं १.१६० | सूक्तं १.१९०

सूक्तं १.११ | सूक्तं १.४१ | सूक्तं १.७१ | सूक्तं १.१०१ | सूक्तं १.१३१ | सूक्तं १.१६१ | सूक्तं १.१९१

सूक्तं १.१२ | सूक्तं १.४२ | सूक्तं १.७२ | सूक्तं १.१०२ | सूक्तं १.१३२ | सूक्तं १.१६२

सूक्तं १.१३ | सूक्तं १.४३ | सूक्तं १.७३ | सूक्तं १.१०३ | सूक्तं १.१३३ | सूक्तं १.१६३

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|
| १.१४ | १.४४ | १.७४ | १.१०४ | १.१३४ | १.१६४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१५ | १.४५ | १.७५ | १.१०५ | १.१३५ | १.१६५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१६ | १.४६ | १.७६ | १.१०६ | १.१३६ | १.१६६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१७ | १.४७ | १.७७ | १.१०७ | १.१३७ | १.१६७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१८ | १.४८ | १.७८ | १.१०८ | १.१३८ | १.१६८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१९ | १.४९ | १.७९ | १.१०९ | १.१३९ | १.१६९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२० | १.५० | १.८० | १.११० | १.१४० | १.१७० |

# ऋग्वेदः सूक्तं १.११७

← सूक्तं १.११६

ऋग्वेदः - मण्डल १

सूक्तं १.११७

कक्षीवान् दैर्घतमस औशिजः

सूक्तं १.११८ →

## दे. अश्विनौ। त्रिष्टुप्।

---

मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वाम् ।

बर्हिष्मती रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥१॥

यो वामश्विना मनसो जवीयान्रथः स्वश्वो विश आजिगाति ।

येन गच्छथः सुकृतो दुरोणं तेन नरा वर्तिरस्मभ्यं यातम् ॥२॥

ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन ।

मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ॥३॥

अश्वं न गूळ्हमश्विना दुरेवैरृषिं नरा वृषणा रेभमप्सु ।

सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यन्ति पूर्व्या कृतानि ॥४॥

सुषुप्वांसं न निरृतेरुपस्थे सूर्यं न दस्रा तमसि क्षियन्तम् ।

शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय ॥५॥

तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन् ।

शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम् ॥६॥

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।

घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम् ॥७॥

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।

प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥८॥

पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वम् ।

सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं तरुत्रम् ॥९॥

एतानि वां श्रवस्या सुदानू ब्रह्माङ्गूषं सदनं रोदस्योः ।

यद्वां पज्रासो अश्विना हवन्ते यातमिषा च विदुषे च वाजम् ॥१०॥

सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता ।

अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम् ॥११॥

कुह यान्ता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा ।

हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥१२॥

युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः ।

युवो रथं दुहिता सूर्यस्य सह श्रिया नासत्यावृणीत ॥१३॥

युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना ।

युवं भुज्युमर्णसो निः समुद्राद्विभिरूहथुरृज्रेभिरश्वैः ॥१४॥

अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान् ।

निष्टमूहथुः सुयुजा रथेन मनोजवसा वृषणा स्वस्ति ॥१५॥

अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।

वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥१६॥

शतं मेषान्वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा ।

आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे ॥१७॥

शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति ।

जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥१८॥

मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः ।

अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः ॥१९॥

अधेनुं दस्रा स्तर्यं विषक्तामपिन्वतं शयवे अश्विना गाम् ।

युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ॥२०॥

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।

अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥२१॥*

आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् ।

स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वाम् ॥२२॥

सदा कवी सुमतिमा चके वां विश्वा धियो अश्विना प्रावतं मे ।

अस्मे रयिं नासत्या बृहन्तमपत्यसाचं श्रुत्यं रराथाम् ॥२३॥

हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तम् ।

त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदानू ॥२४॥

एतानि वामश्विना वीर्याणि प्र पूर्व्याण्यायवोऽवोचन् ।

ब्रह्म कृण्वन्तो वृषणा युवभ्यां सुवीरासो विदथमा वदेम ॥२५॥

## सायणभाष्यम्

‘मध्वः' इति पञ्चविंशत्यृचं द्वितीयं सूक्तम् । औशिजस्य कक्षीवत आर्षं त्रैष्टुभमाश्विनम् । ‘मध्वः' इत्यनुक्रान्तम् ॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

मध्वः॒ सोमं॑स्याश्विना॒ मदा॑य प्र॒त्नो होता विवा॑सते वां ।

ब॒र्हिष्मं॑ती रा॒तिर्विश्रि॑ता॒ गीरि॒षा यां॑तं नास॒त्योप॒ वाजैः॑ ॥१

मध्वः॑ । सोमं॑स्य । अ॒श्वि॒ना॒ । मदा॑य । प्र॒त्नः । होता॑ । आ । वि॒वा॒स॒ते॒ । वा॒म् ।

ब॒र्हिष्मं॑ती । रा॒तिः । विऽश्रि॑ता । गीः । इ॒षा । या॒त॒म् । ना॒स॒त्या॒ । उपं॑ । वाजैः॑ ॥१

मध्वः । सोमस्य । अश्विना । मदाय । प्रत्नः । होता । आ । विवासते । वाम् ।

बर्हिष्मती । रातिः । विऽश्रिता । गीः । इषा । यातम् । नासत्या । उप । वाजैः ॥१

हे अश्विनौ “मध्वः मधुना माधुर्योपेतेन “सोमस्य सोमेन “मदाय युवयोर्मदार्थं “प्रत्नः चिरंतनः “होता होमनिष्पादको यजमानः “वां युवाम् “आ “विवासते । विवासतिः परिचरणकर्मा । आङ् मर्यादायाम् । यथाशास्त्रं परिचरति । अपि च “रातिः दातव्यं हविः “बर्हिष्मती आस्तीर्णेन बर्हिषा युक्तम् । युष्मदर्थं बर्हिषि आसादितमित्यर्थः । तथा “गीः स्तुतिलक्षणा वाक् च “विश्रिता ऋत्विक्षु समवेता । तैः स्तुतिरपि क्रियते इत्यर्थः । अतो हे नासत्यावश्विनौ “इषा अस्मभ्यं दातव्येनान्नेन “वाजैः बलैश्च सह युवाम् “उप “यातम् अस्मत्समीपं

प्राप्नुतम् ॥ मध्वः । ‘सुपा सुपो भवन्ति । इति तृतीयार्थे षष्ठी ।' जसादिषु च्छन्दसि वावचनम् ' इति • घेर्ङिति' इति गुणाभावे यणादेशः । मदाय । ‘मदी हर्षे ' । “ मदोऽनुपसर्गे ' इति अप् । रातिः । ‘रा दाने ' । कर्मणि क्तिन् । ‘मन्त्रे वृषेष ' इत्यादिना तस्योदात्तत्वम् । विश्रिता । ‘श्रिञ् सेवायाम् ' । कर्मणि निष्ठा ।' गतिरनन्तरः इति गतेः प्रकृतिस्वरत्वम् ।।

यो वांमश्विना मनंसो जवींयान्रथः स्वश्वो विशं आजिगांति ।

येन गच्छंथः सुकृतों दुरोणं तेनं नरा वर्तिरस्मभ्यं यातं ॥२

यः । वाम् । अश्विना । मनंसः । जवींयान् । रथः । सुऽअश्वः । विशः । आऽजिगांति ।

येन॑ । गच्छ॑थः । सु॒ऽकृतः॑ । दु॒रो॒णम् । तेन॑ । न॒रा॒ । व॒र्तिः ।
अ॒स्मभ्य॑म् । या॒त॒म् ॥२

यः । वाम् । अश्विना । मनसः । जवीयान् । रथः ।
सुऽअश्वः । विशः । आऽजिगाति ।

येन । गच्छथः । सुऽकृतः । दुरोणम् । तेन । नरा । वर्तिः ।
अस्मभ्यम् । यातम् ॥२

हे अश्विनौ “वां युवयोः स्वभूतः “मनसो “जवीयान्
मनसोऽप्यतिशयेन वेगवान् “स्वश्वः शोभनाश्वः एवंभूतः
“यः “रथः “विशः प्रजाः "आजिगाति अभिमुख्येन गच्छति
। “येन रथेन “सुकृतः शोभनं यागं कुर्वतो यजमानस्य
“दुरोणं देवयजनलक्षणं गृहं गच्छथः । हे “नरा
नेतारावश्विनौ “तेन रथेन “अस्मभ्यम् अस्माकं “वर्तिः
वर्तनाधिकरणं गृहं यातम् आगच्छतम् ॥ जवीयान् ।
जवोऽस्यास्तीति जववान् । तदस्यास्ति' इति मतुप् । ततः

आतिशायनिकः ईयसुन् । विन्मतोर्लुक् । 'टेः' इति टिलोपः । जिगाति । गा स्तुतौ । जौहोत्यादिकः । गतिकर्मसु पाठादत्र गत्यर्थः ।, 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् ॥

ऋषिं नरा॒वंह॑सः॒ पांच॑जन्यमृ॒बीसा॒दत्रिं॑ मुंचथो ग॒णेन॑ ।

मि॒नंता॒ दस्यो॒रशिं॑वस्य मा॒या अं॑नुपू॒र्वं वृं॑षणा चो॒दयं॑ता ॥३

ऋषिं॑म् । न॒रौ॒ । अंह॑सः । पाञ्च॑ऽजन्यम् । ऋ॒बीसा॑त् । अत्रिं॑म् । मु॒ञ्च॒थः॒ । ग॒णेन॑ ।

मि॒नन्ता॑ । दस्योः॑ । अशिं॑वस्य । मा॒याः । अ॒नु॒ऽपू॒र्वम् । वृ॒ष॒णा॒ । चो॒दयं॑न्ता ॥३

ऋषिम् । नरौ । अंहसः । पाञ्चऽजन्यम् । ऋबीसात् । अत्रिम् । मुञ्चथः । गणेन ।

मिनन्ता । दस्योः । अशिवस्य । मायाः । अनुऽपूर्वम् । वृषणा । चोदयन्ता ॥३

‘हिमेनाग्निम् ' ( ऋ. सं. १. ११६. ८) इत्यनयोक्त एवार्थः पुनः प्रकारान्तरेण अनया प्रतिपाद्यते । अतस्तत्रोक्तं सर्वमत्रापि द्रष्टव्यम् । अक्षरार्थस्तु । हे "नरौ नेतारौ “वृषणा कामानां वर्षितारौ अश्विनौ “पाञ्चजन्यम् । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । तेषु भवम् । स्वर्भानुना गृहीतममुं सूर्यं मोचयन अत्रिः सर्वेषां हिताचरणात् तत्रभवः इत्युच्यते । तादृशम् “ऋषिम् “अंहसः पापरूपात “ऋबीसात् शतद्वारे यन्त्रगृहे अत्रेः पीडार्थम् असुरैः प्रक्षिप्तात् तुषाग्नेः सकाशात् "गणेन इन्द्रियवर्गेण पुत्रपौत्रादिगणेन वा सह मुञ्चथः अमोचयतम् । किं कुर्वन्तौ । “मिनन्ता शत्रून् हिंसन्तौ "दस्योः उपक्षपयितुः “अशिवस्य दुःखकारिणः असुरस्य संबन्धिनीः तस्मिन् अत्रौ प्रयुक्ताः “मायाः च "अनुपूर्वम्

अनुपूर्व्येण “चोदयन्ता प्रेरयन्तौ निवारयन्तौ ॥

पाञ्चजन्यम् । ‘बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम् (का. ४. ३. ५८. १) इति भवार्थे ञ्यः । मिनन्ता । 'मीञ् हिंसायाम् । क्रैयादिकः। लटः शतृ । ‘मीनातेर्निगमे ' इति ह्रस्वत्वम् ॥

अश्वं॒ न गू॒ळ्हम॑श्विना दु॒रेवै॒र्ऋषिं॑ नरा वृषणा रे॒भम॒प्सु ।

सं तं रि॑णीथो॒ विप्रु॑तं॒ दंसो॑भि॒र्न वां॑ जूर्यं॑ति पू॒र्व्या कृ॒तानि॑ ॥ ४

अश्वं॑म् । न । गू॒ळ्हम् । अ॒श्वि॒ना॒ । दु॒ःऽएवैः॑ । ऋषिं॑म् । न॒रा॒ । वृ॒ष॒णा॒ । रे॒भम् । अ॒प्ऽसु ।

सम् । तम् । रि॒णी॒थ॒ः । विऽप्रु॑तम् । दंस॑ःऽभिः । न । वा॒म् । जू॒र्य॒न्ति॒ । पू॒र्व्या । कृ॒तानि॑ ॥४

अश्वम् । न । गूळ्हम् । अश्विना । दुःऽएवैः । ऋषिम् । नरा । वृषणा । रेभम् । अप्ऽसु ।

सम् । तम् । रिणीथः । विऽप्रुतम् । दंसःऽभिः । न । वाम् । जूर्यन्ति । पूर्व्या । कृतानि ॥४

“नरा नेतारौ “वृषणा कामानां वर्षकौ हे अश्विनौ “दुरेवैः दुष्प्रापैरसुरैः "अप्सु कूपस्थेषूदकेषु "गूळ्हं निगूढं निखातं "रेभम् “ऋषिं कूपादुन्नीय “विप्रुतं विश्लिष्टावयवं “तम् अश्वं “न व्याधितमश्वमिव “दंसोभिः आत्मीयैः भैषज्यरूपैः कर्मभिः “सं “रिणीथः समधत्तम् । सर्वैरवयवैरुपेतमकुरुतमित्यर्थः । “वां युवयोः संबन्धीनि “पूर्व्या चिरंतनानि “कृतानि कर्माणि “न जूर्यन्ति न हि जीर्णानि भवन्ति ॥ दुरेवैः । दुरुपसृष्टात् एतेः “ ईषज्जुःसुषु' इति खल् । रिणीथः । ‘री गतिरेषणयोः । क्रैयादिकः । ‘प्वादीनां ह्रस्वः'। जूर्यन्ति। ‘जॄष् वयोहानौ' ।

दैवादिकत्वात् श्यन्! ‘बहुलं छन्दसि' इति उत्वम्। हलि च' इति दीर्घः

सुषुप्वांसं न निर्ऋतेरुपस्थे सूर्यं न दस्रा तमसि क्षियंतं।

शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वंदनाय ॥५

सुसुप्वांसम्। न। निःऽऋतेः। उपऽस्थे। सूर्यम्। न। दस्रा। तमसि। क्षियन्तम्।

शुभे। रुक्मम्। न। दर्शतम्। निऽखातम्। उत्। ऊपथुः। अश्विना। वन्दनाय ॥५

सुसुप्वांसम्। न। निःऽऋतेः। उपऽस्थे। सूर्यम्। न। दस्रा। तमसि। क्षियन्तम्।

शुभे । रुक्मम् । न । दर्शतम् । निऽखातम् । उत् । ऊपथुः । अश्विना । वन्दनाय ॥५

निर्ऋतिरिति भूनाम । “निर्ऋतेः पृथिव्याः “उपस्थे उत्सङ्गे “सुषुप्वांसं सुप्तवन्तं पुरुषमिव कूपमध्ये शयानं “सूर्यं “न सूर्यमिव “तमसि कूपान्तर्गतान्धकारे “क्षियन्तं निवसन्तं सूर्यमिव तेजस्विनमित्यर्थः ६ । “शुभे शोभार्थं निर्मितं “रुक्मं न रोचमानं सुवर्णमयाभरणमिव “दर्शतं दर्शनीयम् एवंगुणविशिष्टं कूपे असुरैः "निखातं "वन्दनाय वन्दनमृषिं हे "दस्रा दर्शनीयावश्विनौ युवाम् "उदूपथुः उद्धृतवन्तौ ॥ सुषुप्वांसम् ।' ञिष्वप् शये '। लिटः क्वसुः । ‘वचिस्वपि ' इत्यादिना संप्रसारणम् । द्विर्वचनादि । उपस्थे । उपपूर्वात् तिष्ठतेः ‘घञर्थे कविधानम् ' इत्यधिकरणे कप्रत्ययः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । वन्दनाय । ‘क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी ॥

॥ १३ ॥

तद्वां नरा॒ शंस्यं॑ पज्रि॒येण॑ क॒क्षीव॑ता नासत्या॒ परिं॑ज्मन् ।

श॒फादश्वं॑स्य वा॒जिनो॒ जना॑य श॒तं कु॒म्भाँ अ॑सिंचत॒ं मधू॑नां ॥ ६

तत् । वा॒म् । न॒रा॒ । शंस्य॑म् । प॒ज्रि॒येण॑ । क॒क्षीव॑ता ।
ना॒स॒त्या॒ । परि॑ऽज्मन् ।

श॒फात् । अश्व॑स्य । वा॒जिनः॑ । जना॑य । श॒तम् । कु॒म्भान् ।
अ॒सि॒ञ्च॒त॒म् । मधू॑नाम् ॥६

तत् । वाम् । नरा । शंस्यम् । पज्रियेण । कक्षीवता ।
नासत्या । परिऽज्मन् ।

शफात् । अश्वस्य । वाजिनः । जनाय । शतम् । कुम्भान् ।
असिञ्चतम् । मधूनाम् ॥६

हे नरा नेतारौ नासत्यावश्विनौ “परिज्मन् परिगमने अभीष्टस्य प्रापणे निमित्तभूते सति "पज्रियेण पज्राणाम् अङ्गिरसां कुले जातेन “कक्षीवता मया "वां युवयोः संबन्धि “तत् कर्म “शंस्यम् प्रकर्षेण शंसनीयम् । तच्छब्दश्रुतेः यच्छब्दाध्याहारः । यत् “जनाय अपेक्षमाणाय पुरुषाय "वाजिनः वेगवतः तदीयस्य “अश्वस्य “शफात्' निर्गतैः "मधूनां मधुभिः शतसंख्याकान् “कुम्भान् “असिञ्चतम् अपूरयतम् । सिञ्चतिरत्र पूरणार्थः । यदेतन्मधुना पूरणं तत् शंस्यम्' इत्यर्थः ॥

यु॒वं न॑रा स्तुव॒ते कृ॑ष्णि॒याय॑ विष्णा॒प्व॑ं ददथु॒र्विश्व॑काय ।

घोषा॑यै चित्पितृ॒षदे॑ दुरो॒णे पति॒ं जूर्य॑न्त्या अश्विनावदत्त॑ं ॥७

यु॒वम् । न॒रा॒ । स्तु॒व॒ते । कृ॒ष्णि॒याय॑ । वि॒ष्णा॒प्व॑म् । द॒द॒थुः॒ । विश्व॑काय ।

घोषांयै । चि॒त् । पि॒तृ॒ऽसदें । दु॒रो॒णे । पतिंम् । जूर्यंन्त्यै । अ॒श्वि॒नौ॒ । अ॒द॒त्त॒म् ॥७

युवम् । नरा । स्तुवते । कृष्णियाय । विष्णाप्वम् । ददथुः । विश्वकाय ।

घोषायै । चित् । पितृऽसदे । दुरोणे । पतिम् । जूर्यन्त्यै । अश्विनौ । अदत्तम् ॥७

हे "नरा नेतारौ अश्विनौ "युवं युवां “स्तुवते स्तोत्रं कुर्वते "कृष्णियाय कृष्णाख्यस्य पुत्राय “विश्वकाय "विष्णाप्वं “ददथुः । विष्णाप्वं नाम विनष्टं पुत्रं दत्तवन्तौ । घोषानाम ब्रह्मवादिनी कक्षीवतो दुहिता । सा कुष्ठिनी सती कस्मैचिद्वराय अदत्ता पितृगृहे निषण्णा जीर्णा आसीत् । सो अश्विनोरनुग्रहात नष्टकुष्ठा सती पतिं लेभे। तदेतदाह । हे “अश्विनौ पित्रा संबद्धे "दुरोणे स्वकीयजनकगृहे कुष्ठरोगेण भर्तारमप्राप्य "पितृषदे पितृसमीपे निषण्णायै

“जूर्यन्त्यै जरां प्राप्नुवत्यै “घोषायै “चित् एतत्संज्ञायै ब्रह्मवादिन्यै अपि रोगोपशमनेन “पतिं भर्तारम् “अदत्तं युवां दत्तवन्तौ ॥ पितृषदे । *षद्लृ विशरणादिषुः । क्विप् च ' इति क्विम्। जूर्यन्त्यै। ‘जॄष् वयोहानौ' । लटः शतृ । दिवादित्वात् श्यन् ।' बहुलं छन्दसि' इति उत्वम् ।' हलि च' इति दीर्घः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् ॥

यु॒वं श्यावा॑य॒ रुश॑तीमदत्तं म॒हः क्षो॒णस्या॑श्विना॒ कण्वा॑य ।

प्र॒वाच्यं॒ तद्वृ॑षणा कृ॒तं वां॒ यन्ना॑र्ष॒दाय॒ श्रवो॑ अ॒ध्यध॑त्तं ॥८

यु॒वम् । श्यावा॑य । रुश॑तीम् । अ॒द॒त्त॒म् । म॒हः । क्षो॒णस्य॑ । अ॒श्वि॒ना॒ । कण्वा॑य ।

प्र॒ऽवाच्य॑म् । तत् । वृ॒ष॒णा॒ । कृ॒तम् । वा॒म् । यत् ।
ना॒र्स॒दाय॑ । श्रवः॑ । अ॒धि॒ऽअध॑त्तम् ॥८

युवम् । श्यावाय । रुशतीम् । अदत्तम् । महः । क्षोणस्य ।
अश्विना । कण्वाय ।

प्रऽवाच्यम् । तत् । वृषणा । कृतम् । वाम् । यत् ।
नार्सदाय । श्रवः । अधिऽअधत्तम् ॥८

हे अश्विनौ “युवं युवां “श्यावाय कुष्ठरोगेण श्यामवर्णाय ऋषये “रुशतीं दीप्तत्वचं स्त्रियम् “अदत्तम् प्रयच्छतम् । अपि च “क्षोणस्य क्षोणाय यः दृष्टिराहित्येन गन्तुमशक्तः सन् एकस्मिन्नेव स्थाने निवसति तस्मै “कण्वाय ऋषये "महः तेजः तैजसं चक्षुरिन्द्रियम् अदत्तमिति शेषः । तथा हे “वृषणा कामानां वर्षितारौ "वां युवयोः “तत् “कृतं कर्म "प्रवाच्यं प्रकर्षेण वाचनीयं शंसनीयम् । “नार्षदाय नृषदः पुत्राय बधिराय ऋषये “श्रवः श्रवणेन्द्रियं “यत् “अध्यधत्तं

दत्तवन्तौ स्थः इति यत् तदित्यर्थः । अपर आह । ब्राह्मण्यस्य परीक्षार्थमसुराः कण्वमृषिं गूढे तमसि निदधुः । अत्रैव स्थितः सन् व्युष्टामुषसं विजानीहि यदि त्वं ब्राह्मणोऽसीति । तमश्विनौ आगत्योचतुः । व्युष्टायां हर्म्यस्य उपरि वीणां वादयन्तौ आवाम् आगमिष्यावः । तं शब्दं श्रुत्वा व्युष्टामुषसं ब्रूहि । तदेतत्प्रतिपाद्यते । हे वृषणा कामानां वर्षितारावश्विनौ वां युवयोः तत्कृतं कर्म प्रवाच्यं प्रशंसनीयं यन्नार्षदाय नृषदः पुत्राय कण्वाय क्षोणस्य । क्षोणः शब्दकारी वीणाविशेषः । महः महतः क्षोणस्य श्रवः शब्दम् अध्यधत्तम् उषसो विज्ञानार्थम् अधिकम् अकुरुतम् ॥ महः । ‘मह पूजायाम्' । अस्मादौणादिकः असिप्रत्ययः । पक्षान्तरे तु महच्छब्दात् षष्ठ्येस्कवचने छान्दसः अल्लोप:।' बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम्। यद्वा । क्विबन्तात् षष्ठ्येकवचनम् । क्षोणस्य । ‘क्षि निवासगत्योः '।' कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट्।

पृषोदरादित्वात् क्षोणभावः । तदुक्तं यास्केन- क्षोणस्य क्षयणस्य ' ( निरु. ६. ६) इति । पक्षान्तरे तु ' टुक्षु शब्दे ' इत्यस्मादौणादिकः नप्रत्ययः । नार्षदाय । 'ऋष्यन्धक ' इति अण् ॥

पु॒रू वपूंस्यश्विना॒ दधा॑ना॒ नि पे॒दवं ऊहथुरा॒शुमश्वं॑ ।

स॒ह॒स्र॒सां वा॒जिन॒मप्रं॑तीतमहि॒हनं॑ श्रव॒स्यं१॒ तरु॑त्रं ॥९

पु॒रु । वपूंसि । अ॒श्वि॒ना॒ । दधा॑ना । नि । पे॒दवें । ऊ॒ह॒थुः॒ । आ॒शुम् । अश्वं॑म् ।

स॒ह॒स्र॒ऽसाम् । वा॒जिनं॑म् । अप्रं॑तिऽइतम् । अ॒हि॒ऽहनं॑म् । श्र॒व॒स्यं॑म् । तरु॑त्रम् ॥९

पुरु । वपूंसि । अश्विना । दधाना । नि । पेदवे । ऊहथुः । आशुम् । अश्वम् ।

सहस्रऽसाम् । वाजिनम् । अप्रतिऽइतम् । अहिऽहनम् । श्रवस्यम् । तरुत्रम् ॥९

हे अश्विनौ "पुरु पुरूणि बहूनि “वर्पांसि । रूपनामैतत् । आत्मीयैः कर्मभिः कृतानि रूपाणि “दधाना धारयन्तौ युवाम् “आशुं शीघ्रगामिनम् “अश्वं “पेदवे पेदुनाम्ने स्तुवते “नि "ऊहथुः नितरां प्रापितवन्तौ दत्तवन्तावित्यर्थः । कीदृशमश्वम् । “सहस्रसां सहस्रसंख्याकस्य धनस्य सनितारं दातारं “वाजिनं बलवन्तम् अत एव “अप्रतीतं शत्रुभिरप्रतिगतम् “अहिहनम् अहीनाम् आगत्य हन्तॄणां शत्रूणां शत्रून्वा हन्तारम् । “श्रवस्यम् । श्रवः श्रवणीयं स्तोत्रम् । तत्र भवम् । स्तुतिविषयमित्यर्थः । “तरुत्रं तरितारम् ॥ वर्पांसि । वृञ् वरणे'।
'वृञ्शीभ्यांरूपस्वाङ्गयोः पुक्च' ( उ. सू. ४. ६४० ) इत्यसुन् पुगागमश्च । दधाना । दधातेर्लटः शानच् । ‘अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । सहस्रसाम् ।' षणु

दाने '। ‘जनसनखन ' इति विट् ।
‘विड्वनोरनुनासिकस्यात्' इति आत्वम् । श्रवस्यम् ।
श्रवःशब्दात् ‘ भवे छन्दसि ' इति यत् । तित्स्वरितः ।
तरुत्रम् । ‘तॄ प्लवनतरणयोः'।' अशित्रादिभ्य इत्रोत्रौ ' ( उ. सू. ४. ६१२ ) इति उत्रप्रत्ययः । व्यत्ययेनाद्युदात्तत्वम् ।
यद्वा । ' ग्रसितस्कभित° ' इत्यादौ निपातनात् तृनन्तात्
तरुतृशब्दात् अमि संज्ञापूर्वकस्य विधेः अनित्यत्वात्
गुणाभावे यण् । नित्स्वरेणाद्युदात्तत्वम् ॥ .

ए॒तानि॑ वां श्र॒व॒स्या॑ सुदानू॒ ब्रह्मा॑ङ्गू॒षं सद॑न॒ं रोद॑स्योः ।

यद्वा॑ प॒ज्रासो॑ अश्विना॒ हव॑न्ते या॒तमि॒षा च॑ वि॒दुषे॑ च॒ वाज॑ ॥ १०

ए॒तानि॑ । वा॒म् । श्र॒व॒स्या॑ । सु॒दा॒नू॒ इति॑ सुऽदानू । ब्रह्म॑ ।
आ॒ङ्गू॒षम् । सद॑नम् । रोद॑स्योः ।

यत् । वा॒म् । प॒ज्रासः॑ । अ॒श्वि॒ना॒ । हव॑न्ते । या॒तम् । इ॒षा । च॒ । वि॒दुषे॑ । च॒ । वाज॑म् ॥१०

एतानि । वाम् । श्रवस्या । सुदानू इति सुऽदानू । ब्रह्म । आङ्गूषम् । सदनम् । रोदस्योः ।

यत् । वाम् । पज्रासः । अश्विना । हवन्ते । यातम् । इषा । च । विदुषे । च । वाजम् ॥१०

हे “सुदानू शोभनदानौ अश्विनौ “वां युवयोः संबन्धीनि “एतानि समनन्तरोक्तानि वीर्याणि “श्रवस्या श्रवणीयानि सर्वैर्ज्ञातव्यानि भवन्ति । तदर्थं “रोदस्योः द्यावापृथिव्यात्मना वर्तमानयोः युवयोः । उक्तं च यास्केन -- तत्कावश्विनौ द्यावापृथिव्यावित्येके ' ( निरु. १२. १ ) इति । तथा च तैत्तिरीयकम्- इमे अश्विना संवत्सरोऽग्निर्वैश्वानरः ' ( तै. सं. ५, ६, ४. १) इति । तयोः युवयोः “सदनं स्तोतृसमीपे निवेशनं प्रसादनहेतुभूतं वा

“आङ्गूषम् आघोषणीयं “ब्रह्म मन्त्ररूपं स्तोत्रं निष्पन्नमिति शेषः । “यत् यदा “पज्रासः अङ्गिरसां गोत्रोत्पन्ना यजमाना हे अश्विनौ “वां युवां “हवन्ते स्तुतिभिः आत्मरक्षणार्थम् आह्वयन्ति तदानीम् “इषा दातव्येनान्नेन सह आ “यातम् आगच्छतं “च “विदुषे युष्मद्विषयं स्तोत्रं जानते मह्यं च “वाजम् अन्नं बलं वा प्रयच्छतमिति शेषः॥ यातम् । चवायोगे प्रथमा ' इति निघातप्रतिषेधः । विदुषे ।' विद ज्ञाने '। ‘विदेः शतुर्वसुः ।। ‘वसोः संप्रसारणम्' इति संप्रसारणम् । शासिवसिघसीनां च ' इति षत्वम् ॥ ॥ १४ ॥

सूनोर्मानेंनाश्विना गृणाना वाजं विप्राय भुरणा रदंता ।

अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतं ॥ ११

सू॒नोः । माने॑न । अ॒श्वि॒ना॒ । गृ॒णा॒ना । वाज॑म् । विप्रा॑य ।
भु॒र॒णा॒ । रद॑न्ता ।

अ॒गस्त्ये॑ । ब्रह्म॑णा । व॒वृ॒धा॒ना । सम् । वि॒श्पला॑म् ।
ना॒स॒त्या॒ । अ॒रि॒णी॒त॒म् ॥११

सूनोः । मानेन । अश्विना । गृणाना । वाजम् । विप्राय ।
भुरणा । रदन्ता ।

अगस्त्ये । ब्रह्मणा । ववृधाना । सम् । विश्पलाम् ।
नासत्या । अरिणीतम् ॥११

“भुरणा भर्तारौ पोषकौ “नासत्या सत्यस्वभावौ हे अश्विनौ “सूनोः कुम्भात् प्रसूतस्य अगस्त्यस्य खेलपुरोहितस्य संबन्धिना “मानेन स्तुत्यस्य परिच्छेदकेन स्तोत्रेण “गृणाना स्तूयमानौ “विप्राय मेधावने भरद्वाजाय ऋषये “वाजम् अन्नं “रदन्ता विलिखन्तौ निष्पादयन्तौ युवां

“विश्पलां संग्रामे छिन्नजङ्घां खेलस्य संबन्धिनीं स्त्रियं “सम् “अरिणीतं पुनः आयस्या जङ्या समयोजयतम् । तृतीयेन पादेन प्रथमपादोक्तोऽर्थो विव्रियते । “अगस्त्ये ऋषौ “ब्रह्मणा मन्त्ररूपेण स्तोत्रेण “ववृधाना प्रवर्धितौ इति ॥ गृणाना । गृ शब्दे'। व्यत्ययेन कर्मणि कर्तृप्रत्ययः । प्वादीनां ह्रस्वः । भुरणा । ‘भुरण धारणपोषणयोः '। कण्ड्वादिः । पचाद्यच् । अतोलोपयलोपौ । ‘सुपां सुलुक्' इति विभक्तेराकारः। आमन्त्रितनिघातः । विप्राय' इत्यस्य भुरणेत्यनेन असामर्थ्यात् न पराङ्गवत्वम् । ववृधाना । वृधेर्लिटः कानच् । संहितायां छान्दसमभ्यासस्य दीर्घत्वम् । तुजादित्वे हि तूतुजान इतिवत् पदकालेऽपि स्यात् । अरिणीतम् । “ री गतिरेषणयोः'। क्रैयादिकः । प्वादीनां ह्रस्वः ॥

कुह॒ यांतां सुष्टु॒तिं का॒व्यस्य॒ दिवों नपाता वृषणा शयु॒त्रा ।

हिरंण्यस्येव कलशं निखांतमुदूंपथुर्दशमे अंश्विनाहंन् ॥१२

कुहं । यान्तां । सुऽस्तुतिम् । काव्यस्यं । दिवः । नपाता ।
वृषणा । शयुऽत्रा ।

हिरंण्यस्यऽइव । कलशंम् । निऽखांतम् । उत् । ऊपथुः ।
दशमे । अश्विना । अहंन् ॥१२

कुह । यान्ता । सुऽस्तुतिम् । काव्यस्य । दिवः । नपाता ।
वृषणा । शयुऽत्रा ।

हिरण्यस्यऽइव । कलशम् । निऽखातम् । उत् । ऊपथुः ।
दशमे । अश्विना । अहन् ॥१२

पुरा खलु उषनसः स्तुति गच्छन्तावश्विनौ मार्गमध्ये कूपे
पतितं रेभं दृष्ट्वा तं कूपादुदतारयताम् । तदानीम्
अश्विभ्यां गन्तव्यं काव्यस्य निवासस्थानम् अजानन्
ऋषिः अश्विनौ पृच्छति। हे “दिवो नपाता द्योतमानस्य

सूर्यस्य पुत्रौ “वृषणा कामाभिवर्षकौ अश्विनौ “कुह कुत्र “शयुत्रा शयने निवासस्थाने वर्तमानस्य “काव्यस्य भार्गवस्य सुष्टुतिं शोभनां स्तुतिं श्रोतुं “यान्ता गच्छन्तौ । यद्वा । शयुत्रा इत्येतत् अश्विनोर्विशेषणम् । शयुनाम्नस्त्रायकौ युवाम् । “हिरण्यस्येव “कलशं यथा हिरण्यपूरितं कलशं भूम्यां निक्षिप्तं सर्वैः दुर्ज्ञातं कश्चिदभिज्ञः उद्धरति एवमसुरैः कूपे “निखातं दश रात्रीः नवाहानि च तत्रैव निवसन्तं रेभमवगत्य “दशमे अहन् अहनि “उदूपथुः कूपात उन्नीतवन्तौ । किं तन्निवासस्थानमिति प्रश्नः । रेभस्य अनुक्तावपि ' दश रात्रीरशिवेन ' ( ऋ. सं. १. ११६. २४ ) इति मन्त्रान्तरसामर्थ्यात् प्रतीतिः । यद्वा । काव्यस्य स्तुतिं प्रति गच्छन्तौ युवां कुह कस्मिन् स्थाने रेभं युवाम् उन्निन्यथुः इति प्रश्नः ॥ कुह ।' वा ह च च्छन्दसि ' इति सप्तम्यर्थे हप्रत्ययः । दिवो नपाता । ‘सुबामन्त्रिते पराङ्गवत्स्वरे' इति पराङ्गवद्भावेन षष्ठ्यन्तस्य आमन्त्रितानुप्रवेशात्

‘आमन्त्रितस्य च' इति पदद्वयसमुदायस्य षाष्ठिकमाद्युदात्तत्वम् । पादादित्वात् आष्टमिकनिघाताभावः । नपात् इति अपत्यनाम । न पातयतीति नपात् । नभ्राण्नपात्' इति नञः प्रकृतिभावः । ‘सुपां सुलुक्' इति विभक्तेराकारः । शयुत्रा । अशित्रादिभ्य इत्रोत्रौ ' इति शीङ उत्रः । यदि अन्तोदात्तता न स्यात् तर्हि एवम् ।। शयुं त्रायेते इति शयुत्रौ । ‘त्रैङ् पालने'।' आदेचः' इति आत्वम् । अतोऽनुपसर्गे कः । अत एव व्युत्पत्त्यनवधारणात् अनवग्रहः । निखातम् । खनु अवदारणे । अस्मात्कर्मणि निष्ठा । ‘यस्य विभाषा ' इति इट्प्रतिषेधः । ‘जनसनखनां सञ्झलोः' इति आत्वम् ।' गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अहन् । ‘सुपां सुलुक्' इति सप्तम्या लुक्। 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेधः॥

यु॒वं च्यवा॑नमश्विना॒ जर॑न्तं॒ पुन॒र्युवा॑नं चक्रथुः॒ शची॑भिः ।

यु॒वो रथं॑ दुहि॒ता सूर्य॑स्य स॒ह श्रि॒या ना॑सत्यावृणीत ॥१३

यु॒वम् । च्यवा॑नम् । अ॒श्वि॒ना॒ । जर॑न्तम् । पुन॒रिति॑ । युवा॑नम् । च॒क्र॒थुः॒ । शची॑भिः ।

यु॒वोः । रथ॑म् । दु॒हि॒ता । सूर्य॑स्य । स॒ह । श्रि॒या । ना॒स॒त्या॒ । अ॒वृ॒णी॒त॒ ॥१३

युवम् । च्यवानम् । अश्विना । जरन्तम् । पुनः । युवानम् । चक्रथुः । शचीभिः ।

युवोः । रथम् । दुहिता । सूर्यस्य । सह । श्रिया । नासत्या । अवृणीत ॥१३

हे अश्विनौ “युवं युवां “शचीभिः आत्मीयैः भैषज्यलक्षणैः कर्मभिः “जरन्तं जीर्यन्तं “च्यवानं स्तुतीनां च्यावयितारम् एतत्संज्ञं ऋषिं “युवानं पुनर्यौवनोपेतं “चक्रथुः कृतवन्तौ । अपि च हे नासत्यौ अश्विनौ “युवोः युवयोः “रथं सूर्यस्य "दुहिता सूर्याख्या “श्रिया सह ऋक्सहस्ररूपया' संपदा कान्त्या वा सह “अवृणीत समभजत आगत्यारूढवतीत्यर्थः । ‘आ वां रथं दुहिता ' ( ऋ. सं. १. ११६. १७ ) इत्यत्र लिखितमाख्यानम् अत्रापि द्रष्टव्यम् ॥ जरन्तम् । “ जॄष् वयोहानौ' । व्यत्ययेन शप् । युवोः । युष्मच्छब्दात् षष्ठीद्विवचने व्यत्ययेन ' योऽचि' इति यत्वाभावे सति ‘शेषे लोपः' इति दकारलोपः। अतो गुणे' इति पररूपत्वम् । ‘एकादेश उदात्तेनोदात्तः'। अवृणीत । ‘वृङ् संभक्तौ ' । क्रैयादिकः ॥

यु॒वं तुग्रा॑य पू॒र्व्येभि॒रेवैः॑ पुनर्म॒न्याव॑भवतं युवाना ।

यु॒वं भु॒ज्युमर्ण॑सो॒ निः स॑मु॒द्राद्विभि॑रूहथुर्ऋ॒ज्रेभि॒रश्वैः॑ ॥१४

यु॒वम् । तु॒ग्राय॑ । पू॒र्व्येभिः॑ । एवैः॑ । पु॒नः॒ऽम॒न्यौ । अ॒भ॒व॒त॒म् । यु॒वा॒ना॒ ।

यु॒वम् । भु॒ज्युम् । अर्ण॑सः । निः । स॒मु॒द्रात् । विऽभिः॑ । ऊ॒ह॒थुः॒ । ऋ॒ज्रेभिः॑ । अश्वैः॑ ॥१४

युवम् । तुग्राय । पूर्व्येभिः । एवैः । पुनःऽमन्यौ । अभवतम् । युवाना ।

युवम् । भुज्युम् । अर्णसः । निः । समुद्रात् । विऽभिः । ऊहथुः । ऋज्रेभिः । अश्वैः ॥१४

हे "युवाना दुःखानां यावयितारौ अश्विनौ "युवं युवां "पूर्व्येभिः । पुराणनामैतत् । पूर्वकालीनैः चिरंतनैः "एवैः स्तुत्यं प्रति गन्तृभिः स्तोत्रैः "तुग्राय भुज्योर्जनकस्य संबन्धिभिः "पुनर्मन्यौ यथा भुज्योः समुद्रगमनापूर्वं युवां

स्तोतव्यौ तथा पुनरपि इदानीं स्तोतव्यौ "अभवतम् । यदा युवां समुद्रमध्ये सेनया सह निमग्नं “भुज्युं तुग्रस्य पुत्रम् “अर्णसः अर्णस्वतः प्रौढोदकयुक्तात् "समुद्रात् अम्बुराशेः सकाशात् “विभिः गन्तृभिः नौभिः “ऋज्रेभिः शीघ्रगतियुक्तैः “अश्वैः च "निरूहथुः निर्गमय्य पितृसमीपं प्रापितवन्तौ तदानीं पुनरप्यतिशयेन स्तोतव्यौ जातावित्यर्थः । ‘तुग्रो ह भुज्युम्' (ऋ. सं. १.११६. ३) इत्यत्रोक्तमाख्यानम् अत्राप्यनुसंधेयम् ॥ एवैः । इण् गतौ'। ‘इणशीङ्भ्यां वन्' । पुनर्मन्यौ ।' मन ज्ञाने '। अत्र स्तुत्यर्थः । मन्यते स्तौति इति मना स्तुतिः । पचाद्यच् । ‘छन्दसि च' इति अर्हार्थे यः । युवाना । 'यु मिश्रणामिश्रणयोः '।' कनिन्युवृषि' ' इत्यादिना कनिन् । ‘सुपां सुलुक्' इति विभक्तेराकारः । अर्णसः । अर्णःशब्दादुत्पन्नस्य मत्वर्थीयस्य ‘बहुलं छन्दसि ' इति बहुलग्रहणाल्लोपः । विभिः। सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति विभक्त्युदात्तस्य विकल्पनात् अभावः । ऋज्रेभिः । ऋज

गतिस्थानार्जनोपार्जनेषु'। 'ॠज्रेन्द्र' इत्यादौ रन्प्रत्ययान्तो निपातितः । ‘बहुलं छन्दसि ' इति भिस ऐसभावः ॥

अजोंहवीदश्विना तौ॒ग्र्यो वां॒ प्रोळ्हः॑ समु॒द्रमंव्य॒थिर्जंग॒न्वान् ।

निष्टमूंहथुः सु॒युजा॒ रथें॑न॒ मनोंजवसा वृषणा स्व॒स्ति ॥१५

अजोंहवीत् । अ॒श्वि॒ना॒ । तौ॒ग्र्यः । वा॒म् । प्रऽऊं॑ळ्हः । स॒मु॒द्रम् । अ॒व्य॒थिः । ज॒ग॒न्वान् ।

निः । तम् । ऊ॒ह॒थु॒ः । सु॒ऽयुजां । रथें॑न । मनः॑ऽजवसा । वृ॒ष॒णा॒ । स्व॒स्ति ॥१५

अजोहवीत् । अश्विना । तौग्र्यः । वाम् । प्रऽऊळ्हः । समुद्रम् । अव्यथिः । जगन्वान् ।

हे “इन्द्र “सूरः सूर्यात्मना वर्तमानः “त्वं “हरितः हरिद्वर्णान् “नॄन् नेतॄन् अश्वान् यद्वा रसहरणशीलान् रश्मीन् “रमयः उपारमयः । “एतशो "न । एतश इति सूर्याश्वस्याख्या। तथा च श्रूयते -- ‘ एतशेन त्वा सूर्यो देवतां गमयतु ' (तै. सं. १. ६. ४. ६) इति । नशब्दश्चार्थे । एतशश्च रथस्य “चक्रं “भरत् प्रावहत् । अपि च त्वं “नाव्यानां नावा तार्याणां नदीनां “नवतिं नवतिसंख्याम् अतीत्य वर्तमानं “पारं तीरदेशम् । सप्तम्यर्थे द्वितीया । तीरदेशे “अयज्यून् अयजमाना यज्ञविहीनान् असुरादीन् “प्रास्य प्रक्षिप्य तत्र “कर्तम् “अवर्तयः कर्तव्यमपि कृत्वा तानयजमानानवर्तयः प्रापयः ।। रमयः । लङि ‘ बहुलं छन्दस्यमाङ्योगेऽपि ' इति अडभावः । अन्येषामपि दृश्यते ' इति सांहितको दीर्घः । प्रास्य । ‘असु क्षेपणे '। अस्मात् ल्यपि रूपम् । नाव्यानाम् । नौवयोधर्म' इत्यादिना यत्। तित्स्वरितम्' इति स्वरितत्वम् ।।

त्वं नों अ॒स्या इं॑न्द्र दु॒र्हणां॑याः पा॒हि वं॑ज्रिवो दुरि॒ताद॒भीकें ।

प्र नो॒ वाजां॑न्र॒थ्यो॒३॒ अश्वं॑बुध्यानि॒षे यं॑न्धि॒ श्रवं॑से सू॒नृतां॑यै ॥
१४

त्वम् । न॒ः । अ॒स्याः । इ॒न्द्र॒ । दु॒ःऽहनां॑याः । पा॒हि ।
व॒ज्रि॒ऽव॒ः । दु॒ःऽइ॒तात् । अ॒भीकें ।

प्र । न॒ः । वाजां॑न् । र॒थ्य॑ः । अश्वं॑ऽबुध्यान् । इ॒षे । य॒न्धि॒ ।
श्रवं॑से । सू॒नृतां॑यै ॥१४

त्वम् । नः । अस्याः । इन्द्र । दुःऽहनायाः । पाहि ।
वज्रिऽवः । दुःऽइतात् । अभीके ।

प्र । नः । वाजान् । रथ्यः । अश्वऽबुध्यान् । इषे । यन्धि ।
श्रवसे । सूनृतायै ॥१४

हे “वज्रिवः वज्रवन् “इन्द्र “त्वं “दुर्हणायाः दुःखेन हन्तव्यायाः “अस्याः अवृत्तेर्दारिद्र्यात् “नः अस्मान् “पाहि रक्ष। तथा “दुरितात् पापात् “अभीके अभिप्राप्ते समीपवर्तिनि संग्रामे अस्मान् रक्ष । अपि च “नः अस्मभ्यं “रथ्यः रथयुक्तान् अश्वबुध्यान् अश्वानां बोधकान् । अश्वा यावद्भिर्लभ्यन्ते तावदित्यर्थः । यद्वा । अश्वबुध्नान् । छान्दसो वर्णविकारः । अश्वमूलान् । अश्वप्रमुखानित्यर्थः । सर्वं हि धनम् अश्वमूलं दासापवर्गम् । यथोक्तं -' दासप्रवर्गं रयिमश्वबुध्यम् ' ( ऋ. सं. १. ९२. ८ ) इति । एवंविधान् “वाजान् धनानि “प्र “यन्धि प्रयच्छ । किमर्थम् । “इषे अन्नार्थं “श्रवसे कीत्यर्थं "सूनृतायै । सूनृता प्रियसत्यात्मिका वाक् तदर्थं च ।। दुर्हणायाः । ‘ ईषद्दुःसुषु इति हन्तेः कर्मणि खल्। पाहि। पादादित्वात् निघाताभावः। वज्रिवः । वज्रोऽस्यास्तीति वज्री हस्तः । तद्वान् वज्रिवान् । 'छन्दसीरः' इति मतुपो वत्वम् । संबुद्धौ ‘मतुवसो रुः० ' इति नकारस्य रुत्वम् । रथ्यः । ‘

छन्दसीवनिपौ' इति रथशब्दात् मत्वर्थीयः ईकारः । यन्धि । 'यम उपरमे '। ' बहुलं छन्दसि ' इति विकरणस्य लुक् । वा छन्दसि इति हेः पित्त्वेन ङित्त्वाभावात् ' अङितश्च ।। (पा. सू. ६. ४. १०३ ) इति हेर्धिः ॥हे “वज्रिवः वज्रवन् “इन्द्र “त्वं “दुर्हणायाः दुःखेन हन्तव्यायाः “अस्याः अवृत्तेर्दारिद्र्यात् “नः अस्मान् “पाहि रक्ष। तथा “दुरितात् पापात् “अभीके अभिप्राप्ते समीपवर्तिनि संग्रामे अस्मान् रक्ष । अपि च “नः अस्मभ्यं “रथ्यः रथयुक्तान् अश्वबुध्यान् अश्वानां बोधकान् । अश्वा यावद्भिर्लभ्यन्ते तावदित्यर्थः । यद्वा । अश्वबुध्नान् । छान्दसो वर्णविकारः । अश्वमूलान् । अश्वप्रमुखानित्यर्थः । सर्वं हि धनम् अश्वमूलं दासापवर्गम् । यथोक्तं -' दासप्रवर्गं रयिमश्वबुध्यम् ' ( ऋ. सं. १. ९२. ८ ) इति । एवंविधान् “वाजान् धनानि “प्र “यन्धि प्रयच्छ । किमर्थम् । “इषे अन्नार्थं “श्रवसे कीत्यर्थं "सूनृतायै । सूनृता प्रियसत्यात्मिका वाक् तदर्थं च ।। दुर्हणायाः । ' ईषद्दुःसुषु इति हन्तेः कर्मणि खल्। पाहि। पादादित्वात्

निघाताभावः। वज्रिवः । वज्रोऽस्यास्तीति वज्री हस्तः ।
तद्वान् वज्रिवान् । 'छन्दसीरः' इति मतुपो वत्वम् । संबुद्धौ
‘मतुवसो रुः० ' इति नकारस्य रुत्वम् । रथ्यः । ‘
छन्दसीवनिपौ' इति रथशब्दात् मत्वर्थीयः ईकारः । यन्धि
। 'यम उपरमे '। ‘ बहुलं छन्दसि ' इति विकरणस्य लुक् ।
वा छन्दसि इति हेः पित्त्वेन ङित्त्वाभावात् ' अङितश्च ।।
(पा. सू. ६. ४. १०३ ) इति हेर्धिः ॥

मा सा तें अ॒स्मत्सुं॑म॒तिर्वि दंस॒द्वाजंप्रमह॒ः समिषों वरन्त ।

आ नों भज मघव॒न्गोष्व॒र्यो मंहिंष्ठास्ते सध॒मादं॑ः स्याम ॥
१५

मा । सा । ते॒ । अ॒स्मत् । सु॒ऽम॒तिः । वि । द॒स॒त् ।
वाजंऽप्रमहः । सम् । इषः॑ । व॒र॒न्त॒ ।

आ । न॒ः । भ॒ज॒ । म॒घ॒ऽव॒न् । गोषुं । अ॒र्यः । मंहिंष्ठाः । त॒े ।
स॒ध॒ऽमादः । स्या॒म॒ ॥१५

मा । सा । ते । अस्मत् । सुऽमतिः । वि । दसत् ।
वाजऽप्रमहः । सम् । इषः । वरन्त ।

आ । नः । भज । मघऽवन् । गोषु । अर्यः । मंहिष्ठाः । ते ।
सधऽमादः । स्याम ॥१५

हे “वाजप्रमहः वा वाजैर्धनैः प्रमहनीयेन्द्र “ते त्वदीया “सा 'सुमतिः शोभनानुग्रहरूपा बुद्धिः “अस्मत् अस्मासु “मा “वि “दसत् मा विशुध्यतु । तथा “इषः अन्नानि अस्मान् “सम् “वरन्त संवृतान् कुर्वन्तु । हे मघवन धनवन्निन्द्र “अर्यः धनपतिः त्वं “नः अस्मान् “गोषु “आ “भज प्रापय "ते तव “मंहिष्ठाः अतिशयेन स्तुतिभिः प्रवर्धयितारो वयं “सधमादः “स्याम पुत्रपौत्रादिभिः सह माद्यन्तो भवेम ॥
अस्मत् । ‘सुपां सुलुक्° ' इति सप्तम्या लुक् । दसत् । दसु

उपक्षये '। माङि लुङि पुषादित्वात् अङ्। वाजप्रमहः ।
वाजैर्धनैः प्रकृष्टं महस्तेजो यस्य स तथोक्तः ।
पादादित्वात् आष्टमिकनिघाताभावः ।
षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । वरन्त । ‘ वृञ् वरणे'।
व्यत्ययेन शप् । गोषु । ‘ सावेकाचः० ' इति प्राप्तस्य
विभक्त्युदात्तत्वस्य न गोश्वन्सावर्ण ' इति प्रतिषेधः ।
अर्यः । ‘ अर्यः स्वामिवैश्ययोः' इति निपात्यते । अर्यः
स्वाम्याख्या चेत्' (फि. सू. १७ ) इत्यन्तोदात्तत्वम् ।
मंहिष्ठाः । “महि वृद्धौ '। इदित्त्वात् नुम् ।
अस्मादन्तर्भावितण्यर्थात् तृच् ।'तुश्छन्दसि' इति इष्ठन् ।
तुरिष्ठेमेयःसु ' इति तृलोपः। सधमादः । मद तृप्तियोगे'।
चौरादिकः । सह मादयन्ते तृप्ता भवन्तीति सधमादः । ‘
क्विप् च ' इति क्विप् । जस् । सध मादस्थयोश्छन्दसि'
इति सहस्य सधादेशः । ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक श्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टकेऽष्टमोऽध्यायः समाप्तः ।।

॥ इति प्रथमाष्टकः समाप्तः ॥

| | | | | | |
|---|---|---|---|---|---|
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१४ | १.४४ | १.७४ | १.१०४ | १.१३४ | १.१६४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१५ | १.४५ | १.७५ | १.१०५ | १.१३५ | १.१६५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१६ | १.४६ | १.७६ | १.१०६ | १.१३६ | १.१६६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१७ | १.४७ | १.७७ | १.१०७ | १.१३७ | १.१६७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१८ | १.४८ | १.७८ | १.१०८ | १.१३८ | १.१६८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१९ | १.४९ | १.७९ | १.१०९ | १.१३९ | १.१६९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२० | १.५० | १.८० | १.११० | १.१४० | १.१७० |

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|
| १.२१ | १.५१ | १.८१ | १.१११ | १.१४१ | १.१७१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२२ | १.५२ | १.८२ | १.११२ | १.१४२ | १.१७२ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२३ | १.५३ | १.८३ | १.११३ | १.१४३ | १.१७३ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२४ | १.५४ | १.८४ | १.११४ | १.१४४ | १.१७४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२५ | १.५५ | १.८५ | १.११५ | १.१४५ | १.१७५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२६ | १.५६ | १.८६ | १.११६ | १.१४६ | १.१७६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२७ | १.५७ | १.८७ | १.११७ | १.१४७ | १.१७७ |

# ऋग्वेदः सूक्तं १.१२२

← सूक्तं १.१२१

ऋग्वेदः - मण्डल १

सूक्तं १.१२२

कक्षीवान् दैर्घतमस औशिजः।

सूक्तं १.१२३ →

दे. विश्वे देवाः । त्रिष्टुप्, ५-६ विराड्रूपा।

---

प्र वः पान्तं रघुमन्यवोऽन्धो यज्ञं रुद्राय मीळ्हुषे भरध्वम् ।

दिवो अस्तोष्यसुरस्य वीरैरिषुध्येव मरुतो रोदस्योः ॥१॥

पत्नीव पूर्वहूतिं वावृधध्या उषासानक्ता पुरुधा विदाने ।

स्तरीर्नात्कं व्युतं वसाना सूर्यस्य श्रिया सुदृशी हिरण्यैः ॥२॥

ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान् ।

शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः ॥३॥

उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै ।

प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः ॥४॥

आ वो रुवण्युमौशिजो हुवध्यै घोषेव शंसमर्जुनस्य नंशे ।

प्र वः पूष्णे दावन आँ अच्छा वोचेय वसुतातिमग्नेः ॥५॥

श्रुतं मे मित्रावरुणा हवेमोत श्रुतं सदने विश्वतः सीम् ।

श्रोतु नः श्रोतुरातिः सुश्रोतुः सुक्षेत्रा सिन्धुरद्भिः ॥६॥

स्तुषे सा वां वरुण मित्र रातिर्गवां शता पृक्षयामेषु पज्रे ।

श्रुतरथे प्रियरथे दधानाः सद्यः पुष्टिं निरुन्धानासो अग्मन् ॥७॥

अस्य स्तुषे महिमघस्य राधः सचा सनेम नहुषः सुवीराः ।

जनो यः पज्रेभ्यो वाजिनीवानश्वावतो रथिनो मह्यं सूरिः ॥८॥

जनो यो मित्रावरुणावभिध्रुगपो न वां सुनोत्यक्ष्णयाध्रुक् ।

स्वयं स यक्ष्मं हृदये नि धत्त आप यदीं होत्राभिरृतावा ॥९॥

स व्राधतो नहुषो दंसुजूतः शर्धस्तरो नरां गूर्तश्रवाः ।

विसृष्टरातिर्याति बाळ्हसृत्वा विश्वासु पृत्सु सदमिच्छूरः ॥१०॥

अध ग्मन्ता नहुषो हवं सूरेः श्रोता राजानो अमृतस्य मन्द्राः ।

नभोजुवो यन्निरवस्य राधः प्रशस्तये महिना रथवते ॥११॥

एतं शर्धं धाम यस्य सूरेरित्यवोचन्दशतयस्य नंशे ।

द्युम्नानि येषु वसुताती रारन्विश्वे सन्वन्तु प्रभृथेषु वाजम् ॥१२॥

मन्दामहे दशतयस्य धासेर्द्विर्यत्पञ्च बिभ्रतो यन्त्यन्ना ।

किमिष्टाश्व इष्टरश्मिरेत ईशानासस्तरुष ऋञ्जते नॄन् ॥१३॥

हिरण्यकर्णं मणिग्रीवमर्णस्तन्नो विश्वे वरिवस्यन्तु देवाः ।

अर्यो गिरः सद्य आ जग्मुषीरोस्राश्चाकन्तूभयेष्वस्मे ॥१४॥

चत्वारो मा मशर्शारस्य शिश्वस्त्रयो राज्ञ आयवसस्य जिष्णोः ।

रथो वां मित्रावरुणा दीर्घाप्साः स्यूमगभस्तिः सूरो नाद्यौत् ॥१५॥

# सायणभाष्यम्

ॐ

॥ श्रीगणेशाय नमः ।।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।।

यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ।।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

प्रक्रिया प्रथमे काण्डे साकल्येनोपवर्णिता ।।

अत ऊर्ध्वंतनी ज्ञेया स्मर्यते च क्वचित्क्वचित् ।।

अथ द्वितीयाष्टके प्रथमोऽध्यायः आरभ्यते । शतर्चिनामाद्ये मण्डले चतुर्विंशत्यनुवाकाः । तेषु ' कदित्था ' इति अष्टादशानुवाके षट् सूक्तानि । तत्र ' प्र वः पान्तम्' इति द्वितीयं सूक्तम् । ' पञ्चोना' इति

अनुवर्तमानात् पञ्चदशर्चम् । ‘ ऋषिश्चान्यस्मादृषेः' इति परिभाषया कक्षीवानृषिः । अनादेशपरिभाषया त्रिष्टुप् । विश्वे देवा देवता । ‘प्र वो वैश्वदेवम्' इत्यनुक्रमणिका । अस्य विशेषविनियोगो लैङ्गिकः ॥

प्र व॒ः पान्तं॑ रघुमन्य॒वोऽन्धो॑ य॒ज्ञं रु॒द्राय॑ मी॒ळ्हुषे॑ भरध्वम् ।

दि॒वो अ॑स्तो॒ष्यसु॑रस्य वी॒रैरि॑षु॒ध्येव॑ म॒रुतो॒ रोद॑स्योः ॥१

प्र । व॒ः । पान्त॑म् । र॒घु॒ऽम॒न्य॒व॒ः । अन्ध॑ः । य॒ज्ञम् । रु॒द्राय॑ । मी॒ळ्हुषे॑ । भ॒र॒ध्व॒म् ।

दि॒वः । अ॒स्तो॒षि॒ । असु॑रस्य । वी॒रैः । इ॒षु॒ध्याऽइ॑व । म॒रुत॑ः । रोद॑स्योः ॥१

प्र । वः । पान्तम् । रघुऽमन्यवः । अन्धः । यज्ञम् । रुद्राय । मीळ्हुषे । भरध्वम् ।

दिवः । अस्तोषि । असुरस्य । वीरैः । इषुध्याऽइव । मरुतः । रोदस्योः ॥१

हे “रघुमन्यवः लघुक्रोधाः अक्रोधिनः ऋत्विजः “वः युष्माकं “पान्तं पालनशीलं पातव्यं वा “यज्ञं यागसाधनम् “अन्धः अन्नम् आज्यसोमादिलक्षणं “रुद्राय । रुत् दुःखं तद्धेतुभूतं दुरितं वा । तस्य द्रावयित्रे एतन्नामकाय देवाय मीळ्हुषे फलस्य वर्षित्रे तदर्थं “प्र “भरध्वं प्रकर्षेण संपादयत । अहं च “इषुध्येव इषुध्या शत्रून् यथा निरस्यति तथा “वीरैः अमित्राणां विविधमीरकैः वीर्योपेतैः वा तदनुचरैः मरुदादिभिः सह “दिवः द्युलोकसकाशात् । उपलक्षणमेतत् । लोकत्रयादपि "असुरस्य निरसितव्यानामसुराणां निरसितुः । कर्मणि षष्ठी ।

निरसितारं तमेव देवं “रोदस्योः निरोधनवत्योः द्यावापृथिव्योर्मध्ये वर्तमानान् “मरुतः च “अस्तोषि स्तौमि ॥ पान्तम् । पान्तमित्यत्र पातेः शतृ पिबतेर्वा औणादिको झः । मीळ्हुषे । “दाश्वान्साह्वान् °' इति क्वसुप्रत्ययान्तो निपातः । चतुर्थ्येकवचने ‘ वसोः संप्रसारणम्' इति संप्रसारणम् । “शासिवसि ' इत्यादिना षत्वम् । दिवः। ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । अस्तोषि । स्तौतेश्छान्दसो लुङ् । इषुध्येव । इषवो धीयन्ते अत्र इति इषुधिः । ‘ कर्मण्यधिकरणे च' इति दधातेः किः । कृत्स्वरेणान्तोदात्तः । ‘ उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ।।

पत्नी॑व पू॒र्वहू॑तिं वावृ॒धध्या॑ उ॒षासा॒नक्ता॑ पुरु॒धा विदा॑ने ।

स्त॒रीर्नात्कं॒ व्यु॑तं॒ वसा॑ना॒ सूर्य॑स्य श्रि॒या सु॒दृशी॒ हिर॑ण्यैः ॥२

पत्नीं॒ऽइव । पू॒र्व॒ऽहूं॒तिम् । व॒वृ॒धध्यैं । उ॒षसा॒नक्तां । पु॒रु॒धा । विदां॒ने॒ इतिं ।

स्त्री॒रीः । न । अत्कंम् । वि॒ऽउं॒तम् । वसांना । सूर्यंस्य । श्रि॒या । सु॒ऽदृशीं । हिरंण्यैः ॥२

पत्नीऽइव । पूर्वऽहूतिम् । ववृधध्यै । उषसानक्ता । पुरुधा । विदाने इति ।

स्तरीः । न । अत्कम् । विऽउतम् । वसाना । सूर्यस्य । श्रिया । सुऽदृशी । हिरण्यैः ॥२

“पत्नीव पत्नी यथा “पूर्वहूतिं पत्युः पूर्वाह्वानं “ववृधध्यै वर्धयितुं शीघ्रगतिर्भवति तद्वत् “उषासानक्ता अहोरात्रे देवते अपि “पुरुधा बहुप्रकारं बहुविधैः स्तोत्रैः “विदाने ज्ञायमाने सत्यौ पूर्वहूतिं ववृधध्यै अस्मदीयं पूर्वाह्वानं वर्धयितुं शीघ्रमागच्छतमिति शेषः । यद्वा । ववृधध्यै

अस्मद्वर्धनाय पुरुधा बहुप्रकारं विदाने वर्धनोपायान् जानत्यौ भवतमिति शेषः ॥ उषासानक्ता । ‘ उषासोषसः ' ( पा. सू. ६. ३. ३१ ) इति पूर्वपदस्य उषासादेशः। ‘देवताद्वन्द्वे च ' इति उभयपदप्रकृतिस्वरत्वम् ॥ अथ केवला उषा उच्यते । “स्तरीः शत्रूणां हिंसकः तेजसाच्छन्नः वा आदित्यः स इव हिरण्यैः हिरण्यवर्णैः रश्मिभिः “व्युतं विततं विशेषेण संबद्धम् “अत्कम् अक्तं संततं वा रूपं “वसाना अच्छादयन्ती धारयन्ती “सूर्यस्य “श्रिया शोभया “सुदृशी शोभनं दृश्यमाना । सूर्यस्य पुरोगामिनी रश्मिभिः खल्वेषा जगद्भासयति । तादृशी उषा अस्मत्पूर्वहूतिं पालयत्वित्यर्थः । यद्वा । हिरण्यैः हितरमणीयैः प्रकाशैः धनविशेषेर्वा सहागच्छतु । व्युतम् । व्येञो निष्ठायां वचिस्वपि' इत्यादिना संप्रसारणम् । स्तरीः । ‘ अवितृस्तृ' इति ईकारप्रत्ययः ॥

म॒मत्तुं न॒ः परिं॒ज्मा वस॒र्हा म॒मत्तु॒ वातों अ॒पां वृषंण्वान् ।

शि॒शी॒तमिं॒न्द्रापर्वता यु॒वं न॒स्तन्नो॒ विश्वें वरिवस्यन्तु दे॒वाः ॥ ३

म॒मत्तुं । न॒ः । परिं॒ऽज्मा । व॒स॒र्हा । म॒मत्तुं । वातः॑ । अ॒पाम् । वृषंण्ऽवान् ।

शि॒शी॒तम् । इ॒न्द्रा॒प॒र्व॒ता॒ । यु॒वम् । न॒ः । तत् । न॒ः । विश्वें । व॒रि॒व॒स्य॒न्तु॒ । दे॒वाः ॥३

ममत्तु । नः । परिऽज्मा । वसर्हा । ममत्तु । वातः । अपाम् । वृषण्ऽवान् ।

शिशीतम् । इन्द्रापर्वता । युवम् । नः । तत् । नः । विश्वे । वरिवस्यन्तु । देवाः ॥३

“नः अस्मान् “वसर्हा वसनार्हो गार्हपत्यादिरूपेण । यद्वा । वासकानामाच्छादकानां वृक्षादीनां हन्ता अग्निः । अथवा । वसर्हा वासार्हो वासरस्य गमयिता। “परिज्मा परितो गन्ता आदित्यः “ममत्तु मादयतु । तथा “अपां वृष्ट्युदकानां “वृषण्वान् वर्षणवान् वृष्ट्युत्पादकः “वातः वायुरस्मान् “ममत्तु । किंच हे “इन्द्रापर्वता । इन्द्रः प्रसिद्धः । पर्वतः पर्ववान् वृष्टयादिपूरणवान् पर्जन्यः । तौ “युवं युवां “नः अस्मान् अस्मद्बुद्धिं वा “शिशीतं तीक्ष्णीकुरुतं शोधयतमित्यर्थः । “तत् तस्मात् यस्मादहं सर्वान् देवान् स्तौमि तस्मात् “विश्वे सर्वेऽपि “देवाः “नः अस्माकं “वरिवस्यन्तु प्रभूतमन्नं प्रदातुमिच्छन्तु । समृद्धान्नप्रदानेन प्रीणयन्त्वित्यर्थः ।। ममत्तु। ‘मदी हर्षे' । अन्तर्भावितण्यर्थात् लोटि छान्दसो विकरणस्य श्लुः । ‘ द्विर्वचनम् । शिशीतम् । ‘ई हल्यघोः' इति ईत्वम् । ‘बहुलं छन्दसि ' इति अभ्यासस्य इत्वम् । ‘ इन्द्रापर्वता' इत्यत्र ‘ देवताद्वन्द्वे च ' इति पूर्वपदस्य आनङादेशः ।।

उ॒त त्या मे॑ य॒शसा॑ श्वे॒त॒नायै॒ व्यन्ता॒ पान्तौ॑शि॒जो हु॒वध्यै॑ ।

प्र वो॒ नपा॑तम॒पां कृ॑णुध्वं॒ प्र मा॒तरा॑ रास्पि॒नस्या॒योः ॥४

उ॒त । त्या । मे॒ । य॒शसा॑ । श्वे॒त॒नायै॑ । व्यन्ता॑ । पान्ता॑ ।
औ॒शि॒जः । हु॒वध्यै॑ ।

प्र । वः॒ । नपा॑तम् । अ॒पाम् । कृ॒णु॒ध्व॒म् । प्र । मा॒तरा॑ ।
रा॒स्पि॒नस्य॑ । आ॒योः ॥४

उत । त्या । मे । यशसा । श्वेतनायै । व्यन्ता । पान्ता ।
औशिजः । हुवध्यै ।

प्र । वः । नपातम् । अपाम् । कृणुध्वम् । प्र । मातरा ।
रास्पिनस्य । आयोः ॥४

“औशिजः उशिजः पुत्रः कक्षीवानहं “मे । तादर्थ्ये चतुर्थी । मदर्थं "यशसा । यश इत्यन्नं बलं कीर्तिर्वा उच्यते । तद्वन्तौ “व्यन्ता भक्षयन्तौ चरुपुरोडाशादिकं “पान्ता पिबन्तौ अज्यसोमादिकं “त्या। तच्छब्दसमानार्थः त्यच्छब्दः । यौ स्तुत्यत्वेन प्रसिद्धौ तावश्विनौ । अत्र यद्यपि विशेषो न श्रुतः तथापि सूक्तस्य वैश्वदेवत्वात् उषःसंबन्धात् द्विवचनलिङ्गाच्चाश्विनाविति गम्यते तादृशावश्विनौ । “श्वेतनायै इति षष्ठ्यर्थे चतुर्थी । विश्वं जगत् श्वेतयन्त्याः उषसः तत्संबन्धिनि काले। उषःकालीनाह्वानाय यतेयम्। इति शेषः । हे ऋत्विजः “वः यूयम् । प्रथमार्थे द्वितीया । “अपाम् उदकानां “नपातं नपातयितारं तासां नप्तारं वा अग्निम् । अद्भ्यः ओषधिवनस्पतयः ताभ्यः अग्निः इत्यपां नप्तृत्वमग्नेः । तं देवं “प्र “कृणुध्वम् । करोतिरत्र क्रियासामान्यवाची क्रियाविशेषे स्तोत्रे पर्यवस्यति । प्रकर्षेण स्तुध्वमित्यर्थः । किंच “रास्पिनस्य । रपतेः रसतेर्वा शब्दनार्थस्य घञन्तस्य कृतसकारपकारोपजनस्य

रास्प इति भवति । तदस्यास्तीति रास्पि स्तोत्रम् । तद्वान् रास्पिनः स्तोता । तस्य "आयोः तादृशस्य मनुष्यस्य मम मह्यं "मातरा मातृवद्धितकारिण्यौ अहोरात्रदेवते अपि "प्र कृणुध्वम् । अथवा रास्पिनस्य । एको मत्वर्थप्रत्ययश्छान्दसः। प्रवर्षणध्वनियुक्तस्य वृष्ट्युदकस्य गमनशीलस्य निर्मात्र्यौ अहोरात्रे प्र कृणुध्वम् ॥ व्यन्ता पान्ता । उभयत्र 'सुपां सुलक्' इति आकारः ॥

आ वों रुवण्युमौंशिजो हुवध्यै घोषेंव शंसमर्जुंनस्य नंशें ।

प्र वंः पूष्णो दावन आँ अच्छां वोचेय वसुतांतिमग्नेः ॥५

आ । वः । रुवण्युम् । औशिजः । हुवध्यैं । घोषांऽइव । शंसंम् । अर्जुंनस्य । नंशें ।

प्र । व॒ः । पू॒ष्णे । दा॒वनें । आ । अच्छं । वो॒चे॒य॒ ।
व॒सुऽतांतिम् । अ॒ग्नेः ॥५

आ । वः । रुवण्युम् । औशिजः । हुवध्यै । घोषाऽइव ।
शंसम् । अर्जुनस्य । नंशे ।

प्र । वः । पूष्णे । दावने । आ । अच्छ । वोचेय ।
वसुऽतातिम् । अग्नेः ॥५

हे देवाः “औशिजः कक्षीवानहं “वः युष्माकं संबन्धिनं “रुवण्युं रवणीयं शब्दनीयं “शंसं स्तोत्रम् "आ "हुवध्यै युष्मदाह्वानाय "अच्छ ”आ “वोचेय आभिमुख्येन ब्रवीमि । यद्वा । अत्रापि अश्विनावेव उच्येते । तस्मिन् पक्षे बहुवचनं पूजार्थम् । हे अश्विनौ “वः युष्मान् “घोषव एतन्नामिका ब्रह्मवादिनीव । सा यथा “अर्जुनस्य श्वेतवर्णस्य स्वशरीरगतत्वग्रोगस्य “नंशे नाशनाय यथाश्विनोः शंसमकार्षीत् तद्वदहमपीत्यर्थः । हे देवाः युष्मत्संबन्धिने

“दावने आ आभिमुख्येन फलस्य दात्रे “पूष्णे पोषकाय एतन्नामकाय देवायापि ॥ आकारस्य ‘ आङोऽनुनासिकश्छन्दसि ' इति प्रकृतिभावः ॥ अच्छ आभिमुख्यगमनेन वोचेय स्तौमि ॥ ‘ वच परिभाषणे'। लिङ्याशिष्यङ् । ‘ वच उम्' इति उम् । किंच “अग्नेः “वसुतातिं तत्संबन्धि धनमपि वोचेय स्तौमि तमेवाग्निम् ॥ ॥ १ ॥

श्रु॒तं मे॑ मित्रावरुणा॒ हवे॒मोत श्रु॑तं॒ सद॑ने वि॒श्वत॑ः सीम् ।

श्रोतु॑ न॒ः श्रोतु॑रातिः सु॒श्रोतु॑ः सु॒क्षेत्रा॒ सिन्धु॑र॒द्भिः ॥६

श्रु॒तम् । मे॒ । मि॒त्रा॒व॒रु॒णा॒ । हवा॑ । इ॒मा । उ॒त । श्रु॒त॒म् । सद॑ने । वि॒श्वत॑ः । सी॒म् ।

श्रोतुं । नः । श्रोतुंऽरातिः । सुऽश्रोतुः । सुऽक्षेत्रां । सिन्धुः ।
अत्ऽभिः ॥६

श्रुतम् । मे । मित्रावरुणा । हवा । इमा । उत । श्रुतम् ।
सदने । विश्वतः । सीम् ।

श्रोतु । नः । श्रोतुऽरातिः । सुऽश्रोतुः । सुऽक्षेत्रा । सिन्धुः ।
अत्ऽभिः ॥६

हे "मित्रावरुणा एतन्नामानौ अहोरात्राभिमानिदेवौ युवाम् “इमा इमानि “हवा अस्मदाह्वानानि “श्रुतं शृणुतम् । न केवलमस्मदाह्वानम् “उत अपि च “सदने यागगृहे “विश्वतः उद्गात्रादिभिः सर्वतः क्रियमाणं “सीम् एतत्स्तोत्रमपि “श्रुतं शृणुतम् । किंच “श्रोतुरातिः सर्वत्र श्रूयमाणधनः तादृशदानो वा “सुश्रोतुः अस्मदाह्वानस्य सम्यक् श्रोता “सिन्धुः जलाभिमानी देवः “सुक्षेत्रा सुक्षेत्राणि “अद्भिः वृष्टिजलैः क्लेदयन्निति शेषः । यद्वा ।

अस्मत्क्षेत्राणि अद्भिः सुक्षेत्राणि सस्यादिसमृद्धानि कुर्वन् “नः हवं शृणोतु । सुक्षेत्रत्वलाभाय' शृणोत्वित्यर्थः ॥ हवा इमा । उभयत्र विभक्त्या आकारः । श्रुतमित्यत्र ‘ बहुलं छन्दसि ' इति विकरणस्य लुक् ॥

स्तु॒षे सा वां वरुण मित्र रा॒तिर्गवां श॒ता पृ॒क्षयांमेषु प॒ज्रे ।

श्रु॒तरंथे प्रि॒यरंथे॒ दधांनाः स॒द्यः पु॒ष्टिं निंरुन्धा॒नासों अग्मन् ॥७

स्तु॒षे । सा । वा॒म् । व॒रु॒ण॒ । मि॒त्र॒ । रा॒तिः । गवांम् । श॒ता । पृ॒क्षऽयांमेषु । प॒ज्रे ।

श्रु॒तऽरंथे । प्रि॒यऽरंथे । दधांनाः । स॒द्यः । पु॒ष्टिम् । नि॒ऽरु॒न्धा॒नासः॑ । अ॒ग्म॒न् ॥७

स्तुषे । सा । वाम् । वरुण । मित्र । रातिः । गवाम् । शता । पृक्षऽयामेषु । पज्रे ।

श्रुतऽरथे । प्रियऽरथे । दधानाः । सद्यः । पुष्टिम् । निऽरुन्धानासः । अग्मन् ॥७

हे “मित्र हे “वरुण देव “वां युवाम् अहं “स्तुषे स्तुवे । व्यत्ययेन मध्यमः । युवयोः संबन्धिनी “सा प्रसिद्धा “रातिः दानं “शता शतानां शतसंख्यानाम् अपरिमितानां “गवां संबन्धिनी असंख्यातगोविषया रातिः “पज्रे कक्षीवति मयि “पृक्षयामेषु । पृक्ष इत्यकारान्तोऽप्यस्ति । पृक्षाणामन्नानां नियमनं येषु स्तोत्रेषु यज्ञेषु वा तेषु निमित्तभूतेषु भवत्विति शेषः । किंच मित्रादयो देवाः “श्रुतरथे सर्वत्र प्रसिद्धरथोपेते "प्रियरथे प्रीयमाणरथयुक्ते सर्वदा रथप्रिये पज्रे च मयि एव “दधानाः प्रीतिं धारयन्तः “सद्यः आगमनानन्तरमेव “पुष्टिं गवादिपोषं निरुन्धानासः

अवरुन्धानाः अस्मास्वव स्थापयन्तः । यद्वा । मयि पुष्टिं दधानाः कुर्वाणाः निरुन्धानासः कृतामेव पुष्टिं मयि स्थिरां कुर्वन्तः “अग्मन् आगच्छन्तु ।। रातिः । ‘ रा दाने'। भावे क्तिन् । मन्त्रे वृष ' इत्यादिना क्तिन उदात्तत्वम् । शता । ‘ सुपा सुलुक् ' इति षष्ठ्याः पूर्वसवर्णदीर्घत्वम् । दधानाः । जुहोत्यादित्वात् शपः श्लुः । ‘ अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । अग्मन् । गमेश्छान्दसे लुङि ‘ मन्त्रे घस' इत्यादिना च्लेर्लुक् ।' गमहन ' इति उपधालोपः ॥

अ॒स्य स्तु॑षे॒ महि॑मघस्य॒ राध॒ः सचा॑ सनेम॒ नहु॑षः सु॒वीरा॒ः ।

जनो॒ यः प॒ज्रेभ्यो॑ वा॒जिनी॑वा॒नश्वा॑वतो र॒थिनो॒ मह्यं॑ सू॒रिः ॥ ८

अ॒स्य । स्तु॒षे॒ । महिं॒ऽमघस्य । राधः॑ । सचां । स॒ने॒म॒ ।
नहुं॑षः । सु॒ऽवीराः॑ ।

जनः॑ । यः । प॒ज्रेभ्यः॑ । वा॒जिनीं॑ऽवान् । अश्वं॑ऽवतः ।
र॒थिनः॑ । मह्यं॑म् । सू॒रिः ॥८

अस्य । स्तुषे । महिऽमघस्य । राधः । सचा । सनेम ।
नहुषः । सुऽवीराः ।

जनः । यः । पज्रेभ्यः । वाजिनीऽवान् । अश्वऽवतः ।
रथिनः । मह्यम् । सूरिः ॥८

“महिमघस्य । महि महत् पूज्यं मघो धनमन्नं वा यस्य
देवसंघस्य स तथोक्तः । तादृशस्य “अस्य “राधः धनं
“स्तुषे स्तुवे । व्यत्ययेन मध्यमः । धनलाभाय प्रभूतधनं
देवसंघं स्तौमीत्यर्थः । किंच “नहुषः । मनुष्यनामैतत् ।
परस्परस्नेहबन्धोपेता मनुष्या वयं कक्षीवन्तः “सुवीराः

शोभनपुत्राद्युपेताः सन्तः “सचा सह परस्परैकमत्येन “सनेम त्वद्दत्तं धनं संभजेम लभेमहि । देवसंघो विशेष्यते । “यः “जनः देवजनो यश्च देवसंघः पज्रेभ्यः अङ्गिरोगोत्रोत्पन्नेभ्यः कक्षीवद्भ्यः । 'पज्रा वा अङ्गिरसः' इति श्रुतेः । तेभ्यः “वाजिनीवान् । वाजोऽन्नम् । तद्वती क्रिया वाजिनी । तया तद्वान् भवति । यद्वा । एको मत्वर्थीय प्रत्ययश्छान्दमः । अस्मभ्यं प्रदेयेन दत्तेन वा अन्नेन तद्वान् भवतीत्यर्थः । यश्च देवसंघः “अश्वावतः बहुभिः तद्दत्तैरश्वैः तद्वतः “रथिनः रथवतः “मह्यं मे “सूरिः प्रेरको भवति । अश्वानां रथानां प्रेरयितारं देवसंघं स्तुषे इत्यर्थः ।। सुवीराः । ‘ वीरवीर्यौ च ' इत्युत्तरपदाद्युदात्तत्वम् । अश्वावतः । अश्वशब्दस्य ' मन्त्रे सोमाश्व ' इत्यादिना मतुपि दीर्घत्वम् ।

जनो॒ यो मिं॑त्रावरुणावभि॒ध्रुग॒पो न वां॑ सु॒नोत्यं॑क्ष्णया॒ध्रुक् ।

स्व॒यं स यक्ष्म॒ं हृद॑ये॒ नि ध॑त्त॒ आप॒ यदी॒ं होत्रा॑भिरृ॒तावा॑ ॥९

जन॑ः । यः । मि॒त्रा॒व॒रु॒णौ॒ । अ॒भि॒ऽध्रुक् । अ॒पः । न । वा॒म् । सु॒नोति॑ । अ॒क्ष्ण॒या॒ऽध्रुक् ।

स्व॒यम् । सः । यक्ष्म॑म् । हृद॑ये । नि । ध॒त्त॒ । आप॑ । यत् । ई॒म् । होत्रा॑भिः । ऋ॒तऽवा॑ ॥९

जनः । यः । मित्रावरुणौ । अभिऽध्रुक् । अपः । न । वाम् । सुनोति । अक्षणयाऽध्रुक् ।

स्वयम् । सः । यक्ष्मम् । हृदये । नि । धत्त । आप । यत् । ईम् । होत्राभिः । ऋतऽवा ॥९

हे “मित्रावरुणौ युष्माकं “यः “जनः अभिध्रुक् अभितो द्रोग्धा भवति अयष्टा भवतीत्यर्थः यश्च “अक्षणयाध्रुक् वक्रेण मार्गेण द्रुह्यति अन्यथाप्रकारेण द्रुह्यति । द्रोहप्रकार उच्यते । "वां युवाम्' “अपः सोमरसान् “न “सुनोति

अभिषवं न करोति । युवाम् अतिक्रम्य अन्यदेवतार्थं सुनोतीत्यभिप्रायः अयमेव अक्ष्णयाद्रोहः। “सः मूढो द्विविधो जनः “स्वयं “यक्ष्मं व्याधिं “हृदये स्वचित्ते 'नि “धत्ते स्थापयति । अनुष्ठातॄणां भोगान् पश्यन् व्यथितो भवतीत्यर्थः । “यत् । लिङ्गव्यत्ययः । य उक्तविलक्षणः पुमान् “ऋतावा यज्ञवान् परिगृहीतयज्ञः "होत्राभिः । वाङ्नामैतत् । स्तुतिवाग्भिः “ईम् एनं सोमरसम् "आप व्याप्नोति । स्तुवन् सोममभिषुणोति इति यावत् । स नरः पृत्सु यातीति वक्ष्यमाणेन सह संबन्धः ॥ अभिध्रुक् । द्रुहेः ‘ सत्सूद्विष ' इति क्विप् । संहितायां भष्भावश्छान्दसः। ऋतावा इत्यत्र ‘ छन्दसीवनिपौ' इति मत्वर्थीयो वनिप् । “अन्येषामपि दृश्यते ' इति संहितायां दीर्घत्वम् ।।

स व्राधंतो॒ नहुं॑षो॒ दंसुं॑जूत॒ः शर्धं॑स्तरो न॒रां गू॒र्तश्रं॑वाः ।

वि॒सृंष्टरातिर्याति बाळ्ह॒सृत्वा॒ विश्वा॑सु पृ॒त्सु सद॒मिच्छूरं॑ः ॥१०

सः । व्राधंतः । नहुंषः । दंऽसुंजूतः । शर्धः॑ऽतरः । न॒राम् । गू॒र्तऽश्रंवाः ।

विसृंष्टऽरातिः । या॒ति॒ । बा॒ळ्ह॒ऽसृत्वां । विश्वा॑सु । पृ॒त्ऽसु । सदंम् । इत् । शूरः॑ ॥१०

सः । व्राधतः । नहुषः । दंऽसुजूतः । शर्धःऽतरः । नराम् । गूर्तऽश्रवाः ।

विसृष्टऽरातिः । याति । बाळ्हऽसृत्वा । विश्वासु । पृत्ऽसु । सदम् । इत् । शूरः ॥१०

हे मित्रावरुणौ युवां गतमन्त्रावसानोक्तलक्षणः युष्मत्पूजको जनः “दंसुजूतः दान्तैरश्वैः सुष्ठु प्रेरितः अत एव “नरां नराणां “शर्धस्तरः अतिशयेनाभिभविता ।

अथवा अतिशयेन बलवान् । नराणां स्वसमानानां मध्ये
“गूर्तश्रवाः उद्गूर्णदीप्तिः प्रख्यातान्नो वा “विसृष्टरातिः
अर्थिभ्यः प्रदत्तधनः एवं महानुभावः “शूरः सन् “विश्वासु
“पृत्सु सर्वेषु जन्येषु संग्रामेषु व्राधतः । महन्नामैतत् ।
हिंसकान् महतोऽपि “नहुषः । मनुष्यनामैतत् । मनुष्यान्
शत्रून् प्रति “बाळ्हसृत्वा भृशं सर्ता अशङ्कितगमनः सन्
“सदमित् सदैव "याति गच्छति ॥ दंसुजूतः । दामेर्विच् ।'
तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । गूर्तश्रवाः । ‘
गुरी उद्यमने '। ‘ नसत्तनिषत्त ' इत्यादौ निपातनात्
निष्ठानत्वाभावः । विसृष्टरातिः । विपूर्वात् सृजतेः कर्मणि
निष्ठा । ‘ गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ।
बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते । पृत्सु । '
पदादिषु मांस्पृत्स्नूनामुपसंख्यानम्' इति पृतनाशब्दस्य
पृदादेशः । ‘ सावेकाचः०' इति विभक्तेरुदात्तत्वम् ।
बाळ्हसृत्वा । सर्तेः ‘अन्येभ्योऽपि दृश्यन्ते ' इति क्वनिप्
॥ ॥ २ ॥

अध॒ ग्मन्ता॒ नहु॑षो॒ हवं॑ सू॒रेः श्रोता॑ राजानो अ॒मृत॑स्य मन्द्राः ।

न॒भो॒जुवो॒ यन्नि॑र॒वस्य॒ राध॒ः प्रश॑स्तये महि॒ना रथ॑वते ॥११

अध॑ । ग्मन्त॑ । नहु॑षः । हव॑म् । सू॒रेः । श्रोत॑ । रा॒जा॒नः॒ । अ॒मृत॑स्य । म॒न्द्राः॒ ।

न॒भः॒ऽजुव॑ः । यत् । नि॒र॒वस्य॑ । राध॑ः । प्रऽश॑स्तये । म॒हि॒ना । रथ॑ऽवते ॥११

अध । ग्मन्त । नहुषः । हवम् । सूरेः । श्रोत । राजानः । अमृतस्य । मन्द्राः ।

नभःऽजुवः । यत् । निरवस्य । राधः । प्रऽशस्तये । महिना । रथऽवते ॥११

हे “राजानः राजमानाः सर्वस्य ईश्वर वा हे “मन्द्राः मादयितारः यूयम् “अमृतस्य अमरणस्य “सूरेः स्तोत्रादिप्रेरकस्य “नहुषः मनुष्यस्य मम “हवम् आह्वानं “श्रोत शृणुत । ‘बहुलं छन्दसि' इति शपो लुक् । अमृतस्य इत्यत्र बहुव्रीहौ ‘नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । “अध अथ श्रवणानन्तरं “ग्मन्त आगच्छत । गमेश्छान्दसो लङ्' । मध्यमबहुवचनस्य व्यत्ययेन झः । ‘ बहुलं छन्दसि ' इति शपो लुक् ।' गमहन ' इत्युपधालोपः । किमर्थमागमनम्। उच्यते । “नभोजुवः नभसि व्याप्ता यूयं “यत् यस्मात् “निरवस्य निर्गतरक्षकस्य युष्मद्व्यतिरेकेण रक्षकान्तररहितस्य । अथवा । निर्गतो मुखादुच्चरितो रवः शब्दः स्तोत्ररूपो यस्य तादृशस्य “रथवते रथवतो यजमानस्य। षष्ठ्यर्थे चतुर्थी । “महिना महिम्ना माहात्म्येन। मकारलोपश्छान्दसः । तेन युक्तं “राधः समृद्धिसाधनं हविर्लक्षणं संराधकं स्तोत्रं वा

“प्रशस्तये प्रशंसितुं कामयध्वे । तस्मादाह्वानं शृणुत आगच्छत चेति ॥

ए॒तं शर्धं॑ धाम॒ यस्यं सू॒रेरित्यं॑वोच॒न्दश॑तयस्य॒ नंशें ।

द्यु॒म्नानि॒ येषुं व॒सुतां॑ती रा॒रन्विश्वें॑ सन्वन्तु प्रभृ॒थेषु॒ वाजं॑म् ॥ १२

ए॒तम् । शर्धं॑म् । धा॒म॒ । यस्यं । सू॒रेः । इतिं । अ॒वो॒च॒न् । दश॑ऽतयस्य । नंशें ।

द्यु॒म्नानिं । येषुं । व॒सुऽतां॑तिः । र॒रन् । विश्वें॑ । स॒न्व॒न्तु॒ । प्र॒ऽभृ॒थेषुं । वाजं॑म् ॥१२

एतम् । शर्धम् । धाम । यस्य । सूरेः । इति । अवोचन् । दशऽतयस्य । नंशे ।

द्युम्नानि । येषु । वसुऽतातिः । ररन् । विश्वे । सन्वन्तु । प्रऽभृथेषु । वाजम् ॥१२

“यस्य “सूरेः हविरादिप्रेरकस्य यजमानस्य संबन्धिनः “दशतयस्य दशेन्द्रियसंवर्धकत्वेन दशावयवस्यान्नस्य “नंशे प्राप्तये वयम् आहूताः स्म तस्मै यजमानाय “एतम् इदानीं दातव्यत्वेन वर्तमानं “शर्धः परेषामभिभावकमन्नं तत्प्राप्तिहेतुं बलं वा “धाम विदधाम करवाम “इत्यवोचन् देवाः ।। धाम । दधातेर्लुङि ‘ गातिस्था' इति सिचो लुक् । वचेः अकारस्य उम् । अस्यतिवक्ति' इत्यादिना च्लेः अङ्।। “येषु देवेषु “द्युम्नानि द्योतमानान्यन्नानि “वसुतातिः वसूनां धनानां तातिः विस्तारश्च वसून्येव वा “रारन् रमन्ते भृशम् ।। तातिः । तनोतेः क्तिनि व्यत्ययेन आत्वम् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । यद्वा । स्वार्थिकस्तातिल्। रारन्निति रमतेर्यङलुगन्तस्य लङि रूपम् । ते “विश्वे सर्वे देवाः “प्रभृथेषु प्रकृष्टभरणेषु यागेषु

“वाजम् अन्नं “सन्वन्तु ददतु प्रयच्छन्तु ।। ‘ षणु दाने' ।। यद्वा । यस्य सूरेः स्वभूतस्य च दशतयस्य दश चमसेष्ववस्थितस्य सोमस्य प्राप्तये वयमाहूताः स्म तस्मै एतं शर्धं धाम इत्यवोचन् । यस्मादेवं तस्मात् प्रभृथेषु यागेषु वाजं तादृशं सोमलक्षणमन्नं विश्वे देवाः सन्वन्तु संभजन्ताम् ॥ ‘ वन षण संभक्तौ ' इत्यस्य व्यत्ययेन उप्रत्ययः ॥ कीदृशेषु यज्ञेषु । येषु वसुतातिः वसूनां हविर्लक्षणानां धनानां वा विस्तारयितारः ऋत्विजः । वचनव्यत्ययः । द्युम्नानि द्योतमानानि हवींषि रारन् ददति ॥ ‘रा दाने '। लेटि छान्दसः शपः श्लुः । ‘ छन्दस्युभयथा ' इति आर्धधातुकत्वात् ' आतो लोप इटि च' इति आकारलोपः । अत एव ‘ अभ्यस्तानामादिः' इत्याद्युदात्तत्वाभावश्च ॥

मन्दा॑महे॒ दश॑तयस्य धा॒सेर्द्विर्यत्पञ्च॒ बिभ्र॑तो॒ यन्त्यन्ना॑ ।

कि॒मि॒ष्टाश्वं इ॒ष्टरंश्मिरे॒त ईंशा॒नास॒स्तरुंष ऋञ्जते॒ नॄन् ॥१३

मन्दांमहे । दशंऽतयस्य । धा॒सेः । द्विः । यत् । पञ्चं ।
बिभ्रंतः । यन्तिं । अन्नां ।

किम् । इ॒ष्टऽअंश्वः । इ॒ष्टऽरंश्मिः । ए॒ते । ई॒शा॒नासः॑ ।
तरुंषः । ऋ॒ञ्ज॒ते॒ । नॄन् ॥१३

मन्दामहे । दशऽतयस्य । धासेः । द्विः । यत् । पञ्च ।
बिभ्रतः । यन्ति । अन्ना ।

किम् । इष्टऽअश्वः । इष्टऽरश्मिः । एते । ईशानासः ।
तरुषः । ऋञ्जते । नॄन् ॥१३

“मन्दामहे स्तुमो वयं देवान्।। ‘मदि स्तुतौ'। इदित्त्वात् नुम्
।। किमर्थम् । “दशतयस्य “धासेः
दशेन्द्रियतृप्तिसाधनत्वेन दशावयवस्य अन्नस्य “यत्
यस्मात् “द्विः “पञ्च दशविधानि अन्नानि । दश

चमसगृहीतत्वादन्नस्य दशविधत्वम् । एवंविधम् अन्नं "बिभ्रतः धारयन्तो दश चमसाध्वर्यवः "यन्ति होमाय गच्छन्ति अहवनीयं प्रति । यद्वा । ' आश्वमेधिकानि दशान्नानि जुहोति इत्याम्नातानि आज्यमध्वादीनि दशविधान्यन्नानि विश्वेभ्यो देवेभ्यो होतुं धारयन्तो यन्ति यदा तदा मन्दामहे इति । न च इष्टाश्वप्रभृतीन यष्टॄन् विहाय कस्मात् अस्मान्प्रति आगमिष्यन्तीति वाच्यम् । "तरुषः शत्रूणां तारकान् । तरतेरौणादिक उसिन् । "नॄन् नेतॄन् कर्मणाम् एवं महानुभावान् वरुणादीन् "इष्टाश्वः एतन्नामको राजा "किम् "ऋञ्जते किं प्रसाधयति । तथा "इष्टरश्मिः च किमृञ्जते । "एते इदानीं वर्तमानाः "ईशानासः पृथिव्या ईश्वरा राजानश्च किं प्रसाधयन्ति । यद्वा । येषां स्तोतॄणामस्माकमेते स्तुता देवा ईशानासः स्वामिनः किल तादृशान् तरुषः शत्रूणां तारकान् नॄन् कर्मनिर्वाहकान् अस्मान इष्टाश्वादयः किं साधयन्ति किमुपद्रवन्ति न प्रभवन्तीत्यर्थः ।।

हिरं॑ण्यकर्णं मणिग्रीव॒मर्ण॒स्तन्नो॒ विश्वे॑ वरिवस्यन्तु दे॒वाः ।

अ॒र्यो गिरं॑ः स॒द्य आ ज॒ग्मुषी॒रोस्राश्चा॑कन्तू॒भये॑ष्व॒स्मे ॥१४

हिरं॑ण्यऽकर्णम् । म॒णि॒ऽग्री॒व॒म् । अर्णः॑ । तम् । न॒ः । विश्वे॑ । व॒रि॒व॒स्य॒न्तु॒ । दे॒वाः ।

अ॒र्यः । गिरः॑ । स॒द्यः । आ । ज॒ग्मुषीः॑ । आ । उ॒स्राः । चा॒क॒न्तु॒ । उ॒भये॑षु । अ॒स्मे इति॑ ॥१४

हिरण्यऽकर्णम् । मणिऽग्रीवम् । अर्णः । तम् । नः । विश्वे । वरिवस्यन्तु । देवाः ।

अर्यः । गिरः । सद्यः । आ । जग्मुषीः । आ । उस्राः । चाकन्तु । उभयेषु । अस्मे इति ॥१४

“हिरण्यकर्णं हिरण्यविकारकुण्डलाद्युपेतकर्णं “मणिग्रीवं रत्नाद्युपेतकण्ठम् । एतद्द्वयं सर्वावयवस्याप्युपलक्षणम् । एवं सर्वाङ्गाभरणयुक्तम् “अर्णः अरणीयं रूपं तद्वन्तं पुत्रादिकमित्यर्थः । उक्तलक्षणमस्मदीयं रूपं वा “नः अस्माकं “विश्वे सर्वे “देवाः “वरिवस्यन्तु परिचरन्तु प्रयच्छन्त्वित्यर्थः । अर्यः अरणीयो विश्वेषां देवानां संघः “जग्मुषीः स्तोतुर्मुखान्निर्गच्छन्तीः “गिरः स्तुतीः “उस्राः। विकारे प्रकृतिशब्दः । क्षीराज्यादीनि हवींषि च “सद्यः अस्मदागमनानन्तरमेव “चाकन्तु कामयन्ताम् ।। छान्दसः शपः श्लुः परस्मैपदं च । यद्वा । यङ्लुकि नुगभावः ।। आ चाकन्त्विति वा योज्यम् । पर्याप्तं कामयन्तामित्यर्थः । केष्विति तदुच्यते । “अस्मे अस्माकं संबन्धिषु “उभयेषु स्तोतृषु यष्टृषु च । यद्वा । अस्माकमुभयेषु ऐहिकामुष्मिकविषयेषु उभयविधेषु फलेषु ।।

च॒त्वारों मा मश॒र्शारंस्य॒ शिश्व॒स्त्रयो॒ राज्ञ॒ आयंवसस्य जि॒ष्णोः ।

रथों वां मित्रावरुणा दी॒र्घाप्सा॒ः स्यूमंगभस्ति॒ः सूरो॒ नाद्यौंत् ॥१५

च॒त्वारः॑ । मा॒ । म॒श॒र्शारंस्य । शिश्वः॑ । त्रयः॑ । राज्ञः॑ । आयंवसस्य । जि॒ष्णोः ।

रथः॑ । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । दी॒र्घऽअंप्साः । स्यूमंऽगभस्तिः । सूरः॑ । न । अ॒द्यौ॒त् ॥१५

चत्वारः । मा । मशर्शारस्य । शिश्वः । त्रयः । राज्ञः । आयवसस्य । जिष्णोः ।

रथः । वाम् । मित्रावरुणा । दीर्घऽअप्साः । स्यूमऽगभस्तिः । सूरः । न । अद्यौत् ॥१५

“मा मां कक्षीवन्तं “मशर्शारस्य। मशकीकृत्य भृशं शृणोति शारयति वा अमित्रानिति मशर्शारः । एतन्नामकस्य राज्ञः “शिश्वः शिशवः शिशुवदप्रबुद्धाः “चत्वारः पुत्राः बाधन्ते इति शेषः ॥ शिशुशब्दस्य : जसादिषु च्छन्दसि वावचनम् ' इति गुणाभावः ।। तथा “आयवसस्य सर्वतः प्राप्तान्नस्य एतन्नाम्नः “राज्ञः “जिष्णोः जयशीलस्य पुत्राः “त्रयः तेऽपि बाधन्ते इति शेषः । हे “मित्रावरुणा एतन्नामानौ देवौ “वां युवयोः संबन्धी “रथः दीर्घाप्साः । अप्स इति रूपनाम । अतिविस्तृतरूपः “स्यूमगभस्तिः । स्यूममिति सुखनाम । सुखकरदीप्तिः सन् “सूरो “न सूर्य इव “अद्यौत् द्योतताम् । उक्तानाम् अस्मद्विरोधिनां पुरतः स्फुरन् भयजनको भवत्वित्यर्थः ॥ द्युतेः ‘ छन्दसि लुङलङ्लिटः । इति लुङ् । ‘ द्युद्भ्यो लुङि' (पा. सू. १. ३. ९१ ) इति परस्मैपदम् । सिचि वृद्धिः परस्मैपदेषु ' ( पा. सू. ७, २. १ ) इति वृद्धिः। ‘ बहुलं छन्दसि ' इति इडभावे हल्ङ्यादिसंयोगान्तलोपौ । यद्वा । ‘ द्यु अभिगमने' । आदादिकः । छान्दसे लङि ‘

उतो वृद्धिर्लुकि हलि' ( पा. सू. ७. ३. ८९ ) इति वृद्धिः ॥

।। ३ ।।

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.७ | सूक्तं १.३७ | सूक्तं १.६७ | सूक्तं १.९७ | सूक्तं १.१२७ | सूक्तं १.१५७ | सूक्तं १.१८७ |
| सूक्तं १.८ | सूक्तं १.३८ | सूक्तं १.६८ | सूक्तं १.९८ | सूक्तं १.१२८ | सूक्तं १.१५८ | सूक्तं १.१८८ |
| सूक्तं १.९ | सूक्तं १.३९ | सूक्तं १.६९ | सूक्तं १.९९ | सूक्तं १.१२९ | सूक्तं १.१५९ | सूक्तं १.१८९ |
| सूक्तं १.१० | सूक्तं १.४० | सूक्तं १.७० | सूक्तं १.१०० | सूक्तं १.१३० | सूक्तं १.१६० | सूक्तं १.१९० |
| सूक्तं १.११ | सूक्तं १.४१ | सूक्तं १.७१ | सूक्तं १.१०१ | सूक्तं १.१३१ | सूक्तं १.१६१ | सूक्तं १.१९१ |
| सूक्तं १.१२ | सूक्तं १.४२ | सूक्तं १.७२ | सूक्तं १.१०२ | सूक्तं १.१३२ | सूक्तं १.१६२ | |
| सूक्तं १.१३ | सूक्तं १.४३ | सूक्तं १.७३ | सूक्तं १.१०३ | सूक्तं १.१३३ | सूक्तं १.१६३ | |

# ऋग्वेदः सूक्तं १.१२३

ऋग्वेदः - मण्डल १
← सूक्तं १.१२२
सूक्तं १.१२४ →

सूक्तं १.१२३

कक्षीवान् दैर्घतमस औशिजः

दे. उषाः । त्रिष्टुप् ।

---

पृथू रथो दक्षिणाया अयोज्यैनं देवासो अमृतासो अस्थुः ।

कृष्णादुदस्थादर्या विहायाश्चिकित्सन्ती मानुषाय क्षयाय ॥१॥

पूर्वा विश्वस्माद्भुवनादबोधि जयन्ती वाजं बृहती सनुत्री ।

उच्चा व्यख्यद्युवतिः पुनर्भूरोषा अगन्प्रथमा पूर्वहूतौ ॥२॥

यदद्य भागं विभजासि नृभ्य उषो देवि मर्त्यत्रा सुजाते ।

देवो नो अत्र सविता दमूना अनागसो वोचति सूर्याय ॥३॥

गृहंगृहमहना यात्यच्छा दिवेदिवे अधि नामा दधाना ।

सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनाम् ॥४॥

भगस्य स्वसा वरुणस्य जामिरुषः सूनृते प्रथमा जरस्व ।

पश्चा स दघ्या यो अघस्य धाता जयेम तं दक्षिणया रथेन ॥५॥

उदीरतां सूनृता उत्पुरंधीरुदग्नयः शुशुचानासो अस्थुः ।

स्पार्हा वसूनि तमसापगूळ्हाविष्कृण्वन्त्युषसो विभातीः ॥६॥

अपान्यदेत्यभ्यन्यदेति विषुरूपे अहनी सं चरेते ।

परिक्षितोस्तमो अन्या गुहाकरद्यौदुषाः शोशुचता रथेन ॥७॥

सदृशीरद्य सदृशीरिदु श्वो दीर्घं सचन्ते वरुणस्य धाम ।

अनवद्यास्त्रिंशतं योजनान्येकैका क्रतुं परि यन्ति सद्यः ॥८॥

जानत्यह्नः प्रथमस्य नाम शुक्रा कृष्णादजनिष्ट श्वितीची ।

ऋतस्य योषा न मिनाति धामाहरहर्निष्कृतमाचरन्ती ॥९॥

कन्येव तन्वा शाशदानाँ एषि देवि देवमियक्षमाणम् ।

संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती ॥१०॥

सुसंकाशा मातृमृष्टेव योषाविस्तन्वं कृणुषे दृशे कम् ।

भद्रा त्वमुषो वितरं व्युच्छ न तत्ते अन्या उषसो नशन्त ॥११॥

अश्वावतीर्गोमतीर्विश्ववारा यतमाना रश्मिभिः सूर्यस्य ।

परा च यन्ति पुनरा च यन्ति भद्रा नाम वहमाना उषासः ॥१२॥

ऋतस्य रश्मिमनुयच्छमाना भद्रम्भद्रं क्रतुमस्मासु धेहि ।

उषो नो अद्य सुहवा व्युच्छास्मासु रायो मघवत्सु च स्युः ॥१३॥

## सायणभाष्यम्

'कदित्था' इत्यस्मिन् अष्टादशेऽनुवाके षट् सूक्तानि । तत्र ‘पृथू रथः' इति तृतीयं सूक्तं त्रयोदशर्चम् । अत्रानुक्रमणिका-' पृथुः सप्तोनोपस्यं तु' इति । दीर्घतमसः पुत्रः कक्षीवानृषिः ‘ऋषिश्चान्यस्मादृषेः' इति

परिभाषितत्वात् । अनादेशपरिभाषया त्रिष्टुप् छन्दः । तुशब्दप्रयोगात् इदमादिके सूक्ते उषोदेवताके । प्रतिरनुवाके उषस्ये क्रतावस्य चौत्तरस्य च विनियोगः । अथोषम्यः' इति खण्डे सूत्रितं- ' पृथू रथ इति सूक्ते प्रत्यर्चिरित्यष्टौ ' ( आश्व. श्रौ. ४.१४ ) इति । तथाश्विनशस्त्रे इदमादिसूक्तद्वयस्य विनियोगः ' प्रातरनुवाकन्यायेन ' ( आश्व. श्रौ. ६. ५) इत्यतिदिष्टत्वात् ।

पृथू रथो दक्षिणाया अयोज्यैनं देवासो अमृतासो अस्थुः ।

कृष्णादुदस्थादर्या३ विहायाश्चिकित्सन्ती मानुषाय क्षयाय ॥१

पृथुः । रथः । दक्षिणायाः । अयोजि । आ । एनम् । देवासः । अमृतासः । अस्थुः ।

कृ॒ष्णात् । उत् । अ॒स्था॒त् । अ॒र्या॑ । विऽहा॑याः ।
चिकि॑त्सन्ती । मानु॑षाय । क्षया॑य ॥१

पृथुः । रथः । दक्षिणायाः । अयोजि । आ । एनम् ।
देवासः । अमृतासः । अस्थुः ।

कृष्णात् । उत्। अस्थात् । अर्या। विऽहायाः ।
चिकित्सन्ती । मानुषाय । क्षयाय ॥ १ ॥

"दक्षिणायाः प्रवृद्धायाः स्वव्यापारकुशलायाः
उषोदेवतायाः पृथुः विस्तीर्णः "रथः "अयोजि अश्वैर्युक्तः
संनद्धोऽभूत् । अत्र यद्यपि देवताविशेषो न श्रुतः तथापि
उषस्यत्वात् उषस इति गम्यते । “एनं संनद्धं रथम्
अमृतासः अमरणधर्माणः "देवासः देवनाशीलाः
हविर्भाजो देवाः “आ “अस्थुः अस्थितवन्तः देवयजनं
गन्तुमारूढाः इत्यर्थः । अनन्तरं सा उषाः "कृष्णात्
निकृष्टवर्णात् नैशात् तमसः सकाशात् "उदस्थात् उत्थिता

अभूत् । “कृष्णं कृष्यतेर्निकृष्टो वर्णः' (निरु. २. २०) इति यास्कः । कीदृशी सा। "अर्या अरणीया पूजनीया “विहायाः विविधगमनयुक्ता महती वा । विहाया इति महन्नाम 'विहायाः यह्वः' ( नि. ३. ३. १२) इति तन्नामसु पाठात् । मानुषाय "क्षयाय मनुष्याणां निवासाय “चिकित्सन्ती अन्धकारनिवारणरूपां चिकित्सां कुर्वती तमो निवारयन्तीत्यर्थः॥

पूर्वा॒ विश्व॑स्मा॒द्भुव॑नादबोधि॒ जय॑न्ती॒ वाजं॑ बृह॒ती सनु॑त्री ।

उ॒च्चा व्य॑ख्यद्यु॒व॒तिः पुन॒र्भूरोषा अ॑गन्प्रथ॒मा पू॒र्वहू॑तौ ॥२

पूर्वा॑ । विश्व॑स्मात् । भुव॑नात् । अ॒बो॒धि॒ । जय॑न्ती । वाज॑म् । बृ॒ह॒ती । सनु॑त्री ।

उ॒च्चा । वि । अ॒ख्य॒त् । यु॒व॒तिः । पु॒नः॒ऽभूः । आ । उ॒षाः । अ॒ग॒न् । प्र॒थ॒मा । पू॒र्वऽहूंतौ ॥२

पूर्वा । विश्वस्मात् । भुवनात् । अबोधि । जयन्ती । वाजम् । बृहती । सनुत्री ।

उच्चा। वि । अख्यत् । युवतिः । पुनःऽभूः । आ । उषाः । अगन् । प्रथमा । पूर्वऽहूतौ ॥२॥

“विश्वस्मात् "भुवनात् सर्वस्मात् सुप्ताद्भूतजातात् "पूर्वा प्रथमा सती इयम् उषाः "अबोधि बुद्धा अभूत् । उषःकालमवगत्य हि पश्चात् सर्वे प्राणिनः प्रतिबुध्यन्ते। कीदृशी सा। "वाजं गमनशीलं प्रकाशं निर्वर्त्य अन्धकारं “जयन्ती पराभवं कुर्वती । यद्वा । वाजशब्दोऽअन्ननामसु पठितत्वादन्ननाम । अन्नं वै वाजः' (श. ब्रा. ९. ३. ४. १; तै. ब्रा. १. ३. ६. २ ) इति श्रुतेश्च । यजमानार्थम् अन्नं संपादयन्ती । “बृहती महती “सनुत्री सर्वं जगत्संभजन्ती

दात्री वा प्रकाशस्य । किंच सा उषाः “उच्चा उच्चैरुन्नता सती “व्यख्यत् विचष्टे सर्वं जगत् पश्यति' इत्यर्थः । कीदृशी सा । "युवतिः मिश्रणशीला नित्ययौवना वा पुनर्भूः पुनःपुनर्भवनशीला प्रतिदिनं वर्तमानत्वात्। सा "उषाः पूर्वहूतौ सत्यां “प्रथमा मुख्या प्रकृष्टा सती "आ “अगन् देवयजनदेशंप्रत्यागच्छति ।' प्रथम इति मुख्यनाम प्रतमो भवति ' (निरु. २. २२) इति यास्कः । इतरदेवेभ्यः पूर्वमाहूता सती शीघ्रमेवागच्छतीत्यर्थः ॥

यद॒द्य भा॒गं वि॒भजा॑सि॒ नृभ्य॒ उषो॑ देवि मर्त्य॒त्रा सु॑जाते ।

दे॒वो नो॒ अत्र॑ सवि॒ता दमू॑ना॒ अना॑गसो वोचति॒ सूर्या॑य ॥३

यत् । अ॒द्य । भा॒गम् । वि॒ऽभजा॑सि । नृऽभ्यः॑ । उषः॑ । दे॒वि॒ । म॒र्त्य॒ऽत्रा । सु॒ऽजा॒ते॒ ।

दे॒वः । न॒ः । अत्रं । स॒वि॒ता । दमूंनाः । अनांगसः । वो॒च॒ति॒ । सूर्यांय ॥३

यत् । अद्य । भागम् । विऽभजासि । नृऽभ्यः । उषः । देवि । मर्त्यऽत्रा । सुऽजाते ।

देवः । नः । अत्र । सविता । दमूनाः । अनागसः । वोचति । सूर्याय ॥ ३ ॥

“सुजाते शोभनजनने "देवि देवनशीले हे उषः उषःकालाभिमानिदेवते "मर्त्यत्रा मनुष्याणां पालयित्री त्वम् अद्य अस्मिन् काले "नृभ्यः मनुष्येभ्यः यत् यं “भागं भजनीयं स्वकीयप्रकाशस्यांशं "विभजासि विभज्य ददासि । यद्वा । मर्त्यत्रा मर्त्येषु मध्ये नृभ्यः यजमानेभ्यः देवानां भागं विभज्य ददासि । उषसि प्रवृत्तायां हविषो दीयमानत्वात् उषसो दातृत्वमुपचर्यते । "अत्र अस्मिन् भागविषये "दमूनाः यजमानेभ्यः अभिमतफलदानमनाः।

दमूना दममना वा दाममना वा दान्तमना वा' (निरु. ४. ४ ) इति निरुक्तवचनम् । तादृशः "सविता प्रेरकः "देवः “नः अस्मान् "अनागसः "वोचति अपापान् यागयोग्यान् ब्रवीतु अनुगृह्णातु इत्यर्थः। किमर्थम्। "सूर्याय अस्मद्यागदेशं प्रति सूर्यस्यागमनार्थम् ॥

गृ॒हंगृं॑हमह॒ना या॒त्यच्छा॑ दि॒वेदिं॑वे॒ अधि॒ नाम॒ा दधा॑ना ।

सिषा॑सन्ती द्यो॒त॒ना शश्व॒दागा॒दग्रं॑मग्र॒मिद्भ॑जते॒ वसू॑नाम् ॥४

गृ॒हम्ऽगृं॑हम् । अ॒ह॒ना । या॒ति॒ । अच्छ॑ । दि॒वेऽदिं॑वे । अधि॑ । नाम॑ । दधा॑ना ।

सिसा॑सन्ती । द्यो॒त॒ना । शश्व॑त् । आ । अ॒गा॒त् । अग्र॑म्ऽअग्रम् । इत् । भ॒ज॒ते॒ । वसू॑नाम् ॥४

गृहम्ऽगृहम् । अहना । याति । अच्छ। दिवेऽदिवे । अधि । नाम । दधाना ।

सिसासन्ती । द्योतना । शश्वत् । आ । अगात् । अग्रम्ऽअग्रम् । इत् । भजते । वसूनाम्॥४॥

"अह्ना। उषो नामैतत् । 'अहना द्योतना' (नि. १.८.११) इति तन्नामसु पाठात् । सा देवी "दिवेदिवे प्रत्यहम्। 'दिवेदिवे द्यविद्यवि' (नि. १.९.११) इति अहर्नामसु पाठात्। "गृहंगृहं तत्तद्यज्ञगृहम् "अच्छ आभिमुख्येन याति गच्छति। कीदृशी। "अधि अधिकं "नाम नमनं प्रह्वत्वं प्रतिगृहम् उद्योगं प्रकाशनरूपं दधाना धारयन्ती । यद्वा । अधि दधाना अधिकं धारयन्ती । किंच "सिषासन्ती संभक्तुमिच्छन्ती "द्योतना कृत्स्नं जगत् द्योतनशीला "शश्वत् प्रतिदिनम् "आगात् आगच्छति । पूर्वं यातीत्युक्तत्वात् पुनः आगादिति

वचनमावश्यकत्वद्योतनार्थम् । आगत्य च “वसूनां धनानां हविर्लक्षणानाम् अग्रमग्रमित् तत्तच्छ्रेष्ठभागं “भजते सेवते स्वीकरोतीत्यर्थः ॥

भगं॑स्य॒ स्वसा॒ वरु॑णस्य जा॒मिरुषः॑ सूनृते प्रथ॒मा जं॑रस्व ।

प॒श्चा स दं॑घ्या॒ यो अ॒घस्यं॑ धा॒ता जयें॑म॒ तं दक्षिं॑णया॒ रथें॑न ॥ ५

भगं॑स्य । स्वसां॑ । वरुं॑णस्य । जा॒मिः । उषः॑ । सू॒नृ॒ते॒ । प्र॒थ॒मा । ज॒र॒स्व॒ ।

प॒श्चा । सः । द॒घ्या॒ः । यः । अ॒घस्यं॑ । धा॒ता । जयें॑म । तम् । दक्षिं॑णया । रथें॑न ॥५

भगस्य । स्वसा । वरुणस्य । जामिः । उषः । सूनृते । प्रथमा । जरस्व ।

पश्चा । सः । दघ्याः । यः । अघस्य । धाता । जयेम । तम् । दक्षिणया । रथेन ॥ ५ ॥

"सूनृते सुष्ठु मनुष्याणां नेत्रि "उषः हे उषोदेवते "भगस्य सर्वैर्भजनीयस्य आदित्यस्य "स्वसा असि स्वसृस्थानीयसि । तेन सहोत्पद्यमानत्वात् तद्वत्पूज्येत्यर्थः। तथा "वरुणस्य तमोवारकस्य सवितुर्देवस्य "जामिः असि भगिनीस्थानीयासि। एकस्मिन्नेव स्थाने उत्पद्यमानत्वात्। जनयन्त्युत्पादयन्ति अस्यामपत्यम् अन्ये इति जामिः। यद्वा । जमति गच्छति स्वोत्पत्तिस्थानात् अन्यत्रेति । उक्तनिर्वचनद्वयम् अभिप्रेत्य यास्क आह-' न जामये भगिन्यै जामिरन्येऽस्यां जनयन्ति जामपत्यं जमतेर्वा स्याद्गतिकर्मणो निर्गमनप्राया भवति ' (निरु. ३. ६ ) इति । तादृशी त्वं "प्रथमा इतरदेवेभ्यः पूर्वा उत्कृष्टा वा सती "जरस्व स्तुता भव । जरतिः स्तुत्यर्थः । ' जरा स्तुतिर्जरतेः स्तुतिकर्मणः ' ( निरु. १०. ८) इति यास्कः । "पश्चा पश्चात्

त्वत्प्रीत्यनन्तरं “यः "अघस्य “धाता यः कश्चिद्दुःखस्य तदुत्पादकपापस्य वा धारयितास्ति "सः "दध्याः गच्छतु । वचनव्यत्ययः । दध्यतिर्गत्यर्थः ।' दृध्यति दभ्नोति ' ( नि. २. १४. ६१) इति गत्यर्थेषु पाठात् । यदि स पापी बलीयान् तं दक्षिणया प्रवृद्धया सहायभूतया त्वया “रथेन अस्मदीयरथादिसाधनेन च “जयेम ॥ ॥ ४ ॥

उदीं॑रतां सू॒नृता॒ उत्पुरं॑धी॒रुद॒ग्नयः॑ शुशुचा॒नासो॑ अस्थुः ।

स्पा॒र्हा वसूं॑नि॒ तम॒सापं॑गूळ्हा॒विष्कृं॑ण्वन्त्यु॒षसो॑ विभा॒तीः ॥ ६

उत् । ई॒र॒ता॒म् । सू॒नृताः॑ । उत् । पुरम्ऽधीः । उत् । अ॒ग्नयः॑ । शु॒शु॒चा॒नासः॑ । अ॒स्थु॒ः ।

स्पा॒र्हा । वसू॑नि । तमं॑सा । अपं॑ऽगूळ्हा । आ॒विः ।
कृ॒ण्व॒न्ति॒ । उ॒षसः॑ । वि॒ऽभा॒तीः ॥६

उत् । ईरताम् । सूनृताः । उत् । पुरम्ऽधीः । उत् । अग्नयः
। शुशुचानासः । अस्थुः ।

स्पार्हा । वसूनि । तमसा । अपऽगूळ्हा । आविः ।
कृण्वन्ति । उषसः । विऽभातीः ॥ ६ ॥

“सूनृताः प्रियसत्यात्मिकाः वाचः' “उदीरताम् उद्गच्छन्तु ।
हे ऋत्विजः उत्कृष्टं यथा भवति तथा स्तोत्रं प्रवर्तयध्वम् ।
तथा “पुरंधीः पुरंधयः । पुरं शरीरं यासु धीयते याभिर्वा ताः
पुरंधयः प्रज्ञाः प्रयोगविषयाः । ताः अपि उन्मिषन्तु ।
प्रज्ञोपलक्षितानि कर्माणि प्रवर्तन्तामित्यर्थः । यद्यपि
प्राणवायुना शरीरं धार्यते तथापि ' यो वै प्राणः सा प्रज्ञा या
वा प्रज्ञा स प्राणः ' ( कौ. उ. ३. ३) इति श्रुतेः
प्राणप्रज्ञयोरेकत्वात् प्रज्ञायाः शरीरधारणमविरुद्धम् ।

तथा अग्नयः आहवनीयाद्याः “शुशुचानासः अत्यन्तं दीप्यमानाः "उत् "अस्थुः उत्तिष्ठन्तु प्रज्वलयन्तु इत्यर्थः । किमर्थमेवमिति तदुच्यते । यतः “विभातीः विविधं भासमानाः “उषसः उषोदेवताः “तमसा अपगूळ्हानि अन्धकारेणात्यन्तं गोपितानि स्पार्हा स्पृहणीयानि वसूनि वासयोग्यानि यज्ञसाधनभूतहविरादीनि “आविष्कृण्वन्ति यथावस्तु प्रकटीकुर्वन्ति तस्मात् स्तोत्रादिकं कुर्वन्वित्यर्थः ॥

अपा॒न्यदेत्य॒भ्य१॒॑न्यदें॑ति॒ विषुं॑रूपे॒ अहं॑नी॒ सं चं॑रेते ।

प॒रि॒क्षितो॒स्तमों अ॒न्या गुहां॒क॒रद्यौं॑दु॒षाः शोशुं॑चता॒ रथें॑न ॥७

अपं । अ॒न्यत् । एतिं । अ॒भि । अ॒न्यत् । ए॒ति॒ । विषुं॑रूपे॒ इति॒ विषुं॑ऽरूपे । अहं॑नी॒ इतिं । सम् । च॒रे॒ते॒ इतिं ।

प॒रि॒ऽक्षितोः॑ । तमः॑ । अ॒न्या । गुहा॑ । अ॒क॒: । अद्यौ॑त् ।
उ॒षाः । शोशु॑चता । रथे॑न ॥७

अप । अन्यत् । एति । अभि । अन्यत् । एति । विषुरूपे
इति विषुऽरूपे । अहनी इति । सम् । चरेते इति ।।

परिऽक्षितः । तमः । अन्या । गुह। अकः। अद्यौत् । उषाः।
शोशुचता । रथेन ॥७॥

इदानीम् अहोरात्रस्तुतिद्वारा उषाः स्तूयते । “विषुरूपे
वक्ष्यमाणप्रकारेण नानारूपे “अहनी अहश्च रात्रिश्चोभे “सं
"चरेते । समित्येकीभावे । सहैव अव्यवधानेन चरतः ।
अत्राह्नः साहचर्यात् तत्प्रतियोगित्वाच्च रात्रिरपि अहः
इत्युच्यते । उत्तरत्र मन्त्रान्तरे अयमेवार्थः स्पष्टः आम्नातः
‘अहश्च कृष्णमहर्जुनं च वि वर्तेते रजसी वेद्याभिः ' ( ऋ.
सं. ६. ९. १ ) इति । तयोर्मध्ये अन्यत् रात्रिरूपमहः "अप
"एति अपगच्छति प्रतिलोमं गच्छति वा । ‘ अपेत्येतस्य

प्रतिलोम्यम्' (निरु. १. ३) इति यास्कः । "अन्यत् च दिवसाख्यमहः “अभि “एति अभिमुख्येन गच्छति । ‘ अभीत्याभिमुख्यम्' (निरु. १. ३) इति यास्कः । रात्र्यां प्रतिनिवृत्तायाम् अहः अभिमुखमागच्छतीत्यर्थः । विषुरूपे सं चरेते इति यदुक्तं तदेव स्पष्टीक्रियते । "परिक्षितोः पर्यायेण निवसतोः परिक्षपयतोर्वा । प्राणिनाम् अहःसु अतीतेषु आयुषः क्षयात् परिक्षपणं प्रसिद्धम् । तयोर्मध्ये "अन्या रात्रिः “तमः तमोरूपा "गुहा पदार्थानां गूहनम् "अकः करोति । अन्या अहरेकदेशभूता च "उषाः शोशुचता भृशं दीप्तेन "रथेन "अद्यौत् । द्योतते प्रकाशते प्रकाशयति वा सर्वम् । रात्रिः तमोरूपत्वात् सर्वं जगत् आवृणोति । उषास्तु सर्वान् भावान् प्रकाशयति इत्युषसः स्तुतिः ॥

स॒दृशी॑र॒द्य स॒दृशी॒रिदु॒ श्वो दी॒र्घं सं॑चन्ते॒ वरु॑णस्य॒ धाम॑ ।

अ॒न॒व॒द्यास्त्रि॒ंशतं॒ योजंना॒न्येकैंका॒ क्रतुं॒ परिं यन्ति स॒द्यः ॥८

स॒ऽदृशीः । अ॒द्य । स॒ऽदृशीः । इत् । ऊ॒ं इतिं । श्वः । दी॒र्घम् । स॒च॒न्ते॒ । वरुंणस्य । धामं ।

अ॒न॒व॒द्याः । त्रि॒ंशतंम् । योजंनानि । एकांऽएका । क्रतुंम् । परिं । य॒न्ति॒ । स॒द्यः ॥८

सऽदृशीः । अद्य । सऽदृशीः । इत् । ऊँ इति । श्वः । दीर्घम् । सचन्ते । वरुणस्य । धाम ।

अनवद्याः । त्रिशतम् । योजनानि । एकाऽएका । क्रतुम् । परि । यन्ति । सद्यः ॥ ८ ॥

“अद्य अस्मिन्नहनि. "सदृशीः "इत् परस्परं सदृश्यः एव । तथा “श्वः इत् परस्मिन्नप्यहनि “सदृशीः परस्परं सदृश्य एव। उशब्दोऽपिशब्दार्थः। इच्छब्द एवार्थः । अद्यतन्योऽपि श्वस्तनीभिः सदृश्यः श्वस्तन्यश्च

अद्यतनीभिः। एवम् अहरन्तरेण सादृश्यम् । कथं सादृश्यमिति तदुपपद्यते । यदा नक्षत्राणि न दृश्यन्ते सूर्यश्च नोदेति उषःकालः। स चैकविंशतिघटिकाभिः षड्विंशितिपराभिश्च संमितः । सूर्यो हि प्रतिदिनम् एकोनषष्ट्यधिकपञ्चसहस्रयोजनानि मेरुं प्रादक्षिण्येन परिभ्रमति । तथा सति यत्र यत्र लङ्कादिभूप्रदेशे सूर्यो गच्छति तस्य तस्य पुरस्तात् त्रिंशयोजनम् उषाः अपि गच्छति । सूर्यो यस्मिन् देशे गच्छति तत्र त्रिंशद्योजनं पुरस्ताद्देशस्थितानामुदितो दृश्यते । एवं सर्वप्रदेशेष्वपि । तथा उषाः अपि यत्र गच्छति ततः पुरस्तात् त्रिंशद्योजनभूभागवर्तिनामुदिता दृश्यते । एवं लङ्कादिसर्वप्रदेशस्थितानामप्युषस उदयोऽवगन्तव्यः । एवं च सति एकस्मिन् भूभागे यावत्कालं यथोषाः प्रकाशयति तथा भूभागान्तरेऽपि तावन्तं कालं प्रकाशयति । एवम् उक्तरीत्या एकस्मिन्नेवाहनि सर्वप्रदेशवर्तिनामप्युषसः सदृश्यः । प्रदेशबाहुल्यमपेक्ष्य

उषसां बहुत्वात् बहुवचनम् । एवमेकरूपाः उषसः "अनवद्याः शुद्धाः। तासामुदयात् सर्वे भावा अनवद्या भविष्यन्ति किमु वक्तव्यं तासामनवद्यत्वे । "दीर्घम् उक्तरीत्या अत्यन्तमायतं "वरुणस्य तमोनिवारकस्य सूर्यस्य “धाम स्थानं मेरुवलयं "सचन्ते प्रतिदिनं सेवन्ते । कियद्दूरमिति तदुच्यते । "त्रिंशतं "योजनानि त्रिंशद्योजनानि पुरतः । सूर्यो यत्र यत्रोदेति ततस्ततस्त्रिंशद्योजनं पुरस्तादुद्यन्तीत्यर्थः । किंच आसां मध्ये "एकैका उषा लङ्काद्येकैकभूभागवर्तिनां "क्रतुं गमनागमनादिरूपं कर्म तद्विषयां प्रज्ञां वा । तथा च निरुक्तं- क्रतुं दधिक्राः कर्म वा प्रज्ञां वा ' ( निरु. २. २८ ) इति । सद्यः तदानीमेव स्वोदयकाले एव "परि “यन्ति परितो गच्छन्ति । निर्वहन्तीत्यर्थः । तत्तद्भूभागविशेषेण सूर्यस्योदयो ज्योतिःशास्त्रे प्रदर्शितः । ‘ उदयो यो लङ्कायां सोऽस्तमयः सवितुरेव सिद्धपुरे । मध्याह्नो

यवकोट्यां रोमकविषयेऽर्धरात्रः स्यात्' ( आर्य. ४. १३) इति ।।

जा॒न॒त्यह्नः॑ प्रथ॒मस्य॒ नाम॑ शु॒क्रा कृ॒ष्णाद॑जनिष्ट श्वि॒ती॒ची ।

ऋ॒तस्य॒ योषा॒ न मि॑नाति॒ धामाह॑रहर्निष्कृ॒तमा॒चर॑न्ती ॥९

जा॒न॒ती । अह्नः॑ । प्र॒थ॒मस्य॑ । नाम॑ । शु॒क्रा । कृ॒ष्णात् । अ॒ज॒नि॒ष्ट । श्वि॒ती॒ची ।

ऋ॒तस्य॑ । योषा॑ । न । मि॒ना॒ति॒ । धाम॑ । अहः॑ऽअहः । निः॒ऽकृ॒तम् । आ॒ऽचर॑न्ती ॥९

जानती । अह्नः । प्रथमस्य । नाम । शुक्रा । कृष्णात् । अजनिष्ट । श्वितीची ।

ऋतस्य । योषा । न । मिनाति । धाम । अहःऽअहः । निःऽकृतम् । आऽचरन्ती ।। ९ ।।

उषाः "प्रथमस्य मुख्यस्य प्रथमानस्य वा "अह्नः दिवसस्य "नाम नमनमागमनं "जानती अवगच्छन्ती प्राणिनां प्रज्ञापयन्तीत्यर्थः। सा उषाः "शुक्रा स्वतो दीप्ता अत एव "श्वितीची श्वैत्यं गच्छन्ती प्रकाशं प्राप्नुवती कृष्णात् निकृष्टात् तमसः सकाशात् "अजनिष्ट प्रादुर्भवति । यद्यपि तमसः सकाशान्नोत्पद्यते तथापि तदनन्तरभावित्वात् तत उत्पद्यते इत्युपचर्यते । उत्पन्ना सा “ऋतस्य सत्यभूतस्यादित्यस्य “धाम तेजोयुक्तं स्थानं "योषा मिश्रयन्ती “न "मिनाति न हिनस्ति तदीयं तेजो न पराभवति । अपि तु "अहरहः सर्वेष्वहःसु "निष्कृतमाचरन्ती अलंकारशोभां कुर्वती । यद्वा । ऋतस्य सत्यभूतस्य यज्ञस्य धाम देवयजनाख्यं स्थानं योषा मिश्रणशीला सती न मिनाति न हिनस्ति। किंतु अहरहः

सर्वेषु यागदिवसेषु निष्कृतं हविरादीनां प्रकाशनरूपमलंकारम् आचरन्ती कुर्वती तादृश्युषा अजनिष्टेति पूर्वत्रान्वयः ॥

क॒न्येव त॒न्वा॒३॒ शाशंदाना॒ँ एषिं देवि दे॒वमियंक्षमाणम् ।

सं॒स्मयंमाना युव॒तिः पु॒रस्तांदा॒विर्वक्षांसि कृणुषे विभा॒ती ॥ १०

क॒न्यांऽइव । त॒न्वां । शाशंदाना । एषिं । दे॒वि॒ । दे॒वम् । इयंक्षमाणम् ।

स॒म्ऽस्मयंमाना । यु॒व॒तिः । पु॒रस्तांत् । आ॒विः । वक्षांसि । कृ॒णु॒षे॒ । वि॒ऽभा॒ती ॥१०

कन्याऽइव । तन्वा । शाशदाना । एष् । देवि । देवम् । इयक्षमाणम् ।।

सम्ऽस्मयमाना। युवतिः । पुरस्तात् । आविः । वक्षेंसि । कृणुषे । विऽभाती ॥ १० ॥

"तन्वा शरीरेण “शाशदाना शाशाद्यमाना स्पष्टतां प्राप्नुवती । ‘ शाशदानः शाशाद्यमानः ' (निरु. ६. १६ ) इति यास्कः । "कन्येव कमनीया कन्यकेव। ' कन्या कमनीया भवति क्वेयं नेतव्येति वा ' ( निरु. ४, १५) इति यास्कः । सा यथा जनान्तिके विवसना संचरति तथा हे उषस्त्वं कन्या कमनीया अप्रगल्भा सती तन्वा शरीरेण शाशदाना स्पष्टतां गच्छन्ती दृश्यसे । पश्चात् प्रगल्भा सती हे "देवि देवनशीले “इयक्षमाणं यष्टुमिच्छन्तम् अभिमतं दातुमिच्छन्तं वा "देवं द्योतनस्वभावं सूर्यरूपं प्रियम् “एषि गच्छसि । ततः पश्चात् "युवतिः यौवनोपेता सती पुरस्तात् पत्युः सूर्यस्य पुरतः "संस्मयमाना सम् ईषत् हसन्ती हास्यं कुर्वती विभाती अत्यन्तं भासमाना “वक्षांसि वक्षसोपलक्षितानवयवान् "आविः "कृणुषे प्रकटीकरोषि ।

यद्वा । युवतिरिति लुप्तोपमा । यथा लोके प्रगल्भा योषित् पुरस्तात् प्रियतमस्य पुरतः संस्मयमाना दन्तप्रदर्शनाय ईषद्धसनं कुर्वती वक्षांसि वक्षसोपलक्षितानि गोप्यानि बाहुमूलस्तनादीनि आविष्करोति तथा त्वमपीत्यर्थः ।
यद्वा । पुरस्तात् पूर्वस्यां दिशि संस्मयमाना स्मितोपमप्रकाशं कुर्वती युवतिः सर्वेषु भावेषु मिश्रणशीला वक्षांसि । वक्ष इति रूपनाम । दन्तस्थानीयानि नीलपीतादीनि रूपाण्याविष्करोषि ।। ।। ५ ।।

सु॒सं॒का॒शा मा॒तृमृ॑ष्टेव॒ योषा॒विस्त॒न्वं॑ कृणुषे दृ॒शे कम् ।

भ॒द्रा त्वमु॑षो वित॒रं व्यु॑च्छ॒ न तत्ते॑ अ॒न्या उ॒षसो॑ नशन्त ॥ ११

सु॒ऽस॒ङ्का॒शा । मा॒तृमृ॑ष्टाऽइव । योषा॑ । आ॒विः । त॒न्व॑म् । कृ॒णु॒षे॒ । दृ॒शे । कम् ।

भ॒द्रा । त्वम् । उ॒षः॒ । वि॒ऽत॒रम् । वि । उ॒च्छ॒ । न । तत् । ते॒ । अ॒न्याः । उ॒षसः॑ । न॒श॒न्त॒ ॥११

सुऽसंकाशा । मातृमृष्टाऽइव । योषा । आविः । तन्वम् । कृणुषे । दृशे । कम् ।

भद्रा । त्वम्। उषः। विऽतरम् । वि। उच्छ। न । तत् । ते। अन्याः । उषसः । नशन्त ॥११॥

हे उषोदेवि "मातृमृष्टा मातृभिर्जननीभिः शुद्धीकृता "योषा इव "सुसंकाशा अत्यर्थं प्रकाशमाना एवं तन्वं स्वकीयां तनुं "दृशे सर्वेषां दर्शनाय "आविः "कृणुषे प्रकटयसि । यथा लोके मात्रादिना स्वलंकृता अत्यन्तं शोभना सती स्वकीयं लावण्योपेतं सर्वशरीरं दर्शनायाविष्करोति

तद्वत्त्वमपीत्यर्थः । अत्र "कम् इति पादपूरणः अत्र विशेषस्याभावात् • शिशिरं जीवनय कम्' इतिवत् । तथा च यास्काचार्यः-' मिताक्षरेष्वनर्थकाः कमीमिद्विति' (निरु. १. ९) इति । यद्वा । कमिति सुखवचनः । सुखं यथा भवति तथा आविष्कृणुषे इत्यर्थः । हे उषः यत एवं करोषि अतः "भद्रा कल्याणशीला स्तुत्या "त्वं "वितरं "व्युच्छ आवरकमन्धकारं विप्रकृष्टं यथा भवति तथा विवासय । अत्र यद्यपि विशेषो न श्रुतस्तथापि प्रकाशनिवर्त्यत्वात् परिहरणीयत्वाच्च व्युदसनीयं तम एव इति गम्यते । किंच "ते तव "तत् व्युदसनम् "अन्याः "उषसः अतीताः आगामिन्यश्च "न "नशन्त न व्याप्नुवन्ति तथा व्युच्छेति भावः । नशिर्व्याप्तिकर्मा।' इन्वति ननक्ष' इति व्याप्तिकर्मसु पाठात् ॥

अश्वा॑वती॒र्गोम॑तीर्वि॒श्ववा॑रा॒ यत॑माना र॒श्मिभि॒ः सूर्य॑स्य ।

परां च॒ यन्ति॒ पुन॒रा चं यन्ति भ॒द्रा नाम॒ वहंमाना उ॒षासः॑ ॥
१२

अश्वंऽवतीः । गोऽमंतीः । वि॒श्वऽवांराः । यतंमानाः ।
र॒श्मिऽभिः॑ । सूर्यस्य ।

परां । च॒ । यन्तिं । पुनः॑ । आ । च॒ । य॒न्ति॒ । भ॒द्रा । नामं ।
वहंमानाः । उ॒षसः॑ ॥१२

अश्वऽवतीः । गोऽमतीः । विश्वऽवाराः । यतमानाः ।
रश्मिऽभिः । सूर्यस्य ।

परा । च । यन्ति । पुनः । आ । च । यन्ति । भद्रा । नाम ।
वहमानाः। उषसः ॥ १२ ॥

"अश्वावतीः अश्ववत्यो बहुभिरश्वैस्तद्वत्यः तथा “गोमतीः
बहुभिर्गोभिस्तद्वत्यः "विश्ववाराः विश्वे वाराः वरणीयाः
कालाः यासां ताः तथोक्ताः । सार्वकालीन इत्यर्थः । यद्वा

। विश्वे वरितारो यासु ताः विश्ववाराः। विश्वैर्वरणीया इत्यर्थः । सूर्यस्य रश्मिभिः यतमानाः सूर्यरश्मिभिः साकं तमोनिवारणाय प्रयत्नं कुर्वाणाः । यद्यपि सूर्यरश्मय एव जगत्प्रकाशनाय प्रभवन्ति तथापि सूर्योदयात् पूर्वं तमोनिवारणस्यापेक्षिततत्वात् तासामपि प्रयत्नमविरुद्धम् । रश्मिदेवताः अपि प्रकाशिकाः इत्यर्थः । किंच “भद्रा भद्रं कल्याणं स्तुत्यं वा “नाम नमनं सर्वजनानुकूल्यं वहमानाः धारयमाणाः “उषासः उषोदेवताः "परा “च "यन्ति परायन्ति च । तथा “पुनरा च "यन्ति पुनरायन्ति च । परस्परापेक्षया उभयत्र चशब्दः । या एवातीतेषु दिनेषु गताः ता एव पुनःपुनर्दिनान्तरेषु अपि आयन्ति । जगन्निर्वाहाय प्रतिदिनं गतागतं कुर्वन्तीत्यर्थः ।।

ऋ॒तस्यं र॒श्मिमंनु॒यच्छंमाना भ॒द्रम्भंद्रं॒ क्रतुं॑म॒स्मासुं धेहि ।

उषों नो अ॒द्य सु॒हवा॒ व्युंच्छा॒स्मासु॒ रायों म॒घवंत्सु च स्युः ॥
१३

ऋ॒तस्यं । र॒श्मिम् । अ॒नु॒ऽयच्छंमाना । भ॒द्रम्ऽभंद्रम् ।
क्रतुंम् । अ॒स्मासुं । धे॒हि॒ ।

उषः॑ । न॒ः । अ॒द्य । सु॒ऽहवां । वि । उ॒च्छ॒ । अ॒स्मासुं । रायः॑
। म॒घवंत्ऽसु । च॒ । स्यु॒रितिं स्युः ॥१३

ऋतस्य । रश्मिम् । अनुऽयच्छमाना । भद्रम्ऽभद्रम् ।
क्रतुम् । अस्मासु । धेहि ।

उषः। नः । अद्य । सुऽहवा । वि। उच्छ । अस्मासु । रायः।
मघवत्ऽसु । च । स्युरिति स्युः ॥१३॥

हे उषः "ऋतस्य सत्यभूतस्यादित्यस्य "रश्मिं रश्मीन्
अनुयच्छमाना अनुकूल्येन प्रवर्तमाना त्वं “भदभद्रं "क्रतुं
तत्तत्कल्याणं स्तुत्यं वा लौकिकं वैदिकं कर्म तद्विषयां

प्रज्ञां वा “धेहि स्थापय । हे उषः "नः अस्मदर्थं "सुहवा सुष्ठु आहूता सती व्युच्छ तमो विवासय प्रकाशं कुर्वित्यर्थः। किमर्थमिति तदुच्यते । "मघवत्सु । मघमिति धननाम । हविर्लक्षणधनयुक्तेषु “अस्मासु यजमानेषु "रायः “च "स्युः बहुविधानि धनानि संभवन्त्विति पूर्वोक्तेन क्रतुना सह समुच्चयार्थः शब्दः ॥ ॥ ६ ॥

# ऋग्वेदः सूक्तं १.१२४

ऋग्वेदः - मण्डल १
← सूक्तं १.१२३
सूक्तं १.१२४
कक्षीवान् दैर्घतमस औशिजः
सूक्तं १.१२५ →

## दे. उषाः। त्रिष्टुप्।

उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत् ।

देवो नो अत्र सविता न्वर्थं प्रासावीद्द्विपत्प्र चतुष्पदित्यै ॥१॥

अमिनती दैव्यानि व्रतानि प्रमिनती मनुष्या युगानि ।

ईयुषीणामुपमा शश्वतीनामायतीनां प्रथमोषा व्यद्यौत् ॥२॥

एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात् ।

ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥३॥

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि ।

अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥४॥

पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृत प्र केतुम् ।

व्यु प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ॥५॥

एवेदेषा पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिम् ।

अरेपसा तन्वा शाशदाना नार्भादीषते न महो विभाती ॥६॥

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।

जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥७॥

स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव ।

व्युच्छन्ती रश्मिभिः सूर्यस्याञ्ज्यङ्क्ते समनगा इव व्राः ॥८॥

आसां पूर्वासामहसु स्वसॄणामपरा पूर्वामभ्येति पश्चात् ।

ताः प्रत्नवन्नव्यसीर्नूनमस्मे रेवदुच्छन्तु सुदिना उषासः ॥९॥

प्र बोधयोषः पृणतो मघोन्यबुध्यमानाः पणयः ससन्तु ।

रेवदुच्छ मघवद्भ्यो मघोनि रेवत्स्तोत्रे सूनृते जारयन्ती ॥१०॥

अवेयमश्वैद्युवतिः पुरस्ताद्युङ्क्ते गवामरुणानामनीकम् ।

वि नूनमुच्छादसति प्र केतुर्गृहंगृहमुप तिष्ठाते अग्निः ॥११॥

उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ ।

अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥१२॥

अस्तोढ्वं स्तोम्या ब्रह्मणा मेऽवीवृधध्वमुशतीरुषासः ।

युष्माकं देवीरवसा सनेम सहस्त्रिणं च शतिनं च वाजम् ॥१३॥

## सायणभाष्यम्

‘ उषा उच्छन्ती ' इति त्रयोदशर्चं चतुर्थं सूक्तं दैर्घतमसः कक्षीवत आर्षं त्रैष्टुभमुषस्यम् । ‘ उषा उच्छन्ती ' इत्यनुक्रान्तम् । विनियोगस्तु पूर्वसूक्ते एवोक्तः ॥

उ॒षा उ॒च्छन्तीं समिधा॒ने अ॒ग्ना उ॒द्यन्सूर्यं उर्वि॒या ज्योतिंरश्रेत् ।

दे॒वो नो॒ अत्रं सवि॒ता न्वर्थं॒ प्रासांवीद्द्वि॒पत्प्र चतुंष्पदि॒त्यै ॥ १

उ॒षाः । उ॒च्छन्तीं । स॒म्ऽइ॒धा॒ने । अ॒ग्नौ । उ॒त्ऽयन् । सूर्यः । उ॒र्वि॒या । ज्योतिः । अ॒श्रे॒त् ।

दे॒वः । न॒ः । अत्रं । स॒वि॒ता । नु । अर्थंम् । प्र । अ॒सा॒वी॒त् । द्वि॒ऽपत् । प्र । चतुःऽपत् । इ॒त्यै ॥१

उषाः । उच्छन्ती । सम्ऽइधाने । अग्नौ । उत्ऽयन् । सूर्यः । उर्विया । ज्योतिः। अश्रेत् ।

देवः । नः । अत्र । सविता । नु। अर्थम् । प्र । असावीत् । द्विऽपत् । प्र । चतुःऽपत् । इत्यै ॥१॥

एषा "उषाः "समिधाने "अग्नौ । अग्नित्वसामान्येन एकवचनम् । अग्निषु समिध्यमानेषु सत्सु । कर्मार्थे कर्तृप्रयोगः । उषःकाले हि आहवनीयादयः प्रज्वाल्यन्ते । "उच्छन्ती तमो विवासयन्ती "उर्विया उरु बहुलं "ज्योतिः प्रकाशम् "अश्रेत् सेवते प्रकाशते प्रकाशयति वा सर्वम् । किमिव । “उद्यन् "सूर्यः । उपमाप्रधाननिर्देशः । उदितः सूर्य इव । सूर्यो यथा प्रकाशयति तथेत्यर्थः । “अत्र त्वदुदयानन्तरम् अस्मिन् कर्मणि वा "सविता "देवः सर्वस्य प्रेरकः सूर्यः "नः अस्मदर्थं "नु क्षिप्रम् “अर्थम् । अर्थशब्दोऽत्र विशेषणवाची नपुंसकलिङ्गः । ‘ अयन्नर्थानि कृणवन्नपांसि' ( ऋ. सं. ७. ६३. ४) इत्यादौ तथा दृष्टत्वात् । अरणीयं "द्विपत् पादद्वयोपेतं मनुष्यादिरूपं धनं "प्रासावीत् अनुजानातु ददात्वित्यर्थः। तथा "चतुष्पत् पादचतुष्टयोपेतं गवादिरूपं धनं प्रासावीत् । किमर्थम्। "इत्यै द्विपदां चतुष्पदां च गमनाय । यद्वा । नः इत्यै इति संबन्धः । अस्मद्गमनागमनादिव्यापारायेत्यर्थः ॥

अमिंनती दैव्यांनि व्रतानिं प्रमिनती मंनुष्यां युगानिं ।

ईयुषींणामुपमा शश्वंतीनामायतीनां प्रंथमोषा व्यंद्यौत् ॥२

अमिंनती । दैव्यांनि । व्रतानिं । प्रऽमिनती । मनुष्यां ।
युगानिं ।

ईयुषींणाम् । उपऽमा । शश्वंतीनाम् । आऽयतीनाम् ।
प्रथमा । उषाः । वि । अद्यौत् ॥२

अमिनती । दैव्यानि । व्रतानि । प्रऽमिनती। मनुष्या ।
युगानि ।

ईयुषीणाम् । उपमा । शश्वतीनाम् । आऽयतीनाम् । प्रथमा
। उषाः । वि। अद्यौत् ॥ २ ॥

"दैव्यानि व्रतानि देवसंबन्धीनि अग्निहोत्रादीनि कर्माणि । व्रतमिति कर्मनाम, 'व्रतं कर्वरम्' ( नि. २. १. ७ ) इति तन्नामसु पाठात् । तानि कर्माणि "अमिनती अहिंसन्ती' भानप्रदानेनानुकूलं कुर्वती । तथा "मनुष्या मनुष्याणां "युगानि युगोपलक्षितान् निमेषादिकालावयवान् "प्रमिनती प्रकर्षेण हिंसन्ती आयुः क्षपयन्तीत्यर्थः । यद्वा । युगानि युग्मानि परस्परसंयोगं प्रमिनती हिंसन्ती वियोगं कुर्वतीत्यर्थः । उषःकाले सर्वे यथायथं स्वस्वव्यापाराय गच्छन्तीति प्रसिद्धम् । किंच "ईयुषीणां गच्छन्तीनाम् अतीतानां "शश्वतीनां नित्यानाम् उषसाम् "उपमा । ताभिः सदृशीत्यर्थः । सादृश्यं च * सदृशीरद्य सदृशीरिदु श्वः ' ( ऋ. सं. १. १२३. ८) इत्यत्रोक्तम् । तथा "आयतीनां "प्रथमा आगामिनीनामुषसां प्रथमभाविनी सती "व्यद्यौत् विशेषेण प्रकाशते । यद्वा । ईयुषीणां गमनशीलानां पश्वादीनां शश्वतीनां संततिप्रवाहरूपेण नित्यानामुपमा। तद्वन्नित्येत्यर्थः । तथा आयतीनां रात्र्यवसानसमये

उत्पद्यमानानां प्रज्ञावागादीनां प्रथमा प्रथमभाविनी ।
उषस्यागतायां वाचो बुद्धयश्च स्फुरन्तीति प्रसिद्धम् ।
तादृशी देवी व्यद्यौत् प्राणिनामनुग्रहाय द्योतते ॥

ए॒षा दि॒वो दु॑हि॒ता प्रत्य॑दर्शि॒ ज्योति॒र्वसा॑ना स॒म॒ना पु॒रस्ता॑त् ।

ऋ॒तस्य॒ पन्था॒मन्वे॑ति सा॒धु प्र॑जा॒न॒तीव॒ न दिशो॑ मिनाति ॥ ३

ए॒षा । दि॒वः । दु॒हि॒ता । प्रति॑ । अ॒द॒र्शि॒ । ज्योतिः॑ । वसा॑ना । स॒म॒ना । पु॒रस्ता॑त् ।

ऋ॒तस्य॑ । पन्था॑म् । अनु॑ । ए॒ति॒ । सा॒धु । प्र॒जा॒न॒तीऽइ॑व । न । दिशः॑ । मि॒ना॒ति॒ ॥३

एषा । दिवः । दुहिता । प्रति । अदर्शि । ज्योतिः । वसाना । समना । पुरस्तात् ।

ऋतस्य । पन्थाम् । अनु । एति । साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥ ३ ॥

“एषा उषाः “दिवः द्योतमानात्मकस्य द्युलोकस्य “दुहिता दुहितृस्थानीया । ततः उत्पद्यमानत्वात् दुहितेत्युपचर्यते । “पुरस्तात् पूर्वस्यां दिशि “प्रति प्रत्येकम् “अदर्शि दृश्यते । सर्वेषामपि प्राणिनामाभिमुख्येन प्रकाशते इत्यर्थः । कीदृशी सा । “ज्योतिर्वसाना तेजोरूपं वस्त्रमाच्छादयन्ती तेजसा प्रकाशयन्ती “समना सम्यगानयित्री चेष्टयित्री । अन्तर्भावितण्यर्थोऽयम् । यद्वा । सह युगपदेव मन्यतेऽवबुध्यते प्राणिभिरिति समना । व्युत्पत्यनवधारणादनवग्रहः ॥ सा तादृशी “ऋतस्य आदित्यस्य "पन्थां पन्थानं मेरोः प्रान्तप्रदेशमनुक्रमेण

"साधु सम्यक् “एति गच्छति । सूर्यो यत्र यत्र गच्छति तत्र तत्र पुरस्तात् उषा अपि गच्छतीत्यर्थः । सैव विशेष्यते । “प्रजानतीव प्रियभूतस्य सूर्यस्य मार्गो मयापि गन्तव्यः” इति चेतयन्तीव । यथा लोके प्रियतमे अनुरागयुक्ता काचित् भर्तारं सर्वास्ववस्थासु न विमुञ्चति तथेयमपीत्यर्थः । किंच "दिशः प्रागादिकाः न “मिनाति न हिनस्ति । किंतु उषा यत्र गच्छति सा प्राचीत्येवं प्रागादिव्यवहारं करोतीत्यर्थः ॥

उपो॑ अदर्शि शु॒न्ध्युवो॒ न वक्षो॑ नो॒धा इ॑वा॒विर॑कृत प्रि॒याणि॑ ।

अ॒द्म॒सन्न स॑स॒तो बो॒धय॑न्ती शश्वत्त॒मागा॒त्पुन॑रे॒युषी॑णाम् ॥४

उपो॒ इति॑ । अ॒द॒र्शि॒ । शु॒न्ध्युवः॑ । न । वक्षः॑ । नो॒धाःऽइ॑व । आ॒विः । अ॒कृ॒त । प्रि॒याणि॑ ।

अ॒द्मऽसत् । न । स॒स॒तः । बो॒धयंन्ती । श॒श्व॒त्ऽत॒मा । आ । अ॒गा॒त् । पुनः॑ । आ॒ऽई॒युषीं॑णाम् ॥४

उपो इति । अदर्शि। शुन्ध्युवः । न । वक्षः। नोधाःऽइव । आविः । अकृत। प्रियाणि ।

अद्मऽसत् । न । ससतः । बोधयन्ती। शश्वत्ऽतमा । आ । अगात् । पुनः । आऽईयुषीणाम् ॥४॥

एषा उषाः “उपो इति निपातद्वयसमुदायात्मकः एको निपातः । सर्वैः समीपे एव “अदर्शि दृश्यते । तत्र दृष्टान्तः । शुन्ध्युवो "न 'वक्षः। अत्र नकारः उपमार्थीयः उपरिष्टात् प्रयुज्यमानत्वात् । यत्र तु प्रतिषेधो विवक्षितस्तत्र पुरस्तान्नकारः प्रयुज्यते । तथा च यास्कः--' पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति' (नि. १.४) इति । तस्योदाहरणं- नेन्द्रं देवममंसत' (ऋ. सं.१०, ८६. १) इति उपरिष्टादुपाचारस्तस्य येनोपमिमीते ' (निरु. १. ४) इति ।

तस्योदाहरणं ‘दुर्मदासो न सुरायाम्' (ऋ. सं. ८.२. १२) इति । शुन्ध्युः आदित्यः सर्वेषां शोधकत्वात् । तस्य वक्षः वक्षःस्थानीयो रश्मिसमूहः । स यथा प्रकाशमानो दृश्यते तथेत्यर्थः । यद्वा । शुन्ध्युरिति जलचरः श्वेतवर्णः पक्षिविशेषः । स यथा स्वकीयं वक्षः प्रकाशयन् दृश्यते तद्वदित्यर्थः । किंच नोधाइव “प्रियाणि “आविरकृत । नवनं स्तोत्रं धारयतीति नोधाः । एतन्नामा महर्षिर्दैवतास्तुतिव्याजेन नानाविधैर्मन्त्रैः प्रियाणि स्वमनीषितान्याविष्कृतवान् । तथैषापि स्वकीयानि सर्वलोकप्रियाणि तेजांस्याविरकरोत् । किंच "अद्मसन्न । अत्राप्युपमार्थीयो नकारः। अद्यते इति अद्म अन्नम् । तस्य पाकाय गृहे सीदति इति अद्मसत् पाचिका योषित् “ससतः बोधयन्ती । सा यथा स्वपतः पुत्रादीन् भोजनाय बोधयति तद्वत् । यद्वा । अद्मेति गृहनाम, * वरूथम् अम्' इति तन्नामसु पाठात् । तत्र सीदतीत्यद्मसत् जननी । सो यथा स्वपतः पुत्रादीन् उषःकाले प्रबोधयति तथा

भुवनाख्ये गृहे सीदन्ती तत्रत्यान् प्राणिनः प्रबोधयन्ती इयमुषाः। “एयुषीणाम् आगमनशीलानां स्त्रीणां मध्ये “शश्वत्तमा पुनःपुनरागच्छति । प्रातर्नियतमागच्छन्तीनां वारयोषितां मध्ये स्वयमेका सती नियतम् आगच्छतीत्यभिप्रायः । अत्र निरुक्तम्-' उपादर्शि शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात्तस्यैव वक्षो भासोऽध्यूळहमिदमपीतरद्वक्ष एतस्मादेवाध्यूळहं काये । शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवति । आपोऽपि शुन्ध्युव उच्यन्ते शोधनादेव । नोधा ऋषिर्भवति नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते । अद्मसद्मानं भवत्यद्मसादिनीति वान्नसानिनीति वा । ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणां स्वपतो बोधयन्ती शाश्वतिकतमगात्पुनरागामिनीनाम् ' (निरु. ४, १६ ) इति ॥

पू॒र्वे॒ अर्धे॒ रज॑सो अ॒प्त्यस्य॒ गवा॒ं जनि॑त्र्यकृत॒ प्र के॒तुम् ।

व्यु॑ प्रथते वित॒रं वरी॑य॒ ओभा पृ॒णन्ती॑ पि॒त्रोरु॒पस्था॑ ॥५

पूर्वे॑ । अर्धे॑ । रज॑सः । अ॒प्त्यस्य॑ । गवा॑म् । जनि॑त्री ।
अ॒कृ॒त॒ । प्र । के॒तुम् ।

वि । उ॒ँ इति॑ । प्र॒थ॒ते॒ । वि॒ऽत॒रम् । वरी॑यः । आ । उ॒भा ।
पृ॒णन्ती॑ । पि॒त्रोः । उ॒पऽस्था॑ ॥५

पूर्वे । अर्धे । रजसः । अप्त्यस्य । गवाम् । जनित्री ।
अकृत । प्र । केतुम् ।

वि। ऊँ इति । प्रथते। विऽतरम् । वरीयः। आ । उभा ।
पृणन्ती । पित्रोः । उपऽस्था ॥ ५॥

"अप्त्स्यस्य व्यापनशीलस्य विस्तृतस्य "रजसः रञ्जकस्यान्तरिक्षलोकस्य । रजःशब्दोऽन्तरिक्षलोकवाची ' लोका रजांस्युच्यन्ते' (निरु. ४. १९) इति यास्केनोक्तत्वात् । तस्य “पूर्वे "अर्धे पूर्वस्मिन् भागे "जनित्री उत्पन्ना सती “गवां दिशां रश्मीनां वा "केतुं प्रज्ञानं “प्र “अकृत प्रकर्षेण करोति । यद्वा । रजसः रञ्जकस्याह्नः । रजःशब्दोऽहर्वाची ' असृगहनी रजसी उच्येते ' ( निरु. ४. १९) इति यास्केनोक्तत्वात् । तस्य पूर्वेऽर्धे पूर्वस्मिन् भागे उषःकाले गवां वाचां जनित्री जनयित्री उत्पादयित्री। उषःकाले सर्वेषां प्राणिनां वाचः स्फुरन्तीति प्रसिद्धम् । यद्वा । अस्यस्य कर्मसु स्थितस्य जन्तोः केतुं गमनागमनादिरूपं कर्म । केतुरिति कर्मनाम, ‘ केतः केतुः' इति तन्नामसु पाठात् । प्राकृत । प्रकर्षेण करोति । किंच "पित्रोः पालयित्र्योर्द्यावापृथिव्योः "उपस्था उपस्थे उत्सङ्गे अन्तरालप्रदेशे स्थित्वा “उभा उभे द्यावापृथिव्यौ “पृणन्ती स्वतेजसा पूरयन्ती। यद्वा । उभा

उभयोः पित्रोरिति संबन्धः । “वितरं विशिष्टतरं “वरीयः उरुतरमतिविस्तीर्णं यथा भवति तथा "व्यु "प्रथते विशेषेणैव प्रख्याता भवति प्रकाशते इत्यर्थः । उशब्दः अवधारणार्थः पादपूरणो वा ‘ मिताक्षरेष्वनर्थकाः कमीमिद्विति' इति यास्केनोक्तत्वात् ॥ ॥ ७ ॥

ए॒वेदे॒षा पु॑रु॒तमा॑ दृ॒शे कं नाजा॑मि॒ं न परि॑ं वृणक्ति जा॒मिम् ।

अ॒रे॒पसा॑ त॒न्वा॒३॒ शाश॑दाना॒ नार्भा॒दीष॑ते॒ न म॒हो वि॑भा॒ती ॥ ६

ए॒व । इत् । ए॒षा । पु॒रु॒ऽतमा॑ । दृ॒शे । कम् । न । अजा॑मिम् । न । परि॑ । वृ॒ण॒क्ति॒ । जा॒मिम् ।

अ॒रे॒पसा॑ । त॒न्वा॑ । शाश॑दाना । न । अर्भा॑त् । ईष॑ते । न । म॒हः । वि॒ऽभा॒ती ॥६

एव । इत् । एषा । पुरुऽतमा । दृशे । कम्। न । अजामिम् । न । परि। वृणक्ति। जामिम् ।

अरेपसा । तन्वा । शाशदाना । न । अर्भात् । ईषते । न । महः । विऽभाती ॥ ६ ॥

“एषा उषाः "एवेत् । इच्छब्दः एवकारार्थः । एवमेव इदानीं भासमानप्रकारेणैव "पुरुतमा विपुलतमा अत्यन्तविस्तृता सती "अजामिं विजातीयं मनुष्यादिजातिं “न “परि "वृणक्ति परितः सर्वतो न वर्जयति । तथा "जामिं सजातीयं देवजाति “न परि वृणक्ति "न परिवर्जयति । मनुष्यादिकं देवादिकं च तदुपलक्षितं लोकद्वयं वा कार्त्स्न्येन प्रकाशयतीत्यर्थः । किमर्थमिति तदुच्यते । "दृशे "कं सुखेन सर्वेषां दर्शनाय । सुखं यथा भवति तथा सर्वान् दर्शयितुं वा । किंच "अरेपसा अपापया निर्मलया “तन्वा शरीरेण “शाशदाना शाशाद्यमाना। शाशदानः

शाशाद्यमानः ' ( निरु. ६. १६ ) इति यास्कः । स्पष्टतां गच्छन्तीत्यर्थः । "विभाती विशेषेण प्रकाशयन्ती सा "अर्भात् अल्पात् पुत्तिकादेः सकाशात् "न “ईषते न गच्छति । तमपि प्रकाशयति । तथा “महः महतो मेर्वादेः सकाशात् न ईषते न गच्छति। तमपि प्रकाशयति । पूर्वं लोकद्वयं प्रकाशते इत्युक्तम् । इदानीम् अस्मिंल्लोके परमाण्वादि पर्वतपर्यन्तं कृत्स्नं प्रकाशयतीत्यर्थः ॥

अ॒भ्रा॒तेवं पुं॒स एंति प्रती॒ची गंर्ता॒रुगिंव स॒नये॒ धनांनाम् ।

जा॒येव॒ पत्यं उश॒ती सु॒वासां उ॒षा ह॒स्रेव॒ नि रिंणीते॒ अप्सः॑ ॥७

अ॒भ्रा॒ताऽइंव । पुं॒सः । ए॒ति॒ । प्र॒ती॒ची । ग॒र्त॒ऽआ॒रुगिंव । स॒नयें । धनांनाम् ।

जा॒याऽइ॑व । पत्ये॑ । उ॒श॒ती । सु॒ऽवासाः॑ । उ॒षाः ।
ह॒स्राऽइ॑व । नि । रि॒णी॒ते॒ । अप्सः॑ ॥७

अभ्राताऽव । पुंसः । एति । प्रतीची । गर्तऽआरुर्गिव ।
सनये । धनानाम् ।

जायाऽइव । पत्ये । उशती । सुऽवासः । उषाः । हस्राऽइव
। नि । रिणते । अप्सः ॥ ७ ॥

“अभ्रातेव भ्रातृरहितेव “पुंसः पित्रादीन् प्रति प्रतीची
स्वकीयस्थानात् प्रतिनिवृत्तमुखी सती “ऐति गच्छति ।
यथा लोके भ्रातृरहिता योषित्
स्वोचितवासोऽलंकारादिलाभाय पितॄन् एति । सति
भ्रातरि स एव उचितप्रदानादिना सम्यक् तोषयति ।
तदभावात् पितरमेव प्राप्नोति । यद्वा । सति स्वभ्रातरि स
एव पितुः पिण्डदानादिकं संतानकृत्यं करोति ।
तस्याभावात् स्वयमेव तत्कर्तुं पित्रादीन् गच्छति ।

तद्वदियम् उषा अपि स्वोचितप्रकाशादिलाभाय स्वप्रकाशदानाय वा पितृभूतं सूर्यम् आभिमुख्येन गच्छति । अयमेको दृष्टान्तः । तथा “धनानां “सनये “गर्तारुगिव इत्यपरो दृष्टान्तः । गर्त इति गृहनाम ‘कृदरो गर्तः ' (नि. ३. ४. ३ ) इति तन्नामसु पाठात् । अत्रौचित्येन राजपुरुषैः न्यायनिर्णेतृभिश्च अधिष्ठितं स्थानमुच्यते तदारोहतीति गर्तारुक् । यथा लोके काचित् गतभर्तृका योषित् धनानां स्वकीयरिक्थानां सनये लाभाय गर्तमागच्छति । तां तु सभ्याः विचार्य यदीयं रिक्थं लभते चेत् अक्षैः संताड्य तदीयं धनं वितरन्ति । तथेयमपि धनानां प्रीणनसाधनानां प्रकाशानां सनये लाभाय गर्तमाकाशं सूर्यनिवासस्थानमारोहति । देशविशेषाचारमपेक्ष्यैवं दृष्टान्तितम् । किंच “पत्ये "उशती कामयमाना "सुवासाः "जायेव । अयमपरः दृष्टान्तः । यथा च लोके सुवासा दुकूलादिशोभनवसना स्वलंकृता पूर्वं रजोदर्शनसमये मलिनवस्त्रा सती स्नानानन्तरं शोभनवस्त्राभरणादिना

शोभमाना विशेषेण पतिं भोगाय कांक्षन्ती तेन सह संक्रीडते तथा इयम्” “उषा: अतिनैशेन अन्धकारेणावृतत्वात् मलिनवसनापि प्रभाते स्वतेजसावृतत्वात् सुवसना सती पतिस्थानीयेन सूर्येण साकं संक्रीडमाना “हस्रेव हसनेव' “अप्सः दन्तस्थानीयानि रूपाणि नीलपीतादीनि । यद्वा । निरूप्यमाणानि पदार्थजातानि । “नि "रिणीते नितरां रिणीते गमयति प्रकाशयतीत्यर्थः । यथा लोके काचित् रमणीया योषित् स्मितव्याजेन दन्तान् विवृणुते तथेयमपि सर्वाणि रूपाणि प्रकाशयतीत्यर्थः । अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः-* अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी संतानकर्मणे पिण्डदानाय न पतिं गर्तारोहिणीव धनलाभाय दाक्षिणाजी । गर्तः सभास्थाणुर्गृणातेः सत्यसंगरो भवति । तं तत्र यापुत्रा यापतिका सारोहति तां तत्राक्षैराघ्नन्ति मा रिक्थं लभते ' इति, “ जायेव पत्ये

कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान्विवृणुते
' (निरु. ३. ५) इति च ॥

स्वसा॒ स्वस्रे॒ ज्याय॑स्यै॒ योनि॑मारै॒गपै॑त्यस्याः प्रति॒चक्ष्ये॑व ।

व्यु॒च्छन्ती॑ र॒श्मिभि॒ः सूर्य॑स्या॒ञ्ज्य॑ङ्क्ते समन॒गा इ॑व॒ व्राः
॥८

स्वसा॑ । स्वस्रे॑ । ज्याय॑स्यै । योनि॑म् । अ॒रै॒क् । अप॑ । ए॒ति॒
। अ॒स्या॒ः । प्र॒ति॒चक्ष्य॑ऽइव ।

वि॒ऽउ॒च्छन्ती॑ । र॒श्मिऽभि॑ः । सूर्य॑स्य । अ॒ञ्जि । अ॒ङ्क्ते॒ ।
स॒म॒न॒गाःऽइ॑व । व्राः ॥८

स्वसा । स्वस्रे । ज्यायस्यै । योनिम् । अरैक् । अप । एति
। अस्याः । प्रतिचक्ष्यऽइव ।

विऽउच्छन्ती । रश्मिऽभिः । सूर्यस्य । अञ्जि । अङ्क्ते ।
समनगाःऽइव । व्राः ॥ ८ ॥

एकस्मादेवान्तरिक्षादुपन्नत्वात् परस्परं स्वसृभावः ।
तथाप्यह्नः प्राथम्यात् तेजस्वित्वाच्च ज्यायस्त्वम् ।
स्वयमेव सरतीति वा "स्वसी । रात्रिः "स्वस्रे “ज्यायस्यै
उत्तरीत्या ज्येष्ठायै "योनिम् उत्पत्तिस्थानम्
अपररात्ररूपम् "अरैक् अरिचन् प्रादात् प्ररेचयतीत्यर्थः ।
तथा च पूर्वत्राम्नातं-‘रात्र्युषसे योनिमारैक्' (ऋ. सं. १.
११३. १ ) इति। दत्त्वा च "अस्याः उत्पन्नाया उषसः
प्रतिचक्ष्येव । ज्ञापयित्वेव स्वयमपसृत्यैव गच्छति ।
ज्यायस्यामागतायां तस्यै स्वस्थानं दत्त्वा स्वयं तत्संनिधौ
स्थातुमनुचितमिति विज्ञायैवापगच्छतीति भावः ।
एवमुत्पन्ना एषा "सूर्यस्य "रश्मिभिः “व्युच्छन्ती तमो
विवासयन्ती “अञ्जि व्यञ्जकं तेजः । यद्वा । अञ्जि
व्यक्तं जगत् । "अङ्क्ते अनक्ति प्रकाशयति । किमिव ।

"समनगाइव । सम्यगननहेतव आपः समनाः । ता गच्छन्तीति समनगाः विद्युतः । "व्राः व्राताः । विद्युसंघा इव । यद्वा। सम्यगननाय गच्छन्तीति समनगाः सूर्यरश्मयः । ते इव व्रा व्राताः संधीभूताः । ते यथाञ्जते जगत्प्रकाशयन्ति तथेत्यर्थः ॥ व्रात इत्यत्र तकारलोपश्छान्दसः ॥

आ॒सां पूर्वा॑सा॒मह॑सु॒ स्वसॄ॑णा॒मप॑रा॒ पूर्वा॑म॒भ्ये॑ति प॒श्चात् ।

ताः प्र॑त्न॒वन्नव्य॑सीर्नू॒नम॒स्मे रे॒वदु॑च्छन्तु सु॒दिना॑ उ॒षासः॑ ॥९

आ॒साम् । पूर्वा॑साम् । अह॑ऽसु । स्वसॄ॑णाम् । अप॑रा । पूर्वा॑म् । अ॒भि । ए॒ति॒ । प॒श्चात् ।

ताः । प्र॒त्न॒ऽवत् । नव्य॑सीः । नू॒नम् । अ॒स्मे इति॑ । रे॒वत् । उ॒च्छ॒न्तु॒ । सु॒ऽदिनाः॑ । उ॒षसः॑ ॥९

आसाम् । पूर्वासाम् । अहऽसु । स्वसॄणाम् । अपरा । पूर्वीम् । अभि । एति । पश्चात् ।

ताः । प्रत्नऽवत् । नव्यंसीः । नूनम् । अस्मे इति । रेवत् । उच्छन्तु । सुऽदिनाः । उषसः ॥९॥

“स्वसॄणां परस्परं स्वसृभावमापन्नानां स्वयं सरन्तीनां वा "पूर्वासां पुरातनीनाम् "आसाम् उषसां मध्ये "अहसु अहःसु प्रतिदिनम् "अपरा अन्या अद्यतन्युषाः “पूर्वाम् अतीतदिवससंबन्धिनीमुषसं पश्चात् अनुसृत्य "अभ्येति । अभिमुखं गच्छति अव्यवधानेन गच्छतीत्यर्थः । सर्वेश्वहःसु एवमेवाभ्येति । "नव्यसीः नवीयस्यो नवतरा आगामिन्यः “ताः "उषासः उषसः अपि "नूनं निश्चयं “प्रत्नवत् पुरातन्य इव सुदिनाः शोभनकर्मानुष्ठानसाधनदिवसाः शोभनदिनमुखा वा सत्यः अस्मे अस्माकं “रेवत् बहुधनविशिष्टं यथा भवति

तथा “उच्छन्तु प्रकाशयन्तु । पूर्वतन्यो यथौच्छन् तथा आगामिन्योऽपि उच्छन्तु इत्यर्थः ॥

प्र बोंधयोषः पृणतो मंघोन्यबुंध्यमानाः पणयः ससन्तु ।

रेवदुंच्छ मघवंद्भ्यो मघोनि रेवत्स्तोत्रे सूंनृते जारयंन्ती ॥ १०

प्र । बोधय । उषः । पृणतः । मघोनि । अबुंध्यमानाः । पणयः । ससन्तु ।

रेवत् । उच्छ । मघवंत्ऽभ्यः । मघोनि । रेवत् । स्तोत्रे । सूनृते । जरयंन्ती ॥१०

प्र। बोधय । उषः । पृणतः । मघोनि । अबुध्यमानाः । पणयः । ससन्तु ।

रेवत् । उच्छ । मघवत्ऽभ्यः । मघोनि । रेवत् । स्तोत्रे । सूनृते । जरयन्ती ॥ १० ॥

हे "मघोनि मघवति अस्मभ्यं दातव्यैर्बहुभिर्धनैस्तद्वति "उषः हे उषोदेवि पृणतः हविष्प्रदान् अस्मान् यजमानान् "प्रबोधय प्रज्ञापय प्रतिबुद्धान् कुरु । किंच "पणयः व्ययासहिष्णवो वणिजः । 'पणिर्वणिग्भवति ' (निरु. २. १७) इति यास्कः । पणय इव लुब्धकाः "अबुध्यमानाः यागादीन् अकुर्वाणा अदानशीला अस्मच्छत्रवः "ससन्तु स्वपन्तु दीर्घनिद्रा भवन्तु म्रियन्तामित्यर्थः । तथा च मन्त्रान्तरं- ससन्तु त्या अरातयो बोधन्तु शूर रातयः' (ऋ. सं. १. २९. ४) इति । किंच हे मघोनि अस्मद्दत्तहविर्भिस्तद्वति हे उषः मघवद्भ्यः हविर्लक्षणान्नवद्भ्यो यजमानेभ्यस्तेषामर्थं "रेवत् धनवत् समृद्धिमत् "उच्छ विभाहि । किंच हे "सूनुते सुष्ठु मनुष्याणां नेत्रि देवि जरयन्ती सर्वप्राणिनः क्षपयन्ती त्वं

स्तोत्रे स्तुतिकर्त्रे यजमानाय तदर्थं "रेवत् धनवत् समृद्ध्यर्थम् उच्छेति शेषः ॥ ॥ ८ ॥

अवेयमंश्वैद्युवतिः पुरस्तांद्युङ्क्ते गवांमरुणानामनींकम् ।

वि नूनमुंच्छादसंति प्र केतुर्गृहंगृंहमुपं तिष्ठाते अग्निः ॥११

अवं । इयम् । अश्वैत् । युवतिः । पुरस्तांत् । युङ्क्ते । गवांम् । अरुणानांम् । अनींकम् ।

वि । नूनम् । उच्छात् । असंति । प्र । केतुः । गृहम्ऽगृंहम् । उपं । तिष्ठाते । अग्निः ॥११

अव । इयम् । अश्वैत् । युवतिः । पुरस्तात् । युङ्क्ते । गवाम् । अरुणानाम् । अनीकम् ।।

वि । नूनम् । उच्छात् । असति। प्र। केतुः । गृहम्ऽगृहम् । उप । तिष्ठाते । अग्निः ॥ ११ ॥

"इयम् उषाः युवतिः यौवनोपेतयोषित्स्थानीया । यद्वा । सर्वेषु भावेषु मिश्रयन्ती। "पुरस्तात् पूर्वस्यां दिशि "अव "अश्वैत् अत्यर्थमागच्छति वर्धते वा । अत्र अवशब्दो विनिग्रहार्थीयः 'न्यवेति विनिग्रहार्थीयौ ' ( निरु. १. ३) इति यास्केनोक्तत्वात् । तत्कथमवगम्यते इति तत्राह । इयम् "अरुणानाम् अरुणवर्णानां "गवां प्रसिद्धानाम् एतन्नामकानामश्वानां वा "अनीकं समूहं "युङ्क्ते रथे योजयति।' अरुण्यो गाव उषसाम् । श्यावाः सवितुः '(नि. १. १५. ७-८) इति । यथा लोके वाहनसंनाहं दृष्ट्वा प्रयाणमनुमीयते तथा अत्रापि अरुणरश्मीनामश्वानां दर्शनात् उषा आगच्छतीत्यध्यवसीयते । यद्वा । अरुणानां रश्मीनां समूहं युङ्क्ते । तथा "नूनं निश्चयमेषा "वि "उच्छात् तमो विवर्जयिष्यति । यत इयं गा युनक्ति अत

एव कारणात् यथा लोकेऽश्वसंनाहं दृष्ट्वा उदयोऽनुमीयते तथात्रापीत्यर्थः । तादृशी सा "असति असत्प्राये नीरूपेऽन्तरिक्षे तिरोधायकत्वात् अशोभने तमसि वा "केतुः केतुस्थानीया ज्ञापयित्री प्रकर्षेण विविधं भासते इति शेषः । उपसर्गवशाद्योग्यक्रियाध्याहारः । यद्वा । असति तमोरूपेऽन्धकारे “प्र केतुः प्रकर्षेण ज्ञापयित्री सती नूनं व्युच्छादिति पूर्वान्वयः । तस्मिन् काले “अग्निः आहवनीयादिरूपः "गृहंगृहं सर्वयजमानगृहम् अग्निहोत्राद्यर्थम् "उप तिष्ठाते उपतिष्ठते दीप्यते इत्यर्थः ॥

उ॒त्ते वय॑श्चिद्वस॒तेर॑पप्त॒न्नर॑श्च॒ ये पि॑तु॒भाजो॒ व्यु॑ष्टौ ।

अ॒मा स॒ते व॑हसि॒ भूरि॑ वा॒ममुषो॑ देवि दा॒शुषे॒ मर्त्या॑य ॥१२

उत् । ते॒ । वयः॑ । चि॒त् । व॒स॒तेः । अ॒प॒प्त॒न् । नरः॑ । च॒ । ये । पि॒तु॒ऽभाजः॑ । विऽउ॑ष्टौ ।

अ॒मा । स॒ते । व॒ह॒सि॒ । भूरिं । वा॒मम् । उषः॑ । दे॒वि॒ । दा॒शुषें । मर्त्याय ॥१२

उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये । पितुऽभाजः। विऽउष्टौ ।

अमा । सते । वहसि । भूरि । वामम् । उषः । देवि । दाशुषे । मर्त्याय ॥ १२ ॥

“ते तव “व्युष्टौ सत्यां “वयश्चित् गमनवन्तः पक्षिणोऽपि । चिदित्येष अपिशब्दार्थः निपातानामनेकार्थत्वात् ।' उच्चावचेष्ववर्थेषु निपतन्ति ' ( निरु. १. ४ ) इति यास्केनोक्तत्वात् । “वसतेः निवासस्थानान्नीडादेः "उत् ऊर्ध्वम् "अपप्तन् पतन्ति । पूर्ववाक्ये ‘गृहं गृहमुपतिष्ठातेऽग्निः' इत्युक्तत्वात्तदपेक्षया अपिशब्दः'। किंच नरश्च मनुष्याश्च “पितुभाजः अन्नवन्तोऽन्नार्थिनः कृषिवाणिज्यादिकर्तारः स्वस्वव्यापारार्थम् उदुन्मुखा

अपप्तन् गच्छन्ति । तथा मन्त्रान्तरं- पद्वदीयत उत्पातयति पक्षिणः ' ( ऋ. सं. १. ४८.५) इति । एवं सत्यां हे “देवि देवनशीले उषोदेवते “अमा गृहे देवयजनाये “सते तिष्ठते यजमानाय तदर्थम् । अमेति गृहनाम 'अमा दमे' (नि. ३. ४. ११ ) इति तन्नामसु पठितत्वात् । यद्वा । अमा सह हूयमानेनाग्निना सह निवसते यजमानाय । अमा वसेतामित्यादौ सहार्थे प्रयोगात् । “मर्त्याय मनुष्याय “दाशुषे हविर्दत्तवते यजमानाय “भूरि “वामं बहु शोभनं धनं "वहसि प्रापयसि ॥

अस्तोंढ्वं स्तोम्या॒ ब्रह्मं॑णा॒ मेऽवीं॑वृधध्वमुश॒तीरुं॑षासः ।

यु॒ष्माकं॑ देवी॒रवं॑सा सनेम सह॒स्रिणं॑ च श॒तिनं॑ च॒ वाजं॑म् ॥ १३

अस्तोंढ्वम् । स्तो॒म्या॒ः । ब्रह्मं॑णा । मे॒ । अवीं॑वृधध्वम् ।
उ॒श॒तीः । उ॒ष॒स॒ः ।

यु॒ष्माकं॑म् । दे॒वी॒ः । अवं॑सा । स॒ने॒म॒ । स॒ह॒स्रिणं॑म् । च॒ ।
श॒तिनं॑म् । च॒ । वाजं॑म् ॥१३

अस्तोढ्वम् । स्तोम्याः । ब्रह्मणा । मे। अवीवृधध्वम् ।
उशतीः । उषसः ।

युष्माकम् । देवीः । अवसा । सनेम । सहस्रिणम् । च ।
शतिनम् । च । वाजम् ॥ १३ ॥

एवं सूक्तद्वयोक्तरीत्या बहुधा स्तुत्वा तां च स्तुतिमनया
निवेदयित्वा स्वाभीष्टं प्रार्थयते । हे "स्तोम्याः । स्तोमः
स्तोत्रम् । तदर्हन्तीति स्तोम्याः स्तुत्यर्हा उषसः । यतो यूयं
तादृश्यः अतः मे मत्स्वभूतेन "ब्रह्मणा
सूक्तद्वयगतमन्त्ररूपेण स्तोत्रेण "अस्तोढ्वम् स्तुता भवत।

किंच हे उषासः उषसः "उशतीः स्तोतॄन् अस्मान् अस्मत्समृद्धिं वा कामयमाना यूयम् “अवीवृधध्वम् अस्मान् प्रवर्धयत । किंच हे “देवीः देव्यो देवनशीलाः "युष्माकम् अवसा युष्मत्संबन्धिना रक्षणेन वयं “सहस्रिणं सहस्रसंख्याकम् अभीष्टं धनं "सनेम लभेमहि । तथा “शतिनं “च “वाजं शतसंख्याकम् अपरिमितं धनं सनेम । युष्मत्कृतेन शतसहस्रपरिमितधनादिरूपरक्षणेन वयमपि अर्थिभ्यः शतसहस्रपरिमितस्य धनस्य सनितारो भवेमेत्यर्थः । ॥ ९ ॥

# मण्डल

## १

| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
|---|---|---|---|---|---|---|
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |

| | | | | | |
|---|---|---|---|---|---|
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१४ | १.४४ | १.७४ | १.१०४ | १.१३४ | १.१६४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१५ | १.४५ | १.७५ | १.१०५ | १.१३५ | १.१६५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१६ | १.४६ | १.७६ | १.१०६ | १.१३६ | १.१६६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१७ | १.४७ | १.७७ | १.१०७ | १.१३७ | १.१६७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१८ | १.४८ | १.७८ | १.१०८ | १.१३८ | १.१६८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१९ | १.४९ | १.७९ | १.१०९ | १.१३९ | १.१६९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२० | १.५० | १.८० | १.११० | १.१४० | १.१७० |

# ऋग्वेदः सूक्तं १.१२५

ऋग्वेदः - मण्डल १
← सूक्तं १.१२४
सूक्तं १.१२६ →

सूक्तं १.१२५

कक्षीवान् दैर्घतमस औशिजः

## दे. स्वनयस्य दानस्तुतिः। त्रिष्टुप्, ४-५ जगती।

प्राता रत्नं प्रातरित्वा दधाति तं चिकित्वान्प्रतिगृह्या नि धत्ते ।

तेन प्रजां वर्धयमान आयू रायस्पोषेण सचते सुवीरः ॥१॥

सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति ।

यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ॥२॥

आयमद्य सुकृतं प्रातरिच्छन्निष्टेः पुत्रं वसुमता रथेन ।

अंशोः सुतं पायय मत्सरस्य क्षयद्वीरं वर्धय सूनृताभिः ॥३॥

उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः ।

पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः ॥४॥

नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति ।

तस्मा आपो घृतमर्षन्ति सिन्धवस्तस्मा इयं दक्षिणा पिन्वते सदा ॥५॥

दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः ।

दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्र तिरन्त आयुः ॥६॥

मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः ।

अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभि सं यन्तु शोकाः ॥७॥

# सायणभाष्यम्

‘ प्राता रत्नम् ' इति सप्तर्चं पञ्चमं सूक्तं काक्षीवतम् । दानस्य स्तूयमानत्वात् दानदेवत्यं ' या तेनोच्यते सा देवता ' ( अनु. २. ५ ) इति परिभाषितत्वात् । त्रैष्टुभम् । उपेत्यादिके द्वे जगत्यौ । ‘ प्राता रत्नं सप्त स्वनयस्य दानस्तुतिरुपजगत्यौ ' इत्यनुक्रमणिका ॥

प्रा॒ता रत्नं॑ प्रा॒तरि॑त्वा॑ दधाति॒ तं चि॑कि॒त्वान्प्र॑ति॒गृह्या॒ नि धं॑त्ते ।

तेनं॑ प्र॒जां व॒र्धयं॑मान॒ आयू॑ रा॒यस्पोषें॑ण सचते सु॒वीरः॑ ॥१

प्रा॒तरिति॑ । रत्नं॑म् । प्रा॒तः॒ऽइत्वा॑ । द॒धा॒ति॒ । तम् । चि॒कि॒त्वान् । प्र॒ति॒ऽगृह्यं॑ । नि । ध॒त्ते॒ ।

तेनं॑ । प्र॒ऽजाम् । व॒र्धयं॑मानः । आयुः॑ । रा॒यः । पोषें॑ण । स॒च॒ते॒ । सु॒ऽवीरः॑ ॥१

प्रातरिति । रत्नम् । प्रातःऽइत्वा । दधाति । तम् ।
चिकित्वान् । प्रतिऽगृह्य । नि । धत्ते ।

तेन । प्रऽजाम् । वर्धयमानः । आयुः । रायः । पोषेण ।
सचते । सुऽवीरः ॥१

अत्रेतिहासमाचक्षते । दैर्घतमसः कक्षीवान्नाम ऋषिः
ब्रह्मचर्यं चरिष्यन् वेदाभ्यासाय गुरुकुले चिरकालमुषित्वा
वेदान् सम्यगधीत्य व्रतानि च चरित्वा तेनानुज्ञातः पुनः
स्वगृहं प्रति प्रयास्यन् मध्ये मार्गे रात्रौ विश्रान्तः । प्रभाते
भावयव्यस्य पुत्रः स्वनयो नाम राजा अनुचरैः संक्रीडमानः
अकस्मात् कक्षीवतः अन्तिकमाससाद । स च रभसा
प्रतिबुद्धः सहसोत्तस्थौ । तं च राजा पाणिं गृहीत्वा
स्वकीये आसने उपवेश्य अस्य सौन्दर्यमवगत्य
स्वकन्याप्रदानमनाः पप्रच्छ भगवन् कस्य पुत्रः किंनामा
त्वमिति । स च पृष्टो मातरं पितरं च स्ववृत्तान्तं च

आचचक्षे। स च राजा संभाव्यः इत्यवगत्य मुदितमनाः स्वगृहं प्राप्य अस्मै मधुपर्कमारचय्य वस्त्रमाल्यादिभिः पूजयित्वा सरथा दश कन्याः शतनिष्कानश्वशतं पुंगवानां शतं गवां षष्ट्युत्तरसहस्रं पुनरेकादशरथांश्च प्रादात् । स च सर्वमनुक्रमेण प्रतिगृह्य दीर्घतमसोऽन्तिकमागत्य तस्मै प्रादर्शयत् ।। ननु कक्ष्या नाम अश्वबन्धनी रज्जुः । तद्वान् कक्षीवान् । अश्वबन्धनं च राज्ञ एवोचितम् । अतोऽस्य राजन्यत्वात् प्रतिग्रहो नोपपद्यते । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ' ( मनु. १०. ७६ ) इत्युक्तत्वात् । तस्मात् ब्राह्मणस्यैवाधिकारो न तु क्षत्रियस्येति । नैष दोषः । यद्यप्यसौ कलिङ्गाख्यस्य राज्ञः पुत्रस्तथापि तेन कलिङ्गेन स्वयं वृद्धत्वात् अपत्योत्पादनाय सामर्थ्यमलभमानेन तदुत्पादनाय याचितो दीर्घतमा ऋषिः उशिग्नामिकाम् अपत्योत्पादनाय प्रेषितया राजमहिष्या अतिजरटेन महर्षिणा सह रन्तुं लज्जमानया स्ववस्त्राभरणैरलंकृत्य स्वप्रतिनिधित्वेन प्रेषिताम्

उशिग्नामिकां योषितं दासीमित्यवगत्य मन्त्रपूतेन जलेनाभिषिच्य ऋषिपुत्रीं कृत्वा तया सह रेमे । तदुत्पन्नः कक्षीवान्नाम ऋषिः । एतत्सर्वमस्माभिः पूर्वाध्याये नासत्याभ्याम् ( ऋ. सं. १. ११६ ) इत्यत्र सूक्ते विस्तरेण प्रतिपादितम् । अतः अस्य क्षत्रियसंबन्धात् कक्षीवानिति नाम उपपन्नम्। दीर्घतमसः परमर्षेः उत्पन्नत्वेन ब्राह्मणत्वात् प्रतिग्रहोऽपि उपपन्न एव । इदमादि सूक्तद्वयं स्वनयस्य राज्ञो दानप्रशंसाख्यानप्रतिपादकम् । ननु अनुक्रमण्यां ' स्वनयस्य दानस्तुतिः' इति ‘ दानतुष्टो भावयव्यं तुष्टाव ' इति चोभयत्र स्तोतव्यं भिन्नमेवानुगम्यते इत्युच्यते । उत्तरसूक्तस्य प्रथमायाम् ऋचि ‘ अधिक्षियतो भाव्यस्य ' इति दातुर्भावयव्यस्य श्रूयमाणत्वात् तत्प्राथम्यमुपजीव्य पृथगुपात्तम् । वस्तुतस्तु पितुर्नाम्ना पुत्रस्य व्यवहर्तव्यत्वात् तथा ' आ रुद्रासः' इत्यादौ बहुशः प्रयोगदर्शनात् ‘स्वनयेन दत्ता' इति तत्रैव सूक्ते स्वनयस्यापि श्रूयमाणत्वाच्च उभयत्रापि

दातृप्रतिग्रहीत्रोरेकत्वेनैकमेव दानप्रशंसारूपमाख्यानमिति प्रसिद्धम् । स च कक्षीवान् आनीतं सर्वं पितुर्निवेदयन् परोक्षेणैव दानप्रकारं प्रशंसति । स्वनयो नाम राजा “प्रातरित्वा प्रातरेव आत्मनः सकाशमागतः सन् “रत्नं रमणीयं निष्कादिकं “प्रातः प्रभातकाले “दधाति अस्मत्संनिधौ स्थापयति ददाति । “तं स्थापितं सर्वं “चिकित्वान् चेतनावान् अदुष्टमित्यवगतवान् “प्रतिगृह्य स्वीकृत्य “नि “धत्ते । पितुः समीपे स्थापयति । अनन्तरं “तेन दत्तेन निष्कादिना “प्रजां पुत्रभृत्यादिरूपां “वर्धयमानः पोषयन् “आयुः जीवितं च वर्धयन् “सुवीरः शोभनैर्वीरैः पुत्रभृत्यादिभिरुपेतः सन् “रायस्पोषेण धनानां पुनःपुनर्वर्धनेन “सचते । असौ राजा संगच्छतामिति तव दातुराशिषं प्रार्थयते ॥

सु॒गुरं॑सत्सुहि॒र॒ण्यः॑ स्व॒श्वो॑ बृ॒हद॑स्मै॒ वय॒ इन्द्रो॑ दधाति ।

यस्त्वा॒यन्तं॒ वसु॑ना प्रातरित्वो मु॒क्षीज॑येव॒ पदि॑मुत्सि॒नाति॑ ॥ २

सु॒ऽगुः । अ॒स॒त् । सु॒ऽहि॒र॒ण्यः । सु॒ऽअश्वः॑ । बृ॒हत् । अ॒स्मै॒ । वयः॑ । इन्द्रः॑ । द॒धा॒ति॒ ।

यः । त्वा॒ । आ॒ऽयन्त॑म् । वसु॑ना । प्रा॒त॒ः॒ऽइ॒त्व॒ः॒ । मु॒क्षीज॑याऽइव । पदि॑म् । उ॒त्ऽसि॒नाति॑ ॥२

सुऽगुः । असत् । सुऽहिरण्यः । सुऽअश्वः । बृहत् । अस्मै । वयः । इन्द्रः । दधाति ।

यः । त्वा । आऽयन्तम् । वसुना । प्रातःऽइत्वः । मुक्षीजयाऽइव । पदिम् । उत्ऽसिनाति ॥२

अत्र कक्षीवतः पिता आनीतेन धनेन संतुष्टः राजानं बहुप्रकारेण आशास्ते । असौ स्वनयो राजा "सुगुः “असत् । शोभनैर्बहुभिर्गोभिस्तद्वान् भवतु । तथा “सुहिरण्यः सुष्ठु

हितरमणीयैर्धनैस्तद्वान् भवतु । तथा “स्वश्वः शोभनैरश्वैस्तद्वान् सन् । “अस्मै राज्ञे प्रदात्रे “बृहत् प्रभूतं “वयः अन्नम् “इन्द्रः परमेश्वरो धर्मदेवता "दधाति दधातु ददातु । यतः अयं राजा अस्मै गोहिरण्याश्वान्नानि बहुसंख्याकानि दत्तवान् अतस्तेषामभिवृद्धिप्रार्थना उचितैव । कस्यैवमाशीरिति स उच्यते । “यः यो राजा “प्रातरित्वः प्रातरागामिन्नतिथे पुत्र "आयन्तं गुरुकुलात् आगतं “पदिं पथिकं यदृच्छया गन्तारं “त्वा त्वां “वसुना अन्नसाधनेन गवादिधनेन “उत्सिनाति गमनतः उत्कृष्टं बध्नाति गतिं निरुणद्धीत्यर्थः । प्रतिबन्धे दृष्टान्तः उच्यते । “मुक्षीजयेव “पदिम् । मुच्यमाना सती बन्धनं जनयतीति मुक्षीजा मृगपक्ष्यादिबन्धनी रज्जुः । तया पाशको यथा पदिं गन्तारं मृगपक्ष्यादिकम् उत्सिनाति बध्नाति तथा मयाननुज्ञातमपि त्वां गमनं प्रतिबध्य गवादीष्टदानादिना यो राजा तोषयति स एवं भवत्विति । पदिरिति पदं

व्याचक्षणेन यास्केन तदुदाहरणमयं मन्त्रः व्याख्यातः ‘ सुगुर्भवति ततनाच्च' ( निरु. ५, १९ ) इति ॥

आयं॑म॒द्य सु॒कृतं॑ प्रा॒तरि॒च्छन्नि॒ष्टेः पु॒त्रं वसुं॑मता॒ रथें॑न ।

अं॒शोः सु॒तं पां॑यय मत्स॒रस्यं॑ क्ष॒यद्वीं॑रं वर्धय सू॒नृतां॑भिः ॥३

आयं॑म् । अ॒द्य । सु॒ऽकृतं॑म् । प्रा॒तः । इ॒च्छन् । इ॒ष्टेः । पु॒त्रम् । वसुं॑ऽमता । रथें॑न ।

अं॒शोः । सु॒तम् । पा॒य॒य॒ । म॒त्स॒रस्यं॑ । क्ष॒यत्ऽवीं॑रम् । व॒र्ध॒य॒ । सू॒नृतां॑भिः ॥३

आयम् । अद्य । सुऽकृतम् । प्रातः । इच्छन् । इष्टेः । पुत्रम् । वसुऽमता । रथेन ।

अंशोः । सुतम् । पायय । मत्सरस्य । क्षयत्ऽवीरम् ।
वर्धय । सूनृताभिः ॥३

“प्रातः पूर्वेद्युः प्रभातकाले अयं धनं दत्तवान् तस्मिन्नेव काले “सुकृतं शोभनस्य कर्तारं त्वाम् “इच्छन् प्राप्तुमिच्छन् कदा द्रक्ष्यामीति कामयमानोऽहम् “अद्य अस्मिन् दिने इदानीम् “आयं प्राप्तोऽस्मि । अत्र यद्यपि केवलं प्रातरित्येव श्रुतं न पूर्वेद्युरिति तथापि अद्य आयम् इत्युक्तत्वादर्थात्पूर्वेद्युः प्रातः इति गम्यते । कीदृशम् । “इष्टेः इष्टस्येष्टसाधनस्य यागस्य वा “पुत्रं पुरु त्रातारम् । पुत्रः पुरु त्रायते । ( निरु. २. ११ ) इति यास्कः । कर्तारमित्यर्थः । केन साधनेनेति तदुच्यते । “वसुमता “रथेन समृद्धधनवता रथेन साधनेन । यद्वा । तेन सहितः इति सहार्थे तृतीया । किंच मदानीतेन समृद्धेन धनेन “अंशोः अंशुमतो वल्लीरूपस्य “मत्सरस्य मादनसाधनस्य सोमस्य । 'मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः ' ( निरु. २.

५) इति निरुक्तम् । तस्य “सुतम् अभिषुतं रसं “पायय आत्मानं पायय इष्टसाधनं सोमयागं कुर्वित्यर्थः । कृत्वा च “क्षयद्वीरं क्षियन्तो निवसन्तो वीराः पुत्रभृत्यादयो यस्य तं तादृशं त्वदिष्टसाधनबहुधनप्रदातारं “सूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः “वर्धय समृद्धं कुरु । पुत्रभृत्यादिवीरैः यथा प्रवृद्धो भवति तथा कामयेत्यर्थः ॥

उप॑ क्षरन्ति॒ सिन्ध॑वो मयो॒भुव॑ ईजा॒नं च॑ य॒क्ष्यमा॑णं च धे॒नव॑ः ।

पृ॒णन्तं॑ च॒ पपु॑रिं च श्रव॒स्यवो॑ घृ॒तस्य॒ धारा॒ उप॑ यन्ति वि॒श्वत॑ः ॥४

उप॑ । क्ष॒र॒न्ति॒ । सिन्ध॑वः । म॒य॒ःऽभुवः॑ । ई॒जा॒नम् । च॒ । य॒क्ष्यमा॑णम् । च॒ । धे॒नवः॑ ।

पृ॒णन्तं॑म् । च॒ । पपुं॑रिम् । च॒ । श्र॒व॒स्यवः॑ । घृ॒तस्यं॑ । धाराः॑ । उपं॑ । य॒न्ति॒ । वि॒श्वतः॑ ॥४

उप । क्षरन्ति । सिन्धवः । मयःऽभुवः । ईजानम् । च । यक्ष्यमाणम् । च । धेनवः ।

पृणन्तम् । च । पपुरिम् । च । श्रवस्यवः । घृतस्य । धाराः । उप । यन्ति । विश्वतः ॥४

पूर्वस्यामृचि आनीतेन धनेन सोमयागं कुर्वित्युक्तम् । तमेव सोमयागं फलप्रदर्शनेन स्तौति । “सिन्धवः स्यन्दनशीलाः प्रस्तुतपयोधाराः । सिन्धुः स्यन्दनात्' (निरु. ९. २६) इति यास्कः । “मयोभुवः सुखभावयित्र्यः । भय इति सुखनाम ' मयः स्यूमकम् ' ( नि. ३. ६. ७ ) इति तन्नामसु पाठात् । “धेनवः प्रीणयित्र्यो गावः “ईजानं सोमयागमनुतिष्ठन्तं तथा “यक्ष्यमाणं यक्ष्ये इति प्रणातिं कुर्वन्तं “च । न केवलमीजानं अपि तु यक्ष्ये इति अध्यवसितवन्तमपि

“उप उपेत्य “क्षरन्ति स्रवन्ति प्रीणयन्तीत्यर्थः । न च पूर्वस्यामृचि सोमं पिबेत्युक्तत्वात् सर्वेषां सोमयागानाम् अग्निष्टोमात्मकज्योतिष्टोमस्य प्रकृतस्य ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत' इति स्वर्ग एव फलत्वेन श्रुतः न गवादिकमिति वाच्यम्। स्वर्गवत् गवादिकामनयापि सोमयागस्य कर्तुं शक्यत्वात् । न केवलं सोमयागमनुतिष्ठतामेव महत्फलम् अपि तु सुकृतसाधनानि कर्मान्तराणि अधितिष्ठतामपि महत् फलमस्त्येवेति दर्शयति । “पृणन्तं पितॄन् प्रीणयन्तं “पपुरिं प्रीणनशीलम् इष्टदातारं प्राणिनः सर्वदा प्रीणयन्तं “च पुरुषं “श्रवस्यवः अन्नमिच्छन्त्यः अन्नसमृद्धिहेतवः “घृतस्य “धाराः। यद्वा । घृतकुल्याः। “विश्वतः सर्वतः “उप उपेत्य “यन्ति प्राप्नुवन्ति प्रीणयन्तीत्यर्थः ।।

नाक॑स्य पृ॒ष्ठे अधि॑ तिष्ठति श्रि॒तो यः पृ॒णाति॒ स ह॑ दे॒वेषु॑

गच्छति ।

तस्मा॒ आपों घृ॒तमंर्षन्ति॒ सिन्धंव॒स्तस्मां इ॒यं दक्षिंणा पिन्वते॒ सदां ॥५

नाकंस्य । पृ॒ष्ठे । अधिं । ति॒ष्ठ॒ति॒ । श्रि॒तः । यः । पृ॒णातिं । सः । ह॒ । दे॒वेषुं । ग॒च्छ॒ति॒ ।

तस्मैं । आपः॑ । घृ॒तम् । अ॒र्ष॒न्ति॒ । सिन्धंवः । तस्मैं । इ॒यम् । दक्षिंणा । पि॒न्व॒ते॒ । सदां ॥५

नाकस्य । पृष्ठे । अधि । तिष्ठति । श्रितः । यः । पृणाति । सः । ह । देवेषु । गच्छति ।

तस्मै । आपः । घृतम् । अर्षन्ति । सिन्धवः । तस्मै । इयम् । दक्षिणा । पिन्वते । सदा ॥५

सोमयागप्रशंसाप्रसङ्गेन सामान्यतो दानम्
एतदादिभिस्त्रिभिः प्रशंसति । यद्वा । सोमस्यैव स्तुतत्वात्
दक्षिणाशब्दस्य यागे एव प्रसिद्धत्वाच्च आ
सूक्तपरिसमाप्तेः सोमयाग एव प्रस्तूयते ।। “यः यो मर्त्यः
“पृणाति हविरादिदानेन देवादीन् प्रीणाति “सः “नाकस्य ।
कमिति सुखनाम । तद्विरुद्धम् अकम् । न विद्यते अकं
दुःखं तत्साधनं पापं वेति नाको द्युलोकः । तथा च श्रूयते -
न वा अमुं लोकं जग्मुषे किं च नाकम् ' ( निरु. २. १४;
का. सं. २१. २ ) इति । तस्य “पृष्ठे उन्नते उपरिदेशे “श्रितः
सन् “अधि अधिकमाकल्पान्तं “तिष्ठति । यद्वा । अधि
तिष्ठति । अधिष्ठाय प्रमुखो भूत्वा तिष्ठति । न केवलं
स्वर्गाश्रयणं किंतु “देवेषु मध्ये “गच्छति वर्तते स्वयमेव
देवो भवतीत्यर्थः । “ह इति प्रसिद्धौ । “तस्मै प्रीणयित्रे
पुरुषाय “सिन्धवः स्यन्दनशीलाः "आपः “घृतं तेजोवत्
सारम् “अर्षन्ति गच्छन्ति रसवत्यो भवन्तीत्यर्थः । किंच
“इयं भूमिरपि “दक्षिणा सस्यादिफलसंपादनदक्षा सती

“सदा सर्वकालं “पिन्वते सेचयति तोषयतीत्यर्थः ।
दातुर्जीवनसाधकान्नोदकानि रुचिराणि समृद्धानि
भवन्तीत्यर्थः ॥

दक्षिंणावता॒मिदि॒मानिं चि॒त्रा दक्षिंणावतां दि॒वि सूर्यांसः ।

दक्षिंणावन्तो अ॒मृतं भजन्ते॒ दक्षिंणावन्त॒ः प्र तिंरन्त॒
आयुं॒ः ॥६

दक्षिंणाऽवताम् । इत् । इ॒मानिं । चि॒त्रा । दक्षिंणाऽवताम् ।
दि॒वि । सूर्यांसः ।

दक्षिंणाऽवन्तः । अ॒मृतंम् । भ॒ज॒न्ते॒ । दक्षिंणाऽवन्तः । प्र ।
ति॒र॒न्ते॒ । आयुः॑ ॥६

दक्षिणाऽवताम् । इत् । इमानि । चित्रा । दक्षिणाऽवताम् ।
दिवि । सूर्यासः ।

दक्षिणाऽवन्तः । अमृतम् । भजन्ते । दक्षिणाऽवन्तः । प्र । तिरन्ते । आयुः ॥६

“दक्षिणावतां बहुविधगोहिरण्यादिरूपदक्षिणाप्रदातॄणाम् । इच्छब्दः एवकारार्थः । तेषामेवार्थे “इमानि भूमौ दृश्यमानानि चित्राणि चायनीयानि स्रक्चन्दनमणिमुक्तादिरूपाणि द्रव्याणि समृद्धानि भवन्तीति शेषः । किंच “दक्षिणावताम् एव “दिवि द्युलोके “सूर्यासः सूर्यसंबन्धिनो लोकाः तदनुगृहीता भोगा वा समृद्धा भवन्ति । किंच “दक्षिणावन्तः एव “अमृतं जरामरणरहितं स्थानं “भजन्ते सेवन्ते । यद्वा । दानेनापहतपाप्मानः आत्मानं विदित्वा अमृतमविनाशं मोक्षं भजन्ते प्राप्नुवन्ति । ‘ यज्ञेन दानेन ' (बृ. उ. ४. ४. २२) इति श्रुतेः । किंच “दक्षिणावन्तः एव “आयुः “प्र “तिरन्ते अतिदीर्घमेवमायुष्यं वर्धयन्ते लभन्ते । प्रपूर्वस्तिरतिर्वर्धनार्थः । इत् इति सर्वत्र संबध्यते ॥

मा पृ॒णन्तो॑ दुरि॑त॒मेन॒ आर॒न्मा जा॑रिषुः सू॒रयः॑ सुव्र॒तासः॑ ।

अ॒न्यस्तेषां॑ परि॒धिरं॑स्तु कश्चि॒दपृं॑णन्तम॒भि सं यं॑न्तु शोकाः॑ ॥७

मा । पृ॒णन्तः॑ । दुः॒ऽइ॑तम् । एनः॑ । आ । अ॒र॒न् । मा । जा॒रि॒षुः॒ । सू॒रयः॑ । सु॒ऽव्र॒तासः॑ ।

अ॒न्यः । तेषा॑म् । प॒रि॒ऽधिः । अ॒स्तु॒ । कः । चि॒त् । अपृं॑णन्तम् । अ॒भि । सम् । य॒न्तु॒ । शोकाः॑ ॥७

मा । पृणन्तः । दुःऽइतम् । एनः । आ । अरन् । मा । जारिषुः । सूरयः । सुऽव्रतासः ।

अन्यः । तेषाम् । परिऽधिः । अस्तु । कः । चित् । अपृणन्तम् । अभि । सम् । यन्तु । शोकाः ॥७

अन्वयव्यतिरेकाभ्यां दानं प्रशंसितुमाह । “पृणन्तः देवादीन् हविरादिना प्रीणयन्तः सन्तः “दुरितं दुष्टं यथा भवति तथा प्राप्तं दुःखम् “एनः तत्साधनं पापं च “मा “आरन मा प्राप्नुवन् । न केवलं दातार एव अपि तु “सूरयः देवानां स्तोतारो विद्वांसः “मा “जारिषुः जरया न जीर्णा भवेयुः। तथा “सुव्रतासः शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपि मा जारिषुः । तर्हि एषाम् अन्यो जनः क इति स उच्यते । “तेषां दातॄणां स्तोतॄणां वा “अन्यः तेभ्योऽन्यो यः कोऽपि पुरुषः “परिधिः पापस्य परितो धारकः “अस्तु । यद्वा । अन्यो यः कश्चन पापदेवः तेषां परिधिस्थानीयो व्यवधायकोऽस्तु । यथा अग्नेः परिधिः स्वयं रक्षःप्रभृतिभिर्बाध्यमानः स्वान्तर्हितमग्निं रक्षति तद्वत् । अथवा । अन्यो धर्मविशेषः तेषां परिधिः परिधानमस्तु कवचस्थानीयोऽस्तु । तर्हि किं प्राप्नुयुरिति उच्यते । “अपृणन्तं देवादीन् अप्रीणयन्तमदातारं “शोकाः चित्तपीडाः तत्साधनाः

पाप्मानः “अभि अभिमुखं “सं “यन्तु सम्यक् प्राप्नुवन्तु वयं सुखिनो भवेमेत्यर्थः ॥ ॥ १० ॥

# ऋग्वेदः सूक्तं १.१२६



दे. १-५ स्वनयो भावयव्यः, ६ रोमशा, ७ स्वनयो भावयव्यः । त्रिष्टुप्, ६-७ अनुष्टुप्।

---

अमन्दान्स्तोमान्प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य ।

यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥१॥

शतं राज्ञो नाधमानस्य निष्काञ्छतमश्वान्प्रयतान्सद्य आदम् ।

शतं कक्षीवाँ असुरस्य गोनां दिवि श्रवोऽजरमा ततान ॥२॥

उप मा श्यावाः स्वनयेन दत्ता वधूमन्तो दश रथासो अस्थुः ।

षष्टिः सहस्रमनु गव्यमागात्सनत्कक्षीवाँ अभिपित्वे अह्नाम् ॥३॥

चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्रे श्रेणिं नयन्ति ।

मदच्युतः कृशनावतो अत्यान्कक्षीवन्त उदमृक्षन्त पज्राः ॥४॥

पूर्वामनु प्रयतिमा ददे वस्त्रीन्युक्ताँ अष्टावरिधायसो गाः ।

सुबन्धवो ये विश्या इव व्रा अनस्वन्तः श्रव ऐषन्त पज्राः ॥५॥

आगधिता परिगधिता या कशीकेव जङ्गहे ।

ददाति मह्यं यादुरी याशूनां भोज्या शता ॥६॥

उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ।

सर्वाहमस्मि रोमशा गन्धारीणामिवाविका ॥७॥

## सायणभाष्यम्

‘ अमन्दान्' इति षष्ठं सूक्तं सप्त' इत्यनुवर्तनात् सप्तर्चम् । आदितः पञ्चानां कक्षीवानृषिः षष्याःभा भावयव्यः सप्तम्याः रोमशा नाम ब्रह्मवादिनी। आदितः पञ्चानां भावयव्यस्य स्तुतिरूपत्वात् स एव देवता ‘ या तेनोच्यते ' ( अनु. २. ५) इति न्यायात्। अन्त्ययोः षष्ठीसप्तम्योस्तु भावयव्यरोमशयोः संवादः। षष्ठ्याः भावयव्यः सप्तम्याः रोमशा । यद्यपि ‘ स्वनयेन दत्ता' ( ऋ. सं. १. १२६. ३ ) इति श्रूयमाणत्वात्तस्यैव स्तुत्या भाव्यं तथापि पितृपुत्रयोरभेदात् ‘आ रुद्रासः' इतिवत् पितृनाम्ना व्यवहर्तुं शक्यत्वात् प्रथमायामृचि ‘भाव्यस्य ' इत्युक्तत्वाच्च ‘ भावयव्यं तुष्टाव ' इत्येतदविरुद्धमित्युक्तं पूर्वसूक्ते एव । आदितः पञ्च त्रिष्टुभः । अन्त्ये अनुष्टुभौ । तथा चानुक्रान्तम् - अमन्दानिति कक्षीवान्दानतुष्टः पञ्चभिर्भावयव्यं तुष्टावान्त्ये अनुष्टुभौ

भावयव्यरोमशयोर्दम्पत्योः संवादः' इति । उक्तो विनियोगः ।।

अमं॑न्दा॒न्स्तोमा॒न्प्र भ॑रे मनी॒षा सिन्धा॒वधिं क्षिय॒तो भा॒व्यस्यं ।

यो में स॒हस्र॒ममिंमीत स॒वान॒तूर्तो॒ राजा॒ श्रवं इ॒च्छमांनः ॥१

अमं॑न्दान् । स्तोमां॑न् । प्र । भ॒रे॒ । म॒नी॒षा । सिन्धौं । अधिं । क्षि॒य॒तः । भा॒व्यस्यं ।

यः । मे॒ । स॒हस्रं॑म् । अमिंमीत । स॒वान् । अ॒तूर्तः॑ । राजां । श्रवः॑ । इ॒च्छमांनः ॥१

अमन्दान् । स्तोमान् । प्र । भरे । मनीषा । सिन्धौ । अधि । क्षियतः । भाव्यस्य ।

यः । मे । सहस्रम् । अमिमीत । सवान् । अतूर्तः । राजा । श्रवः । इच्छमानः ॥१

“सिन्धौ सिन्धुदेशे यद्वा लक्षणया सिन्धुतीरे समुद्रतीरे “अधि “क्षियतः अधिनिवसतः “भाव्यस्य भावयव्यस्य। तत्पुत्रस्य स्वनयस्येत्यर्थः । तस्य “अमन्दान् अनल्पान् “स्तोमान् स्तोत्राणि तन्निष्ठबहुविधदानादीनां कीर्तनानि “मनीषा मनीषया प्रियातिशयबुद्ध्या “प्र “भरे प्रकर्षेण संपादयामि । कस्तस्य विशेष इति तत्राह । “अतूर्तः केनाप्यहिंसितः “यः “राजा “मे मदर्थं “सहस्रं तत्संख्याकान् “सवान् । सूयन्ते सोमाः एष्विति सवाः सोमयागाः । तान् “अमिमीत संपूर्णधनप्रदानेन निर्मितवान् । किमिच्छन्। “श्रवः सर्वैः श्रूयमाणां कीर्तिमात्मने “इच्छमानः कामयमानः। यतोऽयमार्त्विज्याद्युपाधिना विना कीर्त्यर्थमेव बहुधनं प्रादात् अतस्तं स्तौमीत्यर्थः ॥

हे “इन्द्र "नृतो रणे नर्तनशील त्वं "दाशुषे हविर्दत्तवते "पूरवे अभिमतपूरकाय" । मनुष्यनामैतत् । “महि महते "दिवोदासाय एतन्नामकाय राज्ञे ॥ ‘ दिवो दासे षष्ठ्या अलुक्' ( का. ६. ३. २१.५ ) इति अलुक् ।' दिवोदासादीनां छन्दसि ' इति पूर्वपदाद्युदात्तत्वम् ।। "नवतिम् एतत्संख्याकानि “पुरः शत्रूणां पुराणि "भिनत् भिन्नवानसि । तथा हे "नृतो गात्रविक्षेपणकुशल हस्तपादादिप्रक्षेपेण शत्रूणां हिंसक "वज्रेण क्षेपणसमर्थेनायुधेन "दाशुषे हविर्दत्तवते दिवोदासाय अन्यस्मै वा भिनत् । तमपि शत्रुं भिन्नवानसि । इदानीं परोक्षेणाह। "अतिथिग्वाय पूजार्थमतिथिं गच्छते दिवोदासाय तदर्थम् ॥ गमेरौणादिको ड्वप्रत्ययः ॥ "उग्रः उद्गूर्णबलः इन्द्रः पूर्वं पुरभेदनसमये विद्धमपि अम्रियमाणं गिरिमारूढं “शम्बरम् एतन्नामानमसुरं "गिरेः दुर्गमात् पर्वतादेः सकाशात् "ओजसा स्वकीयेन बलेन "अवाभरत् अवाङ्मुखमवकृष्य प्राणं हृतवान्। किं कुर्वन् । "महः

महान्ति “धनानि तदीयगवाश्वादीनि "दयमानः दिवोदासाय राज्ञे साधयन् ॥ ‘ दय दानगतिहिंसादानेषु'। शपः पित्त्वादनुदात्तत्वे शानचो लसार्वधातुकस्वरेण धातुस्वरः ॥ न केवलमल्पं धनं किंतु "विश्वा “धनानि सर्वाण्यपि तेषां मणिमुक्तादीनि “ओजसा स्वकीयेन बलेन दयमानः साधयन् अवाभरत् ।।

इंद्रः॑ स॒मत्सु॒ यजं॑मान॒मार्यं॒ प्राव॒द्विश्वे॑षु श॒तमू॑तिरा॒जिषु॒ स्व॑र्मीळ्हेष्वा॒जिषु॑ ।

मन॑वे॒ शास॑दव्र॒तान्त्वचं॑ कृ॒ष्णाम॑रंधयत् ।

दक्ष॒न्न विश्वं॑ ततृषा॒णमो॑षति॒ न्य॑र्शसा॒नमो॑षति ॥८

इन्द्रः॑ । स॒मत्ऽसु॑ । यज॑मानम् । आर्य॑म् । प्र । आ॒व॒त् । विश्वे॑षु । श॒तम्ऽऊ॑तिः । आ॒जिषु॑ । स्वः॑ऽमीळ्हेषु ।

आ॒जिषु॑ ।

मनं॑वे । शासं॑त् । अ॒व्र॒तान् । त्वचं॑म् । कृ॒ष्णाम् ।
अ॒र॒न्ध॒य॒त् ।

दक्षं॑म् । न । विश्वं॑म् । त॒तृ॒षा॒णम् । ओ॒ष॒ति॒ । नि ।
अ॒र्श॒सा॒नम् । ओ॒ष॒ति॒ ॥८

इन्द्रः । समत्ऽसु । यजमानम् । आर्यम् । प्र । आवत् ।
विश्वेषु । शतम्ऽऊतिः । आजिषु । स्वःऽमीळ्हेषु ।
आजिषु ।

मनवे । शासत् । अव्रतान् । त्वचम् । कृष्णाम् ।
अरन्धयत् ।

दक्षम् । न । विश्वम् । ततृषाणम् । ओषति । नि ।
अर्शसानम् । ओषति ॥८

अयम् "इन्द्रः "समत्सु रणेषु प्रहारनिमित्तेषु "यजमानं यष्टारम् "आर्यम् अरणीयं सर्वैर्गन्तव्यं “प्रावत् रक्षति । समत्सु इति संग्रामनाम ‘समत्सु समरणे' (नि. २.१७.२२ ) इति तन्नामसु पाठात् । किंच “शतमूतिः स्वभक्तेष्वपरिमितरक्षणः इन्द्रः "विश्वेषु । लिङ्गव्यत्ययः ।। “आजिषु सर्वेषु स्पर्धानिमित्तेषु संग्रामेषु यजमानं प्रावत्। तथा "स्वर्मीळ्हेषु स्वर्गदेशेषु सुखस्य सेचयत्सु वा "आजिषु महासंग्रामेषु प्रावत् स्वर्गप्रदानेन रक्षति । रणे आभिमुख्येन हतानां वीराणां स्वर्गः पराशरेण स्मर्यते-’ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे योऽभिमुखो हतः' (परा. ३. २५) इति । अत्रेतिहासमाचक्षते । अंशुमती नाम नदी । तस्यास्तीरे कृष्णनामा असुरः वर्णतश्च कृष्णः दशसहस्रैरनुचरैरुपेतः तद्देशवर्तिनः पीडयन्नास्ते । तत्रेन्द्रः बृहस्पतिना प्रेरितः सन् मरुद्भिः सहितः कृष्णां तदीयत्वचमुत्कृत्य सानुचरमवधीत् । अयमर्थः ' अव

द्रप्सो अंशुमतीमतिष्ठत्' (ऋ. सं. ८.९६. १३) इत्यादिना उपरिष्टात् वक्ष्यते । तदत्रोच्यते । अयमिन्द्रः "मनवे मनुष्याय ॥ विभक्तिव्यत्ययः ॥ मनुष्याणामर्थाय । "अव्रतान् । व्रतमिति कर्मनाम् । तद्रहितान् यागविद्वेषिणः “शासत् शिक्षितवान् हिंसितवान् ॥ शासेर्लेटि अडागमः ॥ तथा "कृष्णां "त्वचं कृष्णनाम्नोऽसुरस्य कृष्णवर्णां त्वचमुत्कृत्य "अरन्धयत् हिंसितवान् । ‘ रध हिंसायाम्'। ‘रधिजभोरचि' इति नुम् ॥ केन प्रकारेणेति तदुच्यते । “धक्षत् भस्मीकरोति ।। लेट्यडागसः । ‘सिब्बहुलम्' इति सिप् ।। तथा "विश्वं "ततृषाणमोषति । सर्वमपि हिंसकं तदनुचरसंघं दहति । यत्किंचिदवशिष्टमिति न इत्याह । "अर्शसानं हिंसारुचिं हतावशिष्टं सर्वमपि "नि “ओषति निःशेषेण दहति ॥

सूरंश्च॒क्रं प्र वृंहज्जा॒त ओजंसा प्रपि॒त्वे वाचंमरु॒णो

मुंषायतीशा॒न आ मुंषायति ।

उ॒शना॒ यत्पंरा॒वतोऽजंगन्नू॒तयें कवे ।

सु॒म्नानि॒ विश्वा॒ मनुंषेव तु॒र्वणि॒रहा॒ विश्वेंव तु॒र्वणिः॑ ॥९

सूरः॑ । च॒क्रम् । प्र । वृ॒ह॒त् । जा॒तः । ओजंसा । प्र॒ऽपि॒त्वे ।
वाचंम् । अ॒रु॒णः । मु॒षा॒य॒ति॒ । ई॒शा॒नः । आ । मु॒षा॒य॒ति॒ ।

उ॒शनां । यत् । प॒रा॒ऽवतः॑ । अजंगन् । ऊ॒तयें । क॒वे॒ ।

सु॒म्नानिं । विश्वां । मनुंषाऽइव । तु॒र्वणिः॑ । अहां ।
विश्वांऽइव । तु॒र्वणिः॑ ॥९

सूरः । चक्रम् । प्र । वृहत् । जातः । ओजसा । प्रऽपित्वे ।
वाचम् । अरुणः । मुषायति । ईशानः । आ । मुषायति ।

उशना । यत् । पराऽवतः । अजगन् । ऊतये । कवे ।

सुम्नानि । विश्वा । मनुषाऽइव । तुर्वणिः । अहा ।
विश्वाऽइव । तुर्वणिः ॥९

अत्रापि इतिहासमाचक्षते । केचन असुराः पूर्वमिन्द्रवज्रेण वधो मा भूत् इति ब्रह्मणो वरं लब्ध्वा इन्द्रमगणयित्वा उद्धृत्ताः आसन् । तान् हन्तुम् इन्द्रः सूर्यरथस्य चक्रमादाय अवधीदिति । तदिदमुच्यते । अयमिन्द्रः "सूरः सूर्यस्य ॥ षष्ठ्यर्थे प्रथमा । "चक्रं रथस्य चक्रमादाय “ओजसा शारीरेण बलेन “जातः समृद्धः सन् "प्र "वृहत् प्रक्षिप्तवान् ॥ ‘वृहू उद्यमने ' । तौदादिकः ॥ किंच "अरुणः अरुणवर्णः अत्यन्ततेजोयुक्तः सन् यद्वा गमनशीलः सन् “प्रपित्वे तेषां समीपे तत्समीपमागत्य “वाचं वागुपलक्षितं प्राणं "मुषायति मुमोष मुष्णाति वा । प्रपित्वे इत्यासन्ननाम । यद्वा । वाचं तेषां प्रहारध्वनिं मुषायति । तेषु हतेषु ध्वनिः स्वयमेव विश्रान्तः भवति अवधीदित्यर्थः । अथवा । इन्द्र एव द्युस्थानः सन् आदित्यात्मना स्तूयते । सूरः सूर्यः

जातः उदितः सन् ओजसा स्वकीयेन तेजसा युक्तः चक्रं प्र
वृहत् तमोनिवारणार्थमसुरजयाय वा चक्रोपलक्षितं रथं
प्रकर्षेण उद्यतं करोति । ततः पूर्वम् अरुणः तद्रथयन्ता
प्रपित्वे मन्देहाद्यसुराणां प्रपित्वे समीपे वाचं तेषां ‘जहि
भिन्धि' इत्यादिध्वनिं मुषायति मुष्णाति ॥ मुषेरुत्तरस्य
श्नोऽहावपि ‘ छन्दसि शायजपि ' इति शायजादेशः ॥
तदनन्तरं सूर्यः “ईशानः सर्वाणि तमांसि असुरान् वा
निराकर्तुं समर्थः सन् "आ "मुषायति समन्तात् मुष्णाति ।
अथ प्रत्यक्षकृतः । हे "कवे क्रान्तदर्शिन् "यत् यस्त्वम्
“उशना उशनस एतन्नाम्नो महर्षेः "ऊतये रक्षणाय
"परावतः दूरात् स्वर्गस्थानात् "अजगन् गतवानसि
प्राप्तवानसि ॥ गमेः सिपि छान्दसः शपः श्लुः ।
हल्ङ्यांदिलोपे ' मो नो धातोः' (पा. सू. ८. २. ६४ ), इति
नत्वम् ॥ यद्वा। उशना उशनसा युक्तः सन् अजगन्
आगच्छ । आगत्य च "विश्वा विश्वानि "सुम्नानि
सुखसाधनानि धनानि आदाय अस्माकं "तुर्वणिः तूर्णवनिः

क्षिप्रं संभक्ता भव इति शेषः। 'तुर्वणिस्तूर्णवनिः' (निरु. ३. १४ ) इति निरुक्तम् । तत्र दृष्टान्तः । "मनुषेव मनुष्येणेव । यथा त्वोतेन परिवृढाय देशान्तरादभिमतं धनमानीयते तद्वत् । यद्वा मनुषेव मनुष्याणामिव । इतरेषामृत्विजां विश्वा सुम्नानि सर्वाणि धनान्यादाय तुर्वणिः भवसि । तद्वदस्माकमपि । न केवलमेकस्मिन्नेव यागदिने किंतु "अहा “विश्वेव विश्वान्यपि अहानि सर्वेष्वपि अहःसु “तुर्वणिः भव । यद्वा । तुर्वणिस्त्वम् अहा विश्वेव विश्वान्यहानि अतिदीर्घमायुष्यं यथा ददासि तथा सुम्नान्यपि उभयमपि देहीत्यर्थः ॥

स नो॒ नव्यें॑भिर्वृषकर्मन्नु॒क्थैः पुरां॑ दर्तः पा॒युभि॑ः पाहि श॒ग्मैः ।

दि॒वो॒दा॒सेभि॑रिंद्र॒ स्तवा॑नो वावृधी॒था अहो॑भिरिव॒ द्यौः ॥१०

सः । न॒ः । नव्यें॑भिः । वृ॒ष॒ऽक॒र्म॒न् । उ॒क्थैः । पुरा॑म् ।
द॒र्त॒रिति॑ दर्तः । पा॒युऽभि॑ः । पा॒हि॒ । श॒ग्मैः ।

दि॒व॒ःऽदा॒सेभि॑ः । इ॒न्द्र॒ । स्तवा॑नः । व॒वृ॒धी॒थाः ।
अहो॑भिःऽइव । द्यौः ॥१०

सः । नः । नव्येभिः । वृषऽकर्मन् । उक्थैः । पुराम् ।
दर्तरिति दर्तः । पायुऽभिः । पाहि । शग्मैः ।

दिवःऽदासेभिः । इन्द्र । स्तवानः । ववृधीथाः ।
अहोभिःऽइव । द्यौः ॥१०

हे इन्द्र "वृषकर्मन् अभिमतवर्षणव्यापारवन् "पुरां "दर्तः असुरपुराणां दारयितः ॥ 'सुबामन्त्रिते°' इति षष्ठ्याः पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य पादादित्वात् अष्टमिकमाद्युदात्तत्वम् ॥ "सः तादृशो महानुभावस्त्वं "नः अस्मत्संबन्धिभिः "नव्येभिः नूतनैः "उक्थैः इदानीं

प्रतिपादितप्रकारैः स्तोत्रैस्तुष्टः सन् "पायुभिः पालनप्रकारैः "शग्मैः सुखैश्च ऐहिकामुष्मिकरूपैः । "पाहि पालय । किंच हे "इन्द्र “दिवोदासेमिः दिवोदासगोत्रोत्पन्नैः ॥ अर्शआदित्वात् अच् ॥ अस्माभिः परुच्छेपैः । यद्वा । पूजार्थं बहुवचनम् । "स्तवानः स्तूयमानः । कर्मणि कर्तृप्रत्ययः ॥ “ववृधीथाः प्रवृद्धो भव ॥ वृधेर्लिङि छान्दसः शपः श्लुः ॥ किमिव । "अहोभिरिव "द्यौः । द्योतनशीलः आदित्यः अहोभिः प्रसिद्धैर्यथा प्रवृद्धो भवति तथा अस्मत्स्तुत्या अत्यन्तं प्रवृद्धो भवेत्यर्थः ॥ ॥ १९ ॥

# ऋग्वेदः सूक्तं १.१३१

← सूक्तं १.१३०

ऋग्वेदः - मण्डल १

सूक्तं १.१३१

परुच्छेपो दैवोदासिः

सूक्तं १.१३२ →

दे. इन्द्रः। अत्यष्टिः।

---

इन्द्राय हि द्यौरसुरो अनम्नतेन्द्राय मही पृथिवी वरीमभिर्द्युम्नसाता वरीमभिः ।

इन्द्रं विश्वे सजोषसो देवासो दधिरे पुरः ।

इन्द्राय विश्वा सवनानि मानुषा रातानि सन्तु मानुषा ॥१॥

विश्वेषु हि त्वा सवनेषु तुञ्जते समानमेकं वृषमण्यवः पृथक्स्वः सनिष्यवः पृथक् ।

तं त्वा नावं न पर्षणिं शूषस्य धुरि धीमहि ।

इन्द्रं न यज्ञैश्चितयन्त आयव स्तोमेभिरिन्द्रमायवः ॥२॥

वि त्वा ततस्रे मिथुना अवस्यवो व्रजस्य साता गव्यस्य निःसृजः सक्षन्त इन्द्र निःसृजः ।

यद्गव्यन्ता द्वा जना स्वर्यन्ता समूहसि ।

आविष्करिक्रद्वृषणं सचाभुवं वज्रमिन्द्र सचाभुवम् ॥३॥

विदुष्टे अस्य वीर्यस्य पूरवः पुरो यदिन्द्र शारदीरवातिरः सासहानो अवातिरः ।

शासस्तमिन्द्र मर्त्यमयज्युं शवसस्पते ।

महीममुष्णाः पृथिवीमिमा अपो मन्दसान इमा अपः ॥४॥

आदित्ते अस्य वीर्यस्य चर्किरन्मदेषु वृषन्नुशिजो यदाविथ सखीयतो यदाविथ ।

चकर्थ कारमेभ्यः पृतनासु प्रवन्तवे ।

ते अन्यामन्यां नद्यं सनिष्णत श्रवस्यन्तः सनिष्णत ॥५॥

उतो नो अस्या उषसो जुषेत ह्यर्कस्य बोधि हविषो हवीमभिः स्वर्षाता हवीमभिः ।

यदिन्द्र हन्तवे मृधो वृषा वज्रिञ्चिकेतसि ।

आ मे अस्य वेधसो नवीयसो मन्म श्रुधि नवीयसः ॥६॥

त्वं तमिन्द्र वावृधानो अस्मयुरमित्रयन्तं तुविजात मर्त्यं वज्रेण शूर मर्त्यम् ।

जहि यो नो अघायति शृणुष्व सुश्रवस्तमः ।

रिष्टं न यामन्नप भूतु दुर्मतिर्विश्वाप भूतु दुर्मतिः ॥७॥

## सायणभाष्यम्

‘इन्द्राय हि' इति सप्तर्चं पञ्चमं सूक्तम् । ‘इन्द्राय सप्त' इत्यनुक्रमणिका । परुच्छेप ऋषिः । अत्यष्टिश्छन्दः । इन्द्रो देवता । पृष्ठ्यस्य षष्ठेऽहनि माध्यंदिनसवने होत्रकाः स्वस्वशस्त्रे एतत्सूक्तं तृचत्रयं कृत्वा आरम्भणीयाभ्य ऊर्ध्वमावपेयुः। अत्रायं विभागः। आद्यास्तिस्रो मैत्रावरुणस्य । तृतीयाद्यास्तिस्रो ब्राह्मणाच्छंसिनः । पञ्चम्याद्यास्तिस्रोऽच्छावाकस्य । एतत् 'चतुर्थेऽहनि' इति खण्डे सूत्रितं- षष्ठेऽहनीन्द्राय हि द्यौरसुरो अनम्नतेत्येवमेव ' ( आश्व. श्रौ. ७. ११ ) इति । तत्रैवाहनि तस्मिन्नेव सवने प्रशास्त्रादीनां प्रस्थितयाज्याभ्यः पुरस्तादादितः षड्चः

एकैकशः प्रक्षेपणीयाः । ‘ षष्ठस्य ' इति खण्डे सूत्रितम्- इन्द्राय हि द्यौरसुरो अनम्नतेति षट् ' ( आश्व. श्रौ. ८. १ ) इति । महाव्रते निष्केवल्ये ‘इन्द्राय हि' इति तृचो वैकल्पिकानुरूपद्वितीयः । ‘ महाव्रतस्य' इति खण्डे सूत्रितम्-' एन्द्र याह्युप नः परावत इन्द्राय हि द्यौरसुरो अनम्नत ' ( ऐ. आ. ५. १. १ ) इति ॥

इंद्रा॑य॒ हि द्यौरसु॑रो॒ अन॑म्न॒तेंद्रा॑य म॒ही पृ॑थि॒वी वरी॑मभिर्द्यु॒म्नसा॑ता॒ वरी॑मभिः ।

इंद्रं॒ विश्वे॑ स॒जोष॑सो दे॒वासो॑ दधिरे पु॒रः ।

इंद्रा॑य॒ विश्वा॒ सव॑नानि॒ मानु॑षा रा॒तानि॑ सं॒तु मानु॑षा ॥१

इन्द्रा॑य । हि । द्यौः । असु॑रः । अन॑म्नत । इन्द्रा॑य । म॒ही । पृ॒थि॒वी । वरी॑मऽभिः । द्यु॒म्नऽसा॑ता । वरी॑मऽभिः ।

इन्द्रं॑म् । विश्वे॑ । स॒ऽजोष॑सः । दे॒वासः॑ । द॒धि॒रे॒ । पु॒रः ।

इन्द्रा॑य । विश्वा॑ । सव॑नानि । मानु॑षा । रा॒तानि॑ । स॒न्तु॒ । मानु॑षा ॥१

इन्द्राय । हि । द्यौः । असुरः । अनम्नत । इन्द्राय । मही । पृथिवी । वरीमऽभिः । द्युम्नऽसाता । वरीमऽभिः ।

इन्द्रम् । विश्वे । सऽजोषसः । देवासः । दधिरे । पुरः ।

इन्द्राय । विश्वा । सवनानि । मानुषा । रातानि । सन्तु । मानुषा ॥१

“द्यौः द्योतनशीलो द्युलोकः तन्निवासी देवसंघः वा स च "असुरः निरसनशीलः शत्रूणां पुण्यकृतामेव तन्निवासात् “इन्द्राय “हि इन्द्रायैव “अनम्नत स्वयमेव प्रह्वो भवति ।। नमेश्छान्दसे लङि कर्मकर्तरि आत्मनेपदम् ।‘न दुहस्नुनमाम्' (पा. सू. ३. १.८९) इति यगभावः। छान्दसः

शपः श्लुः। हलादिशेषाभावश्च । अनुनासिकलोपः ।।
हिशब्दः प्रसिद्ध्यर्थो वा । तथा “इन्द्राय इन्द्रार्थं “मही
महती “पृथिवी भूमिः तत्रत्यः सर्वो जनो वा अनम्नत ।
उभयत्र आश्रयवाचिशब्देन आश्रयी लक्ष्यते ग्रामः आगतः
इतिवत् । केन साधनेन इति तदुच्यते । “वरीमभिः
वरणीयैः स्तोत्रैर्हविर्भिर्वा । किंच “द्युम्नसाता द्युम्नसातौ
अन्नस्य यशसो वा लाभे निमित्ते सति “वरीमभिः
वरणीयैर्हविभिर्युक्ता यजमानाः प्रह्वा भवन्ति। किंच
“इन्द्रम् एव “विश्वे सर्वे “देवासः देवाः “सजोषसः
समानप्रीतियुक्ता ऐकमत्यभाजः पूर्वमसुरजयार्थं “पुरः
“दधिरे पुरतः स्थापितवन्तः इन्द्रमुखेनैवासुरान् जितवन्तः
इत्यर्थः। तथा “मानुषा “सवनानि मनुष्याणां संबन्धीनि
अभिषवयुक्तानि प्रातरादिसवनानि “इन्द्राय “सन्तु
इन्द्रायैव भवन्तु । तथा “मानुषा मनुष्याणामृत्विजां
संबन्धीनि “रातानि दातव्यानि पुरोडाशादीनि इन्द्राय हि
इन्द्रायैव सन्तु इन्द्रं प्रीणयितुं समर्थानि भवन्त्वित्यर्थः ॥

विश्वे॑षु हि त्वा॒ सव॑नेषु तु॒ंजते॑ समा॒नमेकं॒ वृष॑मण्यव॒ः
पृथ॒क् स्वः॑ सनि॒ष्यव॒ः पृथ॑क् ।

तं त्वा॒ नावं॒ न प॒र्षणिं॑ शू॒षस्यं॑ धु॒रि धी॑महि ।

इंद्रं॒ न य॒ज्ञैश्चि॒तयं॑त आ॒यव॒ः स्तोमे॑भि॒रिंद्रं॑मा॒यवः॑ ॥२

विश्वे॑षु । हि । त्वा॒ । सव॑नेषु । तु॒ञ्जते॑ । स॒मा॒नम् । एक॑म्
। वृष॑ऽमन्यवः । पृथ॑क् । स्व१॒रिति॑ स्वः॑ । स॒नि॒ष्यवः॑ ।
पृथ॑क् ।

तम् । त्वा॒ । नाव॑म् । न । प॒र्षणि॑म् । शू॒षस्य॑ । धु॒रि ।
धी॒म॒हि॒ ।

इन्द्र॑म् । न । य॒ज्ञैः । चि॒तय॑न्तः । आ॒यवः॑ । स्तोमे॑भिः ।
इन्द्र॑म् । आ॒यवः॑ ॥२

विश्वेषु । हि । त्वा । सवनेषु । तुञ्जते । समानम् । एकम् । वृषऽमन्यवः । पृथक् । स्वरिति स्वः । सनिष्यवः । पृथक् ।

तम् । त्वा । नावम् । न । पर्षणिम् । शूषस्य । धुरि । धीमहि ।

इन्द्रम् । न । यज्ञैः । चितयन्तः । आयवः । स्तोमेभिः । इन्द्रम् । आयवः ॥२

हे इन्द्र “त्वा त्वाम् “एकम् एकमेव सन्तं “विश्वेषु सर्वेषु “सवनेषु तद्वत्सु एकाहाहीनसत्ररूपेषु सर्वेषु सोमयागेषु यजमानाः “तुञ्जते त्वरयन्ति हविरादीनि ददते । कीदृशं त्वाम् । “समानं सर्वेषामेकरूपम् । कीदृशा यजमानाः । “वृषमण्यवः अभिमतवर्षणाय त्वामेव मन्यमानाः “पृथक् विविच्य स्वस्वयागे । किमिच्छन्तः । “स्वः स्वर्ग सुखविशेषं वा “सनिष्यवः संभक्तुकामाः “पृथक् तुञ्जते

पृथगेव त्वरयन्ति । तुञ्जतिर्दानार्थः, ‘ शिक्षति तुञ्जते '(नि. ३.२०.८) इति तन्नामसु पाठात् । “तं तादृशं “त्वा त्वां “शूषस्य बलस्य सेनारूपस्य “धुरि वहने तज्जयाय “धीमहि स्थापयामः । यद्वा । शूषस्य अस्मदीयशारीरबलस्य धुरि धीमहि। शूषमिति बलनाम, ‘ शूषं सहः' (नि.२. ९. १६) इति तन्नामसु पाठात् । तत्र दृष्टान्तः । पर्षणिं नावं “न पारस्य संभक्त्रीं पूरयित्रीं वा - फलस्य नावमिव। तां यथा भारवहने स्थापयन्ति ।। ‘पार तीर कर्मसमाप्तौ'। ‘छन्दसि वनसन' (पा. सू. ३.२.२७) इति सनेः इन्प्रत्ययः । पृषोदरादिः । पिपर्तेः औणादिकः सनिप्रत्ययो वा ॥ कीदृशा ववम् । “आयवः मनुष्या यजमानाः “यज्ञैः साधनैः “इन्द्रं “न “चितयन्तः परमेश्वरमिव वां चेतयन्तः परमेश्वरबुद्ध्या भावयन्त इत्यर्थः । यद्वा नशब्दः एवकारार्थः । इन्द्रमेव त्वां जानन्तः । तथा स्तोमेभिः स्तोत्रैः “इन्द्रम् इन्द्रमेव “आयवः गच्छन्तो वयं धीमहि ॥ दधातेर्लिङि छान्दसः शपो लुक् ॥

वि त्वां ततस्रे मिथुना अंवस्यवों व्रजस्यं साता गव्यंस्य निःसृजः सक्षंत इंद्र निःसृजः ।

यद्गव्यंता द्वा जना स्वर्यंतां समूहंसि ।

आविष्करिंक्रद्वृषंणं सचाभुवं वज्रंमिंद्र सचाभुवं ॥३

वि । त्वा । ततस्रे । मिथुनाः । अवस्यवः । व्रजस्यं । साता । गव्यंस्य । निःऽसृजः । सक्षंन्तः । इन्द्र । निःऽसृजः ।

यत् । गव्यन्तां । द्वा । जनां । स्वः । यन्तां । सम्ऽऊहंसि ।

आविः । करिंक्रत् । वृषंणम् । सचाऽभुवंम् । वज्रंम् । इन्द्र । सचाऽभुवंम् ॥३

वि । त्वा । ततस्रे । मिथुनाः । अवस्यवः । व्रजस्य । साता । गव्यस्य । निःऽसृजः । सक्षन्तः । इन्द्र । निःऽसृजः ।

यत् । गव्यन्ता । द्वा । जना । स्वः । यन्ता । सम्ऽऊहसि ।

आविः । करिक्रत् । वृषणम् । सचाऽभुवम् । वज्रम् । इन्द्र । सचाऽभुवम् ॥३

हे “इन्द्र “त्वा त्वामुद्दिश्य “मिथुनाः पत्नीसहिता यजमानाः “वि ततस्रे यज्ञं वितन्वते । यद्वा । यज्ञे पयोव्रतादिना आत्मानमुपक्षयन्ति ।। ‘ तसु उपक्षये '। छान्दसे लिटि ‘ इरयो रे' इति रेभावः ॥ किमर्थम् । “गव्यस्य “व्रजस्य “साता गवां संबन्धिनो यूथस्य लाभे निमित्तभूते सति । न च सर्वत्र अग्निहोत्रादिनित्यवाक्येषु कारीरीचित्रादिकाम्यवाक्येषु यस्योदयं यस्य गृहान् इत्यादिनैमित्तिकवाक्येषु पुरुषस्यैव अर्थित्वादेः सद्भावात् तस्यैवाधिकारः स्त्रियास्तु सत्यप्यर्थित्वे अध्ययनाभावेन विद्वत्ताया अभावात् अत एव सामर्थ्याभावाच्च नास्त्यधिकारः इति वाच्यम् । यद्यपि स्त्रियाः नास्ति

पृथगधिकारस्तथापि पूर्वमीमांसायां षष्ठेऽधिकाराध्याये तृतीयचतुर्थाभ्यामधिकरणाभ्यां अस्त्येव स्त्रिया अधिकारः स च पत्या सहेति प्रपञ्चितत्वात् “ जायापती अग्निमादधीयाताम्' इत्याधानविधानात् स्मृतिषु च नास्ति स्त्रीणां पृथग्यज्ञो न व्रतम् ' (मनु. ५. १५५) इति पृथगधिकारस्यैव निवारितत्वात् अस्त्येव स्त्रियाः पत्या सहाधिकारः । अध्ययनाभावेऽपि वेदं पत्न्यै प्रदाय वाचयेत् ' ( आश्व. श्रौ. १. ११) इति सूत्रकारवचनात् 'पत्न्यन्वास्ते' इत्यादिविधिषु 'सुप्रजसस्त्वा वयम् '(तै. सं. १. १. १०. १ ) इत्यादिमन्त्रविधानात् यत्र वचनमस्ति तत्र अस्त्येव मन्त्रेऽधिकारः किं हि वचनेन कुर्यात् नास्ति वचनस्यातिभारः इति न्यायात् । तस्मात् मिथुना यज्ञं ततस्रे इत्येतत् युक्तम् । कीदृशास्ते। “अवस्यवः इन्द्राय आत्मने वा तृप्तिमिच्छन्तः “निःसृजः निःशेषेण हविस्त्यजन्तः "सक्षन्तः ॥ सक्षतिर्गत्यर्थः । त्वां संभजमानाः । पुनस्त एव विशेष्यन्ते । “निःसृजः

फलप्रतिबन्धकं पापं निर्गमयन्तः । कस्तव विशेष इति तदुच्यते। “यत् यस्मात् कारणात् “गव्यन्ता गामात्मनः इच्छन्तौ ॥ गोशब्दात् ‘सुप आत्मनः क्यच्'। ‘वान्तो यि प्रत्यये ' इति अवादेशः “स्वर्यन्ता स्वर्गं यन्तौ गन्तुमुद्युक्तौ “द्वा "जना द्वौ जायापतिरूपौ जनौ “समूहसि संयुक्तयोः एव अभिमतं स्वर्गादिकं प्रापयसि । यद्वा । सम्यगनुष्ठितवन्तौ इत्यूहसि निश्चिनोषि । अतः पत्नीसहिता अनुतिष्ठन्तीत्यर्थः । किंच हे “इन्द्र त्वं “वृषण वर्षकं कामानां “सचाभुवं सहैवोत्पन्नं त्वया अविनाभूतं तथा “सचाभुवं शत्रुवधादिव्यापारसामर्थ्येन' सहैवोत्पन्नं "वज्रम् "आविष्करिक्रत् आविष्कुर्वन् प्रकटयन् वर्तसे इति शेषः ॥

वि॒दुष्टे॑ अ॒स्य वी॒र्य॑स्य पू॒रवः॒ पुरो॒ यदिं॑द्र॒ शार॑दीर॒वाति॑रः सासहा॒नो अ॒वाति॑रः ।

शास॒स्तमिंद्र॒ मर्त्य॒मयंज्युं शवसस्पते ।

म॒हीमंमुष्णाः पृथि॒वीमि॒मा अ॒पो मंदसा॒न इ॒मा अ॒पः ॥४

वि॒दुः । ते॒ । अ॒स्य । वी॒र्यंस्य । पू॒रवः॑ । पुरः॑ । यत् । इ॒न्द्र॒ । शारंदीः । अ॒व॒ऽअतिंरः । स॒स॒हा॒नः । अ॒व॒ऽअतिंरः ।

शासः॑ । तम् । इ॒न्द्र॒ । मर्त्यंम् । अयंज्युम् । श॒व॒स॒ः । प॒ते॒ ।

म॒हीम् । अ॒मु॒ष्णा॒ः । पृ॒थि॒वीम् । इ॒माः । अ॒पः । म॒न्द॒सा॒नः । इ॒माः । अ॒पः ॥४

विदुः । ते । अस्य । वीर्यस्य । पूरवः । पुरः । यत् । इन्द्र । शारदीः । अवऽअतिरः । ससहानः । अवऽअतिरः ।

शासः । तम् । इन्द्र । मर्त्यम् । अयज्युम् । शवसः । पते ।

महीम् । अमुष्णाः । पृथिवीम् । इमाः । अपः । मन्दसानः । इमाः । अपः ॥४

हे “इन्द्र “ते “वीर्यस्य तव संबन्धिनः “अस्य वीर्यस्य ॥ कर्मणि षष्ठी ।। वक्ष्यमाणमेतद्वीर्यं “विदुः । ये “पूरवः मनुष्या यजमानास्तव महत्त्वं जानानाः त्वामेव यजन्ति “ते विदुः । यद्वा । अस्य वीर्यस्य माहात्म्यम् इति शेषः ॥ विदुष्टे इत्यत्र ‘युष्मत्तत्ततक्षुषु° ' इति विसर्जनीयस्य सत्वम् ॥ वीर्यमेव विशेष्यते । हे इन्द्र. "यत् यस्मात् कारणात् "शारदीः संवत्सरसंबन्धिनीः संवत्सरपर्यन्तं प्राकारपरिखादिभिर्दृढीकृताः “पुरः शत्रूणां पुरीः "अवातिरः अनाशयः ॥ अवपूर्वस्तिरतिर्नाशनार्थः ॥ किं कुर्वन् । 'ससहानः तत्रत्यानभिभवन् धनाद्यपहारेण पीडयन् ॥ सहतेर्यङ्लुगन्तात् ताच्छीलिकः चानश् । “अवातिरः । किंच हे "इन्द्र “तं “मर्त्यं मरणधर्माणम् "अयज्युम् अयष्टारं यज्ञविघातिनं राक्षसादि “शासः

निगृहीतवानसि। हे "शवसस्पते बलस्य पालकेन्द्र त्वं 'महीं महतीं “पृथिवीम् “इमाः "अपः च समुद्रनद्यात्मकान्युदकानि च "अमुष्णाः बलात् अपहृतवानसि । असुरैरन्यैर्वा यज्ञविद्वेषिभिः आक्रान्तां भूमिं तत्संबन्धिनीरपश्च तेषां पुराणि भित्त्वा अपहृतवानसीत्यर्थः । किं दुःखेन । नेत्याह । “मन्दसानः हृष्यन्नेव “इमाः "अपः इमानि अप्कार्याणि व्रीह्याद्यन्नानि अमुष्णाः लब्धवानसि ॥

आदित्ते॑ अ॒स्य वी॒र्य॑स्य चर्किर॒न्मदे॑षु वृषन्नु॒शिजो॒ यदावि॑थ सखीय॒तो यदावि॑थ ।

च॒कर्थ॑ का॒रमे॑भ्यः॒ पृत॑नासु॒ प्रव॑न्तवे ।

ते अ॒न्याम॑न्यां न॒द्यं॑ सनिष्णत श्रव॒स्यन्तः॑ सनिष्णत ॥५

आत् । इत् । ते॒ । अ॒स्य । वी॒र्य॑स्य । च॒र्कि॒र॒न् । मदे॑षु ।
वृ॒ष॒न् । उ॒शिजः॑ । यत् । आवि॑थ । स॒खि॒ऽय॒तः । यत् ।
आवि॑थ ।

च॒कर्थ॑ । का॒रम् । ए॒भ्यः॒ । पृत॑नासु । प्रऽव॑न्तवे ।

ते । अ॒न्याम्ऽअ॑न्याम् । न॒द्य॑म् । स॒नि॒ष्ण॒त॒ । श्र॒व॒स्यन्तः॑ ।
स॒नि॒ष्ण॒त॒ ॥५

आत् । इत् । ते । अस्य । वीर्यस्य । चर्किरन् । मदेषु ।
वृषन् । उशिजः । यत् । आविथ । सखिऽयतः । यत् ।
आविथ ।

चकर्थ । कारम् । एभ्यः । पृतनासु । प्रऽवन्तवे ।

ते । अन्याम्ऽअन्याम् । नद्यम् । सनिष्णत । श्रवस्यन्तः ।
सनिष्णत ॥५

हे इन्द्र “आत् अत एव हेतोः “ते “वीर्यस्य तव संबन्धिने वीर्याय तदभिवृद्धये “चर्किरन् पुनः पुनः सोमं विकिरन्ति । किरतेर्यङ्लुगन्तात् व्यत्ययेन शः ॥ सर्वेषु सवनेषु वितरन्ति यजमानाः । अत इत्युक्तं कुत इत्याह । “मदेषु “वृषन् सोमजनितमदेषु सत्सु हे कामानां वर्षितः “उशिजः त्वां कामयमानान् यजमानान् “यत् यतः कारणात् "आविथ रक्षसि । किंच “सखीयतः तव सखित्वमात्मन इच्छतोऽस्मान् “यत् यस्मात् “आविथ तर्पयसि अभिमतेन प्रीणयसि अतश्चर्किरन् । किंच हे इन्द्र “एभ्यः यजमानेभ्यः “कारं शब्दं सिंहनादलक्षणं “चकर्थ करोषि ॥ करोतेः कर्मणि घञ् । ‘कर्षात्वतः इत्यन्तोदात्तत्वम् ॥ कुत्रेति तदुच्यते । “पृतनासु संग्रामेषु । किमर्थम् । “प्रवन्तवे प्रकर्षेण वनितुं संभक्तुम् । युद्धाय हि धीराः संभजन्ते ॥ वनतेस्तुमर्थे तवेन्प्रत्ययः । ‘ तादौ च° ' इति गतेः प्रकृतिस्वरत्वम् ॥ किंच “ते तव संग्रामवासिनः त्वयि “अन्यामन्याम् अन्यांश्चान्यांश्च अन्यमन्यं प्रति ॥

कर्मव्यतिहारे सर्वनाम्नो द्विर्वचनम् ॥ “नद्यं नदिं सन्तोषं समृद्धिम् ॥ ‘टुनदि समृद्धौ । पूर्वरूपत्वं बाधित्वा छान्दसो यणादेशः ॥ “सनिष्णत संभजन्ते ॥ सनेलेंटि' सिब्बहुलम्' इति सिप् । इट् । व्यत्ययेन पुनः श्नाप्रत्ययः । ‘आत्मनेपदेष्वनतः' इत्यदादेशे ‘श्नाभ्यस्तयोरातः' इत्याकारलोपः । छान्दसः टेः एत्वाभावः ॥ तथा “श्रवस्यन्तः अन्नमिच्छन्तो जयाल्लब्धमन्नं काङ्क्षन्तः “सनिष्णत संभजन्ते ॥

उ॒तो नों अ॒स्या उ॒षसों जु॒षेत॒ ह्य१॒र्कस्यं बोधि ह॒विषो॒ हवींमभि॒ः स्वंर्षाता॒ हवींमभिः ।

यदिंद्र॒ हंतंवे॒ मृधो॒ वृषां वज्रि॒ञ्चिकेंतसि ।

आ में अ॒स्य वे॒धसो॒ नवींयसो॒ मन्मं श्रुधि॒ नवींयसः ॥६

उ॒तो इति॑ । नः॒ । अ॒स्याः । उ॒षसः॑ । जु॒षेत॑ । हि । अ॒र्कस्य॑ । बो॒धि॒ । ह॒विषः॑ । हवी॑मऽभिः । स्वः॑ऽसाता । हवी॑मऽभिः ।

यत् । इ॒न्द्र॒ । हन्त॑वे । मृधः॑ । वृषा॑ । व॒ज्रि॒न् । चिके॑तसि ।

आ । मे॒ । अ॒स्य । वे॒धसः॑ । नवी॑यसः । मन्म॑ । श्रु॒धि॒ । नवी॑यसः ॥६

उतो इति । नः । अस्याः । उषसः । जुषेत । हि । अर्कस्य । बोधि । हविषः । हवीमऽभिः । स्वःऽसाता । हवीमऽभिः ।

यत् । इन्द्र । हन्तवे । मृधः । वृषा । वज्रिन् । चिकेतसि ।

आ । मे । अस्य । वेधसः । नवीयसः । मन्म । श्रुधि । नवीयसः ॥६

अयमिन्द्रः “नः अस्माकं संबन्धिनीम् “अस्याः "उषसः । कर्मणि षष्ठी ॥ एतामुषसं सुत्याहःसंबन्धिनमुषःकालम् “उतो "जुषेत अपि नाम सेवेत । उषस्येव अस्माकमयमिन्द्रो यज्ञं गच्छेदित्यर्थः । हिः पूरणार्थः । गत्वा च "अर्कस्य “हविषः ॥ पूर्ववत्कर्मणि षष्ठी ॥ अर्चनसाधनं हविः “हवीमभिः हवनप्रकारविशेषैः दत्तं हविः उतो “बोधि अपि नाम जानीहि । किंच “स्वर्षाता स्वर्गस्यान्यस्य सुखविशेषस्य वा संभजनस्थाने यज्ञे “हवीमभिः आह्वानैः आहूतो भवेति शेषः । अस्माभिराहूतः सन् उषस्येवागत्य हविः स्वीकरोषीत्यर्थः । कस्मादिदमुच्यते । “यत् यस्मात् कारणात् हे "वज्रिन् वज्रयुक्त “इन्द्र "मृधः हिंसकाञ्छत्रून् “हन्तवे हन्तुं “वृषा वर्षिता सन् कामानां “चिकेतसि अवबुध्यसे ।। ‘कित ज्ञाने'। जौहोत्यादिकः । लेट्यडागमः । ‘ नाभ्यस्तस्याचि पिति° ' इत्यत्र ‘छन्दसि बहुलम्' इति वचनात् लघूपधगुणप्रतिषेधाभावः। ‘अभ्यस्तानामादिः'

इत्याद्युदात्तत्वम् । तस्मात् ब्रूमः । हे इन्द्र “मे मम “मन्म मननीयं स्तोत्रम् "आ “श्रुधि सर्वतः शृणु । कीदृशस्य मे । “वेधसः मेधाविनः "नवीयसः नवतरस्य । दीक्षितसंस्कारैः संस्कृतत्वात् नवीयस्त्वम् । पुनर्विशेष्यते । “नवीयसः अतिशयेन नवनवतः असाधारणस्तुतिमतः । अत्र यजमानविशेषणैः तत्कर्तृकं स्तोत्रमेव विशिष्टं भवति ।

त्वं तमिंद्र वावृधा॒नो अ॑स्म॒युर॑मित्र॒यंतं॑ तुविजा॒त मर्त्य॒ं वज्रे॑ण शूर॒ मर्त्यं॑ ।

ज॒हि यो नो॑ अघा॒यति॑ शृणु॒ष्व सु॒श्रव॑स्तमः ।

रि॒ष्टं न याम॒न्नप॑ भूतु दुर्म॒तिर्विश्वाप॑ भूतु दुर्म॒तिः ॥७

त्वम् । तम् । इ॒न्द्र॒ । व॒वृ॒धा॒नः । अ॒स्म॒ऽयुः । अ॒मि॒त्र॒ऽयन्तं॑म् । तु॒वि॒ऽजा॒त॒ । मर्त्यं॑म् । वज्रे॑ण । शू॒र॒ । मर्त्यं॑म् ।

ज॒हि । यः । न॒ः । अ॒घ॒ऽयतिं । शृ॒णु॒ष्व । सु॒श्रव॑ःऽतमः ।

रि॒ष्टम् । न । यामं॑न् । अपं । भू॒तु॒ । दु॒ःऽम॒तिः । विश्वां ।
अपं । भू॒तु॒ । दु॒ःऽम॒तिः ॥७

त्वम् । तम् । इन्द्र । ववृधानः । अस्मऽयुः । अमित्रऽयन्तम्
। तुविऽजात । मर्त्यम् । वज्रेण । शूर । मर्त्यम् ।

जहि । यः । नः । अघऽयति । शृणुष्व । सुश्रवःऽतमः ।

रिष्टम् । न । यामन् । अप । भूतु । दुःऽमतिः । विश्वा ।
अप । भूतु । दुःऽमतिः ॥७

हे “इन्द्र “तुविजात अस्मत्स्तुत्या बहुभावमापन्न “शूर
विक्रान्त “त्वं “ववृधानः अत्यर्थं वर्धमानः “अस्मयुः
अस्मान् त्वद्भक्तान् कामयमानस्त्वम् “अमित्रयन्तम्
अस्मासु शत्रुत्वमाचरन्तं “मर्त्यं मरणस्वभावं “तं “मर्त्यं
“वज्रेण "जहि ॥ ‘ हन्तेर्जः' इति जादेशः । तस्य

‘असिद्धवदत्रा भात् ' इत्यसिद्धत्वात् हेर्लुगभावः ॥
तमित्युक्तं कमित्याह । “यः मर्त्यः “नः अस्माकम्
“अघायति अघं पापं दुःखं वा इच्छति तं जहि ॥ ‘
अश्वाघस्यात्' इति आत्वम् ॥ किंच “सुश्रवस्तमः
अतिशयेन शोभनश्रवणः त्वं “शृणुष्व श्रावय
अस्मद्वाक्यम् । कीदृशं तदिति तदुच्यते । हे इन्द्र
त्वत्प्रसादात् “दुर्मतिः अस्मज्जिघांसाविषया दुष्टा बुद्धिः
"अप “भूतु अपगता भवतु ॥ छान्दसः शपो लुक् ॥ ‘
भूसुवोस्तिङि' इति गुणप्रतिषेधः ॥ न केवलं हिंसारूपा
अपि तु "विश्वा सर्वापि क्रोधपरिवादादिरूपा “अप "भूतु ।
तत्र दृष्टान्तः । “यामन् यामनि अध्वनि "रिष्टं “न । अध्वनः
श्रमेण हिंसितं परिश्रान्तं यथा दुर्मतिश्चौरादिविषया बाधते
तद्वत् अस्मान् बाधमाना दुर्मतिः अपगच्छतु । यद्वा ।
यामनि मार्गे यज्ञादिरूपे रिष्टम् असुरकृतहिंसादिरूपं
विघ्नं परिहरसि तद्वत् ॥ ॥ २० ॥

| सूक्तं १.७ | सूक्तं १.३७ | सूक्तं १.६७ | सूक्तं १.९७ | सूक्तं १.१२७ | सूक्तं १.१५७ | सूक्तं १.१८७ |
|---|---|---|---|---|---|---|
| सूक्तं १.८ | सूक्तं १.३८ | सूक्तं १.६८ | सूक्तं १.९८ | सूक्तं १.१२८ | सूक्तं १.१५८ | सूक्तं १.१८८ |
| सूक्तं १.९ | सूक्तं १.३९ | सूक्तं १.६९ | सूक्तं १.९९ | सूक्तं १.१२९ | सूक्तं १.१५९ | सूक्तं १.१८९ |
| सूक्तं १.१० | सूक्तं १.४० | सूक्तं १.७० | सूक्तं १.१०० | सूक्तं १.१३० | सूक्तं १.१६० | सूक्तं १.१९० |
| सूक्तं १.११ | सूक्तं १.४१ | सूक्तं १.७१ | सूक्तं १.१०१ | सूक्तं १.१३१ | सूक्तं १.१६१ | सूक्तं १.१९१ |
| सूक्तं १.१२ | सूक्तं १.४२ | सूक्तं १.७२ | सूक्तं १.१०२ | सूक्तं १.१३२ | सूक्तं १.१६२ | |
| सूक्तं १.१३ | सूक्तं १.४३ | सूक्तं १.७३ | सूक्तं १.१०३ | सूक्तं १.१३३ | सूक्तं १.१६३ | |

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|
| १.१४ | १.४४ | १.७४ | १.१०४ | १.१३४ | १.१६४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१५ | १.४५ | १.७५ | १.१०५ | १.१३५ | १.१६५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१६ | १.४६ | १.७६ | १.१०६ | १.१३६ | १.१६६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१७ | १.४७ | १.७७ | १.१०७ | १.१३७ | १.१६७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१८ | १.४८ | १.७८ | १.१०८ | १.१३८ | १.१६८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१९ | १.४९ | १.७९ | १.१०९ | १.१३९ | १.१६९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२० | १.५० | १.८० | १.११० | १.१४० | १.१७० |

# ऋग्वेदः सूक्तं १.१३२

← सूक्तं १.१३१

ऋग्वेदः - मण्डल १

सूक्तं १.१३२

परुच्छेपो दैवोदासिः।

सूक्तं १.१३३ →

## दे. इन्द्रः, ६ (१ अर्धर्चस्य) इन्द्रापर्वतौ । अत्यष्टिः।

त्वया वयं मघवन्पूर्व्ये धन इन्द्रत्वोताः सासह्याम पृतन्यतो वनुयाम वनुष्यतः ।

नेदिष्ठे अस्मिन्नहन्यधि वोचा नु सुन्वते ।

अस्मिन्यज्ञे वि चयेमा भरे कृतं वाजयन्तो भरे कृतम् ॥१॥

स्वर्जेषे भर आप्रस्य वक्मन्युषर्बुधः स्वस्मिन्नञ्जसि क्राणस्य स्वस्मिन्नञ्जसि ।

अहन्निन्द्रो यथा विदे शीर्ष्णाशीर्ष्णोपवाच्यः ।

अस्मत्रा ते सध्र्यक्सन्तु रातयो भद्रा भद्रस्य रातयः ॥२॥

तत्तु प्रयः प्रत्नथा ते शुशुक्वनं यस्मिन्यज्ञे वारमकृण्वत क्षयमृतस्य वारसि क्षयम् ।

वि तद्वोचेरध द्वितान्तः पश्यन्ति रश्मिभिः ।

स घा विदे अन्विन्द्रो गवेषणो बन्धुक्षिद्भ्यो गवेषणः ॥३॥

नू इत्था ते पूर्वथा च प्रवाच्यं यदङ्गिरोभ्योऽवृणोरप व्रजमिन्द्र शिक्षन्नप व्रजम् ।

ऐभ्यः समान्या दिशास्मभ्यं जेषि योत्सि च ।

सुन्वद्भ्यो रन्धया कं चिदव्रतं हृणायन्तं चिदव्रतम् ॥४॥

सं यज्जनान्क्रतुभिः शूर ईक्षयद्धने हिते तरुषन्त श्रवस्यवः प्र यक्षन्त श्रवस्यवः ।

तस्मा आयुः प्रजावदिद्बाधे अर्चन्त्योजसा ।

इन्द्र ओक्यं दिधिषन्त धीतयो देवाँ अच्छा न धीतयः ॥५॥

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तंतमिद्धतं वज्रेण तंतमिद्धतम् ।

दूरे चत्ताय च्छन्त्सद्गहनं यदिनक्षत् ।

अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः ॥६॥

## सायणभाष्यम्

‘ त्वया वयम्' इति षडृचं षष्ठं सूक्तं पारुच्छेपमात्यष्टमैन्द्रम् । ‘युवं तम्' इत्ययमैन्द्रापार्वतोऽर्धर्चः । त्वया वयं षड्युवं तमैन्द्रापार्वतोऽर्धर्चः' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

त्वयां व॒यं मं॑घव॒न्पूर्व्ये॒ धन॒ इंद्रं॑त्वोताः सासह्याम पृतन्य॒तो वं॑नु॒याम॑ वनुष्य॒तः ।

नेदिं॑ष्ठे अ॒स्मिन्नह॒न्यधिं॑ वोचा॒ नु सुं॑न्व॒ते ।

अ॒स्मिन्य॒ज्ञे वि चं॑येमा॒ भरें॑ कृ॒तं वा॑ज॒यंतो॒ भरें॑ कृ॒तं ॥१

त्वया॑ । व॒यम् । म॒घ॒ऽव॒न् । पूर्व्ये॑ । धने॑ । इन्द्र॑त्वाऽऊताः ।
स॒स॒ह्या॒म॒ । पृ॒त॒न्य॒तः । व॒नु॒याम॑ । व॒नु॒ष्य॒तः ।

नेदि॑ष्ठे । अ॒स्मिन् । अह॑नि । अधि॑ । वो॒च॒ । नु । सु॒न्व॒ते ।

अ॒स्मिन् । य॒ज्ञे । वि । च॒ये॒म॒ । भरे॑ । कृ॒तम् । वा॒ज॒ऽयन्तः᳚
। भरे॑ । कृ॒तम् ॥१

त्वया । वयम् । मघऽवन् । पूर्व्ये । धने । इन्द्रत्वाऽऊताः ।
ससह्याम । पृतन्यतः । वनुयाम । वनुष्यतः ।

नेदिष्ठे । अस्मिन् । अहनि । अधि । वोच । नु । सुन्वते ।

अस्मिन् । यज्ञे । वि । चयेम । भरे । कृतम् । वाजऽयन्तः
। भरे । कृतम् ॥१

हे “मघवन् । मघः सौख्यम् । तद्वन्निन्द्र “त्वया साधनेन
युक्ताः “वयम् । अत एव इन्द्रत्वोताः अतिप्रबलेनेन्द्रेण

त्वया रक्षिताः सन्तः ॥ ‘ प्रत्ययोत्तरपदयोश्च ' इति त्वादेशः । छान्दसम् आत्वम् ।। “पृतन्यतः पृतनाम् आत्मन इच्छतः प्रबलसेनायुक्तान् शत्रून् “ससह्याम अभिभवेम। तथा “वनुष्यतः अस्मत्प्रहाराय आगच्छतः शत्रून् “वनुयाम तेषामागमनात्पूर्वमेव वयं संभजेम । किंच “पूर्व्ये “धने “अस्मिन्यज्ञे “नेदिष्ठे अत्यन्तसंनिहिते "अस्मिन्नहनि अभिषवयुक्ते अद्यतने अहनि “सुन्वते यजमानाय तदर्थम् “अधि “वोच । तं हविष्प्रदं यजमानं यज्ञं वा “नु क्षिप्रमधिकं ब्रूहि ॥ लोटि व्यत्ययेन अङ् । ‘ वच उम्। किंच हे इन्द्र वयं यजमानाः “भरे संग्रामे “कृतं जयस्य कर्तारं त्वामुद्दिश्य तज्जयार्थं “वाजयन्तः हविर्लक्षणान्नम् उपाचरन्तः “वि “चयेम । स्तोत्रादिकं हविरादिकं वा विचिनुयाम ॥ चिनोतेर्व्यत्ययेन शप् ॥ पुनः कीदृशं त्वाम् । “भरे देवानां संग्रामे असुरजये देवानां सम्यग्भरणे वा “कृतं कर्तारम् । भर इति संग्रामनाम, ‘ भरतेर्वा हरतेर्वा' (निरु. ४. २४) इति यास्कः॥

स्व॒र्जे॒षे भरं आ॒प्रस्य॒ वक्मं॑न्युष॒र्बुध॒ः स्वस्मि॒न्नंजंसि क्रा॒णस्य॒ स्वस्मि॒न्नंजंसि ।

अह॒न्निंद्रो॒ यथां वि॒दे शी॒र्ष्णाशीं॑र्ष्णोप॒वाच्यः॑ ।

अ॒स्म॒त्रा तें स॒ध्र्यंक्संतु रा॒तयों भ॒द्रा भ॒द्रस्यं रा॒तयः॑ ॥२

स्व॒ःऽजे॒षे । भरें । आ॒प्रस्यं । वक्मंनि । उ॒ष॒ःऽबुधः॑ । स्वस्मिंन् । अञ्जंसि । क्रा॒णस्यं । स्वस्मिंन् । अञ्जंसि ।

अहंन् । इन्द्रः॑ । यथां । वि॒दे । शी॒र्ष्णाऽशीं॑र्ष्णा । उ॒प॒ऽवाच्यः॑ ।

अ॒स्म॒ऽत्रा । ते॒ । स॒ध्र्यंक् । स॒न्तु॒ । रा॒तयः॑ । भ॒द्राः । भ॒द्रस्यं । रा॒तयः॑ ॥२

स्वःऽजेषे । भरे । आप्रस्य । वक्मनि । उषःऽबुधः ।
स्वस्मिन् । अञ्जसि । क्राणस्य । स्वस्मिन् । अञ्जसि ।

अहन् । इन्द्रः । यथा । विदे । शीर्ष्णाऽशीर्ष्णा ।
उपऽवाच्यः ।

अस्मऽत्रा । ते । सध्र्यक् । सन्तु । रातयः । भद्राः । भद्रस्य
। रातयः ॥२

अयमिन्द्रः स्वर्जेषे स्वर्गगमनसाधने “भरे संग्रामे । युद्धे
आभिमुख्येन हतस्य स्वर्गो ‘ द्वाविमौ पुरुषौ लोके
सूर्यमण्डलभेदिनौ' ( परा. ३. २५ ) इत्यादिस्मृतिषु
प्रसिद्धः । “आप्रस्य आपनशीलस्य शत्रुवधाय इतस्ततः
व्याप्तस्य ॥ औणादिको रः ॥ शूरस्य “वक्मनि मार्गभूते
“स्वस्मिन् स्वभूते “अञ्जसि अभिव्यक्तिमति
कपटादिरहिते । पुनः स एव विशेष्यते । “स्वस्मिन्
“अञ्जसि स्वकीयेऽञ्जसि मुख्ये महति संग्रामे । यद्वा ।

स्वस्मिन् अञ्जसि शत्रौ स्वयमेव अप्रच्छन्नत्वेनागते सति अहन् शत्रून् हिनस्ति । कस्य संग्रामे इति तदुच्यते । आप्रस्य आपनशीलस्य आ समन्तात् इन्द्रस्य प्रीणयितुर्वा “उषर्बुधः उषःकाले अनुष्ठानाय प्रबुध्यमानस्य “क्राणस्य यागं कुर्वाणस्य ॥ करोतेः शतरि छान्दसः शपो लुक् ॥ अस्य यजमानस्य शत्रून् "अहन् हिनस्ति । अतः कारणात् अयम् “इन्द्रः “शीर्ष्णाशीर्ष्णोपवाच्यः सर्वेषां शिरसा प्रणम्यः स्तुत्यः ॥ ‘ शीर्षश्छन्दसि ' ( पा. सू. ६. १. ६० ) इति उदात्तनिवृत्तिस्वरेण अन्तोदात्तत्वम् । ‘ नित्यवीप्सयोः' इति द्विर्भावः ॥ तत्र दृष्टान्तः । “यथा “विदे सर्वज्ञाय शिरसा प्रणतिः क्रियते स्तूयते च तथैनमित्यर्थः । यद्वा यथा विदे येन प्रकारेण हन्तव्यं शत्रुं जानासि तं तं प्रहंसि ॥ वेत्तेर्व्यत्ययेनात्मनेपदम् । पुरुषव्यत्ययः । ‘ लोपस्त आत्मनेपदेषु ' इति तलोपः ॥ अथवा । यथा विदे यं यं विन्दसे लभसे शत्रुं तं तं मारयसि । अतः कारणात् स्तुत्यः इत्यर्थः ॥ अस्मिन् पक्षे छान्दसो विकरणस्य लुक्

। पूर्ववत् तलोपः ॥ किंच हे इन्द्र “ते “रातयः तव संबन्धीनि धनानि दानानि "अस्मत्रा अस्मास्वेव “सध्र्यक् सह एकोद्योगेन “सन्तु भवन्तु ॥ सहपूर्वादञ्चतेः ‘ऋत्विक्' इत्यादिना क्विन् । “सहस्य सध्रिः' इति सध्र्यादेशः। अद्रिसध्र्योः अन्तोदात्तनिपातनं कृत्स्वरनिवृत्यर्थमिति स चान्तोदात्तः । उदात्तस्वरितयोर्यणः ' इति स्वरितः ॥ किंच “भद्रस्य स्तुत्यस्य “रातयः अस्मासु दत्तानि दानानि “भद्राः अतिस्थिराणि सन्तु ॥

तत्तु प्रयः॑ प्र॒त्नथा॑ ते शुशुक्व॒नं यस्मि॑न्य॒ज्ञे वा॒रमकृ॑ण्वत॒ क्षयं॑मृ॒तस्य॒ वारं॑सि॒ क्षयं॑ ।

वि तद्वो॑चे॒रध॑ द्वि॒तांतः पं॑श्यंति र॒श्मिभिः॑ ।

स घां॑ विदे॒ अन्विं॑द्रो॑ ग॒वेषं॑णो बंधु॒क्षिद्भ्यो॑ ग॒वेषं॑णः ॥३

तत् । तु । प्रयः॑ । प्र॒त्नऽथा॑ । ते॒ । शु॒शु॒क्व॒नम् । यस्मि॑न् । य॒ज्ञे । वार॑म् । अकृ॑ण्वत । क्षय॑म् । ऋ॒तस्य॑ । वाः । अ॒सि॒ । क्षय॑म् ।

वि । तत् । वो॒चे॒ः । अध॑ । द्वि॒ता । अ॒न्तरिति॑ । प॒श्य॒न्ति॒ । र॒श्मिऽभिः॑ ।

सः । घ॒ । वि॒दे॒ । अनु॑ । इन्द्रः॑ । गो॒ऽएष॑णः । ब॒न्धु॒क्षित्ऽभ्यः॑ । गो॒ऽएष॑णः ॥३

तत् । तु । प्रयः । प्रत्नऽथा । ते । शुशुक्वनम् । यस्मिन् । यज्ञे । वारम् । अकृण्वत । क्षयम् । ऋतस्य । वाः । असि । क्षयम् ।

वि । तत् । वोचेः । अध । द्विता । अन्तरिति । पश्यन्ति । रश्मिऽभिः ।

सः । घ । विदे । अनु । इन्द्रः । गोऽएषणः ।

बन्धुक्षित्ऽभ्यः । गोऽएषणः ॥३

हे इन्द्र “तत्तु खलु प्रसिद्धं “प्रयः हविर्लक्षणमन्नं “शुशुक्वनम् आज्यादिसंयोगेन भृशं दीप्तम् ॥ शुचेर्दीप्तिकर्मणः एतद्रूपम् ॥ “ते तव स्वभूतं "प्रत्नथा पूर्वम् इतःपूर्वं यथा यागकाले हविः ते तव स्वं भवति तथा अद्यतनमपि । सर्वदा त्वामेव यजन्ते" इति भावः । ‘ प्रत्नपूर्वविश्व ' इत्यादिना इवार्थे थाल् । लित्स्वरः ॥ कीदृशं तदिति उच्यते । "यज्ञे यागे "यस्मिन् हविषि दातव्ये सति “वारं वरणीयं “क्षयं स्थानं वेदिलक्षणम् “अकृण्वत कुर्वन्ति ऋत्विजः । कस्तव विशेष इति चेत् उच्यते। “ऋतस्य सत्यफलस्य यज्ञस्य “वाः “असि “क्षयं निवासस्थानं संभक्तोऽसि । यद्वा । ऋतमित्युदकनाम । तस्य क्षयं स्थानं प्राप्तोऽसि । वृष्टिप्रदोऽसीत्यर्थः । अथवा । ऋतस्यादित्यस्य क्षयं स्थानं द्युलोकाख्यं वाः असि

यजमानं गमयितासि । “तत् तादृशं वक्ष्यमाणं कर्म “वि “वोचेः विब्रूहि ।“अध अतः कारणात् “द्वितान्तः द्वित्वोपेतयोः द्यावापृथिव्योर्मध्ये अन्तरिक्षे “रश्मिभिः आदित्यकिरणैः “पश्यन्ति । मेघं निर्भिद्य रश्मिद्वारा प्रवर्षणरूपं कर्म सर्वे जनाः प्रत्यक्षतः पश्यन्ति । अस्मद्दत्तं हविः आदित्यं प्रापयित्वा तद्रश्मिद्वारा वृष्टिं जनयसीत्येतत् सर्वैर्दृश्यते इत्यर्थः । इदानीं परोक्षतया स्तौति । “सः “घ स खलु “इन्द्रः “गवेषणः उदकस्यान्वेषणशीलः । तथा “बन्धुक्षिद्भ्यः्म हविष्प्रदानादिना बन्धुभावं प्राप्तवद्भ्यः यजमानेभ्यः “गवेषणः गवां प्रसिद्धानाम् एषणकर्ता ॥ इषेर्बाहुलकात् कर्तरि ल्युट्। यद्वा। ‘गवेष मार्गणे । पूर्ववत् ल्युट् ॥ यजमानफलस्य मृगयितेत्यर्थः । “अनु उक्तक्रमेणैव कर्ता सन् “विदे विन्दते उदकप्राप्तिप्रकारं जानाति ॥

नू इ॒त्था तें पू॒र्वथां च प्र॒वाच्यं॒ यदंगिंरो॒भ्योऽवृंणो॒रपं व्र॒जमिंद्र॒ शिक्ष॒न्नपं व्र॒जं ।

ऐभ्यः॑ समा॒न्या दि॒शास्मभ्यं जेषि॒ योत्सिं च ।

सु॒न्वद्भ्यों रंधया॒ कं चिंदव्र॒तं हृं॒णा॒यंतं चिदव्र॒तं ॥४

नु । इ॒त्था । ते॒ । पू॒र्वऽथां । च॒ । प्र॒ऽवाच्यंम् । यत् । अङ्गिंरःऽभ्यः । अवृंणोः । अपं । व्र॒जम् । इन्द्रं । शिक्षंन् । अपं । व्र॒जम् ।

आ । ए॒भ्य॒ः । स॒मा॒न्या । दि॒शा । अ॒स्मभ्यंम् । जे॒षि॒ । योत्सिं । च॒ ।

सु॒न्वत्ऽभ्यः॑ । र॒न्ध॒य॒ । कम् । चि॒त् । अ॒व्र॒तम् । हृ॒णा॒यन्तंम् । चि॒त् । अ॒व्र॒तम् ॥४

नु । इत्था । ते । पूर्वऽथा । च । प्रऽवाच्यम् । यत् ।
अङ्गिरःऽभ्यः । अवृणोः । अप । व्रजम् । इन्द्र । शिक्षन् ।
अप । व्रजम् ।

आ । एभ्यः । समान्या । दिशा । अस्मभ्यम् । जेषि ।
योत्सि । च ।

सुन्वत्ऽभ्यः । रन्धय । कम् । चित् । अव्रतम् ।
हृणायन्तम् । चित् । अव्रतम् ॥४

हे “इन्द्र “ते तव संबन्धि कर्म “इत्था इत्थमुक्तप्रकारं
वक्ष्यमाणरूपं वा "पूर्वथा पूर्वमिव पूर्वं यथा “नु क्षिप्रं
"प्रवाच्यं सर्वैः स्तोतव्यं तद्वत् इदानींतनमपि स्तुत्यम् ॥ नू
इत्था इत्यत्र ईषाअक्षादित्वात् । प्रकृतिभावः ॥ कीदृशं
तदिति तदुच्यते । “यत् त्वम् “अङ्गिरोभ्यः
एतद्गोत्रोत्पन्नेभ्यो महर्षिभ्यः तेषामर्थाय “व्रजम् अन्तरिक्षे
गच्छन्तं मेघम् “अप “अवृणोः अपवृतवानसि मेघम्

उत्पाट्य वृष्टिमुत्पादितवानसि । व्रज इति मेघनाम, ‘ व्रजः वराहः' ( नि. १. १०. ११) इति तन्नामसु पाठात् । किंच हे इन्द्र “व्रजं गवां समूहम् “अप अयष्टृभ्योऽपहृत्य तेभ्य एवाङ्गिरोभ्यः "शिक्षन् वितरन् रक्षितवानसि । यद्वा । पणिभिरपहृतं बिले स्थितं गवां व्रजम् अपहर्तुमपावृणोः अपवृतद्वारमकारोः। किंच हे इन्द्र “एभ्यः उक्तेभ्यः ऋषिभ्यः “समान्या “दिशा समानया रीत्या तेभ्यो यथा ददासि तद्वत् “अस्मभ्यम् अपि “जेषि धनं संग्रामं वा जय । तदर्थं "योत्सि युध्यस्व “च ।। छान्दसो विकरणस्य लुक् । व्यत्ययेन परस्मैपदम् ॥ किंच त्वं “सुन्वद्भ्यः त्वदर्थमभिषवं कुर्वद्यःलु अस्मभ्यं “कं चिदव्रतं सर्वमप्ययज्वानं यागविरोधिनं “रन्धय बाधय मदधीनं कुर्वित्यर्थः । न केवलमयज्वानं किंतु “हृणायन्तं “चिदव्रतम् ॥ चिदित्यवकुत्सिते । अस्मासु रोषं कुर्वन्तं तमेव अयष्टारं स्वयं रोषवन्तं वा । यद्वा । हृणायन्तं चित् रोषं कुर्वन्तम् अपि अव्रतम् अकर्माणं पुनर्हननासमर्थं

कुर्वन् रन्धय ॥ हृणीङ् रोषे' । कण्ड्वादिः । व्यत्ययेन आकारः ॥

सं यज्जना॒न् क्रतु॑भि॒: शूरं ई॒क्षय॒द्धने॑ हि॒ते त॑रुषंत श्रव॒स्यव॒: प्र यं॑क्षंत श्रव॒स्यवः॑ ।

तस्मा॒ आयु॑: प्र॒जाव॒दिद्बाधे॑ अर्च॒॑न्त्योजं॑सा ।

इंद्रं॑ अ॒ोक्यं॑ दिधिषंत धी॒तयो॑ दे॒वाँ अच्छा॒ न धी॒तयः॑ ॥५

सम् । यत् । जनां॑न् । क्रतु॑ऽभिः । शूरः॑ । ई॒क्षयं॑त् । धने॑ । हि॒ते । त॒रु॒ष॒न्त॒ । श्र॒व॒स्यवः॑ । प्र । य॒क्ष॒न्त॒ । श्र॒व॒स्यवः॑ ।

तस्मै॑ । आयुः॑ । प्र॒जाऽवं॑त् । इत् । बाधे॑ । अ॒र्च॒न्ति॒ । ओजं॑सा ।

इन्द्र॑ । ओ॒क्य॑म् । दि॒धि॒ष॒न्त॒ । धी॒तय॑ः । दे॒वान् । अच्छ॑ । न । धी॒तय॑ः ॥५

सम् । यत् । जनान् । क्रतुऽभिः । शूरः । ईक्षयत् । धने । हिते । तरुषन्त । श्रवस्यवः । प्र । यक्षन्त । श्रवस्यवः ।

तस्मै । आयुः । प्रजाऽवत् । इत् । बाधे । अर्चन्ति । ओजसा ।

इन्द्र । ओक्यम् । दिधिषन्त । धीतयः । देवान् । अच्छ । न । धीतयः ॥५

“यत् यः इन्द्रः “शूरः विक्रान्तः सन् “जनान् सर्वान् प्राणिनः “क्रतुभिः प्रज्ञाभिः “सम् “ईक्षयत् सम्यगीक्षयति तत्तद्विषयान् । अन्तर्यामिरूपेण सर्वेषां बुद्धिषु स्थित्वा तैर्विषयानुल्लेखयतीत्यर्थः । यद्वा । क्रतुभिः कर्मभिः सुकृतदुष्कृतरूपैर्निमित्तभूतैस्तत्तत्फलैर्योजयति । एवं

प्रेरयति सति "श्रवस्यवः अन्नमिच्छन्तो यजमानाः "धने गवादिरूपे "हिते अभिमते सति । यद्वा । हिते धने अभिप्रेते सति । "तरुषन्त हिंसन्ति शत्रून् ॥ तरुष्यतिर्वधकर्मा। छान्दसे लुङि व्यत्ययेन च्लेः अङ् । तरतेर्वा लङि उकारसिप्शपः त्रयो विकरणाः ॥ तरन्तीत्यर्थः । अतः कारणात् "श्रवस्यवः अन्नं हविर्लक्षणम् इन्द्राय आरमने वा इच्छन्तः सन्तः "प्र "यक्षन्त प्रकर्षेण यजन्ते ॥ छान्दसे लुङि व्यत्ययेन क्सः ॥ किंच "तस्मै "इत् तस्मै प्रसिद्धायेन्द्रायैव "आयुः हविर्लक्षणमन्नं "प्रजावत् पुत्रादिसहितं भवति । तैः सहितैर्दीयते इत्यर्थः । किंच यजमानाः "ओजसा स्वकीयेन बलेन युक्ताः "बाधे शत्रूणां बाधने निमितभूते सति बाधितुं वा ।। 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति केन्प्रत्ययः ॥ "अर्चन्ति' पूजयन्ति । यद्वा । तस्मै इत् यजमानायैव बाधे बले निमित्तभूते सति। बाध इति बलनाम, 'बाधः तविषी' (नि. २. ९. ८) इति तन्नामसु

पाठात् । प्रजावत् पुत्राद्युपेतम् आयुः अन्नं लब्धुम् ओजसा बलेन युक्ताः अर्चन्ति इन्द्रं पूजयन्ति ऋत्विजः इति शेषः । किंच “धीतयः कर्मवन्तो यजमानाः “इन्द्रे इन्द्रसमीपे । 'गङ्गायां घोषः' इतिवत् तत्सामीप्यं लक्ष्यते । इन्द्रलोके इत्यर्थः । तत्र “ओक्यम् ओको निवासस्थानम् ॥ स्वार्थे यत् ॥ “दिधिषन्त धारयन्ति ॥ ‘धिष शब्दे' । अत्र धारणार्थः। जौहोत्यादिकः । व्यत्ययेन अन्तादेशः ॥ ते एव पुनर्विशेष्यन्ते । “धीतयः स्वर्गसाधनकर्मवन्तः सन्तः “देवाँ “अच्छा “न देवान् आभिमुख्येन प्राप्तुमिव ओक्यं दिधिषन्तेत्यन्वयः ।।

अविवाक्येऽहनि मानसग्रहभक्षणानन्तरं नक्षत्रेषु दृश्यमानेषु अध्वर्युप्रमुखाः सर्वे ‘ युवं तम्' इत्येतां जपेयुः । ‘ गार्हपत्ये जुह्वति' इति खण्डे सूत्रितं- युवं • तमिन्द्रापर्वता पुरोयुधेति जपन्तः ( आश्व. श्रौ. ८.१३ ) इति ।

यु॒वं तमिं॑द्रापर्वता पु॒रो॒युधा॒ यो नः॑ पृत॒न्याद॒प तंत॒मिद्धं॑त॒ं वज्रें॑ण॒ तंत॒मिद्धं॑तं ।

दू॒रे च॒त्ताय॑ च्छंत्स॒द्गहं॑न॒ं यदिनं॑क्षत् ।

अ॒स्माक॒ं शत्रू॒न्परिं शूर वि॒श्वतों द॒र्मा दं॑र्षीष्ट वि॒श्वतः॑ ॥६

यु॒वम् । तम् । इ॒न्द्रा॒प॒र्व॒ता॒ । पु॒रः॒ऽयुधा॑ । यः । न॒ः ।
पृ॒त॒न्यात् । अप॑ । तम्ऽतं॑म् । इत् । ह॒त॒म् । वज्रें॑ण ।
तम्ऽतं॑म् । इत् । ह॒त॒म् ।

दू॒रे । च॒त्ताय॑ । छ॒न्त्स॒त् । गहं॑नम् । यत् । इनं॑क्षत् ।

अ॒स्माकं॑म् । शत्रूं॑न् । परिं । शू॒र॒ । वि॒श्वतः॑ । द॒र्मा । द॒र्षी॒ष्ट॒ । वि॒श्वतः॑ ॥६

युवम् । तम् । इन्द्रापर्वता । पुरःऽयुधा । यः । नः ।
पृतन्यात् । अप । तम्ऽतम् । इत् । हतम् । वज्रेण ।

तम्ऽतम् । इत् । हतम् ।

दूरे । चत्ताय । छन्त्सत् । गहनम् । यत् । इनक्षत् ।

अस्माकम् । शत्रून् । परि । शूर । विश्वतः । दर्मा । दर्षीष्ट । विश्वतः ॥६

हे "इन्द्रापर्वता। इन्द्रः प्रसिद्धः । पर्वतः पर्ववान्मेघः । तदभिमानी देवः । तौ “युवं युवां “पुरोयुधा संग्रामे पुरतो योद्धारौ “नः अस्माकं “यः शत्रुः “पृतन्यात् अस्मान् हन्तुं पृतनामात्मन इच्छति “तंतमित् सर्वमपि शत्रुम् "अप “हतं नाशयतम् ॥ हन्तेर्लोटि ‘ अनुदात्तोपदेश' इत्यनुनासिकलोपः ॥ केन साधनेनेति तदुच्यते । “तंतमित् सर्वमपि शत्रुं हन्तुं "वज्रेण साधनेन प्राप्नुतम् । ईदृक् सामर्थ्यमस्तीति दर्शयति । “यत् यो वज्रः । लिङ्गव्यत्ययः ॥ “दूरे "चत्ताय अत्यन्तदूरदेशे गताय ॥ चातयतेर्वा नाशकर्मणः ॥ नष्टाय अदर्शनमापन्नायेत्यर्थः

॥' ग्रसितस्कभित०' इत्यादौ निपातनात् इडभावः ॥
तादृशं शत्रुं “छंत्सत् छन्दयति कामयते हन्तुम् । छन्दतेः कान्तिकर्मणः इदं रूपम् ॥ किंच “गहनं दुरवगाहं स्थानम् अतिकठिनं हृदयं शत्रुसमीपं वा “इनक्षत् व्याप्नोति ॥ ‘नक्ष गतौ'। छान्दसः इकारोपजनः । इनक्षतिर्वा प्रकृत्यन्तरम् ॥ इदानीम् इन्द्र एव स्तूयते । हे “शूर शौर्योपेतेन्द्र “अस्माकं विरोधिनः “शत्रून् “विश्वतः विश्वान् ॥
सार्वविभक्तिकस्तसिल् ॥ "परि परितः “विश्वतः विश्वैः उपायैः “दर्षीष्ट दारयसि । किंच “दर्मा शत्रूणां दारकः ॥ दारयतेः ‘अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । णिलोपे उदात्तनिवृत्तिस्वरेण मनिन उदात्तत्वम् । ह्रस्वश्छान्दसः । यद्वा । 'दॄ भये' । घटादित्वात् ‘ मितां ह्रस्वः' इति ह्रस्वत्वम् ॥ तव पूर्वोक्तो वज्रः विश्वतः सर्वान् शत्रून् सर्वैरुपायैर्वा दर्षीष्ट दारयति । यद्वा । दर्मा शत्रूणां दारकः इन्द्रः दर्षीष्ट कार्त्स्न्ये न दारयति शत्रून् ॥ ॥ २१ ॥

# ऋग्वेदः सूक्तं १.१३३

← सूक्तं १.१३२

ऋग्वेदः - मण्डल १

सूक्तं १.१३३

परुच्छेपो दैवोदासिः

सूक्तं १.१३४ →

दे. इन्द्रः । १ त्रिष्टुप्, २-४ अनुष्टुप्, ५ गायत्री, ६ धृतिः, ७ अष्टिः ।

---

उभे पुनामि रोदसी ऋतेन द्रुहो दहामि सं महीरनिन्द्राः ।

अभिव्लग्य यत्र हता अमित्रा वैलस्थानं परि तृळ्हा अशेरन् ॥१॥

अभिव्लग्या चिदद्रिवः शीर्षा यातुमतीनाम् ।

छिन्धि वटूरिणा पदा महावटूरिणा पदा ॥२॥

अवासां मघवञ्जहि शर्धो यातुमतीनाम् ।

वैलस्थानके अर्मके महावैलस्थे अर्मके ॥३॥

यासां तिस्रः पञ्चाशतोऽभिव्लङ्गैरपावपः ।

तत्सु ते मनायति तकत्सु ते मनायति ॥४॥

पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण ।

सर्वं रक्षो नि बर्हय ॥५॥

अवर्मह इन्द्र दादृहि श्रुधी नः शुशोच हि द्यौः क्षा न भीषाँ अद्रिवो घृणान्न भीषाँ अद्रिवः ।

शुष्मिन्तमो हि शुष्मिभिर्वधैरुग्रेभिरीयसे ।

अपूरुषघ्नो अप्रतीत शूर सत्वभिस्त्रिसप्तैः शूर सत्वभिः ॥६॥

वनोति हि सुन्वन्क्षयं परीणसः सुन्वानो हि ष्मा यजत्यव द्विषो देवानामव द्विषः ।

सुन्वान इत्सिषासति सहस्रा वाज्यवृतः ।

सुन्वानायेन्द्रो ददात्याभुवं रयिं ददात्याभुवम् ॥७॥

## सायणभाष्यम्

‘ उभे पुनामि' इति सप्तर्चं सप्तमं सूक्तं पारुच्छेपमैन्द्रम् । आद्या त्रिष्टुप् । 'अभिव्लग्या' इत्याद्यास्तिस्रोऽनुष्टुभः । ‘ पिशङ्गभृष्टिम्' इत्येषा गायत्री। ‘अवर्महः' इत्येषा धृतिः । “वनोति हि' इत्यनभिधानादत्यष्टिः। अत्रानुक्रमणिका-‘उभे सप्तादौ त्रिष्टुप् तिस्रोऽनुष्टुभो गायत्री धृतिः' इति ॥ अस्य सूक्तस्य विनियोगमाह शौनकः । ‘ उभे" पुनामीति पुरा रिपुघ्न्यस्तु प्रकीर्तिताः । ता जपन् प्रयतो नित्यमिष्टान् कामान्समश्नुते । ता जपन् हन्ति रक्षांसि सपत्नांश्च नियच्छति' (ऋग्वि०१.२५) ॥

उ॒भे पु॑नामि॒ रोद॑सी ऋ॒तेन॒ द्रुहो॑ दहामि॒ सं म॒हीर॑नि॒न्द्राः ।

अ॒भि॒व्लग्य॒ यत्र॑ ह॒ता अ॒मित्रा॑ वैलस्था॒नं परि॑ तृ॒ळ्हा अशे॑रन् ॥१

उ॒भे इति॑ । पु॒ना॒मि॒ । रोद॑सी॒ इति॑ । ऋ॒तेन॑ । द्रुहः॑ । द॒हा॒मि॒ । सम् । म॒हीः । अ॒नि॒न्द्राः ।

अ॒भि॒ऽव्लग्य॑ । यत्र॑ । ह॒ताः । अ॒मित्राः॑ । वै॒ल॒ऽस्था॒नम् । परि॑ । तृ॒ळ्हाः । अशे॑रन् ॥१

उभे इति । पुनामि । रोदसी इति । ऋतेन । द्रुहः । दहामि । सम् । महीः । अनिन्द्राः ।

अभिऽव्लग्य । यत्र । हताः । अमित्राः । वैलऽस्थानम् । परि । तृळ्हाः । अशेरन् ॥१

हे इन्द्र “ऋतेन त्वदुद्देश्येन यज्ञेन बलेन' “उभे “रोदसी द्यावापृथिव्यौ “पुनामि लोकद्वयं हिंसकानां तव अयष्टॄणां वा अपगमनेन पावयामि । किंच भूलोके “अनिन्द्राः इन्द्रविरहितानाम् आश्रयभूताः “महीः “उर्वीः अत एव “द्रुहः द्रोहिणामाधारभूतत्वात् स्वयमपि द्रोग्धीः "सं

“दहामि संभूय एकहेलया दहामि । पुनस्ता एव विशेष्यन्ते । “यत्र यासु भूमिषु "अमित्राः शत्रवः "अभिव्लग्य अभितो गत्वा “हताः सर्वतः प्राप्ताः अस्माभिर्घातिता वा ॥ व्लगतिर्गतिकर्मा छान्दसो धातुः ॥ ते सर्वे “परि “तृळ्हाः हिंसिताः ॥ तृहू हिंसार्थः । ऊदित्त्वात् “ यस्य विभाषा ' इति इट्प्रतिषेधः ॥ हिंसिताः सन्तः “अशेरन् शयनं प्राप्ताः ॥ शेतेर्व्यत्ययेन परस्मैपदम् ।' शीङो रुट्' (पा. सू. ७. १. ६) । शीङः सार्वधातुके गुणः ।। “वैलस्थानम् । बिलशब्दो गर्तसमानार्थः । स च गर्तः श्मशानवचनः । अतः अयमपि श्मशानवाची । अथवा बिलसंबन्धिस्थानं नागलोकः । तत्र वा अशेरन् । यद्वा । ‘ विल क्षेपे ' इति धातुः । घञर्थे कः। स्वार्थिकः अण् । तत्र शवाः क्षिप्यन्ते इति वैलस्थानं श्मशानम् ॥ तत्र त्वया हताः भूमिं श्मशानवत्कृत्वा सर्वत्र शेरते । तान् दहामीत्यर्थः॥

अ॒भि॒व्लग्यां चिदद्रिवः शी॒र्षा यां॑तु॒मतीं॑नां ।

छि॒ंधि वंटू॒रिणां पु॒दा म॒हावंटूरिणा पु॒दा ॥२

अ॒भि॒ऽव्लग्यं । चि॒त् । अ॒द्रि॒ऽव॒: । शी॒र्षा । या॒तु॒ऽमतीं॑नाम् ।

छि॒न्धि । व॒टू॒रिणां । पु॒दा । म॒हाऽवंटूरिणा । पु॒दा ॥२

अभिऽव्लग्य । चित् । अद्रिऽवः । शीर्षा । यातुऽमतीनाम् ।

छिन्धि । वटूरिणा । पदा । महाऽवटूरिणा । पदा ॥२

"अद्रिवः वैरिणां भक्षक । यद्वा अद्रेः मेघस्य आदर्तः इन्द्र त्वं “यातुमतीनां हिंसावतीनां सेनानाम् । यद्वा । यातनसाधनानि आयुधानि यातूनि तद्वतीनाम् । अथवा । यातवो रक्षांसि तद्वतीनां सेनानाम् ।। कर्मणि षष्ठी। शत्रूणां सेनाः। “शीर्षा शीर्षाणि "अभिव्लग्या "चित्

अभितः प्राप्यैव “च्छिन्धि चूर्णय। यद्वा । तासां संबन्धीनि रथादीनि च्छिन्धि । केन साधनेनेति तदुच्यते । “वटूरिणा “पदा वेष्टनशीलेन सर्वव्याप्तेन त्वदीयपादेन अतिविस्तृतेनेत्यर्थः । यद्वा । वटूरिणा पदा वेष्टनशीलेन हस्तिनः संबन्धिना पादेन ऐरावतपादेनेत्यर्थः । न केवलेन येन केन पादेनेत्याह । “महावटूरिणा “पदा महावेष्टनवता स्वीयेन ऐरावतसंबन्धिना वा पादेन च्छिन्धि चूर्णय ।। वट वेष्टने '। ‘ खर्जिपिञ्ज्यादिभ्य ऊरोलचौ ' (उ. सू. ४. ५३० ) इति ऊरप्रत्ययः । अत इनिठनौ ' इति इनिः ॥

अवांसां मघवञ्जहि शर्धो यातुमतीनां ।

वैलस्थानके अर्मके महावैलस्थे अर्मके ॥३

अवं । आसाम् । मघऽवन् । जहि । शर्धः । यातुऽमतीनाम् ।

“एनोः एनयोः ॥ संज्ञापूर्वकस्य विधेरनित्यत्वात् ‘ ओसि च ' ( पा. सू. ७. ३. १०४ ) इति गुणाभावे । अतो गुणे : इति पररूपत्वम् ॥ “क्षत्रं बलं “कुतश्चन कस्मादपि च शत्रोः राक्षसादेः सकाशात् कस्मादप्युपायाद्वा “न “आधृषे आधर्षितुं शक्यं न भवति ॥ ‘ कृत्यार्थे तवैकेन्' इति केन्प्रत्ययः ।। किंच तयोः देवत्वं “नू “चित् देवभावोऽपि न “आधृषे अधर्षणायोग्यः । यद्वा । पूर्वमिव इदानीमपि । “नू चिदिति निपातः पुराणनवयोः' (निरु. ४. १७ ) इति यास्केनोक्तत्वात् । आधृषे न केनाप्याधर्षणीयो भवति । एतयोर्बलं नाधृष्यं किमु तद्देवत्वमिति भावः ।।

अद॑र्शि गा॒तुरु॒रवे॒ वरी॑यसी॒ पन्थां॑ ऋ॒तस्य॒ सम॑यंस्त
र॒श्मिभि॒श्चक्षु॒र्भग॑स्य र॒श्मिभि॑ः ।

द्यु॒क्षं मि॒त्रस्य॒ साद॑नमर्य॒म्णो वरु॑णस्य च ।

अथा॑ दधाते बृ॒हदु॒क्थ्यं॑१॒ वयं॑ उप॒स्तुत्यं॑ बृ॒हद्वयः॑ ॥२

अदं॑र्शि । गा॒तुः । उ॒रवें॑ । वरीं॑यसी । पन्थाः॑ । ऋ॒तस्यं॑ । सम् । अ॒यं॒स्त॒ । र॒श्मिऽभिः॑ । चक्षुः॑ । भगं॑स्य । र॒श्मिऽभिः॑ ।

द्यु॒क्षम् । मि॒त्रस्यं॑ । सदं॑नम् । अ॒र्य॒म्णः । वरुं॑णस्य । च॒ ।

अथं॑ । द॒धा॒ते॒ इतिं॑ । बृ॒हत् । उ॒क्थ्यं॑म् । वयः॑ । उ॒प॒ऽस्तुत्यं॑म् । बृ॒हत् । वयः॑ ॥२

अदर्शि । गातुः । उरवे । वरीयसी । पन्थाः । ऋतस्य । सम् । अयंस्त । रश्मिऽभिः । चक्षुः । भगस्य । रश्मिऽभिः ।

द्युक्षम् । मित्रस्य । सदनम् । अर्यम्णः । वरुणस्य । च ।

अथ । दधाते इति । बृहत् । उक्थ्यम् । वयः ।
उपऽस्तुत्यम् । बृहत् । वयः ॥२

“गातुः गमनशीला “वरीयसी उरुतरा उषाः “उरवे विस्तीर्णाय यागाय गमनादिव्यापाराय अदर्शि सर्वैर्दृष्टा अभूत्। तथा “ऋतस्य गमनशीलस्यादित्यस्य “पन्थाः मार्गः आकाशलक्षणः “रश्मिभिः “समयंस्त प्रकाशैः संगतोऽभूत् । “भगस्य सर्वैर्भजनीयस्य एतन्नामकस्य देवस्य “रश्मिभिः “चक्षुः सर्वप्राणिनां लोचनं समयंस्त संगतमभूत् । सर्वे स्वस्वद्रव्यदर्शनाय समर्था अभवन्नित्यर्थः । तदेव स्पष्टीक्रियते । "मित्रस्य प्रकाशकारित्वात् सर्वजनमित्रस्य “सदनं गृहमन्तरिक्षं “द्युक्षं दीप्तानां निवासस्थानं रश्मिभिः समयंस्त संगतमभूत् । तथा “अर्यम्णः एतन्नामकस्य देवस्य ॥ उदात्तनिवृत्तिस्वरेण विभक्तेः उदात्तत्वम् ॥ द्युक्षं सदनं रश्मिभिः समयंस्त । किंच “वरुणस्य तमोनिवारकस्य

एतन्नामकस्य देवस्य सदनं तथाभूत् । यद्यपि सूर्यस्य एकत्वेऽपि उपाधिभेदेन भेदात् पृथक् स्तुतिः तथा यद्यपि त्रिभिरपि प्रकाश्यमप्यन्तरिक्षमेकं तथापि प्रकाशकानां भेदात् त्रिधा स्तूयते । उदयानन्तरं कर्मानुष्ठानाय प्रकाशः अभवदित्यर्थः। “अथ अतः कारणात् उदितत्वादेव “उक्थ्यं स्तुत्यं "बृहत् प्रभूतं “वयः हविर्लक्षणमन्नं “दधाते धारयतः । किंच “उपस्तुत्यम् उपेत्य स्तोतव्यम् ॥ ‘एतिस्तुशासु' (पा. सू. ३. १. १०९) इत्यादिना क्यप् । “बृहत् स्तोमादिना महत्स्तोत्रं “वयः हविर्लक्षणमन्नं च दधाते ॥

ज्योतिंष्मती॒मदिंतिं धा॒रयत्क्षिंतिं॒ स्वंर्वती॒मा संचेते दि॒वेदिंवे जागृ॒वांसां दि॒वेदिंवे ।

ज्योतिंष्मत्क्ष॒त्रमांशाते आदि॒त्या दानुं॒न॒स्पतीं ।

मि॒त्रस्तयो॒र्वरु॑णो याता॒यज्ज॑नोऽर्य॒मा या॑ता॒यज्ज॑नः ॥३

ज्योति॑ष्मतीम् । अदि॑तिम् । धा॒र॒यत्ऽक्षि॑तिम् ।
स्वः॑ऽवतीम् । आ । स॒चे॒ते॒ इति॑ । दि॒वेऽदि॑वे । जा॒गृ॒ऽवांसा॑
। दि॒वेऽदि॑वे ।

ज्योति॑ष्मत् । क्ष॒त्रम् । आ॒शा॒ते॒ इति॑ । आ॒दि॒त्या । दानु॑नः ।
पती॒ इति॑ ।

मि॒त्रः । तयोः॑ । वरु॑णः । या॒त॒यत्ऽज॑नः । अ॒र्य॒मा ।
या॒त॒यत्ऽज॑नः ॥३

ज्योतिष्मतीम् । अदितिम् । धारयत्ऽक्षितिम् ।
स्वःऽवतीम् । आ । सचेते इति । दिवेऽदिवे । जागृऽवांसा
। दिवेऽदिवे ।

ज्योतिष्मत् । क्षत्रम् । आशाते इति । आदित्या । दानुनः ।
पती इति ।

मित्रः । तयोः । वरुणः । यातयत्ऽजनः । अर्यमा ।
यातयत्ऽजनः ॥३

अयं यजमानः “ज्योतिष्मतीम् आहवनीयाग्नेस्तेजोयुक्ताम् “अदितिम् अदीनां संपूर्णलक्षणां “क्षितिम् अग्नेर्निवासयोग्यां भूमिम् उत्तरवेदिलक्षणां “धारयत् धारयति स्वयं कृतवानित्यर्थः। एतावती वै पृथिवी यावती वेदिः' (तै. सं २. ६, ४, १) इति श्रुतेः । तथा “स्वर्वतीं यज्ञनिष्पत्तिद्वारा स्वर्गवतीं ईदृशीं ताम् “आ “सचेते मित्रावरूणौ संगतौ भवतः । न केवलम् एतस्मिन् एव अहनि किंतु “दिवेदिवे सर्वेष्वप्यहःसु । कीदृशौ तौ । “दिवेदिवे प्रतिदिनं "जागृवांसा प्रबोधं कुर्वाणौ । यज्ञं गन्तुम् अनलसौ इत्यर्थः । किंच वेदिमागत्य “ज्योतिष्मत् आज्यादिस्वीकारेण अतिशयेन तेजोयुक्तं “क्षत्रं बलम् “आशाते अश्नुवाते प्राप्नुतः ॥ अश्नोतेश्छान्दसे लिटि ‘अनित्यमागमशासनम्' इति वचनात् नुडभावः । लटि वा

छान्दसः शपः श्लुः । कीदृशौ इति तावाह। "आदित्या अदितेः पुत्रौ "दानुनस्पती दानस्य आज्यादिप्रदानस्य स्वामिनौ अभिमतदानस्य पालयितारौ वा ॥ ‘ षष्ठ्याः पतिपुत्र' इति संहितायां सत्वम् ॥ “मित्रः च “वरुणः च तावुभौ देवौ । अर्यमाख्यस्तु देवः “तयोः मित्रावरुणयोः “यातयज्जनः । तयोरेव संबन्धादुभयोर्मध्ये स्थितो यातयज्जनः स्वस्वव्यापारनियोजितसर्वजनः। मित्रावरुणौ अहोरात्रदेवौ। अर्यमा तु तयोरेव सामर्थ्यात् सर्वप्राणिनः प्रेरयतीत्यर्थः। किंच “यातयज्जनः । यातयन्ति लोकं यदीया जनाः प्रेष्याः स तादृशः । यद्वा । यात्यमाना नरके निपात्यमाना जनाः प्राणिनः अयष्टारो येन स तादृशः । कर्मसाक्षित्वात् स्वस्वकर्मानुरोधेन प्राणिनः सुकृते यातयतीत्यर्थः । तादृशः अर्यमा मित्रावरुणयोरधीनो वर्तते इति शेषः ॥

अ॒यं मि॒त्राय॒ वरु॑णाय॒ शंत॑म॒ः सोमो॑ भूत्वव॒पाने॒ष्वाभ॑गो दे॒वो दे॒वेष्वाभ॑गः ।

तं दे॒वासो॑ जुषेरत॒ विश्वे॑ अ॒द्य स॒जोष॑सः ।

तथा॑ राजाना करथो॒ यदीम॑ह॒ ऋता॑वाना॒ यदीम॑हे ॥४

अ॒यम् । मि॒त्राय॑ । वरु॑णाय । शम्ऽत॑मः । सोम॑ः । भू॒तु॒ । अ॒व॒ऽपाने॑षु । आऽभ॑गः । दे॒वः । दे॒वेषु॑ । आऽभ॑गः ।

तम् । दे॒वास॑ः । जु॒षे॒र॒त॒ । विश्वे॑ । अ॒द्य । स॒ऽजोष॑सः ।

तथा॑ । रा॒जा॒ना॒ । क॒र॒थ॒ः । यत् । ईम॑हे । ऋत॑ऽवाना । यत् । ईम॑हे ॥४

अयम् । मित्राय । वरुणाय । शम्ऽतमः । सोमः । भूतु । अवऽपानेषु । आऽभगः । देवः । देवेषु । आऽभगः ।

तम् । देवासः । जुषेरत । विश्वे । अद्य । सऽजोषसः ।

तथा । राजाना । करथः । यत् । ईमहे । ऋतऽवाना । यत् । ईमहे ॥४

“अयम् अस्माभिर्हूयमानः “सोमः “मित्राय “वरुणाय च “शंतमः पीयमानः सन् सुखतमः “भूतु भवतु ॥ छान्दसः शपो लुक् । ‘ भूसुवोस्तिङि' इति गुणाभावः ॥ “अवपानेषु अवाङ्मुखचमसपानेषु विषयेषु “आ सर्वतः “भगः भजनीयः ताभ्याम् । किंच “देवः दीप्यमानः “देवेषु मित्रावरुणानुचरेषु इतरदेवेषु तैः “आभगः आभजनीयः । यद्वा । देवेषु स्तोतृषु यजमानेषु मध्ये देवो दीप्यमानः । तथा आभगस्तैरेव आ सर्वतो भजनीयः । किंच “तं सोमं “विश्वे सर्वे “देवासः देवाः “अद्य अस्मिन्नहनि “जुषेरत सेवन्ते ॥ छान्दसो झस्य रन्नादेशाभावः। ‘ बहुलं छन्दसि ' इति रुडागमः ॥ कीदृशास्ते । “सजोषसः

समानप्रीतियुक्ताः । “तथा “राजाना राजमाना मित्रावरुणौ युवां “करथः कुरुतं सेवेथे इत्यर्थः। व्यत्ययेन शप्॥ “यत् यस्मात् कारणात् “यत् “ईमहे यत् प्राप्नुमः तत् देवान् याचामहे ।। ‘ ईङ् गतौ'। दैवादिकः । छान्दसो विकरणस्य लुक् ।। तस्मात् जुषेरत । तथा “ऋतावाना ऋतवन्तौ सत्यवन्तौ यज्ञवन्तौ वा मित्रावरुणौ “ईमहे अभिमतफलं तयोः पानं वा याचामहे ॥

यो मि॒त्राय॒ वरु॑णा॒यावि॑ध॒ज्जनो॑ऽन॒र्वाणं॒ तं परि॑ पातो॒ अंह॑सो दा॒श्वांसं॒ मर्त॒मंह॑सः ।

तम॑र्य॒माभि र॑क्षत्यृज॒ूयन्त॒मनु॑ व्र॒तम् ।

उ॒क्थैर्य एं॑नोः परि॒भूष॑ति व्र॒तं स्तोमै॑रा॒भूष॑ति व्र॒तम् ॥५

यः । मि॒त्राय॑ । वरु॑णाय । अवि॑धत् । जनः॑ । अ॒न॒र्वाणं॑म् । तम् । परिं॑ । पा॒तः॒ । अंह॑सः । दा॒श्वांसं॑म् । मर्तं॑म् । अंह॑सः ।

तम् । अ॒र्य॒मा । अ॒भि । र॒क्ष॒ति॒ । ऋ॒जु॒ऽयन्तं॑म् । अनुं॑ । व्र॒तम् ।

उ॒क्थैः । यः । ए॒नो॒ः । प॒रि॒ऽभूषं॑ति । व्र॒तम् । स्तोमैः॑ । आ॒ऽभूषं॑ति । व्र॒तम् ॥५

यः । मित्राय । वरुणाय । अविधत् । जनः । अनर्वाणम् । तम् । परि । पातः । अंहसः । दाश्वांसम् । मर्तम् । अंहसः ।

तम् । अर्यमा । अभि । रक्षति । ऋजुऽयन्तम् । अनु । व्रतम् ।

उक्थैः । यः । एनोः । परिऽभूषति । व्रतम् । स्तोमैः ।
आऽभूषति । व्रतम् ॥५

“यः “जनः यजमानः “मित्राय वरुणाय च ॥ कर्मणः संप्रदानत्वाच्चतुर्थी । मित्रं वरुणं च “अविधत् परिचरति "तं जनं युष्मत्परिचारकम् “अनर्वाणम् अद्वेषिणम् । ‘भ्रातृव्यो वा अर्वा ' (तै. सं. ६. ३. ८. ४ )इति श्रुतेः । अनल्पं वा अनन्यसेविनं “परि “पातः परितो रक्षताम्। कस्मादिति तदुच्यते । अंहसः न्यूनातिरेकजनितात् पापात् । न केवलं सामान्यं जनम् अपि तु “दाश्वांसं हविर्दत्तवन्तं "मर्तं मरणधर्माणम् “अंहसः सर्वस्मादपि पापात् । न केवलं भवन्तावेव अपि तु “अर्यमा सर्वेषां नियन्ता देवः “ऋजूयन्तं देवेष्वार्जवमाचरन्तं यजमानम् “अनु “व्रतं तदीयं कर्मानुलक्ष्य “अभि “रक्षति अभितो रक्षति । कोऽस्य जनस्य विशेषः इति तत्राह । “यः यजमानः “उक्थैः शस्त्रैः “एनोः एनयोर्मित्रावरुणयोः “व्रतं कर्म

“परिभूषति परिगृह्णाति तथा यजमानो युष्मदीयं “व्रतं कर्म “स्तोमैः स्तोत्रैर्गानयुक्तमन्त्रसाध्यैः “आभूषति सर्वतोऽलंकरोति ॥ ‘ भूष अलंकारे । भौवादिकः ॥ तम् अभिरक्षति इत्यन्वयः ॥

नमों दि॒वे बृंह॒ते रोदंसीभ्यां मि॒त्रायं वोचं॒ वरुंणाय मी॒ळ्हुषें सुमृळी॒कायं मी॒ळ्हुषें ।

इन्द्रंम॒ग्निमुपं स्तुहि द्यु॒क्षमंर्य॒मणं॒ भगंम् ।

ज्योग्जीवंन्तः प्र॒जयां सचेमहि॒ सोमंस्यो॒ती संचेमहि ॥६

नमः॑ । दि॒वे । बृ॒ह॒ते । रोदंसीभ्याम् । मि॒त्रायं । वो॒च॒म् । वरुंणाय । मी॒ळ्हुषें । सु॒ऽमृ॒ळी॒कायं । मी॒ळ्हुषें ।

इन्द्रंम् । अ॒ग्निम् । उपं । स्तु॒हि॒ । द्यु॒क्षम् । अ॒र्य॒मणंम् । भगंम् ।

ज्योक् । जीवंन्तः । प्र॒ऽजयां । स॒चे॒म॒हि॒ । सोमंस्य । ऊ॒ती । स॒चे॒म॒हि॒ ॥६

नमः । दिवे । बृहते । रोदसीभ्याम् । मित्राय । वोचम् । वरुणाय । मीळ्हुषे । सुऽमृळीकाय । मीळ्हुषे ।

इन्द्रम् । अग्निम् । उप । स्तुहि । द्युक्षम् । अर्यमणम् । भगम् ।

ज्योक् । जीवन्तः । प्रऽजया । सचेमहि । सोमस्य । ऊती । सचेमहि ॥६

“दिवे द्योतमानाय सूर्याय “नमः "वोचं नमस्कारोपलक्षितं स्तोत्रं वोचं ब्रवीमि स्तौमीत्यर्थः । कीदृशाय तस्मै । "बृहते महते ॥ ‘ बृहन्महतोरुपसंख्यानम्' इति विभक्तिरुदाता ॥ स्तुत्याय । तथा “रोदसीभ्यां द्यावापृथिवीभ्यां तदभिमानिदेवाभ्यां नमो वोचम् । तथा “मित्राय

सर्वजनहिताय अहरभिमानिदेवाय नमः वोचम् । तथा “वरुणाय आवरकाय रात्र्यभिमानिदेवाय । तथा “मीळ्हुषे अभिमतफलस्य सेक्त्रे रुद्राय । कीदृशाय तस्मै । “सुमृळीकाय शोभनसुखयित्रे । पुनः स एव विशेष्यते । मीळ्हुषे सुमृळीकाय इति द्वे प्रत्येकविशेषणभूते । इदानीं यजमानः ऋत्विजं स्वात्मानं वा प्रति ब्रवीति । हे होतः हे आत्मन् वा “इन्द्रम् “अग्निं “द्युक्षं दीप्तिमन्तम् “अर्यमणं “भगं च “उप उपेत्य बुद्ध्या प्राप्य “स्तुहि स्तुतिं कुरु । युष्मदनुग्रहात् “ज्योक् चिरकालं “जीवन्तः जीवनोपेता वयं “प्रजया पुत्रभृत्यादिना “सचेमहि संगता भूयास्म । किंच “सोमस्य इन्दोः “ऊती ऊत्या "सचेमहि तमपि स्तुत्वा तत्कारितेन रक्षणेन सहिता भूयास्मेत्यर्थः ॥

ऊ॒ती दे॒वानां॑ व॒यमिन्द्रं॑वन्तो मंसी॒महि॒ स्वयं॑शसो म॒रुद्भिः॑ ।

अ॒ग्निर्मि॒त्रो वरु॑ण॒ः शर्म॑ यंस॒न्तद॑श्याम म॒घवा॑नो व॒यं च॑ ॥
७

ऊ॒ती । दे॒वाना॑म् । व॒यम् । इन्द्र॑ऽवन्तः । मं॒सी॒महि॑ ।
स्वऽयं॑शसः । म॒रुत्ऽभि॑ः ।

अ॒ग्निः । मि॒त्रः । वरु॑णः । शर्म॑ । यं॒स॒न् । तत् । अ॒श्या॒म॒ ।
म॒घऽवा॑नः । व॒यम् । च॒ ॥७

ऊती । देवानाम् । वयम् । इन्द्रऽवन्तः । मंसीमहि ।
स्वऽयशसः । मरुत्ऽभिः ।

अग्निः । मित्रः । वरुणः । शर्म । यंसन् । तत् । अश्याम ।
मघऽवानः । वयम् । च ॥७

"इन्द्रवन्तः प्रीतेनेन्द्रेण तद्वन्तः वयं “देवानां देवान् ॥
कर्मणि षष्ठी ॥ "उती ऊत्या तर्पणेन हविरादिना "मंसीमहि
मन्येमहि । कीदृशा वयम् । “स्वयशसः स्वायत्तकीर्तयः

“मरुद्भिः स्तुत्या हृद्यैर्मरुद्देवैरनुगृहीताः । यद्वा । देवानाम् ऊत्या रक्षणेन रक्षिता मंसीमहि ज्ञातारो भवेम सामर्थ्यात् तेषामेव महत्त्वस्य । किंच अग्निमित्रवरुणाः देवाः “शर्म "यंसन् अस्माकं सुखं प्रायच्छन् तं तं वरम् । “मघवानः वयं च तैर्दत्तान्नवन्तः सन्तः “तत् सुखम् “अश्याम व्याप्नुयाम ॥ अश्नोतेराशिषि लिङि ‘ छन्दस्युभयथा ' इति सार्वधातुकत्वात् सलोपः ॥ ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति

श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क भूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये

वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके प्रथमोऽध्यायः समाप्तः ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.७ | १.३७ | १.६७ | १.९७ | १.१२७ | १.१५७ | १.१८७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.८ | १.३८ | १.६८ | १.९८ | १.१२८ | १.१५८ | १.१८८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.९ | १.३९ | १.६९ | १.९९ | १.१२९ | १.१५९ | १.१८९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१० | १.४० | १.७० | १.१०० | १.१३० | १.१६० | १.१९० |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.११ | १.४१ | १.७१ | १.१०१ | १.१३१ | १.१६१ | १.१९१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१२ | १.४२ | १.७२ | १.१०२ | १.१३२ | १.१६२ | |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१३ | १.४३ | १.७३ | १.१०३ | १.१३३ | १.१६३ | |

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२१ १.५१ १.८१ १.१११ १.१४१ १.१७१

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२२ १.५२ १.८२ १.११२ १.१४२ १.१७२

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२३ १.५३ १.८३ १.११३ १.१४३ १.१७३

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२४ १.५४ १.८४ १.११४ १.१४४ १.१७४

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२५ १.५५ १.८५ १.११५ १.१४५ १.१७५

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२६ १.५६ १.८६ १.११६ १.१४६ १.१७६

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२७ १.५७ १.८७ १.११७ १.१४७ १.१७७

# ऋग्वेदः सूक्तं १.१३७



## दे. मित्रावरुणौ। अतिशक्वरी।

---

सुषुमा यातमद्रिभिर्गोश्रीता मत्सरा इमे सोमासो मत्सरा इमे ।

आ राजाना दिविस्पृशास्मत्रा गन्तमुप नः ।

इमे वां मित्रावरुणा गवाशिरः सोमाः शुक्रा गवाशिरः ॥१॥

इम आ यातमिन्दवः सोमासो दध्याशिरः सुतासो दध्याशिरः ।

उत वामुषसो बुधि साकं सूर्यस्य रश्मिभिः ।

सुतो मित्राय वरुणाय पीतये चारुरृताय पीतये ॥२॥

तां वां धेनुं न वासरीमंशुं दुहन्त्यद्रिभिः सोमं दुहन्त्यद्रिभिः ।

अस्मत्रा गन्तमुप नोऽर्वाञ्चा सोमपीतये ।

अयं वां मित्रावरुणा नृभिः सुतः सोम आ पीतये सुतः ॥३॥

## सायणभाष्यम्

॥ श्रीगणेशाय नमः ।।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ द्वितीयाष्टके द्वितीयोऽध्याय आरभ्यते । ‘ सुषुमा यातम्' इति तृचात्मकं चतुर्थं सूक्तं पारुच्छेपम् अतिशाक्करं षट्यक्षरोपेतत्वात् । पूर्वत्र तुशब्दप्रयोगात् मैत्रावरुणम् । अत्र अत्यष्टिपरिभाषा नाश्रीयते ‘अतिशाक्वरम्' इति विशेषितत्वात् । अत्रानुक्रमणिका – सुषुम तृचमतिशाक्वरम्' इति ॥ दशरात्रस्य षष्ठेऽहनि प्रातःसवने प्रउगशस्त्रे इदं सूक्तं मित्रावरुणदेवत्यं तृतीयतृचम् । सूत्रितं च -- ‘ स्तीर्णं बर्हिरिति तृचौ सुषुमा यातमद्रिभिः' (आश्व. श्रौ. ८.१) इति । तथा अस्मिन्नेव मैत्रावरुणस्य प्रस्थितयाज्यायाः पुरस्तात् आद्या प्रक्षेपणीया । ‘ षष्ठस्य प्रातःसवने ' इति खण्डे सूत्रितं ‘ सुषुमा यातमद्रिभिः' ( आश्व. श्रौ. ८. १) इति ॥

सु॒षु॒मा या॑त॒मद्रि॑भि॒र्गोश्री॑ता मत्स॒रा इ॒मे सोमा॑सो मत्स॒रा इ॒मे ।

आ रांजाना दिविस्पृशास्म॒त्रा गंन्त॒मुपं नः ।

इ॒मे वां मित्रावरुणा॒ गवांशिर॒ः सोमां॒ः शु॒क्रा गवांशिरः ॥
१

सु॒सु॒म । आ । या॒त॒म् । अद्रिंऽभिः । गोऽश्रींताः । म॒त्स॒राः
। इ॒मे । सोमांसः । म॒त्स॒राः । इ॒मे ।

आ । रा॒जा॒ना॒ । दि॒वि॒ऽस्पृ॒शा॒ । अ॒स्म॒ऽत्रा । ग॒न्त॒म् । उपं ।
न॒ः ।

इ॒मे । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । गोऽआंशिरः । सोमा॑ः । शु॒क्राः
। गोऽआंशिरः ॥१

सुसुम । आ । यातम् । अद्रिऽभिः । गोऽश्रीताः । मत्सराः
। इमे । सोमासः । मत्सराः । इमे ।

आ । राजाना । दिविऽस्पृशा । अस्मऽत्रा । गन्तम् । उप । नः ।

इमे । वाम् । मित्रावरुणा । गोऽआशिरः । सोमाः । शुक्राः । गोऽआशिरः ॥१

हे मित्रावरुणौ "आ "यातम् अस्मद्यज्ञं प्रति आगच्छतम् । आगमनाय किमस्तीति चेत् तत्राह। “अद्रिभिः अभिषवसाधनैर्ग्रावभिः “सुषुम सोमं सुतवन्तो वयम् ॥ सुनोतेर्लिटि रूपम् । अतः “गोश्रीताः । विकारे प्रकृतिशब्दः । पयोभिर्मिश्रिताः । तस्मान्मैत्रावरुणं पयसा श्रीणाति' (तै. सं. ६. ४. ८. १) इति हि ब्राह्मणम् । “मत्सराः तृप्तिहेतवः सोमाः ।' मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः । (निरु. २. ५) इति यास्कः । “इमे पुरतो गृहीता वर्तन्ते । अतः आ यातम् । पुनस्त एव विशेष्यन्ते । “इमे “सोमासो “मत्सराः मदहेतवो मादने

मात्सर्यवन्तो वा इतरयज्ञगतसोमेभ्यः सोमाः। कीदृशौ युवाम् । “राजाना राजनशीलौ “दिविस्पृशा द्युलोकवासिनौ ॥' हृद्द्युतभ्यां ङेरुपसंख्यानम् । (पा. सू. ६. ३. ९. १) इति अलुक् ॥ ईदृशौ युवाम् “अस्मत्रा अस्मासु मध्ये अस्मत्पालकौ वा युवां “नः अस्मत्संबन्धिनं यज्ञम् “उप “गन्तम् आगच्छतम् । किंच हे “मित्रावरुणा एतन्नामानौ देवौ “वां युवयोरर्थाय “इमे “सोमाः “गवाशिरः । पूर्ववत् विकारे प्रकृतिशब्दः । गोभिः क्षीरैः आशिरो मिश्रिताः संजाताः। किंच “गवाशिरः गोभिः उदकैः मिश्रिताः संजाताः । यद्वा । गोभिः स्तुतिलक्षणैर्मन्त्रैः मिश्रिताः । अत एव “शुक्राः दीप्ताः संजाताः। 'आशिरमव नयति सशुक्रत्वाय' (तै. सं. ६. १. ६. ५) इति श्रुतेः ॥

इ॒म आ यां॑त॒मिन्दं॑व॒ः सोमा॑सो॒ दध्या॑शिरः सु॒तासो॒ दध्या॑शिरः ।

उ॒त वां॑मु॒षसो॑ बु॒धि सा॒कं सूर्य॑स्य र॒श्मिभि॑ः ।

सु॒तो मि॒त्राय॒ वरु॑णाय पी॒तये॒ चारु॑र्ऋ॒ताय॑ पी॒तये॑ ॥२

इ॒मे । आ । या॒त॒म् । इन्द॑वः । सोमा॑सः । दधि॑ऽआशिरः ।
सु॒तासः॑ । दधि॑ऽआशिरः ।

उ॒त । वा॒म् । उ॒षसः॑ । बु॒धि । सा॒कम् । सूर्य॑स्य ।
र॒श्मिऽभिः॑ ।

सु॒तः । मि॒त्राय॑ । वरु॑णाय । पी॒तये॑ । चारुः॑ । ऋ॒ताय॑ ।
पी॒तये॑ ॥२

इमे । आ । यातम् । इन्दवः । सोमासः । दधिऽआशिरः ।
सुतासः । दधिऽआशिरः ।

उत । वाम् । उषसः । बुधि । साकम् । सूर्यस्य ।
रश्मिऽभिः ।

सुतः । मित्राय । वरुणाय । पीतये । चारुः । ऋताय । पीतये ॥२

हे मित्रावरुणौ “आ "यातम् आगच्छतम् । यतो युष्मदर्थम् “इन्दवः क्लेदनसमर्थाः “सोमासः सोमाः “दध्याशिरः दध्नाश्रयणवन्तः सन्तः “इमे पुरतो ग्रहेण गृहीता वर्तन्ते अतः आ यातम् । किंच “दध्याशिरः धीयमानाशिरः सोमाः “सुतासः मन्त्रेण ग्रावभिरभिषुताः संपन्नाः । अत आ यातमिति शेषः। आदित्यग्रहे दध्यवनयसद्भावात् तदपेक्षया दध्याशिर इत्युक्तम्। "उत अपि च “वां युवयोः प्रीतये पालनाय "उषसो “बुधि उषसः संबन्धिनि बोधे सति ॥ संपदादिलक्षणो भावे क्विप्। ‘ सावेकाचः । इति विभक्तेरुदात्तत्वम् ॥ प्रकाशे संजाते सति । न केवलमुषस एव बोधे अपि तु “सूर्यस्य “रश्मिभिः “साकं सूर्यकिरणैः सह प्रकाशे हविष्प्रदानाय संजाते सति “सुतः सोमोऽभिषुतः। इदानीं वियुज्य उच्यते । “मित्राय

सर्वहिताय एतन्नामकाय अहरभिमानिदेवाय तथा
“वरणाय आवरकाय रात्र्यभिमानिदेवाय च तदर्थं सोमः
सुतः इति शेषः । किंच “ऋताय यज्ञाय तन्निर्वाहकाय
तदर्थं “पीतये पानाय । यज्ञसिद्ध्यर्थं हि देवानां सोमपानम्
। यद्वा ।। कर्तरि क्तिच् ॥ पीतये पात्रे ऋत्विगादये ऋताय
यज्ञाय तन्निर्वाहकाय । “चारुः चरणीयो भक्षणीयः सोमः
सुतोऽभिषुतः ॥

तां वां धे॒नुं न वां॑स॒रीमं॒शुं दुं॑ह॒न्त्यद्रिं॑भि॒ः सोमं॑
दुह॒न्त्यद्रिं॑भिः ।

अ॒स्म॒त्रा गं॑न्त॒मुपं॑ नो॒ऽर्वाञ्चा॒ सोमं॑पीतये ।

अ॒यं वां॑ मित्रावरुणा॒ नृभिं॑ः सु॒तः सोम॒ आ पी॒तयें॒ सु॒तः ॥
३

ताम् । वा॒म् । धे॒नुम् । न । वा॒स॒रीम् । अं॒शुम् । दु॒ह॒न्ति॒ । अद्रि॑ऽभिः । सोम॑म् । दु॒ह॒न्ति॒ । अद्रि॑ऽभिः ।

अ॒स्म॒ऽत्रा । ग॒न्त॒म् । उप॑ । नः॒ । अ॒र्वाञ्चा॑ । सोम॑ऽपीतये ।

अ॒यम् । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । नृऽभिः॑ । सु॒तः । सोमः॑ । आ । पी॒तये॑ । सु॒तः ॥३

ताम् । वाम् । धेनुम् । न । वासरीम् । अंशुम् । दुहन्ति । अद्रिऽभिः । सोमम् । दुहन्ति । अद्रिऽभिः ।

अस्मऽत्रा । गन्तम् । उप । नः । अर्वाञ्चा । सोमऽपीतये ।

अयम् । वाम् । मित्रावरुणा । नृऽभिः । सुतः । सोमः । आ । पीतये । सुतः ॥३

“वां युवयोः संबन्धिनम् “अंशुं वल्लीरूपं सोमं “दुहन्ति संपादयन्त्यध्वर्यवः । किमिव । “तां

प्रसिद्धामग्निहोत्राद्यर्थां “वासरीं सर्वाङ्गाच्छादितपयस्कां बहुक्षीरामित्यर्थः । यद्वा । पयआदिनाच्छादयित्रीम् ॥ ‘वस आच्छादने'। औणादिकः अरिप्रत्ययः। ' कृतिकारादक्तिनः' इति ङीष् । यद्वा । केवलः औणादिकः अरप्रत्ययः स्वार्थिकः अण् ॥ “धेनुं “न प्रीणयित्रीं गामिव । केन साधनेनेति तदाह । “अद्रिभिः अभिषवसाधनैर्ग्रावभिः । किच "अद्रिभिः तैरेव साधनैः “सोमं युष्मदर्थमेव “दुहन्ति वल्लीरूपं सोमं युष्मदर्थमेव उदकेन आप्लाव्य रसं दुहन्ति। किंच “अर्वाञ्चा अस्मदभिमुखौ सन्तौ “सोमपीतये सोमपानाय "अस्मत्रा अस्मत्त्रातारौ युवां “नः अस्मदीयं यज्ञम् "उप “गन्तम् उपागच्छतम्। किंच “वां युष्मदर्थम् “अयं “सोमः “नृभिः नेतृभिर्यज्ञनिर्वाहकैर्ऋत्विग्भिः “सुतः अभिषुतः । किंच “आ “पीतये संपूर्णपानाय “सुतः अतः आगच्छतमित्यर्थः ॥ ॥ १ ॥

# ऋग्वेदः सूक्तं १.१३८

← सूक्तं १.१३७

ऋग्वेदः - मण्डल १

सूक्तं १.१३८

परुच्छेपो दैवोदासिः

सूक्तं १.१३९ →

## दे. पूषा। अत्यष्टिः

प्रप्र पूष्णस्तुविजातस्य शस्यते महित्वमस्य तवसो न तन्दते स्तोत्रमस्य न तन्दते ।

अर्चामि सुम्नयन्नहमन्त्यूतिं मयोभुवम् ।

विश्वस्य यो मन आयुयुवे मखो देव आयुयुवे मखः ॥१॥

प्र हि त्वा पूषन्नजिरं न यामनि स्तोमेभिः कृण्व ऋणवो यथा मृध उष्ट्रो न पीपरो मृधः ।

हुवे यत्त्वा मयोभुवं देवं सख्याय मर्त्यः ।

अस्माकमाङ्गूषान्द्युम्निनस्कृधि वाजेषु द्युम्निनस्कृधि ॥२॥

यस्य ते पूषन्सख्ये विपन्यवः क्रत्वा चित्सन्तोऽवसा बुभुज्रिर इति क्रत्वा बुभुज्रिरे ।

तामनु त्वा नवीयसीं नियुतं राय ईमहे ।

अहेळमान उरुशंस सरी भव वाजेवाजे सरी भव ॥३॥

अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व ।

ओ षु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः ।

नहि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे ॥४॥

## सायणभाष्यम्

'प्रप्र पूष्णः' इति चतुर्ऋचं पञ्चमं सूक्तं पारुच्छेपमात्यष्टं पूषदेवताकम् । ' प्रप्र चतुष्कं पौष्णम्' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

प्रप्रं पू॒ष्णस्तुं॑विजा॒तस्यं शस्यते महि॒त्वमंस्य त॒वसो॒ न तंन्दते स्तो॒त्रमंस्य॒ न तंन्दते ।

अर्चा॑मि सुम्न॒यन्न॒हमन्त्यूंतिं मयो॒भुवंम् ।

विश्वंस्य॒ यो मनं आयुयु॒वे म॒खो दे॒व आंयुयु॒वे म॒खः ॥१

प्रऽप्रं । पू॒ष्णः । तु॒वि॒ऽजा॒तस्यं । श॒स्य॒ते॒ । म॒हि॒ऽत्वम् । अ॒स्य॒ । त॒वसः॑ । न । त॒न्द॒ते॒ । स्तो॒त्रम् । अ॒स्य॒ । न । त॒न्द॒ते॒ ।

अर्चा॑मि । सु॒म्न॒ऽयन् । अ॒हम् । अन्तिं॑ऽऊतिम् । म॒यः॒ऽभुवंम् ।

विश्वंस्य । यः । मनः॑ । आ॒ऽयु॒यु॒वे । म॒खः । दे॒वः । आ॒ऽयु॒यु॒वे । म॒खः ॥१

प्रऽप्र । पूष्णः । तुविऽजातस्य । शस्यते । महिऽत्वम् ।
अस्य । तवसः । न । तन्दते । स्तोत्रम् । अस्य । न ।
तन्दते ।

अर्चामि । सुम्नऽयन् । अहम् । अन्तिऽऊतिम् ।
मयःऽभुवम् ।

विश्वस्य । यः । मनः । आऽयुयुवे । मखः । देवः ।
आऽयुयुवे । मखः ॥१

“तुविजातस्य बहुयजमानार्थमुत्पन्नस्य “अस्य “पूष्णः
पोषकस्य एतन्नामकस्य देवस्य “तवसः “महित्वं बलस्य
महत्त्वं “प्रप्र “शस्यते प्रस्तूयते सर्वैः ॥ वीप्सा पादपूरणे॥
“न “तन्दते न हिनस्ति कश्चित्तदपि । किंच “अस्य पूष्णः
“स्तोत्रं “न “तन्दते न हिनस्ति न विरमति । सर्वोऽपि जनः
एनं स्तौतीत्यर्थः । जगत्पोषकत्वादिति भावः । अतः
कारणात् “अहं अहमपि यजमानः “सुम्नयन् सुखमिच्छन्

“अर्चामि स्तौमि । कीदृशं तम् । “अन्त्यूतिम्
आसन्नरक्षणम् ॥ ‘ कादिलोपो बहुलम्' इति कलोपः ॥
स्तुत्यनन्तरमेव वरप्रदमित्यर्थः । “मयोभुवं
सुखस्योत्पादकं भावयितारं वा । “यः पूषा “मखः यज्ञवान्
॥ मत्वर्थो लुप्यते ॥ “विश्वस्य सर्वस्य स्तोतुर्ऋत्विजः
“मनः “आयुयुवे समन्तात् मिश्रयति । शीघ्रवरप्रदानात्
इति भावः। किंच “देवः दीप्यमानः एषः “मखः मखं यज्ञम्
“आयुयुवे संपूर्तिपर्यन्तं मिश्रयति । यद्वा । विश्वस्य
मनोमिश्रणे यजमाने किमायातमिति चेत् उच्यते । मखो
यज्ञनिर्वाहकोऽयं पूषा देवो यजमानस्य मनः आयुयुवे
समन्तात् मिश्रयति । सामर्थ्यात् यजमानस्य मन इति
लभ्यते ॥ यौतेश्छान्दसो लिट्॥

प्र हि त्वां पूषन्नजि॒रं न यामं॑नि॒ स्तोमे॑भिः कृ॒ण्व ऋ॒णवो॒
यथा॒ मृध॒ उष्ट्रो॒ न पीं॑परो॒ मृधः॑ ।

हु॒वे यत्त्वा॑ मयो॒भुवं॑ दे॒वं स॒ख्याय॒ मर्त्यः॑ ।

अ॒स्माक॑माङ्गू॒षान्द्यु॒म्निन॑स्कृधि॒ वाजे॑षु द्यु॒म्निन॑स्कृधि ॥२

प्र । हि । त्वा॒ । पू॒ष॒न् । अ॒जि॒रम् । न । याम॑नि । स्तोमे॑भिः । कृ॒ण्वे । ऋ॒णवः॑ । यथा॑ । मृधः॑ । उष्ट्रः॑ । न । पी॒प॒रः॒ । मृधः॑ ।

हु॒वे । यत् । त्वा॒ । म॒यः॒ऽभुव॑म् । दे॒वम् । स॒ख्याय॑ । मर्त्यः॑ ।

अ॒स्माक॑म् । आ॒ङ्गू॒षान् । द्यु॒म्निनः॑ । कृ॒धि॒ । वाजे॑षु । द्यु॒म्निनः॑ । कृ॒धि॒ ॥२

प्र । हि । त्वा । पूषन् । अजिरम् । न । यामनि । स्तोमेभिः । कृण्वे । ऋणवः । यथा । मृधः । उष्ट्रः । न । पीपरः । मृधः ।

हुवे । यत् । त्वा । मयःऽभुवम् । देवम् । सख्याय । मर्त्यः ।

अस्माकम् । आङ्गूषान् । द्युम्निनः । कृधि । वाजेषु । द्युम्निनः । कृधि ॥२

हे “पूषन् "अजिरं यज्ञदेशं प्रति गमनवन्तं “त्वा त्वां “यामनि गमने निमित्तभूते सति “स्तोमेभिः स्तोमैः “प्र “कृण्वे प्रकृष्टं करोमि। तत्र दृष्टान्तः । यामनि शीघ्रगमनेऽजिरं न शीघ्रगामिनमश्वमिव । स यथा प्रस्तूयते तद्वत् । किंच “यथा “मृधः संग्रामानुद्दिश्य “ऋणवः गच्छेः तथा प्र कृण्वे । यद्वा । यथा ऋणवः अस्मद्यज्ञं प्रति गच्छेः ॥ ‘ ऋणु गतौ'। तानादिकः। लेटि अडागमः ॥ तथा त्वां कृण्वे । किंच "मृधः हिंसकान् योद्धॄन् संग्रामे "पीपरः पारं नयसि ॥ पारयतेर्लुङि चङि रूपम् ॥ तत्र दृष्टान्तः । "उष्ट्रो “न । उष्ट्रो यथा भारं वोढा पारयति तद्वत् "मृधः संग्रामात्

पीपरः पारं नयसि । अतः कारणात् “त्वा त्वां मयोभुवं सुखस्य भावयितारं “देवं देवनशीलं पूषणं “मर्त्यः मरणधर्मा मनुष्योऽहं “हुवे आह्वयामि । किमर्थम् । “सख्याय समानख्यानाय प्रियकरणाय । एवमाहूतः सन् “अस्माकमाङ्गूषान् आघोषान् स्तोमान् । आङ्गूषः स्तोम आघोषः' इति यास्कः (५॒.१॒१॒ ) । “द्युम्निनस्कृधि द्योतनवतः कुरु । यद्वा । स्तोमान् यशोवतोऽन्नवतो वा कृधि अस्मत्स्तुत्या प्रीतस्त्वम् एवं कुर्वित्यर्थः । किंच “वाजेषु संग्रामेषु “द्युम्निनः अन्नवतः “कृधि अस्मद्वैरिणो जित्वा तेषामन्नं मयि कुर्वित्यर्थः ।।

यस्यं ते पूषन्स॒ख्ये विंप॒न्यव॒ः क्रत्वां चि॒त्सन्तोऽवंसा बुभुज्रि॒र इति॒ क्रत्वां बुभुज्रि॒रे ।

तामनुं त्वा॒ नवींयसीं नि॒युतं रा॒य ईंमहे ।

अहे॑ळमान उरुशंस॒ सरी॑ भव॒ वाजे॑वाजे॒ सरी॑ भव ॥३

यस्य॑ । ते॒ । पू॒ष॒न् । स॒ख्ये । वि॒प॒न्यवः॑ । क्रत्वा॑ । चि॒त् ।
सन्तः॑ । अव॑सा । बु॒भु॒ज्रि॒रे । इति॑ । क्रत्वा॑ । बु॒भु॒ज्रि॒रे ।

ताम् । अनु॑ । त्वा॒ । नवी॑यसीम् । नि॒ऽयुत॑म् । रा॒यः । ई॒म॒हे॒
।

अहे॑ळमानः । उ॒रु॒ऽशं॒स॒ । सरी॑ । भ॒व॒ । वाजे॑ऽवाजे । सरी॑
। भ॒व॒ ॥३

यस्य । ते । पूषन् । सख्ये । विपन्यवः । क्रत्वा । चित् ।
सन्तः । अवसा । बुभुज्रिरे । इति । क्रत्वा । बुभुज्रिरे ।

ताम् । अनु । त्वा । नवीयसीम् । निऽयुतम् । रायः । ईमहे
।

अहेळमानः । उरुऽशंस । सरी । भव । वाजेऽवाजे । सरी । भव ॥३

हे “पूषन् देव "यस्य “ते रक्षकत्वेन प्रसिद्धस्य तव “सख्ये सखित्वे हितकरणे सति “क्रत्वा “चित क्रतुना प्रकृष्टेन कर्मणैव ॥ ‘ जसादिषु च्छन्दसि वावचनम्' इति नाभावाभावः ॥ “सन्तः भवन्तं प्रीणयितारः सन्तः “विपन्यवः विशेषेण स्तोत्रशीलाः । यद्वा । मेधाविनामैतत् । मेधाविनः यजमानाः “अवसा त्वत्कृतेन रक्षणेन रक्षिताः सन्तः “बुभुज्रिरे भुञ्जते भोगान् । “इति एवमेव सर्वदा “क्रत्वा कर्मणा “बुभुज्रिरे भुञ्जते सर्वे पाल्यन्ते इति वा ।। भुजेश्छन्दसि लिटि ‘बहुलं छन्दसि इति रुट्।। “तां तादृशीं “नवीयसीं नवतरां स्तुत्यां वा रक्षाम् “अनु अनुसृत्य रक्षाया अनन्तरं त्वां “नियुतं “रायः एतत्संख्याकान् धनानि “ईमहे याचामहे । किंच हे “उरुशंस बहुधा स्तुत्य त्वम् “अहेळमानः अक्रुध्यन्

अस्मासु सुमनाः सन् "सरी “भव अस्माभिर्गन्तव्यो भव ।।
सर्तेः औणादिकः इनिप्रत्ययः । आद्युदात्तत्वम् ।। किंच त्वं
“वाजेवाजे सर्वेष्वपि संग्रामेषु “सरी “भव गमनशीलो भव
पुरतो गन्ता भवेत्यर्थः ।।

अ॒स्या ऊ॒ षु ण॒ उपं सा॒तयें भु॒वोऽहेंळमानो ररि॒वाँ अंजाश्व
श्रवस्यु॒तामंजाश्व ।

ओ षु त्वां ववृतीमहि॒ स्तोमेंभिर्दस्म सा॒धुभिंः ।

न॒हि त्वां पूषन्नति॒मन्यं आघृणे॒ न तें स॒ख्यमंपह्नु॒वे ॥४

अ॒स्याः । ऊ॒ं इतिं । सु । न॒ः । उपं । सा॒तयें । भु॒व॒ः ।
अहेंळमानः । र॒रि॒ऽवान् । अ॒ज॒ऽअ॒श्व॒ । श्र॒व॒स्यु॒ताम् ।
अ॒ज॒ऽअ॒श्व॒ ।

ओ इति॑ । सु । त्वा॒ । व॒वृ॒ती॒म॒हि॒ । स्तोमे॑भिः । द॒स्म॒ । सा॒धुऽभिः॑ ।

न॒हि । त्वा॒ । पू॒ष॒न् । अ॒ति॒ऽमन्ये॑ । आ॒घृ॒णे॒ । न । ते॒ । स॒ख्यम् । अ॒प॒ऽह्नु॒वे ॥४

अस्याः । ऊं इति । सु । नः । उप । सातये । भुवः । अहेळमानः । ररिऽवान् । अजऽअश्व । श्रवस्यताम् । अजऽअश्व ।

ओ इति । सु । त्वा । ववृतीमहि । स्तोमेभिः । दस्म । साधुऽभिः ।

नहि । त्वा । पूषन् । अतिऽमन्ये । आघृणे । न । ते । सख्यम् । अपऽह्नुवे ॥४

हे “अजाश्व पूषन् । ‘ अजाश्वेति पूषणमाह ' (निरु. ४. २५ ) इति यास्कः । “नः अस्माकम् “अस्याः अस्यै ॥

चतुर्थ्यर्थे षष्ठी ॥ "सातये लाभाय “अहेळमानः अक्रुध्यन् अनादरमकुर्वन् “ररिवान् दाता च सन् "सु सुष्ठु “उप “भुवः समीपस्थो भव ॥ रातेश्छान्दसस्य लिटः क्वसुः । पदसंज्ञाया अभावेऽपि पपिवांसं तस्थिवांसमित्यादौ छान्दसोऽवग्रहो दृश्यते । “ऊ इति पादपूरणः ॥ किंच “श्रवस्यताम् अन्नमिच्छतामस्माकं हे “अजाश्व अजा एवाश्वस्थानीया यस्य तादृश त्वम् । पूषनामेदम् । ररिवांश्च सन् उप भुवः । ‘ अजाः पूष्णः' (नि. १. १५, ५) इति यास्कः । ओ इति निपातद्वयसमुदायात्मक एको निपातः । हे “दस्म शत्रूणामुपक्षपयितः “पूषन् “त्वा त्वाम् “ओ “षु “ववृतीमहि सर्वत एव सुतरां वर्तयेमहि ॥ वृतेः अन्तर्भावितण्यर्थात् लिङि ‘बहुलं छन्दसि' इति शपः श्लुः ॥ यज्ञान्तरगमनात निवर्तयामः इत्यर्थः । केन साधनेनेति तदुच्यते । “साधुभिः “स्तोमेभिः त्वां प्रीणयितुं समर्थैः स्तोत्रैः । किंच हे पूषन् “आघृणे सर्वतो वृष्टेः क्षारयितः । यद्वा । आघृणे हविषामाहर्तः स्वीकर्तः त्वां “नहि

“अतिमन्ये अवमति नैव करोमि। न केवलमनतिक्रममात्रं किंतु “ते "सख्यं तव सखित्वं हितकर्तृत्वं नहि “अपह्नुवे नैवापयामि न त्यजामि सर्वतः प्रख्यापयामि इत्यर्थः ॥ ॥ ३ ॥

**टिप्पणी**

पूषोपरि टिप्पणी

पूषोपरि टिप्पणी

१.१३८.२ अस्माकमाङ्गूषान् द्युम्निनस्कृधि

काशकृत्स्नधातुव्याख्याने ५.१०७ गू - पुरीषोत्सर्गे (मलविसर्जने) उल्लेखमस्ति। चतुर्थ्यां ऋचि ऊ षु,

ओ षु शब्दाः सन्ति। डा. फतहसिंहः कथयति स्म यत् ऋक्षु ओंकारस्य द्वौ रूपौ स्तः - ओषु एवं मोषु। ओषु - आदाने, मोषु - विसर्जने।

उष्ट्रो न पीपरो मृधः--

द्र. उष्ट्रोपरि संक्षिप्त टिप्पणी । पीपरः। सायणभाष्यानुसारेण मृधः संग्रामात् पीपरः पारं नयसि। पीपरस्य अन्य अर्थः पिप्पलशब्दस्याधारेण अपि कर्तुं शक्यते (द्र. शश-पिप्पलोपरि टिप्पणी )

| | | | | | |
|---|---|---|---|---|---|
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१४ | १.४४ | १.७४ | १.१०४ | १.१३४ | १.१६४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१५ | १.४५ | १.७५ | १.१०५ | १.१३५ | १.१६५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१६ | १.४६ | १.७६ | १.१०६ | १.१३६ | १.१६६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१७ | १.४७ | १.७७ | १.१०७ | १.१३७ | १.१६७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१८ | १.४८ | १.७८ | १.१०८ | १.१३८ | १.१६८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१९ | १.४९ | १.७९ | १.१०९ | १.१३९ | १.१६९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२० | १.५० | १.८० | १.११० | १.१४० | १.१७० |

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|
| १.२१ | १.५१ | १.८१ | १.१११ | १.१४१ | १.१७१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२२ | १.५२ | १.८२ | १.११२ | १.१४२ | १.१७२ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२३ | १.५३ | १.८३ | १.११३ | १.१४३ | १.१७३ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२४ | १.५४ | १.८४ | १.११४ | १.१४४ | १.१७४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२५ | १.५५ | १.८५ | १.११५ | १.१४५ | १.१७५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२६ | १.५६ | १.८६ | १.११६ | १.१४६ | १.१७६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२७ | १.५७ | १.८७ | १.११७ | १.१४७ | १.१७७ |

# ऋग्वेदः सूक्तं १.१३९

← सूक्तं १.१३८

ऋग्वेदः - मण्डल १

सूक्तं १.१३९

परुच्छेपो दैवोदासिः

सूक्तं १.१४० →

दे. १ विश्वे देवाः, २ मित्रावरुणौ, ३-५ अश्विनौ, ६ इन्द्रः, ७ अग्निः, ८ मरुतः, ९ इन्द्राग्नी, १० बृहस्पतिः, ११ विश्वे देवाः। अत्यष्टिः, ५ बृहती, ११ त्रिष्टुप्।

---

अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु तच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे ।

यद्ध क्राणा विवस्वति नाभा संदायि नव्यसी ।

अध प्र सू न उप यन्तु धीतयो देवाँ अच्छा न धीतयः ॥१॥

यद्ध त्यन्मित्रावरुणावृतादध्याददाथे अनृतं स्वेन मन्युना दक्षस्य स्वेन मन्युना ।

युवोरित्थाधि सद्मस्वपश्याम हिरण्ययम् ।

धीभिश्चन मनसा स्वेभिरक्षभिः सोमस्य स्वेभिरक्षभिः ॥२॥

युवां स्तोमेभिर्देवयन्तो अश्विनाश्रावयन्त इव श्लोकमायवो युवां हव्याभ्यायवः ।

युवोर्विश्वा अधि श्रियः पृक्षश्च विश्ववेदसा ।

प्रुषायन्ते वां पवयो हिरण्यये रथे दस्रा हिरण्यये ॥३॥

अचेति दस्रा व्यु नाकमृण्वथो युञ्जते वां रथयुजो दिविष्टिष्वध्वस्मानो दिविष्टिषु ।

अधि वां स्थाम वन्धुरे रथे दस्रा हिरण्यये ।

पथेव यन्तावनुशासता रजोऽञ्जसा शासता रजः ॥४॥

शचीभिर्नः शचीवसू दिवा नक्तं दशस्यतम् ।

मा वां रातिरुप दसत्कदा चनास्मद्रातिः कदा चन ॥५॥

वृषन्निन्द्र वृषपाणास इन्दव इमे सुता अद्रिषुतास उद्भिदस्तुभ्यं सुतास उद्भिदः ।

ते त्वा मन्दन्तु दावने महे चित्राय राधसे ।

गीर्भिर्गिर्वाह स्तवमान आ गहि सुमृळीको न आ गहि ॥६॥

ओ षू णो अग्ने शृणुहि त्वमीळितो देवेभ्यो ब्रवसि यज्ञियेभ्यो राजभ्यो यज्ञियेभ्यः ।

यद्ध त्यामङ्गिरोभ्यो धेनुं देवा अदत्तन ।

वि तां दुह्रे अर्यमा कर्तरी सचाँ एष तां वेद मे सचा ॥७॥

मो षु वो अस्मदभि तानि पौंस्या सना भूवन्द्युम्नानि मोत जारिषुरस्मत्पुरोत जारिषुः ।

यद्वश्चित्रं युगेयुगे नव्यं घोषादमर्त्यम् ।

अस्मासु तन्मरुतो यच्च दुष्टरं दिधृता यच्च दुष्टरम् ॥८॥

दध्यङ्ह मे जनुषं पूर्वो अङ्गिराः प्रियमेधः कण्वो अत्रिर्मनुर्विदुस्ते मे पूर्वे मनुर्विदुः ।

तेषां देवेष्वायतिरस्माकं तेषु नाभयः ।

तेषां पदेन मह्या नमे गिरेन्द्राग्नी आ नमे गिरा ॥९॥

होता यक्षद्वनिनो वन्त वार्यं बृहस्पतिर्यजति वेन उक्षभिः पुरुवारेभिरुक्षभिः ।

जगृभ्मा दूरआदिशं श्लोकमद्रेरध त्मना ।

अधारयदररिन्दानि सुक्रतुः पुरू सद्मानि सुक्रतुः ॥१०॥

ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।

अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥११॥

## सायणभाष्यम्

' अस्तु श्रौषट् ' इति एकादशर्चं षष्ठं सूक्तम् । अत्रानुक्रमणिका- 'अस्तु श्रौषळेकादश वैश्वदेवी मैत्रावरुण्याश्विन्यस्तिस्र। ऐन्द्र्याग्नेयो मारत्यैन्द्राग्नी बार्हस्पत्या वैश्वदेव्यन्त्या त्रिष्टुप्पञ्चमी बृहती वैश्वदेवमेतदेवमन्यासामपि सूक्तप्रयोगे वैश्वदेवत्वं सूक्तभेदप्रयोगे यल्लिङ्गं सा देवता ' इति । परुच्छेप ऋषिः । अन्त्या त्रिष्टुप् पञ्चमी बृहती । अन्या अत्यष्टयो विशेषाभावात् । कृत्स्नं सूक्तं वैश्वदेवम् । तत्र आद्याया विश्वे देवा देवता । द्वितीयाया मित्रावरुणौ । अथ तिस्रोऽश्विदेवताकाः । ऐन्द्री षष्ठी । सप्तम्याग्नेयी । अष्टमी मारुती । नवम्यैन्द्राग्नी । दशमी बार्हस्पत्या । एकादशी वैश्वदेवी । सूक्तविनियोगो लैङ्गिकः । दशरात्रस्य षष्ठेऽहनि प्रउगशस्त्रे आद्या वैश्वदेवतृचे प्रथमा । ' षष्ठस्य ' इति

खण्डे सूत्रितम्-' अस्तु श्रौषळो षु णो अग्ने ' ( आश्व. श्रौ. ८.१.१२ ) इति ।।

अस्तु श्रौषंट् पुरो अ॒ग्निं धि॒या दंध॒ आ नु तच्छर्धो॑ दि॒व्यं वृंणीमह इन्द्रवा॒यू वृंणीमहे ।

यद्धं क्रा॒णा वि॒वस्वंति॒ नाभां सं॒दायि॒ नव्यंसी ।

अध॒ प्र सू न॒ उपं यन्तु धी॒तयों दे॒वाँ अच्छा॒ न धी॒तयंः ॥१

अस्तुं । श्रौषंट् । पु॒रः । अ॒ग्निम् । धि॒या । द॒धे॒ । आ । नु । तत् । शर्धः॑ । दि॒व्यम् । वृ॒णी॒म॒हे॒ । इ॒न्द्र॒वा॒यू इतिं । वृ॒णी॒म॒हे॒ ।

यत् । ह॒ । क्रा॒णा । वि॒वस्वंति । नाभां । स॒म्ऽदायिं । नव्यंसी ।

अध॑ । प्र । सु । न॒ः । उप॑ । य॒न्तु॒ । धी॒तय॑ः । दे॒वान् ।
अच्छ॑ । न । धी॒तय॑ः ॥१

अस्तु । श्रौषट् । पुरः । अग्निम् । धिया । दधे । आ । नु ।
तत् । शर्धः । दिव्यम् । वृणीमहे । इन्द्रवायू इति । वृणीमहे
।

यत् । ह । क्राणा । विवस्वति । नाभा । सम्ऽदायि ।
नव्यसी ।

अध । प्र । सु । नः । उप । यन्तु । धीतयः । देवान् ।
अच्छ । न । धीतयः ॥१

अहं “पुरः पुरत उत्तरवेद्याम् “अग्निम् आहवनीयाख्यं
“धिया प्रणयनादिकर्मणा “दधे धारितवानस्मि । “तच्छर्धः
तादृशं बलवन्तं वा अग्निं यद्वा तच्छर्धः तादृशं मरुतां
स्वरूपं बलं “दिव्यं दिवि भवं “नु क्षिप्रम् “आ “वृणीमहे

आभिमुख्येन संभजामहे । किंच “इन्द्रवायू “वृणीमहे । “यत् यस्मात् कारणात् “विवस्वति दीप्तिमति “नाभा नाभौ भूम्या नाभिस्थाने देवयजने वेदिरूपे । यद्वा । नाभौ सर्वफलस्य संबन्धके यज्ञे । ‘ यज्ञमाहुर्भुवनस्य नाभिम् ' (तै. सं. ७.४.१८. २) इति श्रुतेः । “क्राणा कुर्वाणा स्वार्थप्रकाशनं “नव्यसी नवतरा स्तुतिरूपा वाक् “संदायि संबध्यते ॥ छान्दसः कर्मणि लुङ् ॥ अस्माभिः प्रयुज्यते इत्यर्थः। यस्मात् स्तुतिः क्रियते तस्मात् “अस्तु "श्रौषट् अस्याः स्तुतेः श्रवणं भवतु । श्रोता भवतु वा मरुतां गणोऽग्निर्वा । इन्द्रवायुपक्षे प्रत्येकापेक्षा एकवचनम् । “अध अनन्तरं “नः “धीतयः अस्मदीयानि कर्माणि स्तुत्यादिरूपाणि “प्र “सु “उप “यन्तु प्रकर्षेण सुष्ठु युष्मानुपगच्छन्तु । किंच "देवाँ “अच्छा "न अग्न्यादिदेवान् आभिमुख्येन प्राप्तमिव “धीतयः अस्मदीयानि कर्माणि उप यन्तु ते समीपं प्राप्नुवन्तु ॥

यद्ध॒ त्यन्मि॑त्रावरुणावृ॒तादध्या॑द॒दाथे॒ अनृ॑त॒ं स्वेन॑ म॒न्युना॒
दक्ष॑स्य॒ स्वेन॑ म॒न्युना॑ ।

युवोरि॒त्थाधि॒ सद्म॒स्वप॑श्याम हिर॒ण्यय॑म् ।

धी॒भिश्च॒न मन॑सा॒ स्वेभि॑र॒क्षभि॒ः सोम॑स्य॒ स्वेभि॑र॒क्षभि॑ः
॥२

यत् । ह॒ । त्यत् । मि॒त्रा॒व॒रु॒णौ॒ । ऋ॒तात् । अधि॑ ।
आ॒द॒दाथे॒ इत्या॑ऽद॒दाथे॑ । अनृ॑तम् । स्वेन॑ । म॒न्युना॑ ।
दक्ष॑स्य । स्वेन॑ । म॒न्युना॑ ।

यु॒वोः । इ॒त्था । अधि॑ । सद्म॑ऽसु । अप॑श्याम । हि॒र॒ण्यय॑म्
।

धी॒भिः । च॒न । मन॑सा । स्वेभिः॑ । अ॒क्षऽभिः॑ । सोम॑स्य ।
स्वेभिः॑ । अ॒क्षऽभिः॑ ॥२

यत् । ह । त्यत् । मित्रावरुणौ । ऋतात् । अधि ।
आददाथे इत्याऽददाथे । अनृतम् । स्वेन । मन्युना ।
दक्षस्य । स्वेन । मन्युना ।

युवोः । इत्था । अधि । सद्मऽसु । अपश्याम । हिरण्ययम्
।

धीभिः । चन । मनसा । स्वेभिः । अक्षऽभिः । सोमस्य ।
स्वेभिः । अक्षऽभिः ॥२

हे "मित्रावरुणौ “ऋतात् आदित्यात् “त्यत् तदुदकं “यत्
यस्मात् कारणात् “अधि अधिकम् । “आददाथे सर्वतो
ददथः । कीदृशमुदकम् । “अनृतं नश्वरं शोषणस्वभावम् ।
केन साधनेन । “स्वेन “मन्युना स्वकीयेन तेजसा ।
अहोरात्राभिमानिदेवौ मित्रावरुणौ खलु वृष्टिं मोचयतः । ‘
अहोरात्रे वा' इत्यादिश्रुतिः पूर्वमेवोदाहृता । मन्युर्विशेष्यते
। “दक्षस्य समर्थस्य “स्वेन “मन्युना आत्मभूतेन मननीयेन

सामर्थ्येन। किंच हे मित्रावरुणौ “युवोः ॥
अन्त्यलोपश्छान्दसः ॥ युवयोः संबन्धि “हिरण्ययं
हिरण्मयं रूपम् ।। ‘ ऋत्व्यवास्त्व्यवास्त्व° ' ( पा. सू. ६.
४. १७५ ) इत्यादौ मयटो मशब्दलोपो निपात्यते ।।
“इत्था इत्थं वक्ष्यमाणप्रकारेण “सद्मसु यज्ञसदनेषु “अधि
“अपश्याम पश्येम । केन साधनेनेति तदुच्यते । “धीभिः
त्वदुद्देश्यैः कर्मभिर्यज्ञादिरूपैः “मनसा “चन त्वदासक्तेन
चेतसा च “स्वेभिरक्षभिः आत्मीयैः अनन्यैश्चक्षुरादीन्द्रियैः।
किंच “सोमस्य सोम “स्वेभिरक्षभिः अस्मदीयैरिन्द्रियैः ॥
नासाद्यपेक्षया बहुवचनम् ॥

पृष्ठ्यस्य षष्ठेऽहनि प्रउगशस्त्रे ‘युवां स्तोमेभिः'
इत्याश्विनस्तृचः । ‘ षष्ठस्य ' इति खण्डे सूत्रितं--- युवां
स्तोमेभिर्देवयन्तो अश्विनावर्मह इन्द्र ' ( आश्व. श्रौ. ८. १)
इति ॥

यु॒वां स्तोमे॑भिर्दे॒वय॒न्तो॑ अश्विनाश्रा॒वय॑न्त इ॒व श्लोक॑मा॒यवो॑ यु॒वां ह॒व्याभ्या॒३॒॑यव॑ः ।

यु॒वोर्विश्वा॒ अधि॒ श्रिय॒ः पृक्ष॑श्च वि॒श्ववे॑दसा ।

प्रु॒षा॒यन्ते॑ वां प॒वयो॑ हिर॒ण्यये॒ रथे॑ दस्रा हिर॒ण्यये॑ ॥३

यु॒वाम् । सोमे॑भिः । दे॒व॒ऽयन्त॑ः । अ॒श्वि॒ना॒ । आ॒श्रा॒वय॑न्तःऽइव । श्लोक॑म् । आ॒यव॑ः । यु॒वाम् । ह॒व्या । अ॒भि । आ॒यव॑ः ।

यु॒वोः । विश्वा॑ः । अधि॑ । श्रिय॑ः । पृक्ष॑ः । च॒ । वि॒श्व॒ऽवे॒द॒सा॒ ।

प्रु॒षा॒यन्ते॑ । वा॒म् । प॒वय॑ः । हि॒र॒ण्यये॑ । रथे॑ । द॒स्रा॒ । हि॒र॒ण्यये॑ ॥३

युवाम् । सोमेभिः । देवऽयन्तः । अश्विना ।
आश्रावयन्तःऽइव । श्लोकम् । आयवः । युवाम् । हव्या ।
अभि । आयवः ।

युवोः । विश्वाः । अधि । श्रियः । पृक्षः । च । विश्वऽवेदसा
।

प्रुषायन्ते । वाम् । पवयः । हिरण्यये । रथे । दस्रा ।
हिरण्यये ॥३

हे “अश्विना अश्विनौ देवौ “युवां “स्तोमेभिः स्तोत्रैः
“देवयन्तः युवाम् आत्मनः इच्छन्तः “आयवः ।
मनुष्यनामैतत् । यजमानाः “श्लोकं युष्मदीयस्तुतिरूपां
वाचम् “आश्रावयन्तइव सर्वतः श्रवणविषयां कुर्वन्त इव
स्तुवन्ति । श्लोक इति वाङ्नाम, ‘ श्लोकः धारा ' ( नि. १.
११. १ ) इति तन्नासूक्तत्वात् । कीदृशास्ते । “युवां “हव्या
हविषा आज्यादिना “अभ्यायवः आभिमुख्येन गन्तारः ।

प्रीणयितुमिति शेषः । हवींषि आभिमुख्येन प्रापयन्तो वा । किंच हे विश्ववेदसा सर्वधनौ “युवोः युवयोः संबन्धिन्यः “विश्वाः “श्रियः सेवनीयाः सर्वा लक्ष्मीर्धनकनकादिरूपाः “अधि अधिकं भजन्ते इति शेषः । किंच “पृक्षश्च अन्नमपि युष्मत्प्रसादात् अधि अधिकं लभन्ते । किंच हे “दस्रा शत्रूणामुपक्षपयितारौ “वां “हिरण्यये “रथे हिरण्मये मधुपूर्णे रथे "पवयः तन्नेमयः “प्रुषायन्ते क्षरन्ति स्रवन्ति ॥ ‘ प्रुष प्लुष स्नेहनसेचनपूरणेषु ' । 'छन्दसि शायजपि' इत्यहावपि श्नः शायजादेशः ॥ मधुपूर्णपात्रोपेतत्वात् शीघ्रगमनेन चक्रेषु मधूनि स्रवन्तीति भावः । ‘ पवी रथनेमिर्भवति यद्विपुनाति भूमिम् ' ( निरु. ५. ५. ) इति निरुक्तम् । अश्विनोः रथस्य मधुपूर्णत्वं त्रयः पवयो मधुवाहने रथे (ऋ. सं. १, ३४. २) इत्यादिषु प्रसिद्धम् । किंच तादृशे “हिरण्यये हृदयरमणे रथे मधुरं हविर्वहतमिति शेषः ।।।

अचे॑ति द॒स्रा॒ व्यु१॒ नाक॑मृण्वथो यु॒ञ्जते॑ वां रथ॒युजो॒ दिवि॑ष्टिष्वध्व॒स्मानो॒ दिवि॑ष्टिषु ।

अधि॑ वा॒ं स्थाम॑ व॒न्धुरे॒ रथे॑ दस्रा हिर॒ण्यये॑ ।

प॒थेव॒ यन्ता॑वनु॒शास॑ता॒ रजोऽञ्ज॑सा॒ शास॑ता॒ रज॑ः ॥४

अचे॑ति । द॒स्रा॒ । वि । उ॒ं इति॑ । नाक॑म् । ऋ॒ण्व॒थ॒ः । यु॒ञ्जते॑ । वा॒म् । र॒थ॒ऽयुज॑ः । दिवि॑ष्टिषु । अ॒ध्व॒स्मान॑ः । दिवि॑ष्टिषु ।

अधि॑ । वा॒म् । स्थाम॑ । व॒न्धुरे॑ । रथे॑ । द॒स्रा॒ । हि॒र॒ण्यये॑ ।

प॒थाऽइ॑व । यन्तौ॑ । अ॒नु॒ऽशास॑ता । रज॑ः । अञ्ज॑सा । शास॑ता । रज॑ः ॥४

अचेति । दस्रा । वि । ऊं इति । नाकम् । ऋण्वथः ।
युञ्जते । वाम् । रथऽयुजः । दिविष्टिषु । अध्वस्मानः ।
दिविष्टिषु ।

अधि । वाम् । स्थाम । वन्धुरे । रथे । दस्रा । हिरण्यये ।

पथाऽइव । यन्तौ । अनुऽशासता । रजः । अञ्जसा ।
शासता । रजः ॥४

हे “दस्रा दस्रावश्विनौ “अचेति वक्ष्यमाणं युष्मच्चेष्टितं
ज्ञायते सर्वैः । किं तदिति तदुच्यते । “नाकं स्वर्गं “वि
“ऋण्वथः विशेषेण गच्छथः ॥ ‘ ऋणु गतौ । तानादिकः ।
लेटि अडागमः । यज्ञसंपूर्त्यनन्तरमिति यावत् ।
उशब्दोऽवधारणे । यद्वा । नाकम् । अकं दुःखम् । तद्रहितं
यज्ञमृण्वथः। विशेषेण गच्छथ एव । तदर्थं “वां “रथयुजः
युष्मत्संबन्धिनो रथस्य योजयितारः सारथथः “दिविष्टिषु
स्वर्गस्यैषणेषु द्योतनात्मकस्य यज्ञस्यैषणेषु गमनेषु वा

निमित्तभूतेषु “युञ्जते अश्वान् योजयन्ति रथे । युक्ते रथे वा युष्मान् । ते एव विशेष्यन्ते । दिविष्टिषु दिवो गमनेषु निरालम्बाकाशगमनेषु “अध्वस्मानः रथस्य तदाश्रितस्य च ध्वंसमकुर्वाणाः । किंच हे “दस्रा अश्विनौ “वां युवयोः “बन्धुरे बन्धुरत्रययुक्ते। युगबन्धनाधारः काष्ठविशेषो बन्धुरम् । तादृशत्रययुक्तत्वं रथो यो वां त्रिवन्धुरः' (ऋ. सं. ८. २२. ५) इत्यादिषु प्रसिद्धम् । “हिरण्यये हिरण्मये “रथे “अधि तादृशस्य रथस्योपरि “स्थाम अस्थापयाम ।। छान्दसे लङि ‘ बहुलं छन्दसि ' इति अडभावः। आद्युदात्तश्छान्दसः ॥ कीदृशौ'। “पथेव सुपथेन मार्गेण निरालम्बे आकाशे’ “रजः रञ्जनात्मकं स्वर्गं प्रति “यन्तौ गच्छन्तौ । ‘लोका रजांस्युच्यन्ते । इत्युक्तत्वात् । “अनुशासता अननुकूलाञ्छत्रून् अनुशासतौ विधेयीकुर्वन्तौ ॥ शासेः शतरि • जक्षित्यादयः' इति अभ्यस्तत्वात् ‘ अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

किंच “अञ्जसा मुख्यत्वेन प्रकृष्टं “रजः उदकं वृष्टिलक्षणं “शासता शासतौ बलाद्विधेयीकुर्वन्तौ ।।

शचीभिर्नः शचीवसू दिवा नक्तं दशस्यतम् ।

मा वां रातिरुपं दसत्कदां चनास्मद्रातिः कदां चन ॥५

शचीभिः । नः । शचीवसू इति शचीऽवसू । दिवा । नक्तम् । दशस्यतम् ।

मा । वाम् । रातिः । उपं । दसत् । कदा । चन । अस्मत् । रातिः । कदा । चन ॥५

शचीभिः । नः । शचीवसू इति शचीऽवसू । दिवा । नक्तम् । दशस्यतम् ।

मा । वाम् । रातिः । उप । दसत् । कदा । चन । अस्मत् । रातिः । कदा । चन ॥५

हे “शचीवसू । शचीति कर्मनाम । अस्मदनुष्ठितज्योतिष्टोमादिकर्मधनौ युवां “शचीभिः अस्मदीयैः कर्मभिर्यागादिभिर्निमित्तभूतैः “दिवा “नक्तं अहनि रात्रौ च “दशस्यतम् अभिमतं ददेथाम् ॥ ‘ दाशृ दाने' इत्यस्येदं छान्दसं रूपम् । यद्वा । दशस्यतिर्दानार्थः कण्ड्वादिषु द्रष्टव्यः ।। "वां युवयोः “रातिः दानं “कदा "चन सर्वदा यागकाले अयागकालेऽपि “मा “उप “दसत् मा उपक्षीणं भूत् ॥ ‘ दसु उपक्षये ' । लुङि ‘पुषादिद्युतात् ' इति च्लेः अङ्॥ न केवलं युष्मदीयम् अपि त्वस्माकमपि “रातिः दानं हविरादिप्रदानं सर्वविषयदानं वा अर्थिभ्यः “कदा “चन सर्वावस्थायामपि मा उप दसत् उपक्षीणं मा भूत् सर्वदा वर्तताम् । अहमपि सर्वदा युष्मानुद्दिश्य दद्यां युवामपि अभिमतं सर्वदा दत्तमित्यर्थः॥ ॥ ३ ॥

पृष्ठ्यस्य षष्ठेऽहनि प्रउगशस्त्रस्यैन्द्रे तृचे तृतीया •
वृषन्निन्द्र' इत्येषा । वृषन्निन्द्र वृषपाणास इन्दवः सुषुमा
यातमद्रिभिः ' ( आश्व. श्रौ. ८. १ ) इति ॥ तत्रैव सवने
प्रस्थितयाज्यानां पुरस्तादन्या ऋचः प्रक्षिप्य
उभयीभिर्यष्टव्यम् । तत्र होतुः प्रस्थितयाज्यायाः
पुरस्तादेषा प्रक्षेपणीया । सूत्रितं च- षष्ठस्य प्रातःसवने
प्रस्थितयाज्यानां पुरस्तादन्याः कृत्वोभाभ्यामनवानन्तो
यजन्ति ( आश्व. श्रौ. ८, १ ) इति ।

वृषंन्निन्द्र वृष॒पाणां॑स॒ इन्दं॑व इ॒मे सु॒ता अद्रिं॑षुतास
उ॒द्भिद॒स्तुभ्यं॑ सु॒तासं॑ उ॒द्भिदं॑ः ।

ते त्वां॑ मन्दन्तु दा॒वनें॑ म॒हे चि॒त्राय॒ राधं॑से ।

गी॒र्भिर्गिर्वा॑ह॒ः स्तवं॑मान॒ आ गं॑हि सुमृळी॒को न॒ आ गं॑हि ॥
६

वृष॑न् । इ॒न्द्र॒ । वृ॒ष॒ऽपाना॑सः । इन्द॑वः । इ॒मे । सु॒ताः ।
अद्रि॑ऽसुतासः । उ॒त्ऽभिदः॑ । तुभ्य॑म् । सु॒तासः॑ ।
उ॒त्ऽभिदः॑ ।

ते । त्वा॒ । म॒न्द॒न्तु॒ । दा॒वने॑ । म॒हे । चि॒त्राय॑ । राध॑से ।

गीः॒ऽभिः । गि॒र्वा॒हः॒ । स्तव॑मानः । आ । ग॒हि॒ । सु॒ऽमृ॒ळी॒कः
। नः॒ । आ । ग॒हि॒ ॥६

वृषन् । इन्द्र । वृषऽपानासः । इन्दवः । इमे । सुताः ।
अद्रिऽसुतासः । उत्ऽभिदः । तुभ्यम् । सुतासः ।
उत्ऽभिदः ।

ते । त्वा । मन्दन्तु । दावने । महे । चित्राय । राधसे ।

गीःऽभिः । गिर्वाहः । स्तवमानः । आ । गहि । सुऽमृळीकः
। नः । आ । गहि ॥६

हे “इन्द्र “वृषन् वर्षितः कामानाम् “इमे पुरतो दृश्यमानाः “इन्दवः सोमाः “सुताः त्वदर्थमभिषुताः । कीदृशास्ते । “वृषपानासः अभिमतवर्षकेण त्वया पातव्याः “अद्रिसुतासः अद्रिभिर्दृढैः पाषाणैरभिषवसाधनैः सुताः “उद्भिदः उद्भेदका वर्षस्य' । त एव पुनर्विशेष्यन्ते । “उद्भिदः बलस्य उद्भेदका उद्भिन्ना वा पर्वतादौ तादृशाः सोमाः “तुभ्यं “सुतासः त्वदर्थमेवाभिषुताः। किंच “ते तादृशाः सोमाः “त्वा त्वां “मन्दन्तु तर्पयन्तु । कुत्रेति तदुच्यते । “दावने दानवति यागे। अभिमतदानाय वा । तथा “महे महते “चित्राय चायमानाय विचित्राय नानाविधाय वा "राधसे धनाय । किंच हे “गिर्वाहः गिरां स्तुतीनामस्मदीयानां वोढः ॥ ‘ वहिहाधाञ्भ्यः' इति असुन् ॥ “गीर्भिः अस्मत्स्तुतिभिः स्तवमानः सन् “आ “गहि आगच्छ । “नः अस्मान् “सुमृळीकः सुष्ठु मृडयिता सन् “आ “गहि आगच्छ ॥

दशरात्रस्य षष्ठेऽहनि प्रातःसवने नेष्टुः प्रस्थितयाज्यायाः पुरस्तात् ‘ ओ षू णो अग्ने' इत्येषा आवपनीयैकीकृत्योभाभ्यां यागः । ‘ षष्ठस्य ' इति खण्डे सूत्रितम्- ओ षु णो अग्ने शृणुहि त्वमीळितोऽग्निं होतारम् ' (आश्व. श्रौ. ८. १ ) इति । तस्मिन्नेव सवने प्रउगशस्त्रे द्वितीया । सूत्रितं च- अस्तु श्रौषळो षु णो अग्ने ' ( आश्व. श्रौ. ८. १) इति ।।

ओ षू णों अग्ने शृणुहि॒ त्वमीं॑ळि॒तो दे॒वेभ्यों ब्रवसि य॒ज्ञियें॑भ्यो॒ राजं॑भ्यो य॒ज्ञियें॑भ्यः ।

यद्ध॒ त्यामङ्गिं॑रोभ्यो धे॒नुं देंवा॒ अदं॑त्तन ।

वि तां दुं॑ह्रे अर्य॒मा क॒र्तरी॒ सचाँ॑ ए॒ष तां वेंद मे॒ सचां ॥७

ओ इति॑ । सु । नः॒ । अ॒ग्ने॒ । शृ॒णु॒हि॒ । त्वम् । ई॒ळि॒तः । दे॒वेभ्यः॑ । ब्र॒व॒सि॒ । य॒ज्ञिये॑भ्यः । राज॑ऽभ्यः । य॒ज्ञिये॑भ्यः ।

यत् । ह॒ । त्याम् । अङ्गि॑रःऽभ्यः । धे॒नुम् । दे॒वाः॒ । अद॑त्तन ।

वि । ताम् । दु॒ह्रे॒ । अ॒र्य॒मा । क॒र्तरि॑ । सचा॑ । ए॒षः । ताम् । वे॒द॒ । मे॒ । सचा॑ ॥७

ओ इति । सु । नः । अग्ने । शृणुहि । त्वम् । ईळितः । देवेभ्यः । ब्रवसि । यज्ञियेभ्यः । राजऽभ्यः । यज्ञियेभ्यः ।

यत् । ह । त्याम् । अङ्गिरःऽभ्यः । धेनुम् । देवाः । अदत्तन ।

वि । ताम् । दुह्रे । अर्यमा । कर्तरि । सचा । एषः । ताम् । वेद । मे । सचा ॥७

हे “अग्ने “त्वं “नः अस्मदीयमावाहनं स्तुतिं वा “ईळितः अस्माभिः स्तुतः सन् “ओ “षु “शृणुहि । ओ इति निपातद्वयसमुदायात्मकः एको निपातः । आभिमुख्येनैव सुष्ठु शृणु ॥ ‘ उतश्च प्रत्ययात्° ' इति ‘ छन्दसि वावचनम् ' इति हेर्लुगभावः ॥ श्रुत्वा च “देवेभ्यः देवनशीलेभ्यः “यज्ञियेभ्यः यज्ञार्हेभ्यो हविर्भाग्भ्यः स्तुतिभाग्भ्यश्चेत्यर्थः ॥ ‘ यज्ञर्त्विग्भ्याम् । इति घः ॥ तेभ्यः “यज्ञियेभ्यः यज्ञार्हेभ्यो यजमानेभ्यः संबन्धि कर्म “ब्रवसि ब्रूहि ॥ ब्रवीतेर्लेटि अडागमः ।। कीदृशेभ्यः । “राजभ्यः राजमानेभ्यः । इदानीं देवाः प्रत्यक्षेणोच्यन्ते । अत्रेतिहासमाहुः -– अङ्गिरसो नाम महर्षयः पूर्वं यज्ञार्थं देवान् स्तुत्या प्रीणयित्वा गा अयाचन्त । ते प्रीताः कामदुघां प्रादुः । लब्धां च तां धेनुं क्षीरं दोग्धुमशक्नुवाना अर्यमणं देवं प्रार्थयन् । स च प्रार्थितोऽग्निहोत्राद्यर्थं क्षीरं दुदोहेति । तदिदमत्रोच्यते । “यत् यां “त्या तां प्रसिद्धां “धेनुं क्षीरादिना प्रीणयित्रीं गां “ह “देवाः “अङ्गिरोभ्यः

तदर्थम् “अदत्तन दत्तवन्तः ॥ ‘ तप्तनप्तनथनाश्च ' इति तनादेशः ॥ “तां धेनुम् “अर्यमा सर्वस्य नियमिता देवः “कर्तरि सर्वस्योत्पादके त्वय्यग्नौ “सचा इतरदेवेभ्यः साकं "वि “दुह्रे विविधं दुग्धवान् । दुहेर्लिटि ‘ बहुलं छन्दसि ' इति । छन्दसि वा ' इति वचनात् द्विर्वचनाभावः । लटि एव वा ' लोपस्त°' इति तलोपः ।। “एषः एष एव अर्यमा “तां धेनुं “मे “सचा मत्समवायेन “वेद जानाति अर्यमा अहमपि जानामीत्यर्थः । ईदृशी धेनुस्त्वदर्थमेव दुह्यते इत्यग्नेः स्तुतिः ॥

‘ मो षु वो अस्मत्' इति प्रस्थितयाज्या" । सूत्रितं च-’ मो षु वो अस्मदभि तानि पौंस्यौ षू णो अग्ने' (आश्व. श्रौ. ८. १ ) इति ॥

मो षु वो॑ अ॒स्मद॒भि तानि॒ पौंस्या॒ सना॑ भूवन्द्यु॒म्नानि॒ मोत
जा॑रिषुर॒स्मत्पु॒रोत जा॑रिषुः ।

यद्व॑श्चि॒त्रं यु॒गेयु॑गे॒ नव्यं॒ घोषा॒दम॑र्त्यम् ।

अ॒स्मासु॒ तन्म॑रुतो॒ यच्च॑ दु॒ष्टरं॑ दिधृ॒ता यच्च॑ दु॒ष्टर॑म् ॥८

मो इति॑ । सु । व॒ः । अ॒स्मत् । अ॒भि । तानि॑ । पौंस्या॑ ।
सना॑ । भू॒व॒न् । द्यु॒म्नानि॑ । मा । उ॒त । जा॒रि॒षु॒ः । अ॒स्मत् ।
पु॒रा । उ॒त । जा॒रि॒षु॒ः ।

यत् । व॒ः । चि॒त्रम् । यु॒गेऽयु॑गे । नव्य॑म् । घोषा॑त् ।
अम॑र्त्यम् ।

अ॒स्मासु॑ । तत् । म॒रु॒त॒ः । यत् । च॒ । दु॒स्तर॑म् । दि॒धृ॒त ।
यत् । च॒ । दु॒स्तर॑म् ॥८

त्वम् । त्वा । नु । नव्यम् । सहसः । युवन् । वयम् । भगम् । न । कारे । महिऽरत्न । धीमहि ॥१०

हे “अग्ने "यविष्ठ युवतम “त्वं “शशमानाय त्वां स्तुवते । शशमान: शंसमानः '( निरु, ६.८ ) इति यास्कः । “सुन्वते त्वदर्थमभिषवं कुर्वते यजमानाय तद्यागार्थं “रत्नं रमणीयं हविः “देवताति देवेषु तायमानं विस्तार्यमाणम् “इन्वसि व्याप्नोषि । अस्मत्प्रत्तं हविः देवान् प्रापयसीत्यर्थः । इन्वतिः व्याप्तिकर्मा, ‘इन्वति ननक्ष' (नि. २. १८. १ ) इति तन्नामसु पाठात् । हे “सहसो “युवन् । युवशब्देनोत्पत्तिर्लक्ष्यते । मथनकाले बलेनोत्पन्न बलस्य मिश्रयितर्वा। यद्वा । सहसस्पुत्र युवन् नित्यतरुण “महिरत्न अस्मत्प्रदेयमहद्रमणीयधन “नव्यं नवतरं स्तुत्यं वा “तं तादृशं हविर्भुजं “त्वा त्वां “वयं यजमानाः “कारे शब्दे स्तोत्रलक्षणे “नु क्षिप्रं “धीमहि स्थापयामः । हविष्प्रदानसमये क्षिप्रमेव स्तुम इत्यर्थः । तत्र दृष्टान्तः ।

“भगं “न आदित्यमिव । यद्वा । महान्तं राजानमिव । तं यथा स्तुवन्ति तद्वत् ।।

अ॒स्मे र॒यिं न स्वर्थं॒ दमू॑नसं॒ भग॒ं दक्षं॒ न प॑पृचासि धर्ण॒सिं ।

र॒श्मीँरि॑व॒ यो यम॑ति॒ जन्म॑नी उ॒भे दे॒वाना॒ं शंस॑मृ॒त आ चं सु॒क्रतुः॑ ॥११

अ॒स्मे इति॑ । र॒यिम् । न । सु॒ऽअर्थ॑म् । दमू॑नसम् । भग॑म् । दक्ष॑म् । न । प॒पृ॒चा॒सि॒ । ध॒र्ण॒सिम् ।

र॒श्मीन्ऽइ॑व । यः । यम॑ति । जन्म॑नी॒ इति॑ । उ॒भे इति॑ । दे॒वाना॑म् । शंस॑म् । ऋ॒ते । आ । च॒ । सु॒ऽक्रतुः॑ ॥११

अस्मे इति । रयिम् । न । सुऽअर्थम् । दमूनसम् । भगम् । दक्षम् । न । पपृचासि । धर्णसिम् ।

रश्मीन्ऽइव । यः । यमति । जन्मनी इति । उभे इति ।
देवानाम् । शंसम् । ऋते । आ । च । सुऽक्रतुः ॥११

हे अग्ने त्वम् “अस्मे अस्मासु “स्वर्थं सुष्ठु अरणीयं “दमूनसं दमनीयम् उपार्ज्यम् ॥ दमेरूनसिः' (उ. सू. ४. २३५ ) इति ऊनसिप्रत्ययः ।। “रयिं “न “पपृचासि धनं यथा संपृणक्षि । तथा “भगं सर्वैर्भजनीयं “दक्षं “न उत्साहवन्तं प्रबुद्धं वा “धर्णसिं विद्यादिधारणकुशलं पुत्रं यथा पप्रचासि संपृणक्षि उभयमपि ददासीत्यर्थः । “पृची संपर्के'। लेटि आडागमः। ‘बहुलं छन्दसि ' इति विकरणस्य श्लुः ॥ इदानीं परोक्षेणाह । “यः अग्निः “रश्मीँरिव स्वकीयान् रश्मीन् यथा “यमति नियमयति विस्तारयति तद्वत् सः “उभे "जन्मनी जननाधारभूतौ उभौ लोकौ इहलोकपरलोकौ यमति नियच्छति । तथा “सुक्रतुः शोभनकर्मा अयम् “ऋते अस्मदीययज्ञे “देवानां देवसंबन्धिनं “शंसं स्तवं “च “आ यमति आयच्छति सर्वदा

ददाति । यद्वा । पूर्वार्धे पपृचासीत्यपि परोक्षत्वाय प्रथमपुरुषतया योज्यम् ॥

उ॒त नः॑ सु॒द्योत्मा॑ जी॒राश्वो॒ होता॑ म॒न्द्रः शृं॑णवच्च॒न्द्ररं॑थः ।

स नो॑ नेष॒न्नेषं॑तमै॒रमू॑रो॒ऽग्निर्वा॒मं सु॑वि॒तं वस्यो॒ अच्छं ॥१२

उ॒त । न॒ः । सु॒ऽद्योत्मा॑ । जी॒रऽअं॑श्वः । होता॑ । म॒न्द्रः ।
शृ॒ण॒व॒त् । च॒न्द्रऽरं॑थः ।

सः । न॒ः । ने॒ष॒त् । नेषं॑ऽतमैः । अमू॑रः । अ॒ग्निः । वा॒मम् ।
सु॒वि॒तम् । वस्यः॑ । अच्छं ॥१२

उत । नः । सुऽद्योत्मा । जीरऽअश्वः । होता । मन्द्रः ।
शृणवत् । चन्द्रऽरथः ।

सः । नः । नेषत् । नेषऽतमैः । अमूरः । अग्निः । वामम् । सुवितम् । वस्यः । अच्छ ॥१२

उतशब्दोऽप्यर्थः । स च संभावनायाम् । सोऽग्निः “नः अस्मदीयमाह्वानम् “उत “शृणवत् । अपि नाम शृणुयात् । यद्वा । नः अस्मान् श्रावयेत् देवेषु मध्ये प्रख्यापयेत् ॥ शृणोतेर्लेटि अडागमः॥ कीदृशोऽयम् । “सुद्योत्मा सुद्योतमानः ॥ ‘ द्युत दीप्तौ । अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । “जीराश्वः शीघ्रगमनाश्वः “होता देवानामाह्वाता “मन्द्रः मदनशीलः “चन्द्ररथः सुवर्णमयरथोपेतः । किंच अयम् “अमूरः अमूढबलः “वस्यः वसनीयः “सः प्रसिद्धः “अग्निः “नेषतमैः अत्यर्थं नेतृभिः कर्मभिः स्तोत्रैर्वा “नः अस्मान् उत “नेषत् अपि नाम नयेत् । यज्ञस्य पारं प्रापयेत् ॥ नयतेर्लेटि अडागमः । ‘ सिब्बहुलम् ' इति सिप्॥ किमर्थम् । “वामं वननीयं "सुवितं सुष्ठु प्राप्यं सर्वैः काङ्क्षणीयं स्वर्गम् “अच्छ आभिमुख्येन प्राप्तुं नेषत् ॥

अस्तां॑व्य॒ग्निः शि॒मीं॑वद्भिर॒र्कैः साम्रां॑ज्याय प्रत॒रं दधा॑नः ।

अ॒मी च॒ ये म॒घवा॑नो व॒यं च॒ मिह॒ं न सूरो॒ अति॒ निष्ट॑तन्युः ॥ १३

अस्ता॑वि । अ॒ग्निः । शि॒मीं॑वत्ऽभिः । अ॒र्कैः ।
साम्ऽरा॑ज्याय । प्र॒ऽत॒रम् । दधा॑नः ।

अ॒मी इति॑ । च॒ । ये । म॒घऽवा॑नः । व॒यम् । च॒ । मिह॑म् । न । सूर॑ः । अति॑ । निः । त॒त॒न्यु॒ः ॥१३

अस्तावि । अग्निः । शिमीवत्ऽभिः । अर्कैः ।
साम्ऽराज्याय । प्रऽतरम् । दधानः ।

अमी इति । च । ये । मघऽवानः । वयम् । च । मिहम् । न । सूरः । अति । निः । ततन्युः ॥१३

अयम् “अग्निः “शिमीवद्भिः हविष्प्रदानादिकर्मवद्भिः “अर्कैः अर्चनसाधनैर्मन्त्रैः “अस्तावि स्तुतोऽस्माभिर्यजमानैः । शिमीति कर्मनाम, ‘ शिमी शक्तिः ' ( नि. २. १. २४ ) इति तन्नामसु पाठात् । कीदृशोऽयम् । “साम्राज्याय साम्राज्यस्येति कर्मणि षष्ठीस्थाने चतुर्थी । सम्यक् राजमानत्वं “प्रतरं प्रकृष्टतरमत्यर्थं “दधानः ।।' अमु च च्छन्दसि ' इति अमुप्रत्ययः ।। किंच इममग्निम् “अमी “च पुरोवर्तमाना ऋत्विजः पुत्रादयो वा "ये "वयं “च पूर्वं स्तोतृत्वेन प्रसिद्धा वयमपि “अति अत्यर्थं “निष्टतन्युः शब्दयन्तु ।। निष्पूर्वः स्तनतिः शब्दकर्मा ।। इतः परमपि अस्मत्पुत्रपौत्रादयो वयं च अग्निं स्तुम इत्यर्थः । तत्र दृष्टान्तः । “मिहं “न “सूरः । मिहं मेहनशीलं मेघं यथा सूरः सूर्यो वृष्ट्यर्थं शब्दयति तद्वत् ॥ लिङि छान्दसो विकरणस्य श्लुः । ‘ अभिनिसः स्तनः शब्दसंज्ञायाम् (पा. सू. ८. ३. ८६ ) इति षत्वम् ॥

॥ ९ ॥

# ऋग्वेदः सूक्तं १.१४२

ऋग्वेदः - मण्डल १

← सूक्तं १.१४१

सूक्तं १.१४२

दीर्घतमा औचथ्यः।

सूक्तं १.१४३ →

दे. आप्रीसूक्तं - १ इध्मः समिद्धोऽग्निर्वा, २ तनूनपात्, ३ नराशंसः, ४ इळः, ५ बर्हिः, ६ देवीर्द्वारः, ७ उषासानक्ता, ८ दैव्यौ होतारौ प्रचेतसौ, ९ तिस्रो देव्यः सरस्वतीळाभारत्यः, १० त्वष्टा, ११ वनस्पतिः, १२ स्वाहाकृतयः, १३ इन्द्रः । । अनुष्टुप् ।

---

समिद्धो अग्न आ वह देवाँ अद्य यतस्रुचे ।

तन्तुं तनुष्व पूर्व्यं सुतसोमाय दाशुषे ॥१॥

घृतवन्तमुप मासि मधुमन्तं तनूनपात् ।

यज्ञं विप्रस्य मावतः शशमानस्य दाशुषः ॥२॥

शुचिः पावको अद्भुतो मध्वा यज्ञं मिमिक्षति ।

नराशंसस्त्रिरा दिवो देवो देवेषु यज्ञियः ॥३॥

ईळितो अग्न आ वहेन्द्रं चित्रमिह प्रियम् ।

इयं हि त्वा मतिर्ममाच्छा सुजिह्व वच्यते ॥४॥

स्तृणानासो यतस्रुचो बर्हिर्यज्ञे स्वध्वरे ।

वृञ्जे देवव्यचस्तममिन्द्राय शर्म सप्रथः ॥५॥

वि श्रयन्तामृतावृधः प्रयै देवेभ्यो महीः ।

पावकासः पुरुस्पृहो द्वारो देवीरसश्चतः ॥६॥

आ भन्दमाने उपाके नक्तोषासा सुपेशसा ।

यह्वी ऋतस्य मातरा सीदतां बर्हिरा सुमत् ॥७॥

मन्द्रजिह्वा जुगुर्वणी होतारा दैव्या कवी ।

यज्ञं नो यक्षतामिमं सिध्रमद्य दिविस्पृशम् ॥८॥

शुचिर्देवेष्वर्पिता होत्रा मरुत्सु भारती ।

इळा सरस्वती मही बर्हिः सीदन्तु यज्ञियाः ॥९॥

तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना ।

त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयुः ॥१०॥

अवसृजन्नुप त्मना देवान्यक्षि वनस्पते ।

अग्निर्हव्या सुषूदति देवो देवेषु मेधिरः ॥११॥

पूषण्वते मरुत्वते विश्वदेवाय वायवे ।

स्वाहा गायत्रवेपसे हव्यमिन्द्राय कर्तन ॥१२॥

स्वाहाकृतान्या गह्युप हव्यानि वीतये ।

इन्द्रा गहि श्रुधी हवं त्वां हवन्ते अध्वरे ॥१३॥

## सायणभाष्यम्

समिद्धः ' इति त्रयोदशर्चं तृतीयं सूक्तमानुष्टुभम् । प्रथमायाः समिन्नामकोऽग्निर्देवता समिद्धोऽग्निः । द्वितीयादीनां तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार

उषासानक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतिरित्येताः क्रमेण देवताः । अन्त्याया इन्द्रः । तिस्रो देव्य इत्यस्य विवरणं सरस्वतीळाभारत्य इति । अत्रानुक्रमणिका - समिद्ध आप्रिय आनुष्टभमन्त्यैन्द्री' इति ।। अत्र इध्मतनूनपादादिभिर्यज्ञावयववाचिभिर्यज्ञ एवोच्यते । अतः स एव देवतेति कात्थक्यस्य मतम् । अग्निरेव समिदादिभिरुच्यते । अतः स एव देवतेति शाकपूणेर्मतम् । निरुक्ते किंदेवताः प्रयाजानुयाजा इति छन्दोदेवता इत्यादिपक्षान्तरं बहुधा प्रदर्श्य तदर्थे ब्राह्मणादि चोदाहृत्य इतरे पक्षी अर्थवादा आग्नेया एवेति सिद्धान्तितम् , ' अथ किंदेवताः प्रयाजानुयाजाः ' ( निरु. ८ . २१) इत्यादिना ॥ पशौ अङ्गिरोगोत्रोत्पन्नानाम् एतदाप्रीसूक्तम् । 'एकादश प्रयाजाः ' इति खण्डे सूत्रितं-' समिद्धो अद्योति सर्वेषां यथऋषि बा' (आश्व. श्रौ. ३. २) इति । अत्र यथऋषिग्रहणात् ॥ अप्रीसूक्तानि त्रिविधानि । तत्र

वासिष्ठात्रेयवाध्र्यश्वगार्त्समदानि चत्वारि नराशंसवन्ति । मैधातिथदैर्घतमसप्रैषिकाणि नराशंसतनूनपादुभयवन्ति । इतराणि तनूनपात्वन्तीति । तत्रैतत्सूक्तं दैर्घतमसत्वादुभयवत् ॥

समिं॑द्धो अग्न॒ आ वं॑ह दे॒वाँ अ॒द्य य॒तस्रु॑चे ।

तंतुं॑ तनुष्व पू॒र्व्यं सु॒तसो॑माय दा॒शुषे॑ ॥१

सम्ऽइं॑द्धः । अ॒ग्ने॒ । आ । व॒ह॒ । दे॒वान् । अ॒द्य । य॒तऽस्रु॑चे ।

तन्तुं॑म् । त॒नु॒ष्व॒ । पू॒र्व्यम् । सु॒तऽसो॑माय । दा॒शुषे॑ ॥१

सम्ऽइद्धः । अग्ने । आ । वह । देवान् । अद्य । यतऽस्रुचे ।

तन्तुम् । तनुष्व । पूर्व्यम् । सुतऽसोमाय । दाशुषे ॥१

हे "अग्ने "समिद्धः सम्यग्दीपितः एतन्नामकस्त्वम् "अद्य अस्मिन् यागदिने "देवान् हविषां भोक्तॄन् अग्न्यादीन् "आ "वह अस्मद्यज्ञं प्रति प्रापय । “यतस्रुचे यागायोद्यतस्रुचे यजमानाय तदर्थम् ।। आवाह्य च "सुतसोमाय यागार्थमभिषुतसोमाय "दाशुषे हविर्दत्तवते । यद्यपि इदानीमेवाहूयन्ते देवाः तथापि पूर्वानुष्ठानापेक्षया भाव्यपेक्षया वा दाशुषे इत्युच्यते । हविर्दात्रे वा यजमानाय तदर्थं “पूर्व्यं पूर्वेभ्यो देवेभ्यो हितं पूर्वकालीनं वा "तन्तुं यज्ञं "तनुष्व विस्तारय ।।

घृतवंतमुपं मासि मधुंमंतं तनूनपात् ।

यज्ञं विप्रंस्य मावंतः शशमानस्यं दाशुषः ॥२

घृ॒तऽवं॑न्तम् । उप॑ । मा॒सि॒ । मधु॑ऽमन्तम् । त॒नू॒ऽन॒पा॒त् ।

य॒ज्ञम् । विप्र॑स्य । माऽवं॑तः । श॒श॒मा॒नस्यं॑ । दा॒शुषः॑ ॥२

घृतऽवन्तम् । उप । मासि । मधुऽमन्तम् । तनूऽनपात् ।

यज्ञम् । विप्रस्य । माऽवतः । शशमानस्य । दाशुषः ॥२

हे "तनूनपात् । तनूनपात् आज्यम्' इति कात्थक्यपक्षे तन्वो गावो भोगानां तासु जायमानत्वात्। ताभ्यः उत्पन्नं क्षीरं क्षीरात् सर्पिः इति आज्यस्य नप्तृत्वम् । तद्वान् यज्ञः । अग्निपक्षे आपस्तन्व उच्यन्ते । ताभ्यः ओषधिवनस्पतयः । तेभ्योऽग्निरिति नप्तृत्वम् । अरणीभ्यामिति भावः । एतन्नामक हे अग्ने “विप्रस्य मेधाविनः “शशमानस्य शंसमानस्य त्वां स्तुवतः "दाशुषः हविर्दत्तवतः “मावतः मत्सदृशस्य यजमानस्य ।। ' युष्मदस्मद्भ्यां छन्दसि सादृश्ये ' इति वतुप् । 'आ

सर्वनाम्नः' इति आत्वम् ॥ “घृतवन्तं क्षरदाज्योपेतं "मधुमन्तं माधुर्योपेतं सोमादिमधुरद्रव्येण तद्वन्तं "यज्ञम् "उप उपेत्य "मासि निर्मिमीषे मितो भवसि वा । संपूर्तिपर्यन्तं तिष्ठसीत्यर्थः ॥ ‘मा माने' । आदादिकः ॥

शुचि॑ः पाव॒को अद्भु॑तो॒ मध्वा॑ य॒ज्ञं मि॑मिक्षति ।

नरा॒शंस॒स्त्रिरा दि॒वो दे॒वो दे॒वेषु॑ य॒ज्ञियः॑ ॥३

शुचि॑ः । पा॒व॒कः । अद्भु॑तः । मध्वा॑ । य॒ज्ञम् । मि॒मि॒क्ष॒ति॒ ।

नरा॒शंसः॑ । त्रिः । आ । दि॒वः । दे॒वः । दे॒वेषु॑ । य॒ज्ञियः॑ ॥३

शुचिः । पावकः । अद्भुतः । मध्वा । यज्ञम् । मिमिक्षति ।

नराशंसः । त्रिः । आ । दिवः । देवः । देवेषु । यज्ञियः ॥३

“देवेषु मध्ये “शुचिः शुद्धो दीप्तो वा "पावकः अन्नस्य अपूतस्य शोधयिता "अद्भुतः अभूत इव अद्यक्षणे भविता । आश्चर्यभूत इत्यर्थः । "देवः द्योतनशीलः "यज्ञियः यज्ञसंपादनार्हः ईदृशः "नराशंसः नरैः कर्मनेतृभिर्ऋत्विग्भिः शंसनीयोऽग्निः “दिवः द्युलोकादागत्य "मध्वा मधुरेण रसेन "यज्ञम् अस्मदीयं "त्रिः “आ “मिमिक्षति त्रिवारं समन्तात् सिञ्चति स्वदयतीत्यर्थः । यद्वा । मधुरेण फलेन त्रिः आ मिमिक्षति योजयतीत्यर्थः । ‘ नराशंसो यज्ञः' इति कात्थक्यपक्षे यज्ञाभिमानी देवो द्योतमानो द्युलोकादागत्य अनुष्ठीयमानं यज्ञं त्रिः आ मिमिक्षति । अयं नराशंसो देवस्त्रिरा ॥ उपसर्गवशात् योग्यक्रियाध्याहारः ॥ त्रिवारमागच्छति । त्रिः आहरति वा फलम् । अवशिष्टं पूर्ववन्नेयम् ॥

ई॒ळि॒तो अं॑ग्न॒ आ व॒हेंद्रं॑ चि॒त्रमि॒ह प्रि॒यं ।

इ॒यं हि त्वां म॒तिर्ममाच्छां सुजिह्व व॒च्यतें ॥४

ई॒ळि॒तः । अ॒ग्ने॒ । आ । व॒ह॒ । इन्द्रं॑म् । चि॒त्रम् । इ॒ह । प्रि॒यम् ।

इ॒यम् । हि । त्वा॒ । म॒तिः । ममं । अच्छं । सु॒ऽजि॒ह्व॒ । व॒च्यतें ॥४

ईळितः । अग्ने । आ । वह । इन्द्रम् । चित्रम् । इह । प्रियम् ।

इयम् । हि । त्वा । मतिः । मम । अच्छ । सुऽजिह्व । वच्यते ॥४

हे "अग्ने "ईळितः सर्वैः स्तुत्यः इण्नामकस्त्वम् "इह अस्मिन् यज्ञे "चित्रं चायनीयं प्रियं प्रीणयितारम् अस्मान् हविःस्वीकर्तुं वा प्रीतियुक्तम् "इन्द्रम् "आ "वह आह्वय । हे "सुजिह्व घृतपानेन शोभनज्वाल “इयं "मम “मतिः

मननसाधना स्तुतिरूपा वाक् “त्वा त्वाम् "अच्छ आभिमुख्येन प्राप्तुं “वच्यते मतिरेवास्मदीयोच्यते ।। हिः पूरणार्थः । वचेर्यकि ‘ संप्रसारणाच्च' इति पूर्वरूपस्य ‘ वा छन्दसि' इति विकल्पितत्वात् अभावे यण् ॥ अत्र पुरोडाशादीडभिमानियज्ञपरतया वा व्याख्येयम् । एवमुत्तरत्र यज्ञाङ्गैर्यज्ञसंबन्धिदेवताभिश्च यज्ञः एवोच्यते इति तत्परत्वेन व्याख्येयम् ॥

स्तृ॒णा॒नासों य॒तस्रुंचो ब॒र्हिर्य॒ज्ञे स्वं॑ध्व॒रे ।

वृ॒ञ्जे दे॒वव्यं॑चस्तम॒मिंद्रां॑य॒ शर्म॑ स॒प्रथः॑ ॥५

स्तृ॒णा॒नासः॑ । य॒तऽस्रुं॑चः । ब॒र्हिः । य॒ज्ञे । सु॒ऽअ॒ध्व॒रे ।

वृ॒ञ्जे । दे॒वव्यं॑चःऽतमम् । इन्द्रां॑य । शर्म॑ । स॒ऽप्रथः॑ ॥५

स्तृणानासः । यतऽस्रुचः । बर्हिः । यज्ञे । सुऽअध्वरे ।

वृञ्जे । देवव्यचःऽतमम् । इन्द्राय । शर्म । सऽप्रथः ॥५

“स्वध्वरे शोभनप्रायणीयाद्यवान्तरयागवति "यज्ञे सोमयागे “बर्हिः दर्भान् “स्तृणानासः आस्तरन्तः "यतस्रुचः नियमितजुह्वादिपात्रा ऋत्विजः “देवव्यचस्तमम् अतिशयेन देवगामिनं "सप्रथः सर्वतो विस्तीर्णं “शर्म सुखसाधनं गृहम् "इन्द्राय "वृञ्जे विवर्जयन्ति संपादयन्तीत्यर्थः ॥

वि श्रंयंतामृतावृधः प्रयै देवेभ्यों महीः ।

पावकासः पुरुस्पृहो द्वारों देवीरंसश्चतः ॥६

वि । श्रयन्ताम् । ऋतऽवृधः । प्रऽयै । देवेभ्यः । महीः ।

पावकासः । पुरुऽस्पृहः । द्वारः । देवीः । असश्चतः ॥६

वि । श्रयन्ताम् । ऋतऽवृधः । प्रऽयै । देवेभ्यः । महीः ।

पावकासः । पुरुऽस्पृहः । द्वारः । देवीः । असश्चतः ॥६

“द्वारो "देवीः यज्ञस्य द्वाराभिमानिन्यो देवताः "वि “श्रयन्तां विविधं श्रयन्तु विवृता भवन्तु । किमर्थम् । “देवेभ्यः "प्रयै प्रयातुं देवानां प्रापणाय ।। ' प्रयै रोहिष्यै अव्यथिष्यै '(पा. सू. ३. ४. १०) इति निपातितः ॥ कीदृश्यस्ताः ।
“ऋतवृधः यज्ञस्य वर्धयित्र्यः पूज्याः “महीः महत्यः
"पावकासः शोधयित्र्यः "पुरुस्पृहः बहुस्पृहणीयाः
"असश्चतः असज्यमानाः । परस्परविप्रकृष्टा इत्यर्थः ॥ ॥
१० ॥

आ भंदंमाने॒ उपांके॒ नक्तो॒षासां सु॒पेशंसा ।

य॒ह्वी ऋ॒तस्यं मा॒तरा॒ सीदंतां ब॒र्हिरा सु॒मत् ॥७

आ । भन्दं॑माने॒ इति॑ । उपा॑के॒ इति॑ । नक्तो॒षसा॑ । सु॒ऽपेशं॑सा ।

य॒ह्वी इति॑ । ऋ॒तस्यं॑ । मा॒तरा॑ । सीदं॑ताम् । ब॒र्हिः । आ । सु॒ऽमत् ॥७

आ । भन्दमाने इति । उपाके इति । नक्तोषसा । सुऽपेशसा ।

यह्वी इति । ऋतस्य । मातरा । सीदताम् । बर्हिः । आ । सुऽमत् ॥७

"भन्दमाने सर्वैः स्तूयमाने "उपाके परस्परं संनिहिते "सुपेशसा शोभनरूपे। पेश इति रूपनाम । "यह्वी महत्यौ अपत्यरूपे वा प्रतिदिनं जायमानत्वात् । यहुरित्यपत्यनाम, 'यहुः सूनुः ' (नि. २. २. ११ ) इति तन्नामसु पाठात् । "ऋतस्य "मातरा यज्ञस्य निर्मात्र्यौ ।

ताभ्यामागमनात् यज्ञस्य संपूर्तेर्यज्ञमातृत्वम् उपचर्यते । यद्वा । अतिरात्रादीनाम् अहोरात्रसाध्यत्वात्। "नक्तोषासा उक्तगुणविशिष्टे अहोरात्रदेवते "सुमत् स्वयमेव । अस्माभिरप्रार्थिते इत्यर्थः । यद्वा । सुमत् "बर्हिः आस्तृतं दर्भम् "आ समन्तात् "आ “सीदताम् उपविशताम् । यद्वा । ऋतस्य इति कर्मणि षष्ठी । यज्ञमासीदताम् । आसाद्य च बर्हिरास्तृतं दर्भं स्वयमेव सीदताम् ।।

म॒न्द्रजि॑ह्वा जु॒गु॒र्वणी॒ होता॑रा॒ दैव्या॑ क॒वी ।

य॒ज्ञं नो॑ यक्षतामि॒मं सि॒ध्रम॒द्य दि॑वि॒स्पृशं॑ ॥८

म॒न्द्रऽजि॑ह्वा । जु॒गु॒र्वणी॒ इति॑ । होता॑रा । दैव्या॑ । क॒वी इति॑ ।

य॒ज्ञम् । न॒ः । य॒क्ष॒ता॒म् । इ॒मम् । सि॒ध्रम् । अ॒द्य । दि॒वि॒ऽस्पृशं॑म् ॥८

मन्द्रऽजिह्वा । जुगुर्वणी इति । होतारा । दैव्या । कवी इति ।

यज्ञम् । नः । यक्षताम् । इमम् । सिध्रम् । अद्य । दिविऽस्पृशम् ॥८

“मन्द्रजिह्वा देवानां मादनज्वालौ "जुगुर्वणी भृशं गृणतां स्तुवतां यजमानानां संभक्तारौ ॥ गृणतेर्यङ्लुगन्तात् क्विपि छान्दसी रूपसिद्धिः । तस्मिन्नुपपदे वनतेः ‘छन्दसि वनसनरक्षिमथाम् ' इति इन्प्रत्ययः ॥ "कवी मेधाविनौ क्रान्तदर्शिनौ "दैव्या "होतारा देवसंबन्धिनौ होतारौ अयं च मध्यमस्थानश्चेत्युभौ "सिध्रं फलसाधनभूतम् ॥ सिधेः ‘स्फायितञ्चि°' इत्यादिना रक् ॥ “दिविस्पृशं द्युलोकवासिदेवान् स्पृशन्तम् तैर्हविषः

स्वीक्रियमाणत्वादिति भावः। ईदृशं "नः अस्मदीयम् “इमं "यज्ञम् "अद्य "यक्षताम् अनुतिष्ठतां पूजयतां वा सम्यक् निर्वाहयतामित्यर्थः ॥

शुचिर्देवेष्वर्पिता होत्रां मरुत्सु भारंती ।

इळा सरंस्वती मही बर्हिः सींदंतु यज्ञियाः ॥९

शुचिः । देवेषुं । अर्पिता । होत्रां । मरुत्ऽसुं । भारंती ।

इळां । सरंस्वती । मही । बर्हिः । सीदन्तु । यज्ञियाः ॥९

शुचिः । देवेषु । अर्पिता । होत्रा । मरुत्ऽसु । भारती ।

इळा । सरस्वती । मही । बर्हिः । सीदन्तु । यज्ञियाः ॥९

“शुचिः शुद्धा "मरुत्सु विरूद्धलक्षणया अमरणेषु "देवेषु द्योतनशीलेषु स्तोतृषु मरुत्सु ऋत्विक्षु वा “अर्पिता नियता "होत्रा होमनिष्पादिका भारती भरतस्यादित्यस्य संबन्धिनी द्युस्थाना वाक् । तथा “इळा पार्थिवी प्रैषादिरूपा "मही महती "सरस्वती । सर इत्युदकनाम । तद्वती स्तनितादिरूपा माध्यमिका च वाक् एतास्तिस्रः त्रिस्थानवागभिमानिदेवताः "यज्ञियाः यज्ञार्हाः सत्यः “बर्हिः स्तीर्णं “सीदन्तु उपविशन्तु ।।

तन्नंस्तुरीपमद्भुतं पुरु वारं पुरु त्मनां ।

त्वष्टा पोषांय वि ष्यंतु राये नाभां नो अस्मयुः ॥१०

तत् । नः । तुरीपंम् । अद्भुतम् । पुरु । वा । अरंम् । त्मनां ।

त्वष्टा॑ । पोषा॑य । वि । स्य॒तु॒ । रा॒ये । नाभा॑ । नः॒ । अ॒स्म॒ऽयुः ॥१०

तत् । नः । तुरीपम् । अद्भुतम् । पुरु । वा । अरम् । त्मना ।

त्वष्टा । पोषाय । वि । स्यतु । राये । नाभा । नः । अस्मऽयुः ॥१०

“नः अस्मदर्थं "तत् तादृशं "तुरीयं तूर्णं व्यापि “अद्भुतं सद्य आविर्भवत् अभूतमिव सत् । यद्वा । महन्नामैतत् । सारतो महत् । "पुरु “वारं बहूनां प्राणिनामर्थाय एव “अरम् अलं समर्थम् । यद्वा । पुरु वारं बहु प्रभूतं च । वाशब्दश्चार्थे । अरम् अलम् । “त्मना आत्मना "पुरु । बहुक्रियाविशेषणमेतत् । ईदृशमुदकं "त्वष्टा वृष्ट्यादेः कर्ता । त्वष्टृशब्दो यास्केनैवं व्याख्यातः-’ त्वष्टा तूर्णमश्नुत इति नैरुक्तास्त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा

स्यात्करोतिकर्मणः' (निरु. ८. १३) इति । तन्नामको वैद्युतोऽग्निः "अस्मयुः अस्मान् कामयमानो देवः "नः “पोषाय अस्मत्पुष्टये "राये समृद्धये च “नाभा नाभौ वृष्टेर्बन्धके मेघस्य नाभिस्थाने अवस्थितम् उत्कलक्षणमुदकं “वि “ष्यतु विविधं गमयतु ॥ षोऽन्तकर्मणि'। ‘ओतः श्यनि' इति ओकारलोपः । उपसर्गात्सुनोति' इति षत्वम् । यद्वा । नः नाभा अस्मत्संबन्धियज्ञनाभौ उत्तरवेद्यां राये।। षष्ठ्यर्थे चतुर्थी । रायो गवादिधनस्य पोषाय पुष्टये ।। स्यतिरुपसृष्टो विमोचनार्थः ॥ उत्कलक्षणां वृष्टिं मुञ्चतु ।।

अ॒व॒सृ॒जन्नुप॒ त्मनां दे॒वान्यंक्षि वनस्पते ।

अ॒ग्निर्ह॒व्या सुंषूदति दे॒वो दे॒वेषु॒ मेधिंरः ॥११

अ॒व॒ऽसृ॒जन् । उपं । त्मनां । दे॒वान् । य॒क्षि॒ । व॒न॒स्प॒ते॒ ।

अ॒ग्निः । ह॒व्या । सु॒सू॒द॒ति॒ । दे॒वः । दे॒वेषु॑ । मेधि॑रः ॥११

अवऽसृजन् । उप । त्मना । देवान् । यक्षि । वनस्पते ।

अग्निः । हव्या । सुसूदति । देवः । देवेषु । मेधिरः ॥११

हे "वनस्पते वनानां पालक यूपाभिमानिदेव अग्ने "अवसृजन् स्वैरं वर्तयन् ऋत्विजः स्वस्वकर्मसु व्यापारयन् "त्मना आत्मना "देवान् हविर्भुजः "उप "यक्षि उपेत्य यज ।। ‘ बहुलं छन्दसि' इति शपो लुक् ॥ "देवः द्योतमानः "मेधिरः मेधावान् "अग्निः आहवनीयः "देवेषु उभयेषां मध्ये "हव्या हवींषि "सुसूदति प्रेरयति, स्वीकरोति । 'षूद क्षरणे '। ‘ बहुलं छन्दसि ' इति शपः श्लुः । ‘ लेटोऽडाटौ ' इति अडागमः ॥ यद्वा । यूपाग्निरेव परोक्षेणोच्यते । सोऽग्निर्हवींषि सुष्ठु स्वीकरोति ॥

पू॒ष॒ण्वते॑ म॒रुत्व॑ते वि॒श्वदे॑वाय वा॒यवे॑ ।

स्वाहा॑ गाय॒त्रवे॑पसे ह॒व्यमिंद्रा॑य कर्तन ॥१२

पू॒ष॒ण्ऽवते॑ । म॒रुत्व॑ते । वि॒श्वऽदे॑वाय । वा॒यवे॑ ।

स्वाहा॑ । गा॒य॒त्रऽवे॑पसे । ह॒व्यम् । इन्द्रा॑य । क॒र्त॒न॒ ॥१२

पूषण्ऽवते । मरुत्वते । विश्वऽदेवाय । वायवे ।

स्वाहा । गायत्रऽवेपसे । हव्यम् । इन्द्राय । कर्तन ॥१२

“पूषण्वते पूष्णा तद्वते ।। ‘ अनो नुट् ' इति नुट् । ‘ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम्॥ “मरुत्वते मरुद्भिस्तद्वते "विश्वदेवाय सर्वदेवसंघाय "वायवे गमनशीलाय वायुदेवाय च तथा “गायत्रवेपसे । वेप इति रूपनाम। गायत्रशब्दः इतरसामोपलक्षणः। गायत्रं वेपो

रूपं यस्य तादृशाय “इन्द्राय “हव्यं हविः प्रदातुं "स्वाहा "कर्तन स्वाहाकारं कुरुत ऋत्विजः । करोतेर्लोटि' तप्तनप्तनथनाश्च ' इति तनबादेशः ।।

स्वाहांकृता॒न्या ग॒ह्युपं ह॒व्यानिं वी॒तयें ।

इंद्रा गंहि श्रु॒धी हव॒ं त्वां हंवंते अध्व॒रे ॥१३

स्वाहांऽकृतानि । आ । ग॒हि॒ । उपं । ह॒व्यानिं । वी॒तयें ।

इन्द्रं । आ । ग॒हि॒ । श्रु॒धि । हवंम् । त्वाम् । ह॒व॒न्ते॒ । अ॒ध्व॒रे ॥१३

स्वाहाऽकृतानि । आ । गहि । उप । हव्यानि । वीतये ।

इन्द्र । आ । गहि । श्रुधि । हवम् । त्वाम् । हवन्ते । अध्वरे ॥१३

हे इन्द्र "स्वाहाकृतानि । स्वाहा इत्येवंपूर्वा कृतिः करणमुच्चारणं यक्ष्यमाणदेवतानां ताः स्वाहाकृतयः । तद्वन्ति “हव्यानि हवींषि । अत्र प्रयाजेषु वषट्कारप्रदानात् स्वाहाकृतं हविरित्यर्थः । तद्धविः उपेत्य "वीतये भक्षणाय “आ “गहि आगच्छ। गमेश्छान्दसः शपो लुक् । ‘अनुदात्तोपदेश इत्यादिना अनुनासिकलोपः । तथा हे "इन्द्र “आ “गहि स्तोत्राण्यभिलक्ष्य आगच्छ । आगत्य “हवम् अस्मदीयमाह्वानं “श्रुधि शृणु । यतः “त्वाम् अध्वरे अहिंसात्मके यागे "हवन्ते आह्वयन्ति ऋत्विजः अतः श्रुधि । ह्वयतेः ‘ बहुलं छन्दसि ' इति संप्रसारणम् ॥ ॥ ११ ॥

**टिप्पणी**

According to Sayana (RV I.13), there are 12 āprī sukta. Of the ten āprī sukta, R̥gveda commented by Gargya Narayana, RV I.13 and I.142 invoke Narāśaṁsa and Tanūnapāt manifestations of Agni. RV I.188, III.4, IX.5 and X.110 invoke only Tanūnapāt manifestation. RV II.3, V.5, VII.2 and X.70 invoke only Narāśaṁsa manifestation.

इध्मः

ध्मा प्रपूरणशब्दो य इध्मा नाम प्रकीर्त्यते ।
पूरितस्यागतिर्येन तेनेध्मस्त्वं भविष्यसि ।।
वराहपुराणम् १८.२६ ।। ध्मा शब्दस्य विनियोजनं

प्रायः अयसः ध्मानाय एव भवति। किन्तु अत्र प्रपूरणे अस्ति। यथा उल्लिखितमस्ति, इध्मस्य उन्नतं रूपं समित् अस्ति। समित् अर्थात् समिति, सममिति। अस्मिन् जगते सममितेः ह्रासं अस्ति, येन कारणेन सममितेः प्रपूरणाय वयं भोजनं कुर्वामः। सममितेः आधुनिकं व्याख्या श्री गोवान  कृतमस्ति। विष्णु पुराणस्य १.८.१९ कथनमस्ति - लक्ष्मी इध्मा, विष्णुः कुशः। कुशोपरि टिप्पणी

| | | | | | |
|---|---|---|---|---|---|
| सूक्तं १.१४ | सूक्तं १.४४ | सूक्तं १.७४ | सूक्तं १.१०४ | सूक्तं १.१३४ | सूक्तं १.१६४ |
| सूक्तं १.१५ | सूक्तं १.४५ | सूक्तं १.७५ | सूक्तं १.१०५ | सूक्तं १.१३५ | सूक्तं १.१६५ |
| सूक्तं १.१६ | सूक्तं १.४६ | सूक्तं १.७६ | सूक्तं १.१०६ | सूक्तं १.१३६ | सूक्तं १.१६६ |
| सूक्तं १.१७ | सूक्तं १.४७ | सूक्तं १.७७ | सूक्तं १.१०७ | सूक्तं १.१३७ | सूक्तं १.१६७ |
| सूक्तं १.१८ | सूक्तं १.४८ | सूक्तं १.७८ | सूक्तं १.१०८ | सूक्तं १.१३८ | सूक्तं १.१६८ |
| सूक्तं १.१९ | सूक्तं १.४९ | सूक्तं १.७९ | सूक्तं १.१०९ | सूक्तं १.१३९ | सूक्तं १.१६९ |
| सूक्तं १.२० | सूक्तं १.५० | सूक्तं १.८० | सूक्तं १.११० | सूक्तं १.१४० | सूक्तं १.१७० |

# ऋग्वेदः सूक्तं १.१४३

← सूक्तं १.१४२

ऋग्वेदः - मण्डल १

सूक्तं १.१४३

दीर्घतमा औचथ्यः

सूक्तं १.१४४ →

## दे. अग्निः । जगती, ८ त्रिष्टुप् ।

---

प्र तव्यसीं नव्यसीं धीतिमग्नये वाचो मतिं सहसः सूनवे भरे ।

अपां नपाद्यो वसुभिः सह प्रियो होता पृथिव्यां न्यसीददृत्वियः ॥१॥

स जायमानः परमे व्योमन्याविरग्निरभवन्मातरिश्वने ।

अस्य क्रत्वा समिधानस्य मज्मना प्र द्यावा शोचिः पृथिवी अरोचयत् ॥२॥

अस्य त्वेषा अजरा अस्य भानवः सुसंदृशः सुप्रतीकस्य सुद्युतः ।

भात्वक्षसो अत्यक्तुर्न सिन्धवोऽग्ने रेजन्ते अससन्तो अजराः ॥३॥

यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना ।

अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥४॥

न यो वराय मरुतामिव स्वनः सेनेव सृष्टा दिव्या यथाशनिः ।

अग्निर्जम्भैस्तिगितैरत्ति भर्वति योधो न शत्रून्स वना न्यृञ्जते ॥५॥

कुविन्नो अग्निरुचथस्य वीरसद्वसुष्कुविद्वसुभिः काममावरत् ।

चोदः कुवित्तुतुज्यात्सातये धियः शुचिप्रतीकं तमया धिया गृणे ॥६॥

घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते ।

इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियम् ॥७॥

अप्रयुच्छन्नप्रयुच्छद्भिरग्ने शिवेभिर्नः पायुभिः पाहि शग्मैः ।

अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः परि पाहि नो जाः ॥८॥

# सायणभाष्यम्

‘ प्र तव्यसीम्' इति अष्टर्चं चतुर्थे सूक्तं दैर्घतमसम् । तथा चानुक्रान्तं -’ प्र तब्यसीमष्टावाग्नेयं तु तत् त्रिष्टुबन्तम्' इति । ‘तु तत्' इत्युक्तत्वात् इदमादिसूक्ताष्टकस्य अग्निर्देवता । अन्त्या त्रिष्टुप् शिष्टाः त्रिष्टुबन्तपरिभाषया जगत्यः । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । अग्निष्टोमे अग्निमारुते शस्त्रे इदं सूक्तं जातवेदस्यनिविद्धानीयम् । अथ यथेतम्' इति खण्डे सूत्रितं - ‘प्र तव्यसीं नव्यसीमापो हि ष्ठेति तिस्रः ' ( आश्व. श्रौ. ५. २० ) इति । दशरात्रस्य प्रथमेऽप्यहनि जातवेदस्यनिविद्धानम् आश्वमेधिके मध्यमेऽहनि च निविद्धानम् । तथा च आचार्यातिदेशः-’ ऐकाहिकान्युपसंशस्य तेषु निविदो दध्यादेवमेवाग्निमारुते ' ( आश्व. श्रौ. १०. १० ) इति ॥

प्र तव्यं॑सी॒ नव्यं॑सीं धी॒तिम॒ग्नये॑ वा॒चो म॒तिं सहं॑सः सू॒नवे॑ भरे ।

अ॒पां नपा॒द्यो वसु॑भिः स॒ह प्रि॒यो होता॑ पृथि॒व्यां न्यसी॑दद्दृ॒त्वियः॑ ॥१

प्र । तव्यं॑सीम् । नव्यं॑सीम् । धी॒तिम् । अ॒ग्नये॑ । वा॒चः । म॒तिम् । सहं॑सः । सू॒नवे॑ । भ॒रे॒ ।

अ॒पाम् । नपा॑त् । यः । वसु॑ऽभिः । स॒ह । प्रि॒यः । होता॑ । पृ॒थि॒व्याम् । नि । असी॑दत् । ऋ॒त्वियः॑ ॥१

प्र । तव्यसीम् । नव्यसीम् । धीतिम् । अग्नये । वाचः । मतिम् । सहसः । सूनवे । भरे ।

अपाम् । नपात् । यः । वसुऽभिः । सह । प्रियः । होता । पृथिव्याम् । नि । असीदत् । ऋत्वियः ॥१

अहम् “अग्नये “तव्यसीं तवीयसीम् अतिशयेन वर्धयित्रीम् ॥ तवतिर्वृद्ध्यर्थः सौत्रो धातुः । अस्मात् तृजन्तात् तुश्छन्दसि ' इति ईयसुन् । तुरिष्ठेमेयःसु ' इति तृलोपः ।

छान्दस ईकारलोपः।। “नव्यसीं नवतरामपूर्वां “धीतिं यागलक्षणाम् उक्तगुणकं कर्म “प्र “भरे प्रकर्षेण करोमि । तथा उक्तलक्षणां “वाचो “मतिं स्तुतिरूपं कर्म भरे । कीदृशायाग्नये। “सहसः बलस्य “सूनवे पुत्राय । किंच “यः अग्निः "अपां “नपात् तासां नप्ता । ‘ अद्भ्यः ओषधयः ओषधीभ्योऽग्निः' इति अग्नेर्नप्तृत्वम् । अथवा अपां न पातयिता वैद्युताग्निरूपेण प्रवर्षकत्वादिति भावः । तथा “प्रियः यजमानस्य प्रीणयिता प्रियतमो वा तस्य “होता होमनिष्पादकः सोऽग्निः “ऋत्वियः प्राप्तकालः प्राप्तप्रदानसमयः सन् “पृथिव्यां वेदिलक्षणायां “वसुभिः निवासयोग्यैर्गवादिधनैः सहितः “न्यसीदत् नितरां सीदति ॥

स जायमानः परमे व्योमन्याविरग्निरभवन्मातरिश्वने ।

अ॒स्य क्रत्वा॑ समिधा॒नस्य॑ म॒ज्मना॒ प्र द्यावा॑ शो॒चिः पृ॑थि॒वी अ॑रोचयत् ॥२

सः । जाय॑मानः । प॒र॒मे । विऽओ॑मनि । आ॒विः । अ॒ग्निः । अ॒भ॒व॒त् । मा॒त॒रिश्व॑ने ।

अ॒स्य । क्रत्वा॑ । स॒म्ऽइ॒धा॒नस्य॑ । म॒ज्मना॑ । प्र । द्यावा॑ । शो॒चिः । पृ॒थि॒वी इति॑ । अ॒रो॒च॒य॒त् ॥२

सः । जायमानः । परमे । विऽओमनि । आविः । अग्निः । अभवत् । मातरिश्वने ।

अस्य । क्रत्वा । सम्ऽइधानस्य । मज्मना । प्र । द्यावा । शोचिः । पृथिवी इति । अरोचयत् ॥२

“सः पूर्वोक्तः "अग्निः “जायमानः अरणीभ्यामुत्पद्यमानः काष्ठेषु वा प्रादुर्भूतः सन् तदानीमेव “परमे उत्कृष्टे “व्योमनि विविधरक्षणवति वेदिदेशे “मातरिश्वने

अन्तरिक्षसंचारिणे वायवे प्रथमम् “आविः “अभवत् प्रत्यक्षोऽभूत् ।' त्वमग्ने प्रथमो मातरिश्वन आविर्भव' ( ऋ. सं. १. ३१.३ ) इत्यादिश्रुत्यन्तरप्रसिद्धेः । वायुसंयोगात् प्रज्वलित इत्यर्थः । अथवा मातरि फलस्य निर्मातरि यज्ञे श्वसिति चेष्टते इति मातरिश्वा यजमानः । तदर्थम् । किंच समिधानस्य इन्धनैः सम्यग्वर्धमानस्य अग्नेः “मज्मना । बलनामैतत् । बलवता “क्रत्वा क्रतुना कर्मणा ज्वालनादिव्यापारेण “शोचिः “द्यावा “पृथिवी द्यां च पृथिवीं च “प्र “अरोचयत् प्रकर्षेणादीपयत् ॥ मध्ये शोचिःशब्दश्छान्दसः ॥ मज्मना क्रत्वा समिधानस्येति वा योज्यम् । प्रबलेन समिन्धनादिव्यापारेण समिध्यमानस्येत्यर्थः ।

अ॒स्य त्वे॒षा अ॒जरां अ॒स्य भा॒नवः॑ सुस॒ंदृशः॑ सु॒प्रतीं॑कस्य सु॒द्युतः॑ ।

भात्वंक्षसो अत्युक्तुर्न सिंधंवोऽग्ने रेंजंते असंसंतो अजराः ॥३

अस्य । त्वेषाः । अजराः । अस्य । भानवः । सुऽसन्दृशः । सुऽप्रतींकस्य । सुऽद्युतः ।

भाऽत्वंक्षसः । अतिं । अक्तुः । न । सिन्धंवः । अग्नेः । रेजन्ते । असंसन्तः । अजराः ॥३

अस्य । त्वेषाः । अजराः । अस्य । भानवः । सुऽसन्दृशः । सुऽप्रतीकस्य । सुऽद्युतः ।

भाऽत्वक्षसः । अति । अक्तुः । न । सिन्धवः । अग्नेः । रेजन्ते । अससन्तः । अजराः ॥३

“अस्य स्तूयमानस्याग्नेः “त्वेषाः दीप्तयः “अजराः जरारहिताः अजीर्णाः अविरता इत्यर्थः ।। ‘ नञो जरमर ' इत्यादिना उत्तरपदाद्युदात्तत्वम् ।। तथा “सुप्रतीकस्य

शोभनमुखस्य “अस्य अग्नेः “भानवः रश्मयः । दीप्तेरुक्तत्वादत्र विस्फुलिङ्गा अवगन्तव्याः । ते च सुसंदृशः सुष्ठु सम्यक् द्रष्टारः । सर्वतो व्याप्ता इत्यर्थः । “सुद्युतः सुष्ठु सर्वतो द्योतमानाः । तथा अस्य अग्नेः “भात्वक्षसः । त्वक्ष इति बलनाम, ‘ त्वक्षः शर्धः ' ( नि. २. ९, ६ ) इति बलनामसु पाठात् । भासमानबलाः । “अक्तुः इति सत्रिनामैतत् ,' अक्तुः ऊर्म्या' (नि. १. ७. ४ ) इति तन्नामसूक्तत्वात् । द्वितीयार्थे प्रथमा । अक्तुं जगदञ्जकं नैशं तमः "अति अतिक्रम्य “सिन्धवः स्यन्दमानाः सर्वत्र व्याप्नुवन्तः “अससन्तः स्वव्यापारेषु अस्वपन्तोऽविरताः अत एव “अजराः “न “रेजन्ते न कम्पन्ते । दाहपाकादिषु न चलन्ति न चाल्यन्ते वा अन्यैः । यद्वा । नशब्दो दृष्टान्तवचनः। भात्वक्षसो भा एवं त्वक्षो बलं यस्य तादृशस्यादित्यस्य सिन्धवो न रश्मय इव । ते यथा स्यन्दनशीला व्याप्तिमन्तः अक्तुरति भञ्जकं तमः अतिक्रम्य अससन्तो रेजन्ते तद्वत्

भात्वक्षसोऽस्याग्नेरुक्तलक्षणा दीप्तयोऽपि सर्वत्र रेजन्ते कम्पन्ते व्याप्नुवन्तीत्यर्थः ॥

यमेंरि॒रे भृगंवो वि॒श्ववेंदसं॒ नाभां पृथि॒व्या भुवंनस्य म॒ज्मनां ।

अ॒ग्निं तं गी॒र्भिर्हिंनुहि॒ स्व आ दमे॒ य एको॒ वस्वो॒ वरुंणो॒ न राजंति ॥४

यम् । आ॒ऽई॒रि॒रे । भृगंवः । वि॒श्वऽवेंदसम् । नाभां । पृ॒थि॒व्याः । भुवंनस्य । म॒ज्मनां ।

अ॒ग्निम् । तम् । गीः॒ऽभिः । हि॒नु॒हि॒ । स्वे । आ । दमें । यः । एकः॑ । वस्वः॑ । वरुंणः । न । राजंति ॥४

यम् । आऽईरिरे । भृगवः । विश्वऽवेदसम् । नाभा । पृथिव्याः । भुवनस्य । मज्मना ।

अग्निम् । तम् । गीःऽभिः । हिनुहि । स्वे । आ । दमे । यः । एकः । वस्वः । वरुणः । न । राजति ॥४

“विश्ववेदसं सर्वधनम् । वेद इति धननाम, ‘ वेदः वरिवा' (नि. २. १०. ४ ) इति तन्नामसु पाठात् । तादृशं “यम् अग्निं “भृगवः भृगुगोत्रोत्पन्नाः पापस्य भर्जकाः “पृथिव्याः वेद्याः । एकदेशे कृत्स्नशब्दः । यद्वा । ‘ एतावती वै पृथिवी ' (तै. सं. २. ६. ४. ३) इत्यादिश्रुतेर्वेद्याः पृथिवीत्वम् । तस्या नाभौ उत्तरवेद्यां “भुवनस्य भूतजातस्य “मज्सना बलेन निमित्तेन “आ आभिमुख्येन “ईरिरे ईरितवन्तः स्थापितवन्तः “तम् “अग्निं “स्वे स्वकीये "दमे गृहे उत्तवेद्यां “गीर्भिः स्तुतिभिः “आ “हिनुहि प्राप्नुहि ॥ ‘ हि गतौ वृद्धौ च ' । उतश्च प्रत्ययाच्छन्दसि वावचनम् ' इति हेर्लुगभावः ॥ “यः अग्निः “एकः मुख्यः सन् एक एव वा “वस्वः वसुनो गवादिधनस्य “राजति ईश्वरो भवति । प्रदातुमिति शेषः । राजति इत्यैश्वर्यकर्मा, ‘क्षियति राजति'

( नि. २. २१. ४ ) इति तन्नामसु पाठात् । तत्र दृष्टान्तः। “वरुणो “न वारक आदित्य इव । स यथा सर्वस्य ईष्टे तद्वत् ॥

न यो वरा॑य म॒रुता॑मिव स्व॒नः सेने॑व सृ॒ष्टा दि॒व्या यथा॒शनिः॑ ।

अ॒ग्निर्जंभै॑स्तिगि॒तैरं॑त्ति॒ भर्व॑ति यो॒धो न शत्रू॒न्त्स वना॒ न्यृं॑जते ॥५

न । यः । वरा॑य । म॒रुता॑म्ऽइव । स्व॒नः । सेना॑ऽइव । सृ॒ष्टा । दि॒व्या । यथा॑ । अ॒शनिः॑ ।

अ॒ग्निः । जम्भैः॑ । ति॒गि॒तैः । अ॒त्ति॒ । भर्व॑ति । यो॒धः । न । शत्रू॑न् । सः । वना॑ । नि । ऋ॒ञ्ज॒ते॒ ॥५

न । यः । वराय । मरुताम्ऽइव । स्वनः । सेनाऽइव । सृष्टा । दिव्या । यथा । अशनिः ।

अग्निः । जम्भैः । तिगितैः । अत्ति । भर्वति । योधः । न । शत्रून् । सः । वना । नि । ऋञ्जते ॥५

“यः अग्निः “वराय वरणाय निग्रहाय “न शक्तो न भवति । तत्र दृष्टान्तत्रयमुच्यते । "मरुतां “स्वनः “इव । स यथा अग्राह्यः तद्वत् । तथा “सृष्टा वैरिक्षयार्थं प्रबलेन अतिसृष्टा “सेनेव । सा यथा अन्यैः अनिरोध्या तद्वत् । तथा “दिव्या दिवि भवा “अशनिः “यथा पतत्येव न निवार्यते तद्वत् । ईदृक् सामर्थ्यमस्तीति दर्शयति । अयम् “अग्निः “तिगितैः निशितैस्तीक्ष्णीभूतैः ॥ अन्त्यविकारश्छान्दसः । “जम्भैः दन्तैर्दन्तस्थानीयाभिर्ज्वालाभिः “अत्ति अस्मद्विरोधिनो भक्षयति । तथा “भर्वति हिनस्ति ।। ‘ भर्व हिंसायाम् ' । यास्कस्त्वाह-' भर्वतिरत्तिकर्मा ' (निरु. ९, २३ ) इति ।

यद्यपि अत्तिभर्वत्योः अदनमेवार्थः तथापि तदवान्तरभेदोऽवगन्तव्यः । तत्र दृष्टान्तः । "योधो “न संप्रहर्ता शूर इव । स यथा “शत्रून् भर्वति भक्षयति तद्वत् । किंच “सः अग्निः “वना वनानि वृक्षदिसमूहान् “न्यृञ्जते नितरां प्रसाधयति दहतीत्यर्थः । ‘ऋञ्जतिः प्रसाधनकर्मा ' इति यास्कः ।।

कु॒विन्नो॑ अ॒ग्निरु॒चथ॑स्य॒ वीरस॒द्वसु॑ष्कु॒विद्वसु॑भि॒ः काम॑मा॒वर॑त् ।

चो॒दः कु॒वित्तु॑तु॒ज्यात्सा॒तये॒ धिय॒ः शुचि॑प्रतीकं॒ तम॒या धि॒या गृ॑णे ॥६

कु॒वित् । न॒ः । अ॒ग्निः । उ॒चथ॑स्य । वीः । अस॑त् । वसुः॑ । कु॒वित् । वसु॑ऽभिः । काम॑म् । आ॒ऽवर॑त् ।

चो॒दः । कु॒वित् । तु॒तु॒ज्यात् । सा॒तये॑ । धियः॑ ।
शुचि॑ऽप्रतीकम् । तम् । अ॒या । धि॒या । गृ॒णे॒ ॥६

कुवित् । नः । अग्निः । उचथस्य । वीः । असत् । वसुः ।
कुवित् । वसुऽभिः । कामम् । आऽवरत् ।

चोदः । कुवित् । तुतुज्यात् । सातये । धियः ।
शुचिऽप्रतीकम् । तम् । अया । धिया । गृणे ॥६

अयम् “अग्निः “नः अस्माकम् “उचथस्य उक्थस्य स्तोत्रस्य “कुवित् बहुवारं “वीः कामयिता “असत् भवतु ॥ अस्तेर्लेटि अडागमः । यद्वा। उचथस्य एतन्नामकस्य महर्षेर्गोत्रप्रभवस्य नः इति संबन्धः । तथा “वसुः वासयिता सर्वेषां वसुस्थानीयो वा “वसुभिः वासयितृभिर्धनैः “कामम् अत्यर्थमभिमतं वा “कुवित् अतिप्रभूतम् “आवरत् आवृणोतु । अभिमतप्रदानेन कामं निवर्तयत्वित्यर्थः ॥ वृणोतेर्लेटि अडागमः । छान्हसो

विकरणस्य लुक् ॥ अयमग्निः “चोदः अस्माकं कर्मसु प्रेरकः सन् “धियः कर्माणि “सातये लाभाय “कुवित् बहु तुतुज्यात् त्वरयतु प्रेरयतु इत्यर्थः ॥ तुजिः प्रेरणार्थः । छान्दसः शपः श्लुः ॥ “शुचिप्रतीकं शोभनावयवं शोभनज्वालं “तम् अग्निम् “अया “धिया अनया स्तुतिरूपया प्रज्ञया “गृणे उच्चारयामि स्तौमीत्यर्थः ।।

घृतप्रंतीकं व ऋतस्यं धूर्षदंमग्निं मित्रं न संमिधान ऋंजते
।

इंधांनो अक्रो विदथेंषु दीद्यंच्छुक्रवंर्णामुदुं नो यंसते धियं ॥
७

घृतऽप्रंतीकम् । वः । ऋतस्यं । धूःऽसदंम् । अग्निम् । मित्रम् । न । सम्ऽइधानः । ऋञ्जते ।

इन्धा॑नः । अ॒क्रः । वि॒दथे॑षु । दीद्य॑त् । शु॒क्रऽव॑र्णाम् । उत् । ऊ॒ं इति॑ । न॒ः । य॒ंस॒ते॒ । धिय॑म् ॥७

घृतऽप्रतीकम् । वः । ऋतस्य । धूःऽसदम् । अग्निम् । मित्रम् । न । सम्ऽइधानः । ऋञ्जते ।

इन्धानः । अक्रः । विदथेषु । दीद्यत् । शुक्रऽवर्णाम् । उत् । ऊं इति । नः । यंसते । धियम् ॥७

"घृतप्रतीकं घृतोपक्रमं प्रयाजादिषु आज्यैर्हूयमानत्वात् । यद्वा । प्रतीकमङ्गम् । दीप्तज्वालमित्यर्थः। किंच "वः युष्मत्संबन्धिनः "ऋतस्य यज्ञस्य "धूर्षदं धुरि निर्वहणे सीदन्तं यज्ञनिर्वाहकम् "अग्निं "मित्रं "न मित्रमिव 'समिधानः इध्मैर्दीपयमानः "ऋञ्जते प्रसाधयति । ऋञ्जतिः प्रसाधनकर्मा । एवम् "इन्धानः सम्यग्दीप्यमानः "अक्रः ज्वालासमिदादिभिराक्रान्तः अन्यैः अनाक्रान्तः वा ।। क्रमेश्छान्दसो डः ॥ "विदथेषु यज्ञेषु वेदयत्सु स्तोत्रेषु

निमित्तभूतेषु “दीद्यत् स्वयं दीप्यमानः अस्मदीयां “धियं प्रज्ञां यागादिविषयां “शुक्रवर्णां शुभ्रवर्णां निर्मलां ज्योतिष्टोमादि कर्म वा “उदु “यंसते उद्योजयत्येव ।। यमेर्लेटि अडागमः । सिप् ॥ उशब्दोऽवधारणे । धीरिति कर्मनाम, ‘ धीः शमी' (नि. २. १. २१) इति तन्नामसु पाठात् ॥

अप्रं॑युच्छ॒न्नप्रं॑युच्छद्भि॒रग्ने शि॒वेभि॑र्नः पा॒युभि॑ः पाहि श॒ग्मैः ।

अदं॑ब्धेभि॒रदृं॑पितेभिरि॒ष्टेऽनिं॑मिषद्भि॒ः परिं पाहि नो॒ जाः ॥ ८

अप्रं॑ऽयुच्छन् । अप्रं॑युच्छत्ऽभिः । अ॒ग्ने॒ । शि॒वेभि॑ः । न॒ः । पा॒युऽभि॑ः । पा॒हि॒ । श॒ग्मैः ।

अदंब्धेभिः । अदृंपितेभिः । इ॒ष्टे॒ । अनिंमिषत्ऽभिः । परिं । पा॒हि॒ । न॒ः । जाः ॥८

अप्रऽयुच्छन् । अप्रयुच्छत्ऽभिः । अग्ने । शिवेभिः । नः । पायुऽभिः । पाहि । शग्मैः ।

अदब्धेभिः । अदृपितेभिः । इष्टे । अनिमिषत्ऽभिः । परि । पाहि । नः । जाः ॥८

हे “अग्ने “अप्रयुच्छन् अस्मासु अप्रमाद्यन् ॥'युच्छ प्रमादे' । अविच्छिन्नप्रवृत्तिः सन् 'अप्रयुच्छद्भिः अप्रमाद्यद्भिः अनवधानरहितैः “शिवेभिः मन्त्रकल्याणैः "शग्मैः सुखकरैः “पायुभिः रक्षणप्रकारैः "नः अस्मान् “पाहि रक्ष। किंच हे “इष्टे सर्वैः एषणीयाग्ने “जाः जायमानोऽस्माभिर्दीप्यमानः सन् “अदब्धेभिः अहिंसितैः अदृपितेभिः केनचिदप्यपरिभूतैः ।। ‘ दृप दृम्फ उत्क्लेशे '। तौदादिकः ॥ “अनिमिषद्भिः निमेषरहितैः

अनलस्वभावैः ईदृशैः लक्षणैः "नः अस्मान् “परि परितः “पाहि पालय । यद्वा । उपर्युपरि जायन्ते इति जाः । नो जाः अस्मत्संबन्धिनीः पुत्रपौत्रादिरूपाः प्रजाः परि “पाहि परितो रक्ष । न केवलमस्मान् किंतु अस्मत्पुत्रपौत्रादीनपि रक्ष ॥ ॥ १२ ॥

## मण्डल

### १

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं
१.१४ १.४४ १.७४ १.१०४ १.१३४ १.१६४

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं
१.१५ १.४५ १.७५ १.१०५ १.१३५ १.१६५

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं
१.१६ १.४६ १.७६ १.१०६ १.१३६ १.१६६

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं
१.१७ १.४७ १.७७ १.१०७ १.१३७ १.१६७

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं
१.१८ १.४८ १.७८ १.१०८ १.१३८ १.१६८

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं
१.१९ १.४९ १.७९ १.१०९ १.१३९ १.१६९

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं
१.२० १.५० १.८० १.११० १.१४० १.१७०

# ऋग्वेदः सूक्तं १.१४४

ऋग्वेदः - मण्डल १
← सूक्तं १.१४३
सूक्तं १.१४४
दीर्घतमा औचथ्यः
सूक्तं १.१४५ →

## दे. अग्निः। जगती ।

एति प्र होता व्रतमस्य माययोर्ध्वां दधानः शुचिपेशसं धियम् ।

अभि स्रुचः क्रमते दक्षिणावृतो या अस्य धाम प्रथमं ह निंसते ॥१॥

अभीमृतस्य दोहना अनूषत योनौ देवस्य सदने परीवृताः ।

अपामुपस्थे विभृतो यदावसदध स्वधा अधयद्याभिरीयते ॥२॥

युयूषतः सवयसा तदिद्वपुः समानमर्थं वितरित्रता मिथः ।

आदीं भगो न हव्यः समस्मदा वोळ्हुर्न रश्मीन्समयंस्त सारथिः ॥३॥

यमीं द्वा सवयसा सपर्यतः समाने योना मिथुना समोकसा ।

दिवा न नक्तं पलितो युवाजनि पुरू चरन्नजरो मानुषा युगा ॥४॥

तमीं हिन्वन्ति धीतयो दश व्रिशो देवं मर्तास ऊतये हवामहे ।

धनोरधि प्रवत आ स ऋण्वत्यभिव्रजद्भिर्वयुना नवाधित ॥५॥

त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्य पशुपा इव त्मना ।

एनी त एते बृहती अभिश्रिया हिरण्ययी वक्वरी बर्हिराशाते ॥६॥

अग्ने जुषस्व प्रति हर्य तद्वचो मन्द्र स्वधाव ऋतजात सुक्रतो ।

यो विश्वतः प्रत्यङ्ङसि दर्शतो रण्वः संदृष्टौ पितुमाँ इव क्षयः ॥७॥

# सायणभाष्यम्

‘ एति प्र होता' इति सप्तर्चं पञ्चमं सूक्तं दैर्घतमसं जागतम् । पूर्वत्र ‘ आग्नेयं तु तत् ' इत्युक्तत्वात् इदमप्याग्नेयम् । तथा चानुक्रमणिका-' एति प्र सप्त जागतम् ' इति । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः ॥

एति॒ प्र होता॑ व्र॒तम॑स्य मा॒ययो॒र्ध्वां दधा॑नः॒ शुचि॑पेशसं॒ धियं॑ ।

अ॒भि स्रुचः॑ क्रमते दक्षिणा॒वृतो॒ या अ॑स्य॒ धाम॑ प्रथ॒मं ह॒ निंसं॑ते ॥१

एति॑ । प्र । होता॑ । व्र॒तम् । अ॒स्य॒ । मा॒यया॑ । ऊ॒र्ध्वाम् । दधा॑नः । शुचि॑ऽपेशसम् । धिय॑म् ।

अ॒भि । स्रुचः॑ । क्र॒म॒ते॒ । द॒क्षि॒णा॒ऽआ॒वृतः॑ । याः । अ॒स्य॒ । धाम॑ । प्र॒थ॒मम् । ह॒ । निंस॑ते ॥१

एति । प्र । होता । व्रतम् । अस्य । मायया । ऊर्ध्वाम् । दधानः । शुचिऽपेशसम् । धियम् ।

अभि । स्रुचः । क्रमते । दक्षिणाऽआवृतः । याः । अस्य । धाम । प्रथमम् । ह । निंसते ॥१

अयं “होता होमनिष्पादकोऽध्वर्युः “अस्य अगनेः “व्रतं हविष्प्रदानादिरूपं कर्म कर्तुं “मायया कर्तव्यविशेषप्रज्ञया युक्तः सन् “प्र “एति प्रकर्षेण गच्छति होतुम् । मायेति प्रज्ञानाम, ‘माया वयुनम्' (नि. ३. ९. ९) इति तन्नामसु पाठात् । कीदृशोऽयम् । “ऊर्ध्वाम् उपर्यारूढां “शुचिपेशसं शोभनरूपोपेताम् । पेश इति रूपनाम । “धियं प्रज्ञां “दधानः । ‘आ चतुर्थात्कर्मणोऽभिसमीक्षेतेदं करिष्यति' इत्युक्तत्वात् । आगत्य च “दक्षिणावृतः प्रादक्षिण्येन

वर्तमानाः “स्रुचः जुह्वादीः “क्रमते गृह्णाति । कीदृश्यः सुचः । “याः “प्रथमं पात्रासादनकाले “अस्य अग्नेः “धाम स्थानं “निंसते ॥ ‘ निंस' चुम्बने इति धातुः ॥ चुम्बन्ति भजन्ते इत्यर्थः । प्रथममनुष्ठेयक्रमं बुद्ध्या प्रैति पश्चात् स्रुचः क्रमते इत्यर्थः । हशब्दः प्रसिद्धौ । यद्वा । होता देवानामाह्वाता अयमग्निः अस्य यजमानस्य व्रतं कर्म ज्योतिष्टोमादि प्रज्ञाविशेषेण युक्तः सन् एति । यज्ञदेशं प्रत्यागच्छति । कीदृशोऽयम् । ऊर्ध्वामूर्ध्ववर्ति शुचिपेशसं शोभनरूपोपेतं धियं ज्वालाचलनादिरूपं कर्म दधानः धारयमाणः । आगत्य च दक्षिणावृतः उक्तलक्षणाः स्रुचो घृतपूर्णा जुहूपभृदादिका अभि क्रमते आक्रमते। घृतं स्वीकर्तुं ज्वाला: प्रसर्पन्ति इत्यर्थः । याः स्रुचः प्रथमं पूर्वं हविरासादनकाले अस्याग्नेर्धाम स्थानं वेदिलक्षणं निंसते चुम्बन्ति प्राप्ताः । हशब्दः प्रसिद्धौ ॥ ‘णिसि चुम्बने' । अदादित्वात् शपो लुक् । इदित्त्वात् नुम् ।।

अ॒भीमृ॒तस्य॑ दो॒हना॑ अनूषत॒ योनौ॑ दे॒वस्य॒ सद॑ने॒ परी॑वृताः ।

अ॒पामु॒पस्थे॒ विभृ॑तो॒ यदाव॑स॒दध॑ स्व॒धा अ॑धय॒द्याभि॒रीय॑ते ॥२

अ॒भि । ई॒म् । ऋ॒तस्य॑ । दो॒हनाः॑ । अ॒नू॒ष॒त॒ । योनौ॑ । दे॒वस्य॑ । सद॑ने । परि॑ऽवृताः ।

अ॒पाम् । उ॒पऽस्थे॑ । विऽभृ॑तः । यत् । आ । अव॑सत् । अध॑ । स्व॒धाः । अ॒ध॒य॒त् । याभिः॑ । ईय॑ते ॥२

अभि । ईम् । ऋतस्य । दोहनाः । अनूषत । योनौ । देवस्य । सदने । परिऽवृताः ।

अपाम् । उपऽस्थे । विऽभृतः । यत् । आ । अवसत् । अध । स्वधाः । अधयत् । याभिः । ईयते ॥२

“ऋतस्य उदकस्य “दोहनाः धाराः “योनौ उत्पत्तिस्थाने "देवस्य “सदने द्योतमानस्य आदित्यस्य स्थाने “परीवृताः तद्रश्मिभिः परितो व्याप्ताः सत्यः “अभि “अनूषत अभिनवा भवन्ति । आभवन्त्येव स्तूयन्ते वा । कदेत्यत आह । “यत् यदा “अपामुपस्थे उदकानामुत्सङ्गे अन्तः “विभृतः विशेषेण ताभिर्धार्यमाणः सन् “आवसत् आक्रम्य निवसत्ययमग्निः तदानीमित्यर्थः । “अध अधुना “स्वधाः अमृतोपमाः अपः “अधयत् पिबति सर्वो लोकः । ता विशेष्यन्ते । “याभिः सह “ईयते अयमग्निः संगच्छते वा भूमिं ता अधयत् । विद्युदात्मना उदकानि जगत् पाययते इत्यग्नेः स्तुतिः ॥

युयू॑षत॒ः सव॑यसा॒ तदिद्वपु॑ः समा॒नमर्थं॑ वि॒तरि॑त्रता मि॒थः ।

आदीं भगो न हव्यः सम॒स्मदा वोळ्हुर्न र॒श्मीन्त्समंयंस्त॒ सारंथिः ॥३

युयूंषतः । सऽवंयसा । तत् । इत् । वपुः । स॒मा॒नम् । अर्थंम् । वि॒ऽतरिंत्रता । मि॒थः ।

आत् । ई॒म् । भगः । न । हव्यः । सम् । अ॒स्मत् । आ । वोळ्हुः । न । र॒श्मीन् । सम् । अ॒यं॒स्त॒ । सारंथिः ॥३

युयूषतः । सऽवयसा । तत् । इत् । वपुः । समानम् । अर्थम् । विऽतरित्रता । मिथः ।

आत् । ईम् । भगः । न । हव्यः । सम् । अस्मत् । आ । वोळ्हुः । न । रश्मीन् । सम् । अयंस्त । सारथिः ॥३

“सवयसा समानवयस्कौ । वयःशब्देन सामर्थ्यं लक्ष्यते । समानसामर्थ्यौ “तदित् तदानीमेव यदा प्रवृद्धो भवति तदानीमेव “समानमर्थं समानप्रयोजनं निष्पत्तिं “मिथः

प्रत्येकं “वितरित्रता भृशं तरन्तौ होत्रध्वर्यू “वपुः अग्नेः शरीरं “युयूषतः स्वस्वव्यापारेण मिश्रयितुमिच्छतः । प्रैषानन्तरं याज्यादिपाठो होतुर्व्यापारः वषट्कारानन्तरं होमोऽध्वर्योरिति विभागः । अत्रेदमनुसंधयम् । सवयसा समानवयस्कौ मिथः प्रत्येकं समानप्रयोजनं सुखप्राप्तिं वितरित्रता विशेषेण तरितुमिच्छन्तौ । तरतेर्यङ्लुगन्तात् शतरि दाधर्त्यादौ (पा. सू. ७. ४. ६५ ) निपात्यते । द्विवचनस्य आकारः ॥ जायापती तद्वपुस्तदेव परस्परं शरीरं युयूषतः मिश्रयितुमिच्छतः परस्परमालिङ्गतः । तद्वदग्निं साकं होत्रध्वर्यू युयूषतः । "आदीम् अनन्तरमेव “हव्यः आहवनीयोऽग्निः सारथिः सरणशीलः सारथिवत् यज्ञात्मकस्य रथस्य निर्वाहको वा सन् “अस्मत् अस्माकं संबन्धिनः “रश्मीन् रश्मिवदायता घृतधाराः "आ सर्वतः “समयस्त सम्यक् स्वीकरोति । तत्र दृष्टान्तद्वयमुच्यते। "भगो “न सर्वैः सेवनीय आदित्यः स यथा सर्वतः पूजामादत्ते तद्वत् । “सारथिः रथस्य यन्ता

वोढुर्वाहकस्याश्वादेः रश्मीन् प्रग्रहानिव । तान् यथा स्वीकरोति तद्वदयमग्निरपि हवींषि समयंस्त ॥

यमी॒ं द्वा सवं॑यसा सप॒र्यतः॑ समा॒ने योना॑ मिथु॒ना समो॑कसा ।

दिवा॒ न नक्तं॑ पलि॒तो युवा॑जनि पु॒रू चरं॑न्न॒जरो॒ मानु॑षा यु॒गा ॥४

यम् । ई॒म् । द्वा । सऽवं॑यसा । स॒प॒र्यतः॑ । स॒मा॒ने । योना॑ । मि॒थु॒ना । सम्ऽओं॑कसा ।

दिवा॑ । न । नक्तं॑म् । प॒लि॒तः । युवा॑ । अ॒ज॒नि॒ । पु॒रु । चरं॑न् । अ॒जरः॑ । मानु॑षा । यु॒गा ॥४

यम् । ईम् । द्वा । सऽवयसा । सपर्यतः । समाने । योना । मिथुना । सम्ऽओकसा ।

दिवा । न । नक्तम् । पलितः । युवा । अजनि । पुरु ।
चरन् । अजरः । मानुषा । युगा ॥४

“यमीम् एनमग्निं “द्वा द्वौ “सवयसा समानवयस्कौ
समानसामर्थ्यौ वा “समाने “योना योनौ
फलस्योत्पत्तिस्थाने यज्ञे वर्तमानौ “मिथुना दम्पती इव
एककार्योद्युक्तौ “समोकसा समाननिवासौ
देवयजनस्थानौ ईदृशौ होत्रध्वर्यू “सपर्यतः पूजयतः स्तुत्या
हविष्प्रदानेन च प्रीणयतः । कदेत्याह । “दिवा “न
अहनीव “नक्तं रात्रावपि । सर्वदेत्यर्थः । एवं
पूज्यमानोऽग्निः “पलितः पूर्वम् अङ्गारावस्थायां जीर्णोऽपि
समिन्धनानन्तरं “युवा तरुणः तेजसा सर्वस्य मिश्रयिता वा
“अजनि जायते । एवं जातोऽयं “मानुषा "युगा मनोः
संबन्धीनि युगानि जायापतिरूपाणि होत्रध्वर्युरूपाणि वा
उद्दिश्य “पुरु “चरन् बह्वाज्यादिकं भक्षयन् "अजरः
अजीर्णो जरारहितो वर्तते ।।

तमीं हिन्वंति धी॒तयो॒ दश॒ व्रिशों दे॒वं मर्तास ऊ॒तयें हवामहे ।

धनो॒रधिं प्र॒वत॒ आ स ऋंण्वत्यभि॒व्रजंद्भिर्व॒युना॒ नवांधित ॥५

तम् । ई॒म् । हि॒न्व॒न्ति॒ । धी॒तयः॑ । दशं । व्रिशः॑ । दे॒वम् । मर्तासः । ऊ॒तयें । ह॒वा॒म॒हे॒ ।

धनोः॑ । अधिं । प्र॒ऽवतः॑ । आ । सः । ऋ॒ण्व॒ति॒ । अ॒भि॒व्रजंत्ऽभिः । व॒युनां । नवां । अ॒धि॒त॒ ॥५

तम् । ईम् । हिन्वन्ति । धीतयः । दश । व्रिशः । देवम् । मर्तासः । ऊतये । हवामहे ।

धनोः । अधि । प्रऽवतः । आ । सः । ऋण्वति । अभिव्रजत्ऽभिः । वयुना । नवा । अधित ॥५

"देवं द्योतमानं "तम् एनमग्निं "दश "धीतयः दशसंख्याका अङ्गुलयः "व्रिशः विशः परस्पर विश्लिष्टाः "हिन्वन्ति प्रीणयन्ति मथनकाले । तथा "मर्तासः मनुष्या वयं यजमानाः "ऊतये रक्षणाय "हवामहे आह्वयामः । कोऽस्य विशेष इत्युच्यते । अयमग्निः "धनोः धनुषः सकाशात् "प्रवत "आ प्रकर्षेण गच्छतो बाणानिव । तान् यथा शत्रोरुपरि मुञ्चन्ति ॥ आ इत्युपमार्थे ॥ तद्वत् "सः अग्निः धनुस्थानीयात् निजशरीरसकाशात् प्रवतः प्रकृष्टवेगवतो रश्मीन् "ऋण्वति गमयति । रिविर्गत्यर्थः । अत्र अन्तर्भावितण्यर्थोऽयम् । इदित्त्वात् नुम् । छान्दसं रेफस्य संप्रसारणम् । अधिशब्दोऽनर्थको धात्वर्थमात्रानुवादी ॥ किंच एवं प्रवृद्धोऽग्निः "अभिव्रजद्भिः अनुष्ठानार्थमभितः संचरद्भिः ज्ञेयम् अर्थम् अभिगच्छद्भिर्वा तदर्थं "नवा नवानि नूतनानि "वयुना वयुनानि प्रज्ञानानि अनुष्ठानविषयाणि "अधित धारयति ज्ञापयतीत्यर्थः । यद्वा। अभिव्रजद्भिराभिमुख्येन

गच्छद्भिर्होत्रादिभिः क्रियमाणानि नवानि वयुनानि प्रज्ञाविशिष्टानि स्तोत्रादीन्यधित धत्ते ॥ धाञश्छान्दसे लुङि ' स्थाध्वोरिच्च' इति इत्वम् । उत्तरस्य सिचः कित्त्वम् । ह्रस्वादङ्गात् ' इति सलोपः ।।

त्वं ह्य॑ग्ने दि॒व्यस्य॒ राज॑सि॒ त्वं पार्थि॑वस्य पशु॒पा इ॑व॒ त्मना॑ ।

एनीं॑ त ए॒ते बृ॑ह॒ती अ॑भि॒श्रिया॑ हिर॒ण्ययी॒ वक्व॑री ब॒र्हिरा॑शाते ॥६

त्वम् । हि । अ॒ग्ने॒ । दि॒व्यस्य॑ । राज॑सि । त्वम् । पार्थि॑वस्य । प॒शु॒पाःऽइ॑व । त्मना॑ ।

एनी॒ इति॑ । ते॒ । ए॒ते इति॑ । बृ॒ह॒ती इति॑ । अ॒भि॒ऽश्रिया॑ । हि॒र॒ण्ययी॒ इति॑ । वक्व॑री॒ इति॑ । ब॒र्हिः । आ॒शा॒ते॒ इति॑ ॥६

त्वम् । हि । अग्ने । दिव्यस्य । राजसि । त्वम् । पार्थिवस्य । पशुपाःऽइव । त्मना ।

एनी इति । ते । एते इति । बृहती इति । अभिऽश्रिया । हिरण्ययी इति । वक्वरी इति । बर्हिः । आशाते इति ॥६

हे "अग्ने "त्वं "दिव्यस्य दिवि भवस्य देवादेः विद्युदात्मना वृष्ट्यादेर्वा "राजसि ईशिषे । ऐश्वर्यनामैतत् । तथा "पार्थिवस्य पृथिवीसंबन्धिनो मनुष्यादेः राजसि ईश्वरो भवसि । किम् अन्यतन्त्रत्वेन नेत्याह । "त्मना आत्मनैव स्वसामर्थ्येनैव । तत्र दृष्टान्तः "पशुपाइव । पशुपालको यथा स्वसामर्थ्येनैव पशूनां निरोधनिर्गमनादिव्यापारेषु समर्थो भवति तद्वत् । एतद्दृष्टान्तेन अत्यन्तस्वातन्त्र्यमुक्तं भवति । किंच यस्मादेवं तस्मात् "ते तव "बर्हिः यज्ञम् "एते प्रसिद्धे "एनी एतवर्णे शुभ्रे द्यावापृथिव्यौ "आशाते अश्नुवाते व्याप्नुतः ।। ' वर्णादनुदात्तात् ' (पा. सू. ४. १.

३९) इति ङीप् तकारस्य नकारश्च ॥ कीदृश्यौ ते । “बृहती महत्यौ अतिविस्तृते “अभिश्रिया प्राप्तैश्वर्ये अभितः सेव्ये वा “हिरण्ययी हितरमणीये “वक्वरी अतिकुशलं शब्दयन्त्यौ ।। वचेर्वनिपि ‘ वनो र च ' इति ङीब्रेफौ । छान्दसं कुत्वम् । ‘ वकि कौटिल्ये' इत्यस्मात् वा छान्दसो नुमभावः ॥ ईदृश्यौ द्यावापृथिव्यौ बर्हिः अश्नुवाते ।।

अग्ने॑ जु॒षस्व॒ प्रति॑ हर्य॒ तद्वचो॒ मंद्र॒ स्वधा॑व॒ ऋत॑जात॒ सुक्र॑तो ।

यो वि॒श्वतः॑ प्र॒त्यङ्ङसि॑ दर्श॒तो र॒ण्वः संदृ॑ष्टौ पितु॒माँ इ॑व॒ क्षयः॑ ॥७

अग्ने॑ । जु॒षस्व॑ । प्रति॑ । ह॒र्य॒ । तत् । वचः॑ । मन्द्र॑ । स्वधा॑ऽवः । ऋत॑ऽजात । सुक्र॑तो॒ इति॒ सुऽक्र॑तो ।

यः । वि॒श्वतः॑ । प्र॒त्यङ् । असिं । द॒र्श॒तः । र॒ण्वः ।
सम्ऽदृं॑ष्टौ । पि॒तु॒मान्ऽइंव । क्षयः॑ ॥७

अग्ने । जुषस्व । प्रति । हर्य । तत् । वचः । मन्द्र ।
स्वधाऽवः । ऋतऽजात । सुक्रतो इति सुऽक्रतो ।

यः । विश्वतः । प्रत्यङ् । असि । दर्शतः । रण्वः ।
सम्ऽदृष्टौ । पितुमान्ऽइव । क्षयः ॥७

हे “अग्ने “जुषस्व सेवस्व हविः । प्रीतो भव वा स्तुत्या ।
किंच “तत् तादृशं प्रियकरं “वचः वाग्रूपं स्तोत्रं “प्रति हर्य
पुनः कामयस्व । हे "मन्द्र मादनशील स्तुत्य वा हे
“स्वधावः हविर्लक्षणान्नवन् हे “ऋतजात यज्ञार्थमुत्पन्न हे
“सुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा । “यः ईदृशस्त्वं
“विश्वतः सर्वस्य स्थावरजङ्गमस्य जगतः “प्रत्यङ्ङसि
अभिमतः अनुकूलोऽसि न पराङ्मुखः इत्यर्थः । तथा
“दर्शतः दर्शनीयः सर्वैः । किंच “संदृष्टौ सम्यग्दर्शने “रण्वः

रमणशीलो रमयिता वा भवसि सर्वस्य । यद्वा । तव संदृष्टौ सत्यां सर्वो जनः “क्षयः निवासवान् भवति । तत्र दृष्टान्तः । “पितुमानिव । अतिप्रभूतान्नस्वामी यथा सर्वैः वस्तव्यः गन्तव्यश्च भवति तद्वत् ॥ ॥ १३ ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.७ | सूक्तं १.३७ | सूक्तं १.६७ | सूक्तं १.९७ | सूक्तं १.१२७ | सूक्तं १.१५७ | सूक्तं १.१८७ |
| सूक्तं १.८ | सूक्तं १.३८ | सूक्तं १.६८ | सूक्तं १.९८ | सूक्तं १.१२८ | सूक्तं १.१५८ | सूक्तं १.१८८ |
| सूक्तं १.९ | सूक्तं १.३९ | सूक्तं १.६९ | सूक्तं १.९९ | सूक्तं १.१२९ | सूक्तं १.१५९ | सूक्तं १.१८९ |
| सूक्तं १.१० | सूक्तं १.४० | सूक्तं १.७० | सूक्तं १.१०० | सूक्तं १.१३० | सूक्तं १.१६० | सूक्तं १.१९० |
| सूक्तं १.११ | सूक्तं १.४१ | सूक्तं १.७१ | सूक्तं १.१०१ | सूक्तं १.१३१ | सूक्तं १.१६१ | सूक्तं १.१९१ |
| सूक्तं १.१२ | सूक्तं १.४२ | सूक्तं १.७२ | सूक्तं १.१०२ | सूक्तं १.१३२ | सूक्तं १.१६२ | |
| सूक्तं १.१३ | सूक्तं १.४३ | सूक्तं १.७३ | सूक्तं १.१०३ | सूक्तं १.१३३ | सूक्तं १.१६३ | |

# ऋग्वेदः सूक्तं १.१४५

← सूक्तं १.१४४

ऋग्वेदः - मण्डल १

सूक्तं १.१४५

दीर्घतमा औचथ्यः

सूक्तं १.१४६ →

## दे. अग्निः। जगती, ५ त्रिष्टुप्।

तं पृच्छता स जगामा स वेद स चिकित्वाँ ईयते सा न्वीयते ।

तस्मिन्सन्ति प्रशिषस्तस्मिन्निष्टयः स वाजस्य शवसः शुष्मिणस्पतिः ॥१॥

तमित्पृच्छन्ति न सिमो वि पृच्छति स्वेनेव धीरो मनसा यदग्रभीत् ।

न मृष्यते प्रथमं नापरं वचोऽस्य क्रत्वा सचते अप्रदृपितः ॥२॥

तमिद्गच्छन्ति जुह्वस्तमर्वतीर्विश्वान्येकः शृणवद्वचांसि मे ।

पुरुप्रैषस्ततुरिर्यज्ञसाधनोऽच्छिद्रोतिः शिशुरादत्त सं रभः ॥३॥

उपस्थायं चरति यत्समारत सद्यो जातस्तत्सार युज्येभिः ।

अभि श्वान्तं मृशते नान्द्ये मुदे यदीं गच्छन्त्युशतीरपिष्ठितम् ॥४॥

स ईं मृगो अप्यो वनर्गुरुप त्वच्युपमस्यां नि धायि ।

व्यब्रवीद्वयुना मर्त्येभ्योऽग्निर्विद्वाँ ऋतचिद्धि सत्यः ॥५॥

## सायणभाष्यम्

' तं पृच्छत ' इति पञ्चर्चं पञ्चमं सूक्तम् ।
अत्रानुक्रमणिका-' तं पृच्छत पञ्चान्त्या त्रिष्टुप् इति ।
दीर्घतमा ऋषिः । पूर्वत्र ‘ आग्नेयं तु तत्' इत्युक्तत्वात्
इदमप्याग्नेयम् । अन्त्या त्रिष्टुप् ।
शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः ।
प्रातरनुवाकाश्विनशस्त्रयोरस्य विनियोग उक्तः ॥

तं पृंच्छता॒ स जंगामा॒ स वेंद॒ स चिंकि॒त्वाँ ईंयते॒ सा न्वींयते ।

तस्मिंन्त्संति प्र॒शिष॒स्तस्मिंन्नि॒ष्टय॒ः स वाजंस्य॒ शवंसः शु॒ष्मिण॒स्पतिः॑ ॥१

तम् । पृ॒च्छ॒त॒ । सः । ज॒गा॒म॒ । सः । वे॒द॒ । सः । चि॒कि॒त्वान् । ई॒य॒ते॒ । सः । नु । ई॒य॒ते॒ ।

तस्मिंन् । स॒न्ति॒ । प्र॒ऽशिषः॑ । तस्मिंन् । इ॒ष्टयः॑ । सः । वाजंस्य । शवंसः । शु॒ष्मिणः॑ । पतिः॑ ॥१

तम् । पृच्छत । सः । जगाम । सः । वेद । सः । चिकित्वान् । ईयते । सः । नु । ईयते ।

तस्मिन् । सन्ति । प्रऽशिषः । तस्मिन् । इष्टयः । सः । वाजस्य । शवसः । शुष्मिणः । पतिः ॥१

हे यजमानाः “तम् अग्निं “पृच्छत । यत्स्वर्गादिविषयं प्रष्टव्यमस्ति तत् । तस्यैव प्रष्टव्यत्वे अतिशयमाह । “स “जगाम स सर्वत्र गच्छति । अत एव “स "वेद स च प्रष्टव्यं जानाति । किमितरसाधारण्येन नेत्याह । “स “चिकित्वान् स एव चेतनावान् । स विशेषज्ञ इत्यर्थः । सः एव “ईयते ज्ञेयसकाशं गच्छति । पुनर्गतिरेव विशेष्यते । “सः सोऽग्निरेव “नु क्षिप्रम् “ईयते । यत् यजमानस्य ज्ञेयमस्ति तमर्थं ज्ञातुं शीघ्रमेव गच्छतीत्यर्थः । यद्वा । ज्ञानार्थम् ईयते सेव्यते । तथा शीघ्रमनुसेव्यते । यस्मादयमुक्तरूपः तस्मात्तमेव पृच्छतेत्यर्थः । तत्र अपेक्षिताः कामाः सन्तीत्याह । “तस्मिन् अग्नौ “प्रशिषः प्रशासनानि नियमनसामर्थ्यानि “सन्ति । असाध्यं नियम्यापि साधयितुं शक्त इत्यर्थः । किंच “तस्मिन् एवाग्नौ “इष्टयः एष्टव्या भोगाः सर्वफलसाधका यागा वा सन्ति । किंच “सः अग्निः “वाजस्य अन्नस्य “शवसः बलस्य च "पतिः पालयिता दाता । किंच “शुष्मिणः बलवतो राजादेरपि

पतिः स्वामी । यस्मादयं महानुभावस्तस्मात्तमेव पृष्ट्वा पुरुषार्थं साधयतेति ॥

तमित्पृंच्छंति॒ न सि॒मो वि पृंच्छति॒ स्वेनेंव॒ धीरो॒ मनंसा॒ यदग्रंभीत् ।

न मृंष्यते प्रथ॒मं नापंरं॒ वचो॒ऽस्य क्रत्वां सचते॒ अप्रंदृपितः ॥२

तम् । इत् । पृ॒च्छ॒न्ति॒ । न । सि॒मः । वि । पृ॒च्छ॒ति॒ । स्वेनंऽव । धीरः॑ । मनंसा । यत् । अग्रंभीत् ।

न । मृ॒ष्य॒ते॒ । प्र॒थ॒मम् । न । अपंरम् । वचः॑ । अ॒स्य । क्रत्वां । स॒च॒ते॒ । अप्रंऽदृपितः ॥२

तम् । इत् । पृच्छन्ति । न । सिमः । वि । पृच्छति । स्वेनऽव । धीरः । मनसा । यत् । अग्रभीत् ।

न । मृष्यते । प्रथमम् । न । अपरम् । वचः । अस्य ।
क्रत्वा । सचते । अप्रऽदृपितः ॥२

पूर्वमन्त्रेऽग्निं पृच्छतेत्युक्तम् । अत्र तु सोऽनुनयेन प्रष्टव्यः इत्याह । “तमित् तमेवाग्निं “पृच्छन्ति स तु नान्यं पृच्छति प्रश्नसमयेऽपि । “सिमः सर्वजनः “न “वि “पृच्छति विपरीतं न पृच्छति । पृष्टोऽपि “धीरः धीमानयं “स्वेनेव "मनसा । इवशब्दः एवार्थे । स्वकीययैव बुद्ध्या “यत् यत्कार्यम् “अग्रभीत् वदामीत्यादत्ते तदेव प्रतिब्रूते न तु प्रश्नानुकूलम् । स्वतन्त्रेश्वर इत्युक्तं भवति । यद्वा । प्रष्टा धीमान् स्वेन मनसा वाचा वाच्यं विचार्य यदग्रभीत् यद्वाक्यं वक्तव्यत्वेन स्वीकुर्यात् तदेवाग्निं पृच्छति न तु बहु भाषते इत्यर्थः । परवाक्यासह्यत्वमाह । अयमग्निः “प्रथमं “वचः स्ववाक्यात्पूर्वभावि वचनं “न "मृष्यते न सहते । तथा अपरं वचः स्वोक्त्यनन्तरभावि प्रतिवचनं “न मृष्यते । यस्मादयमेवंविधस्तस्मात् "अप्रदृपितः अप्रदृप्तः

यद्वा तेन शिक्षितोऽनुद्दण्डः सर्वो लोकः “अस्य महानुभावस्याग्नेः “क्रत्वा क्रतुना रक्षणादिकर्मणा सह “सचते संगच्छते जीवतीत्यर्थः ।।

तमिद्ग॑च्छंति जु॒ह्व१॒॑स्तमर्व॑ती॒र्विश्वा॒न्येकः॑ शृणव॒द्वचां॑सि मे ।

पु॒रु॒प्रै॒षस्ततु॑रिर्यज्ञ॒साध॒नोऽच्छि॑द्रोतिः॒ शिशु॒राद॑त्त॒ सं रभः॑ ॥ ३

तम् । इत् । ग॒च्छ॒न्ति॒ । जु॒ह्वः॑ । तम् । अर्व॑तीः । विश्वा॑नि । एकः॑ । शृ॒ण॒व॒त् । वचां॑सि । मे॒ ।

पु॒रु॒ऽप्रै॒षः । त॒तु॑रिः । य॒ज्ञ॒ऽसाध॑नः । अच्छि॑द्रऽऊतिः । शिशुः॑ । आ । अ॒द॒त्त॒ । सम् । रभः॑ ॥३

तम् । इत् । गच्छन्ति । जुह्वः । तम् । अर्वतीः । विश्वानि । एकः । शृणवत् । वचांसि । मे ।

पुरुऽप्रैषः । ततुरिः । यज्ञऽसाधनः । अच्छिद्रऽऊतिः ।
शिशुः । आ । अदत्त । सम् । रभः ॥३

"जुह्वः अस्मदीया जुहूपभृदादयः “तमित् तमेवोद्दिश्य
आज्यपूर्णाः सत्यः गच्छन्ति प्रीणयितुम् । यद्वा । हूयन्ते
इति जुह्वः आहुतयः सोमादिरूपाः । अथवा जुह्वादिषु
स्थितानि आज्यानि अपि आश्रयाश्रयिणोः अभेदेन जुह्वः
इत्युच्यन्ते ' मञ्चाः क्रोशन्ति' इतिवत् । ता अपि तमेव
गच्छन्ति अस्य सर्वदेवतात्मकत्वात् । अत्रैव
इतरदेवतार्थमपि हूयमानं च इति भावः। किंच “अर्वतीः
प्राप्तिमत्यः स्तुतयः “तम् इत् तमैवाग्निं गच्छन्ति
सर्वदेवतात्मकत्वादेव । सः एव “एकः अयमग्निः
“विश्वानि “मे मदीयानि “वचांसि स्तोत्ररूपाणि “शृणवत्
शृणोति । अग्नेः सर्वदेवतात्मकत्वं तैत्तिरीया आहुः-’ ते
देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवताः'
(तै. सं. ६. २. २. ६ ) इति । तथा अत्रैव

पुरस्तादाम्नास्यते- त्वमग्ने वरुणो जायसे यत्त्वं मित्रः ' ( ऋ. सं. ५. ३. १ ) इत्यादि । कोऽस्य विशेषः इत्युच्यते । “पुरुप्रैषः बहुप्रैषभाक् । यद्वा । बहुप्रेषणः । सर्वस्याज्ञापयितेत्यर्थः । “ततुरिः तारयिता । तरतेः अन्तर्भावितण्यर्थात् “ आदृगमहनः० ' इति किन्प्रत्ययः । ‘ बहुलं छन्दसि' इति उत्वम् ॥ “यज्ञसाधनः यज्ञसाधकः अग्न्यधीनत्वाद्यज्ञस्य । “अच्छिद्रोतिः अविच्छिन्नरक्षणः “शिशुः शिशुवत्प्रियकारी शोचयिता वा शत्रूणाम् । एवंभूतोऽग्निः “सं “रभः यज्ञादिसंरम्भवान् सन् “आदत्त आदत्ते हविरादिकं स्वीकरोति ॥

उ॒प॒स्थायं चरति॒ यत्स॒मारंत स॒द्यो जा॒तस्तंत्सार॒ युज्येंभिः ।

अ॒भि श्वा॒ंतं मृंशते ना॒ंद्यें मु॒दे यदी॒ं गच्छंत्युश॒तीरंपिष्ठि॒तं ॥४

उ॒प॒ऽस्थाय॑म् । च॒र॒ति॒ । यत् । स॒म्ऽआर॑त । स॒द्यः । जा॒तः । त॒त्सा॒र॒ । युज्ये॑भिः ।

अ॒भि । श्वा॒न्तम् । मृ॒श॒ते॒ । ना॒न्द्ये॑ । मु॒दे । यत् । ई॒म् । गच्छ॑न्ति । उ॒श॒तीः । अ॒पि॒ऽस्थि॒तम् ॥४

उपऽस्थायम् । चरति । यत् । सम्ऽआरत । सद्यः । जातः । तत्सार । युज्येभिः ।

अभि । श्वान्तम् । मृशते । नान्द्ये । मुदे । यत् । ईम् । गच्छन्ति । उशतीः । अपिऽस्थितम् ॥४

“यत् यदा अध्वर्युः “उपस्थायं “चरति उपस्थायोपस्थाय अनुतिष्ठति उत्पत्त्यनुकूलव्यापारं करोति । कदेत्याह । यत् “समारत समागच्छत मथनेन आविरभवत् ॥ ‘ समो गम्यृच्छि ' इति अर्तेः आत्मनेपदम् ॥ “सद्यः तदानीमेव “जातः उत्पन्नः सन् "युज्येभिः योक्तुं संबद्धुं समर्थैः फलैः

मिश्रयितुमर्हैस्तेजोभिर्वा युक्तः सन् “तत्सार अरण्योर्गूढः सन् चचार । यद्वा । युज्येभिरश्वैर्जातमात्रः एव सर्वत्र संचचार ॥ ‘ त्सर च्छद्मगतौ ' । लिटि णलि रूपम् ॥ एवं प्रवृद्धोऽयं “श्वान्तं श्रान्तं शान्तं वा यजमानं 'नान्द्ये नन्दनीये कर्मणि निमित्तभूते सति “मुदे तस्य संतोषाय "अभि "मृशते अभिमर्शनं करोति । फलप्रदानेनेति भावः । यथा लोके गुर्वादिः श्रान्तं शिष्यादिकं स्पृशति तद्वत् । कदेति चेत् उच्यते । “यत् यदा “अपिष्ठितं व्याप्य वर्तमानम् “ईम् एनमग्निम् "उशतीः कामयमाना आज्यधाराः स्तुतयो वा “गच्छन्ति प्राप्नुवन्ति तदा अभि मृशते ॥

स ईं मृ॒गो अप्यों वन॒र्गुरुपं त्व॒च्युंप॒मस्यां॒ नि धांयि ।

व्यंब्रवीद्व॒युना॒ मर्त्येंभ्यो॒ऽग्निर्वि॒द्वाँ ऋ॒त॒चिद्धि स॒त्यः ॥५

सः । ई॒म् । मृ॒गः । अप्यः॑ । व॒न॒र्गुः । उप॑ । त्व॒चि ।
उ॒प॒ऽमस्या॒म् । नि । धा॒यि॒ ।

वि । अ॒ब्र॒वी॒त् । व॒युना॑ । मर्त्ये॑भ्यः । अ॒ग्निः । वि॒द्वान् ।
ऋ॒त॒ऽचित् । हि । स॒त्यः ॥५

सः । ईम् । मृगः । अप्यः । वनर्गुः । उप । त्वचि ।
उपऽमस्याम् । नि । धायि ।

वि । अब्रवीत् । वयुना । मर्त्येभ्यः । अग्निः । विद्वान् ।
ऋतऽचित् । हि । सत्यः ॥५

“स “ईं स एवाग्निः “उपमस्याम् उपमायामुपमास्पदायां “त्वचि ओषध्यादिभिराच्छादितायाँ वेद्याम् “उप “नि “धायि उपस्थाप्यते उत्तरत्रोपभोगाय । कीदृशः सः। “मृगः मार्जयिता अन्वेषणशीलो वा । ‘मृगो मार्ष्टेर्गतिकर्मणः' (निरु. १.२०) इति यास्कः । “अप्यः आप्यो गन्तव्यः ।

अपः कर्म तत्र साधुर्वा। “वनर्गुः वनगामी ॥ ऋच्छतेर्गमेः च इदं रूपम् । यद्वा । गमेरेव । उपपदस्य रुडागमश्छान्दसः ॥ एवंभूतः अग्निः “मर्त्येभ्यः मरणधर्मभ्यो यजमानादिरूपेभ्यः वयुनानि प्रज्ञानानि अनुष्ठेयज्ञानानि “व्यब्रवीत् विशेषेण ब्रवीति उपदिशति । वयुनमिति प्रज्ञानाम, ‘ वयुनम् अभिख्या ' (नि. ३. ९. १०) इति तन्नामसु पाठात् । ईदृक् सामर्थ्यमस्तीति दर्शयति । अयम् “अग्निर्विद्वान् सर्वज्ञः “ऋतचित् यज्ञस्योदकस्य वा चेतिता ज्ञाता “सत्यः । सत् क्रियमाणं कर्म । तत्र साधुः । सत्सु भवो वा । सत् फलं तदर्हतीति वा । सम्यक्फलप्रद इत्यर्थः । यस्मादयमुक्तसामर्थ्योपेतः तस्मात् प्रज्ञोपदेशो युक्तः । हिशब्दः प्रसिद्धौ ॥ ॥ १४ ॥

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१४ १.४४ १.७४ १.१०४ १.१३४ १.१६४

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१५ १.४५ १.७५ १.१०५ १.१३५ १.१६५

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१६ १.४६ १.७६ १.१०६ १.१३६ १.१६६

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१७ १.४७ १.७७ १.१०७ १.१३७ १.१६७

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१८ १.४८ १.७८ १.१०८ १.१३८ १.१६८

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१९ १.४९ १.७९ १.१०९ १.१३९ १.१६९

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२० १.५० १.८० १.११० १.१४० १.१७०

# ऋग्वेदः सूक्तं १.१४६

← सूक्तं १.१४५

ऋग्वेदः - मण्डल १

सूक्तं १.१४६

दीर्घतमा औचथ्यः

सूक्तं १.१४७ →

## दे. अग्निः । त्रिष्टुप्

---

त्रिमूर्धानं सप्तरश्मिं गृणीषेऽनूनमग्निं पित्रोरुपस्थे ।

निषत्तमस्य चरतो ध्रुवस्य विश्वा दिवो रोचनापप्रिवांसम् ॥१॥

उक्षा महाँ अभि ववक्ष एने अजरस्तस्थावितऊतिरृष्वः ।

उर्व्याः पदो नि दधाति सानौ रिहन्त्यूधो अरुषासो अस्य ॥२॥

समानं वत्समभि संचरन्ती विष्वग्धेनू वि चरतः सुमेके ।

अनपवृज्याँ अध्वनो मिमाने विश्वान्केताँ अधि महो दधाने ॥३॥

धीरासः पदं कवयो नयन्ति नाना हृदा रक्षमाणा अजुर्यम् ।

सिषासन्तः पर्यपश्यन्त सिन्धुमाविरेभ्यो अभवत्सूर्यो नॄन् ॥४॥

दिदृक्षेण्यः परि काष्ठासु जेन्य ईळेन्यो महो अर्भाय जीवसे ।

पुरुत्रा यदभवत्सूरहैभ्यो गर्भेभ्यो मघवा विश्वदर्शतः ॥५॥

## सायणभाष्यम्

‘ त्रिमूर्धानम्' इति पञ्चर्चं षष्ठं सूक्तं दैर्घतमसम् आग्नेयम्, पूर्वत्र आग्नेयं तु तत् ' इत्युक्तत्वात् । ‘ त्रिमूर्धानम्' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि इदमादिसूक्तत्रयस्य विनियोगः । ‘ अथैतस्याः ' इति खण्डे सूत्रितं- त्रिमूर्धानमिति त्रीणि ' ( आश्व. श्रौ. ४. १३) इति ॥

त्रि॒मू॒र्धानं॑ स॒प्तर॑श्मिं गृणी॒षेऽनू॑नम॒ग्निं पि॒त्रोरु॒पस्थे॑ ।

नि॒ष॒त्तम॑स्य॒ चर॑तो ध्रु॒वस्य॒ विश्वा॑ दि॒वो रो॑च॒नाप॑प्रि॒वांसं॑ ॥१

त्रि॒ऽमू॒र्धानं॑म् । स॒प्तऽर॑श्मिम् । गृ॒णी॒षे॒ । अनू॑नम् । अ॒ग्निम् । पि॒त्रोः । उ॒पऽस्थे॑ ।

नि॒ऽस॒त्तम् । अ॒स्य॒ । चर॑तः । ध्रु॒वस्य॑ । विश्वा॑ । दि॒वः । रो॒च॒ना । आ॒प॒प्रि॒ऽवांसं॑म् ॥१

त्रिऽमूर्धानम् । सप्तऽरश्मिम् । गृणीषे । अनूनम् । अग्निम् । पित्रोः । उपऽस्थे ।

निऽसत्तम् । अस्य । चरतः । ध्रुवस्य । विश्वा । दिवः । रोचना । आपप्रिऽवांसम् ॥१

अनया अग्निर्यज्ञरूपेण स्तूयते । “त्रिमूर्धानं सवनत्रयरूपमूर्धत्रयोपेतम् ॥ ‘ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ' इत्युत्तरपदान्तोदात्तत्वम् ॥ किंच सप्तरश्मिं नियामकसप्तच्छन्दोयुक्तम् “अनूनम् अविकलं संपूर्णफलम् “अग्निम् अग्निसाध्यम् अङ्गनादिगुणयुक्तं वा “पित्रोरुपस्थे द्यावापृथिव्योरुत्सङ्गे “निषत्तं निषण्णम् । मध्ये वर्तमानमित्यर्थः । भूमिस्थद्रव्येण द्युलोकस्थदेवताभिश्च साध्यत्वादिति यावत् । किंच “ध्रुवस्य निश्चलस्य “चरतः हविर्भक्षयतः “अस्य अग्नेः संबन्धिनं यज्ञं “दिवः द्युलोकादागतानि विश्वानि रोचनानि देवविमानानि “आपप्रिवांसं सर्वतः पूरयितारं “गृणीषे गृणीहि स्तुहि । यद्वा अयमग्निरेवोच्यते । त्रिमूर्धवदत्र क्षित्यन्तरिक्षद्युलोकाख्यस्थानत्रयोपेतम् । लोकत्रयव्याप्तमित्यर्थः । गार्हपत्यादिस्थानत्रयवर्तिनं वा । सप्तरश्मिं सप्तज्वालम् अनूनम् अन्यूनं पित्रोः द्यावापृथिव्योरुपस्थे उत्सङ्गे निषत्तम् ॥ ‘ नसत्तनिषत्त° '

इति निपातनात् निष्ठानत्वाभावः ॥ निषण्णम् आपप्रिवांसं सर्वतः पूरयन्तं कामानाम् उक्तलक्षणविशिष्टमग्निं गृणीषे गृणीहि स्तुहि । किंच चरतः सर्वत्र ज्वालाभिर्गच्छतो ध्रुवस्य धृतत्वात अविचलितस्य दिवो द्योतमानस्य अस्य अग्नेः विश्वा सर्वाणि रोचना रोचमानानि तेजांसि सर्वत्र व्याप्नुवन्तीति शेषः । ईदृशमग्निं स्तुहि इति अन्तरात्मनः प्रैषः ।।

उ॒क्षा म॒हाँ अ॒भि व॑वक्ष एने अ॒जर॑स्तस्थावि॒तऊ॑तिर्ऋ॒ष्वः ।

उ॒र्व्याः प॒दो नि द॑धाति॒ सानौ॑ रि॒ह॑त्यूधो॑ अरु॒षासो॑ अस्य ॥ २

उ॒क्षा । म॒हान् । अ॒भि । व॒व॒क्षे॒ । ए॒ने॒ इति॑ । अ॒जरः॑ । त॒स्थौ॒ । इ॒तःऽऊ॑तिः । ऋ॒ष्वः ।

उ॒र्व्याः । प॒दः । नि । द॒धा॒ति॒ । सानौ॑ । रि॒हन्ति॑ । ऊधः॑ ।
अ॒रु॒षासः॑ । अ॒स्य॒ ॥२

उक्षा । महान् । अभि । ववक्षे । एने इति । अजरः । तस्थौ
। इतःऽऊतिः । ऋष्वः ।

उर्व्याः । पदः । नि । दधाति । सानौ । रिहन्ति । ऊधः ।
अरुषासः । अस्य ॥२

“उक्षा सेक्ता । फलप्रदानसमर्थः इत्यर्थः । अत एव “महान्
महिम्ना स्वरूपेण उद्धृत्तवृषभसदृशः अयमग्निः “एने
द्यावापृथिव्यौ “अभि अभिक्रम्य व्याप्य “ववक्षे वहति
व्याप्नोतीत्यर्थः। वहतेर्लेटि छान्दसः शपः श्लुः । ‘ लोपस्त
आत्मनेपदेषु ' इति तलोपः । ‘ सिब्बहुलम्' इति सिप् ॥
वृष्ट्यादिप्रदानेन हविर्वहनेन च लोकद्वयस्य वासिनः
देवान् मनुष्यांश्च रक्षतीत्यर्थः । किंच अयम् “अजरः
जरारहितः “ऋष्वः महान् पूज्यः । महन्नामैतत् ।' ऋष्वः

उक्षः ' (नि. ३. ३. ३ ) इति तन्नामसु पाठात् । तथा
“इतऊतिः प्राप्तरक्षणः सन् “तस्थौ स्थितो वर्तते । यद्वा ।
उक्तगुणोऽयम् इतऊतिः इत एवं गमनवान्
अस्मद्देवयजनाभिमुखगमनवान् तस्थौ वर्तते । तदनन्तरम्
“उर्व्या विस्तृताया भूम्याः “सानौ समुच्छ्रिते प्रदेशे
वेदिलक्षणे "पदो "नि “दधाति पदानि स्थापयति करोति ।
किंच “अस्य अग्नेः “अरुषासः अरुषा आरोचनाः “ऊधः
ऊधःस्थानीयमन्तरिक्षं “रिहन्ति लिहन्ति । यद्वा । अस्य
ऊधः ऊधः स्थानीयं यज्ञमरुषास आरोचनाः ब्रह्मवर्चसेन
यजमाना रिहन्ति अभिमतस्वर्गादीनि लिहन्ति ।

स॒मा॒नं व॒त्सम॒भि सं॒चरंती॒ विष्वंग्धे॒नू वि चंरतः सु॒मेकें ।

अ॒न॒प॒वृ॒ज्याँ अध्वंनो॒ मिमांने॒ विश्वा॒न्केताँ॒ अधिं म॒हो दधांने
॥३

स॒मा॒नम् । व॒त्सम् । अ॒भि । स॒ञ्चर॑न्ती॒ इति॑ स॒म्ऽचर॑न्ती ।
विष्व॑क् । धे॒नू इति॑ । वि । च॒र॒तः॒ । सु॒मेके॒ इति॑ सु॒ऽमेके॑ ।

अ॒न॒प॒ऽवृ॒ज्यान् । अध्व॑नः । मि॒मा॑ने॒ इति॑ । विश्वा॑न् ।
केता॑न् । अधि॑ । म॒हः । दधा॑ने॒ इति॑ ॥३

समानम् । वत्सम् । अभि । सञ्चरन्ती इति सम्ऽचरन्ती ।
विष्वक् । धेनू इति । वि । चरतः । सुमेके इति सुऽमेके ।

अनपऽवृज्यान् । अध्वनः । मिमाने इति । विश्वान् ।
केतान् । अधि । महः । दधाने इति ॥३

“समानम् एकमेव “वत्सं वत्सस्थानीयं पुत्रवत् हर्षहेतुम् अग्निम् अभिमुखं “संचरन्ती संचरन्त्यौ द्वे “धेनू अग्निहितकरणेन प्रीणयित्र्यौ पत्नीयजमानलक्षणे धेनू “विष्वक् “वि “चरतः संचरतः । स्तनपानादिसदृशेन्धनप्रक्षेपसंमार्जनादिना सम्यग्वर्धयतः

इत्यर्थः । कीदृश्यौ ते “सुमेके शोभनकर्माणौ शोभनमेहने वा परिचरणकुशले इत्यर्थः । किंच "अनपवृज्यान् अपवर्जनीयरहितान् ॥ ‘ नञ्सुभ्याम् । इत्युत्तरपदान्तोदात्तत्वम् ॥ “अध्वनः मार्गान् अग्नेः प्रान्तप्रदेशान् केशाद्यमेध्यरहितान् “मिमाने संपादयित्र्यौ । किंच “विश्वान्केतान् सर्वाणि प्रज्ञानानि प्रवर्धनविषयाणि "महः महान्ति “अधि अधिकं “दधाने धारयन्त्यौ। ईदृश्यौ अध्वर्युयजमानरूपे जायापतिरूपे वा धेनू विश्वग्विचरतः ॥

धीरा॑सः प॒दं क॒वयो॑ नयंति॒ नाना॑ हृ॒दा रक्ष॑माणा अजु॒र्यं ।

सिषा॑संतः॒ पर्य॑पश्यंत॒ सिंधु॑मा॒विरे॑भ्यो अभव॒त्सूर्यो॒ नॄन् ॥४

धीरा॑सः । प॒दम् । क॒वयः॑ । न॒य॒न्ति॒ । नाना॑ । हृ॒दा । रक्ष॑माणाः । अ॒जु॒र्यम् ।

सिसा॑सन्तः । परि॑ । अ॒प॒श्य॒न्त॒ । सिन्धु॑म् । आ॒विः । ए॒भ्य॒ः । अ॒भ॒व॒त् । सूर्यः॑ । नॄन् ॥४

धीरासः । पदम् । कवयः । नयन्ति । नाना । हृदा । रक्षमाणाः । अजुर्यम् ।

सिसासन्तः । परि । अपश्यन्त । सिन्धुम् । आविः । एभ्यः । अभवत् । सूर्यः । नॄन् ॥४

“धीरासः धीरा धीमन्तः प्रयोगज्ञा अध्वर्वादयः “अजुर्यम् अजर्यम् अजीर्णम् एनमग्निं “पदं स्थानं वेदिलक्षणं “नयन्ति प्रापयन्ति मथनदेशात् गार्हपत्याद्वा । अथवा वक्ष्यमाणलक्षणा यजमानादयः पदमास्पदं सर्वकामानाम् आस्पदम् एनं गमयन्ति। कीदृशास्ते । "कवयः क्रान्तदर्शिनो मेधाविनः अनूचाना वा । ये वा अनूचानास्ते कवयः' (ऐ. ब्रा. २. २ ) इति श्रुतेः । किंच “नाना “हृदा बहुप्रकारया बुद्ध्या “रक्षमाणाः धारयमाणाः । किंच

एवंरूपास्ते “सिन्धुं स्यन्दमानं यज्ञद्वारा फलानि स्रवन्तम् अग्निं “सिषासन्तः संभक्तुमिच्छन्तः। सनतेः सनि ‘ सनीवन्तर्ध°' इति विकल्पनात् इडभावः । ‘ जनसनखनाम् ' इति आत्वम् ॥ "पर्यपश्यन्त परितः पश्यन्ति । शुश्रूषन्त इत्यर्थः । किंच “सूर्यः सर्वस्य प्रसविता अयमग्निः “एभ्यः एवं कुर्वद्यःश “नॄन् नृभ्यो नेतृभ्यः “आविः “अभवत् तेषामनुग्रहेण प्रत्यक्षोऽभवत् ॥ नॄनित्यत्र वचनव्यत्ययः॥ नॄन् प्राणिनोऽनुग्रहीतुमिति वा योज्यम् ।।

दि॒दृ॒क्षेण्य॒ः परि॒ काष्ठा॑सु॒ जेन्यं॒ ई॒ळेन्यो॑ म॒हो अर्भा॑य जी॒वसे॑ ।

पु॒रु॒त्रा यदभ॑व॒त्सूरहै॑भ्यो॒ गर्भे॑भ्यो म॒घवा॑ वि॒श्वद॑र्शतः ॥५

दि॒दृ॒क्षेण्यः॑ । परि॑ । काष्ठा॑सु । जेन्यः॑ । ई॒ळेन्यः॑ । म॒हः ।
अर्भा॑य । जी॒वसे॑ ।

पु॒रु॒ऽत्रा । यत् । अभ॑वत् । सूः । अह॑ । ए॒भ्य॒ः । गर्भे॑भ्यः ।
म॒घऽवा॑ । वि॒श्वऽद॑र्शतः ॥५

दिदृक्षेण्यः । परि । काष्ठासु । जेन्यः । ईळेन्यः । महः ।
अर्भाय । जीवसे ।

पुरुऽत्रा । यत् । अभवत् । सूः । अह । एभ्यः । गर्भेभ्यः ।
मघऽवा । विश्वऽदर्शतः ॥५

अयमग्निः “काष्ठासु परस्परं क्रान्त्वा वर्तमानासु दशसु
दिक्षु “दिदृक्षेण्यः। अनुग्रहयुक्त्या दर्शनयुक्तः भवति ।
यद्वा । द्रष्टुमेष्टव्यो दर्शनेच्छाविषयभूतः ।। दृशेः सनन्तात्
कृत्यार्थे तवैकेन्केन्य० इति केन्यप्रत्ययः । अत एव
“जेन्यः सर्वत्र प्रादुर्भवनशीलो भवति जयशीलो वा । किंच

प्रदानसमये “ईळेन्यः स्तुत्यो भवति । किमर्थमेवम् । “महः महतो देवादेः “अर्भाय अर्भकस्याल्पस्य यजमानादेर्वा “जीवसे जीवनाय । हविर्वहनेन धनप्रदानेन इति विवेकः । तत्रोपपत्तिमाह । “यत् “अह यस्मात् खलु “पुरुत्रा बहुषु देशेषु ॥ ‘ देवमनुष्य°' इत्यादिना त्राप्रत्ययः ॥ “मघवा हविर्लक्षणान्नवान् “विश्वदर्शतः सर्वविषयद्रष्टव्यवानयमग्निः “एभ्यो “गर्भेभ्यः ॥ षष्ठ्यर्थे चतुर्थी ॥ एषामृत्विजां गर्भवच्छिशुवदत्यन्तरक्षणीयानां “सूः “अभवत् प्रसविता उत्पादयिता अभवत् भवति । तस्मात् नाना हृदा रक्षमाणाः कवयः पदं नयन्तीति पूर्वत्र संबन्धः ॥ ॥ १५ ॥

# ऋग्वेदः सूक्तं १.१४७

← सूक्तं १.१४६

ऋग्वेदः - मण्डल १

सूक्तं १.१४७

दीर्घतमा औचथ्यः

सूक्तं १.१४८ →

## दे. अग्निः। त्रिष्टुप्।

---

कथा ते अग्ने शुचयन्त आयोर्ददाशुर्वाजेभिराशुषाणाः ।

उभे यत्तोके तनये दधाना ऋतस्य सामन्रणयन्त देवाः ॥१॥

बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।

पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने ॥२॥

ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।

ररक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥३॥

यो नो अग्ने अररिवाँ अघायुररातीवा मर्चयति द्वयेन ।

मन्त्रो गुरुः पुनरस्तु सो अस्मा अनु मृक्षीष्ट तन्वं दुरुक्तैः ॥४॥

उत वा यः सहस्य प्रविद्वान्मर्तो मर्तं मर्चयति द्वयेन ।

अतः पाहि स्तवमान स्तुवन्तमग्ने माकिर्नो दुरिताय धायीः ॥५॥

## सायणभाष्यम्

‘ कथा ते ' इति पञ्चर्चं सप्तमं सूक्तं दैर्घतमसमाग्नेयं त्रैष्टुभम् । 'कथा' इत्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोरस्य सूक्तस्य विनियोगः ' त्रिमूर्धानमिति त्रीणि ' इत्यनेनोक्तः ॥

क॒था तें अग्ने शु॒चयंत आ॒योर्द॑दा॒शुर्वाजेंभिराशुषा॒णाः ।

उ॒भे यत्तो॒के तन॑ये॒ दधा॑ना ऋ॒तस्य॒ साम॑न्र॒णय॑न्त दे॒वाः ॥१

क॒था । ते॒ । अ॒ग्ने॒ । शु॒चय॑न्तः । आ॒योः । द॒दा॒शुः ।
वाजे॑भिः । आ॒शु॒षा॒णाः ।

उ॒भे इति॑ । यत् । तो॒के इति॑ । तन॑ये । दधा॑नाः । ऋ॒तस्य॑ ।
साम॑न् । र॒णय॑न्त । दे॒वाः ॥१

कथा । ते । अग्ने । शुचयन्तः । आयोः । ददाशुः ।
वाजेभिः । आशुषाणाः ।

उभे इति । यत् । तोके इति । तनये । दधानाः । ऋतस्य ।
सामन् । रणयन्त । देवाः ॥१

हे “अग्ने “ते तव संबन्धिनो रश्मयः “शुचयन्तः दीप्तिं
सर्वत्र चक्षाणाः प्रकटयन्तः “आशुषाणाः आशु शीघ्रं
संभक्तारः आशून संभक्तारो वा । वाय्वादेरपि शीघ्रं
संभक्तार इत्यर्थः । यद्वा । समन्तात् शोषयितारः । यद्वा ।

सर्वं व्याप्नुवन्तः । अश्नोतेर्लिटः कानच् । व्यत्ययेन उप्रत्ययः सिच् च इति द्विविकरणता । आङ्पूर्वात् अन्तर्भावितण्यर्थात् शुषेः शानचि छान्दसः शपो लुक् । आशुशब्दोपपदात् सनतेः कर्मणि अण् ।। ईदृशा रश्मयः "वाजेभिः अन्नैः सहितम् "आयोः आयुरायुष्यम् ॥ कर्मणि षष्ठी ॥ "कथा केनोपायेन "ददाशुः ददति ।। 'दा दाने'। छान्दसो लिट् । तमुपायमनुगृहाणेत्यर्थः । रश्मीनां वरप्रदानं कुत्र दृष्टमिति चेत् उच्यते । "यत् यस्मात् "उभे उक्ते अन्नायुषी "तोके पुत्रे "तनये अनवच्छेदेन' कुटुम्बस्य विस्तारके। यद्वा। तोके पुत्रे तनये तत्पुत्रादौ च। "दधानाः धारयन्तः "देवाः व्यवहर्तारो यजमानाः "ऋतस्य यज्ञस्य संबन्धिनि "सामन् साम्नि रथन्तरादौ "रणयन्त रमन्ते रमयन्ति शब्दयन्त्येव वा । यस्मात् अन्नायुष्पुत्रादिसहिताः सोमेनेष्वात साम्नि रमन्ते तस्मात् रश्मयो ददतीत्यवगम्यते इत्यर्थः । तादृशांस्त्वदीयान् रश्मीन् मामपि अनुगृहाणेत्यर्थः ।।

बोधा॑ मे अ॒स्य वच॑सो यविष्ठ॒ मंहि॑ष्ठस्य॒ प्रभृ॑तस्य स्वधावः ।

पीय॑ति त्वो॒ अनु॑ त्वो गृणाति वं॒दारु॑स्ते त॒न्वं॑ वंदे॑ अग्ने ॥२

बोध॑ । मे॒ । अ॒स्य । वच॑सः । य॒वि॒ष्ठ॒ । मंहि॑ष्ठस्य ।
प्रऽभृ॑तस्य । स्व॒धा॒ऽवः॒ ।

पीय॑ति । त्वः॒ । अनु॑ । त्वः॒ । गृ॒णा॒ति॒ । व॒न्दारुः॑ । ते॒ ।
त॒न्व॑म् । व॒न्दे॒ । अ॒ग्ने॒ ॥२

बोध । मे । अस्य । वचसः । यविष्ठ । मंहिष्ठस्य ।
प्रऽभृतस्य । स्वधाऽवः ।

पीयति । त्वः । अनु । त्वः । गृणाति । वन्दारुः । ते ।
तन्वम् । वन्दे । अग्ने ॥२

हे “यविष्ठ युवतम हे “स्वधावः हविर्लक्षणान्नेन तद्वन्नग्ने “मे मदीयस्य “मंहिष्ठस्य अतिशयेन पूजनीयस्य “प्रभृतस्य प्रकर्षेण संपादितस्य “अस्य इदानीं क्रियमाणस्य “वचसः स्तुतिरूपस्य वचनस्य ।। कर्मणि षष्ठी ।। उक्तलक्षणं वचः “बोध बुध्यस्व स्तुतो भवेत्यर्थः । हे अग्ने लोके “त्वः । अत्र यास्कः ‘त्वो नेम इत्यर्धस्य ' (निरु. ३. २०) इत्युक्त्वा एतदेवोदाजहार । एको जनः “पीयति। वधकर्मैतत् । हिनस्ति । यज्ञादिना न पूजयतीत्यर्थः । “त्वः एकः “अनु “गृणाति अनुकूलम् उच्चारयति । तयोर्मध्ये हे “अग्ने “वन्दारुः वन्दनशीलोऽहं “ते तव “तन्वं तनुं तव मूर्तिं “वन्दे स्तौमि ।।

ये पा॒यवो॑ मामते॒यं ते॑ अग्ने॒ पश्यं॑तो अ॒ंधं दु॑रि॒तादरं॑क्षन् ।

र॒रक्ष॒ तान्त्सु॒कृतो॑ वि॒श्ववे॑दा॒ दिप्सं॑त॒ इद्रि॒पवो॒ नाहं॑ देभुः ॥३

ये । पा॒यवः॑ । मा॒म॒ते॒यम् । ते॒ । अ॒ग्ने॒ । पश्य॑न्तः । अ॒न्धम् । दुः॒ऽइ॒तात् । अर॑क्षन् ।

र॒रक्ष॑ । तान् । सु॒ऽकृतः॑ । वि॒श्वऽवे॑दाः । दिप्स॑न्तः । इत् । रि॒पवः॑ । न । अह॑ । दे॒भुः॒ ॥३

ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् । दुःऽइतात् । अरक्षन् ।

ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः । दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥३

अत्रेतिहासमाचक्षते । उचथ्यबृहस्पतिनामानौ द्वौ ऋषी आस्ताम् । तत्र उचथ्यस्य ममता नाम भार्या । सा च गर्भिणी । तां बृहस्पतिर्गृहीत्वा अरमयत् । शुक्रनिर्गमनावसरे प्राप्ते गर्भस्थं रेतः प्रवादीत् हे मुने रेतो मा त्याक्षीः पूर्वमहं वसामि रेतःसंकरं मा कार्षीः इति ।

एवमुक्तो बृहस्पतिः बलात् प्रतिरुद्धरेतस्कः सन् शशाप । हे गर्भ एवं यतो रेतोनिरोधमकरोः अतस्त्वं दीर्घं तमः प्राप्नुहि जात्यन्धो भवेति । एवं शप्तो ममतायां दीर्घतमा अजायत । स चोत्पन्नः तमोव्यथया अग्निमस्तौषीत् । स च स्तुत्या प्रीतः आन्ध्यं पर्यहरदिति । तददिदमत्रोच्यते । हे "अग्ने "ते तव संबन्धिनः "ये "पायवः प्रसिद्धाः पालयितारो रश्मयः "मामतेयं ममतायाः पुत्रं दीर्घतमसम् "अन्धं "पश्यन्तः अन्धोऽयम् अतोऽस्माभिः रक्षणीयः इति अवगच्छन्तः सन्तः "दुरितात् दुष्टं प्राप्ताद्दुःखत् "अरक्षन "तान "सुकृतः सुखकर्तॄन "विश्ववेदाः विश्वप्रज्ञः "ररक्ष रक्षति। अस्मत्पालनायेति भावः । तैः अस्मानपि रक्षिष्यतीत्यर्थः । एवं रक्षितानस्मान् "दिप्सन्तः दम्भितुमिच्छन्तः "रिपवः कामादयः "नाह "देभुः । अहेति विनिग्रहार्थीयः । न खलु दम्भितुं शक्नुवन्ति ॥ ' दम्भु दम्भे । श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्' (का. १. २. ६. १) इति लिटः कित्त्वात् " अनिदिताम्' इति

नलोपः । तस्य असिद्धत्वात् एत्वाभ्यासलोपयोरप्राप्तौ दम्भेश्चेति वक्तव्यम्' (पा. सू. ६. ४. १२०. ४ ) इति तौ विधीयेते ॥ यद्वा । सूक्तद्रष्टा दीर्घतमाः स्वयमेव आत्मानं परोक्षतया ब्रवीति ॥

यो नों अग्ने॒ अरं॑रिवाँ अघा॒युरं॑राती॒वा म॒र्चयं॑ति द्व॒येनं॑ ।

मंत्रों गु॒रुः पुनं॑रस्तु॒ सो अं॑स्मा॒ अनुं मृक्षीष्ट त॒न्वं॑ दुरु॒क्तैः ॥४

यः । न॒ः । अ॒ग्ने॒ । अरं॑रिऽवान् । अ॒घ॒ऽयुः । अ॒रा॒ति॒ऽवा । म॒र्चयं॑ति । द्व॒येनं॑ ।

मन्त्रः॑ । गु॒रुः । पुनः॑ । अ॒स्तु॒ । सः । अ॒स्मै॒ । अनुं । मृ॒क्षी॒ष्ट॒ । त॒न्वं॑म् । दुः॒ऽउ॒क्तैः ॥४

यः । नः । अग्ने । अररिऽवान् । अघऽयुः । अरातिऽवा । मर्चयति । द्वयेन ।

मन्त्रः । गुरुः । पुनः । अस्तु । सः । अस्मै । अनु । मृक्षीष्ट । तन्वम् । दुःऽउक्तैः ॥४

हे “अग्ने “नः अस्मान् युष्मद्रक्षितान् “यः "अघायुः मारणादिरूपपापेच्छावान् “अररिवान् अदाता अस्मद्दानप्रतिबन्धकः इत्यर्थः ॥ रातेश्छान्दसस्य लिटः क्वसुः ।। “अरातीवा स्वयमदानवान् । ‘ छन्दसि वनिपमिच्छन्ति' इति मत्वर्थीयो वनिप्॥ शत्रुत्वमाचरन् यः शत्रुः “द्वयेन मानसवाचिकभेदेन द्विविधेन मन्त्रेण । न ददामीति मानसो मन्त्रः । निन्दाद्यारोपेण दाननिवारणं वाचिको मन्त्रः । यद्वा । मायाहेतुकेन विरुद्धरूपेण द्विविधेन मन्त्रेण । यो विरुद्धमाचरति तन्न संकीर्तयति यच्च प्रियं बूते तन्न करोति अन्यत् करोत्यन्यद्वदतीत्येवं मन्त्रस्वरूपद्वैविध्यम् । पूर्वं मानसवाचिकभेदेन इदानीं वाचिककायिकभेदेनेति विवेकः । ईदृशेन मन्त्रेण यः शत्रुः “मर्चयति भर्त्सयति विधेयीकरोति वा अस्मान् । “सः

मन्त्रैकदेशो मानसरूपः “अस्मै “पुनः “गुरुः “अस्तु ।। षष्ठ्यर्थे चतुर्थी ॥ प्रयोक्तुरेव पुनः गरितास्तु । तथा “दुरुक्तैः दुर्वाक्यैर्निन्दारूपैर्वाचिकैः “तन्वं स्वकीयां तनुम् “अनु “मृक्षीष्ट अनुमार्ष्टु अनुक्रमेण लुम्पतु । यद्वा । स द्विविधो मन्त्रः अस्मै प्रयोक्तुरेव गुरुर्गरितास्तु । अन्यान्यपि अस्मन्न्यक्काराय प्रयुक्तानि निष्ठुरभाषणानि सन्ति । तैर्दुरुक्तैः सोऽरातिः स्वतनुमेवावलुम्पतु । स्वात्मानमेवावृत्य दहत्वित्यर्थः ॥

उ॒त वा॒ यः सं॑हस्य प्रवि॒द्वान्मर्तो॒ मर्तं॑ म॒र्चयं॑ति द्व॒येनं॑ ।

अतः॑ पाहि स्तवमान स्तु॒वं॒त॒मग्ने॒ माकिं॑र्नो दुरि॒ताय॑ धायीः ॥५

उ॒त । वा॒ । यः । स॒ह॒स्य॒ । प्र॒ऽवि॒द्वान् । मर्तः॑ । मर्त॑म् । म॒र्चयं॑ति । द्व॒येनं॑ ।

अतः॑ । पा॒हि॒ । स्त॒व॒मा॒न॒ । स्तु॒वन्तं॑म् । अग्ने॑ । माकिः॑ । नः॒ । दुः॒ऽइ॒तायं॑ । धा॒यीः॒ ॥५

उत । वा । यः । सहस्य । प्रऽविद्वान् । मर्तः । मर्तम् । मर्चयति । द्वयेन ।

अतः । पाहि । स्तवमान । स्तुवन्तम् । अग्ने । माकिः । नः । दुःऽइताय । धायीः ॥५

पूर्वमन्त्रे द्विविधकुटिलमन्त्रेण कर्तारं तन्मन्त्रणं प्राप्नोतु मा अस्मान् इत्युक्तम् । अत्र तु तन्मन्त्रणात् पाहि इत्यग्निः प्रार्थ्यते । “उत “वा हे “सहस्य । सह इति बलनाम। तत्र भवाग्ने “यः “मर्त्यः मरणधर्मा मनुष्यः “प्रविद्वान् मायामन्त्रणं प्रकर्षेण जानन् “द्वयेन पूर्वोक्तरीत्या द्विविधमन्त्रेण “मर्तं मनुष्यं “मर्चयति विधेयीकरोति भर्त्सयति वा “अतः तादृशात् भर्त्सनात् तत्कर्तुः सकाशाद्वा हे “स्तवमान स्तूयमान “अग्ने “स्तुवन्तं स्तुतिं

कुर्वन्तं मां “पाहि रक्ष । किंच “नः अस्मान् “दुरिताय तत्कृताय दुर्मन्त्रणप्रयुक्तदुःखाय समर्थं “माकिः “धायीः मा स्थापय । दुरितभाजनं मा कार्षीः इत्यर्थः ॥ ‘ धि धारणे'। व्यत्ययेन इट् । सिचि वृद्धिः । ‘ न माङ्योगे' इति अडभावः ॥ ॥ १६ ॥

# मण्डल

## १

| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
|---|---|---|---|---|---|---|
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|
| १.२१ | १.५१ | १.८१ | १.१११ | १.१४१ | १.१७१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२२ | १.५२ | १.८२ | १.११२ | १.१४२ | १.१७२ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२३ | १.५३ | १.८३ | १.११३ | १.१४३ | १.१७३ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२४ | १.५४ | १.८४ | १.११४ | १.१४४ | १.१७४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२५ | १.५५ | १.८५ | १.११५ | १.१४५ | १.१७५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२६ | १.५६ | १.८६ | १.११६ | १.१४६ | १.१७६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२७ | १.५७ | १.८७ | १.११७ | १.१४७ | १.१७७ |

# ऋग्वेदः सूक्तं १.१४८

← सूक्तं १.१४७

**ऋग्वेदः - मण्डल १**

सूक्तं १.१४८

दीर्घतमा औचथ्यः

सूक्तं १.१४९ →

## दे. अग्निः। त्रिष्टुप्

मथीद्यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यम् ।

नि यं दधुर्मनुष्यासु विक्षु स्वर्ण चित्रं वपुषे विभावम् ॥१॥

ददानमिन्न ददभन्त मन्माग्निर्वरूथं मम तस्य चाकन् ।

जुषन्त विश्वान्यस्य कर्मोपस्तुतिं भरमाणस्य कारोः ॥२॥

नित्ये चिन्नु यं सदने जगृभ्रे प्रशस्तिभिर्दधिरे यज्ञियासः ।

प्र सू नयन्त गृभयन्त इष्टावश्वासो न रथ्यो रारहाणाः ॥३॥

पुरूणि दस्मो नि रिणाति जम्भैराद्रोचते वन आ विभावा ।

आदस्य वातो अनु वाति शोचिरस्तुर्न शर्यामसनामनु द्यून् ॥४॥

न यं रिपवो न रिषण्यवो गर्भे सन्तं रेषणा रेषयन्ति ।

अन्धा अपश्या न दभन्नभिख्या नित्यास ईं प्रेतारो अरक्षन् ॥५॥

## सायणभाष्यम्

‘मथीद्यत्' इति पञ्चर्चमष्टमं सूक्तं दैर्घतमसं त्रैष्टुभमाग्नेयम् । ‘मथीद्यत्' इत्यनुक्रमणिका सूक्तत्रयमध्यस्य तृतीयत्वेन पूर्वं विनियोग उक्तः ॥

मथी॒द्यदीं॑ वि॒ष्टो मा॑त॒रिश्वा॒ होता॑रं वि॒श्वाप्सुं॑ वि॒श्वदे॑व्यं ।

नि यं द॒धुर्म॑नु॒ष्या॑सु वि॒क्षु स्व१॒॑र्ण चि॒त्रं वपु॑षे वि॒भाव॑ं ॥१

मथी॑त् । यत् । ई॒म् । वि॒ष्टः । मा॒त॒रिश्वा॑ । होता॑रम् ।
वि॒श्वऽअ॑प्सुम् । वि॒श्वऽदे॑व्यम् ।

नि । यम् । द॒धुः । म॒नु॒ष्या॑सु । वि॒क्षु । स्वः॑ । न । चि॒त्रम् ।
वपु॑षे । वि॒भाऽव॑म् ॥१

मथीत् । यत् । ईम् । विष्टः । मातरिश्वा । होतारम् ।
विश्वऽअप्सुम् । विश्वऽदेव्यम् ।

नि । यम् । दधुः । मनुष्यासु । विक्षु । स्वः । न । चित्रम् ।
वपुषे । विभाऽवम् ॥१

"होतारं देवानामाह्वातारं “विश्वाप्सुम् । अप्स्विति रूपनाम
। नानारूपं पार्थिववैद्युतजाठरादिभेदेन
अहवनीयादिभेदेन वा । यद्वा । कालीकराल्यादिरूपेण
ज्वालानां वैरूप्याद्विश्वरूपत्वम् । “विश्वदेव्यं

सर्वदेवयोग्यक्रियासाधुं “यदीं यम् एनमग्निं “मातरिश्वा वृष्ट्यादिनिर्मात्रन्तरिक्षश्वसनो वायुः “विष्टः काष्ठेष्वन्तःप्रविष्टः सन् “मथीत् अमथ्नात् प्रवर्धयदित्यर्थः । ‘ मथे विलोडने'। ‘ ह्यन्तक्षण° ' इति वृद्धिप्रतिषेधः ।। पुनः स एव विशेष्यते । “यम् अग्निं "मनुष्यासु मत्वा कर्म कुर्वतीषु “विक्षु ऋत्विग्रूपासु प्रजासु पूर्वं “वपुषे यज्ञशरीरसिद्धये “नि “दधुः धारयन्ति यजमानाः । मनुष्यशब्दो निरुक्ते बहुधा निरुक्तः-’ मनुष्याः कस्मान्मत्वा कर्माणि सीव्यन्ति मनस्यमानेन सृष्टा मनोरपस्यं मनुषो वा ' (निरु. ३. ७ ) इति । यद्वा । पूर्वं देवा मनुष्यासु मनोरपत्यभूतासु विक्षु प्रजासु प्राणिषु वपुषे स्वरूपाय यागादिस्वरूपप्रकाशाय शरीरधारणाय वा जाठराग्निरूपेण नि दधुः स्थापितवन्तः । तत्र दृष्टान्तः । “स्वर्णं स्वरणं स्वीरणं वा। आदित्यमिव “चित्रं चायनीयं “विभावं विविधप्रकाशवन्तं यथा प्रकाशादिसाधनाय धारयन्ति तद्वत् । स्वशब्दं यास्कः एवं निरुवाच- '

स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान्त्स्वृतो भासं ज्योतिषां स्वृतो भासेति वा ' ( निरु. २. १४) इति । ईदृशं यं नि दधुस्तं मथीदिति पूर्वत्रान्वयः ।।

द॒दा॒नमिन्न द॑दभ॑त॒ मन्मा॒ग्निर्वरू॑थं॒ मम॒ तस्य॑ चाकन् ।

जु॒ष॑त॒ विश्वा॑न्यस्य॒ कर्मोप॑स्तुतिं॒ भर॑माणस्य का॒रोः ॥२

द॒दा॒नम् । इत् । न । द॒द॒भ॒न्त॒ । मन्म॑ । अ॒ग्निः । वरू॑थम् । मम॑ । तस्य॑ । चा॒क॒न् ।

जु॒षन्त॑ । विश्वा॑नि । अ॒स्य॒ । कर्म॑ । उप॑ऽस्तुतिम् । भर॑माणस्य । का॒रोः ॥२

ददानम् । इत् । न । ददभन्त । मन्म । अग्निः । वरूथम् । मम । तस्य । चाकन् ।

जुषन्त । विश्वानि । अस्य । कर्म । उपऽस्तुतिम् । भरमाणस्य । कारोः ॥२

“मन्म मननीयं स्तोत्रं हविरादिकं वा “ददानमित् अग्नये कुर्वाणमेव मां दम्भितारो वैरिणः न ददभन्त दम्भितुं हिंसितुं न प्रभवन्ति ।। दम्भेः ' बहुलं छन्दसि ' इति विकरणस्य श्लुः । व्यत्ययेन अन्तादेशः ।। मम कोऽतिशय इति उच्यते । “तस्य तादृशस्य प्रदातुः “मम “वरूथं वरणीयं स्तोत्रा- दिकम् अयम् “अग्निः “चाकन् अत्यर्थं कामयते ।। कनतिः कान्तिकर्मा । अस्मात् यङ्गलुगन्तात् लङि छान्दसः अडभावः । बहुलादेव वा छान्दसः तुजादित्वात् अभ्यासदीर्घः । । यस्मादेवं तस्मात् न दभ्नुवन्तीत्यर्थः । न केवलमग्निरेव कामयते किंतु सर्वे देवाः कामयन्त इत्याह । “उपस्तुतिं “भरमाणस्य कुर्वाणस्य “कारोः स्तोतुः “अस्य यजमानस्य मम

“विश्वानि सर्वाणि हविष्प्रदानादिरूपाणि “जुषन्त सर्वे देवाः । अतो न ददभन्तेत्यर्थः ।।

नित्ये॑ चि॒न्नु यं सद॑ने जगृ॒भ्रे प्रश॑स्तिभिर्दधि॒रे य॒ज्ञिया॑सः ।

प्र सू न॑य॑त गृ॒भय॑त इ॒ष्टावश्वा॑सो॒ न र॒थ्यो॑ रारहा॒णाः ॥३

नित्ये॑ । चि॒त् । नु । यम् । सद॑ने । ज॒गृ॒भ्रे । प्रश॑स्तिऽभिः । द॒धि॒रे । य॒ज्ञिया॑सः ।

प्र । सु । न॒य॒न्त॒ । गृ॒भय॑न्तः । इ॒ष्टौ । अश्वा॑सः । न । र॒थ्यः॑ । र॒र॒हा॒णाः ॥३

नित्ये । चित् । नु । यम् । सदने । जगृभ्रे । प्रशस्तिऽभिः । दधिरे । यज्ञियासः ।

प्र । सु । नयन्त । गृभयन्तः । इष्टौ । अश्वासः । न । रथ्यः । ररहाणाः ॥३

“यज्ञियासः यज्ञयोग्या यजमाना ऋत्विजो वा “यं मथनेनोत्पन्नमग्निं “नित्ये “चित् “सदने नित्ये एव गार्हपत्यलक्षणे अग्न्यासादनस्थाने “नु क्षिप्रं “जगृभ्रे गृह्णन्ति ।। ग्रहेर्लिटि ' इरयो रे ' इति रेभावः । ' हृग्रहोर्भः ० ' इति भत्वम् ।। ' नित्यं गतश्रियः ध्रियते नित्यं गार्हपत्यम्' इति सूत्रात् गार्हपत्यो नित्यः । तदाश्रयत्वात सदनमपि नित्यमुच्यते । गृहीत्वा “प्रशस्तिभिः प्रशंसाभिः स्तुतिभिः “दधिरे धारयन्ति आहवनीयार्थम् । धृत्वा च “इष्टौ एषणसाधने यज्ञे निमित्तभूते सति “गृभयन्तः ऋत्विजः “प्र “सू “नयन्त सुष्ठु प्रणयन्ति । तत्र दृष्टान्तः । “ररहाणाः रंहसा गच्छन्तः ।। ' रहि गतौ ' । छान्दसस्य लिटः कानच् । ' अनित्यमागमशासनम् ' इति नुमभावः । । “रथ्यः रथवन्तस्तत्र नियुक्ताः ।। ' छन्दसीवनिपौ ' इति

रथशब्दात् मत्वर्थीय ईकारः ।। “अश्वासो “न अश्वा इव । ते यथा धृत्वा रथस्वामिनम् अभिमतदेशं नयन्ति तद्वत् ।।

पु॒रूणि॑ द॒स्मो नि रि॑णाति॒ जंभै॒राद्रो॑चते॒ वन॒ आ वि॒भावा॑ ।

आदं॑स्य॒ वातो॒ अनु॑ वाति शो॒चिरस्तु॒र्न शर्या॑मस॒नामनु॒ द्यून् ॥४

पु॒रूणि॑ । द॒स्मः । नि । रि॒ण॒ति॒ । जम्भैः॑ । आत् । रो॒च॒ते॒ । वने॑ । आ । वि॒भाऽवा॑ ।

आत् । अ॒स्य॒ । वातः॑ । अनु॑ । वा॒ति॒ । शो॒चिः । अस्तुः॑ । न । शर्या॑म् । अ॒स॒नाम् । अनु॑ । द्यून् ॥४

पुरूणि । दस्मः । नि । रिणाति । जम्भैः । आत् । रोचते । वने । आ । विभाऽवा ।

आत् । अस्य । वातः । अनु । वाति । शोचिः । अस्तुः । न । शर्याम् । असनाम् । अनु । द्यून् ॥४

अत्र दावाग्निरूपेण अयं स्तूयते । “दस्मः उपक्षपयिता अयमग्निः “पुरूणि बहूनि वृक्षादीनि “नि “रिणाति नितरां हिनस्ति । । ' री गतिरेषणयोः ' । प्वादित्वात् ह्रस्वः ।। केन साधनेनेति तदुच्यते । “जम्भैः दन्तस्थानीयाभिर्ज्वालाभिः । “आत् दाहानन्तरं “वने वृक्षादिसमूहात्मके “विभावा विविध- प्रकाशयुक्तः सन् “रोचते दीप्तो भवति । “आत् अनन्तरम् “अस्य “शोचिः ज्वालानुकूलं “वातः अग्निसखिभूतो वायुः “अनु “द्यून् । अन्विति वीप्सार्थे । प्रतिदिनमनुकूलं “वाति । ज्वालाः आदाय गच्छति । तत्र दृष्टान्तः । “अस्तुः क्षेप्तुः सकाशात् “असनां गच्छन्तीं “शर्यां “न । शरो नाम हिंसासाधनलोहमयम् इषुमुखं तत्प्रचुराम् । यद्वा । शरो नाम वंशावान्तरजातीयः काष्ठविशेषः । तद्विकाराम्

इषुमिव । ' शर्या इषवः शरमय्यः ' (निरु. ५ .४) इति यास्कः । यद्वा । शर एव शर्या । अथवा । शरो हिंसा । तत्करोति इति शर्या इषुः । तां यथा वायुः नोदकजन्यः वेगो वा अनुकूलं प्रेरयति तद्वत् ।।

न यं रि॒पवो॒ न रि॑ष॒ण्यवो॒ गर्भे॒ संतं॑ रेष॒णा रे॒षयं॑ति ।

अं॒धा अ॑प॒श्या न द॑भन्नभि॒ख्या नित्या॑स ईं प्रे॒तारो॑ अरक्षन् ॥५

न । यम् । रि॒पवः॑ । न । रि॒ष॒ण्यवः॑ । गर्भे॑ । सन्त॑म् । रे॒ष॒णाः । रे॒षय॑न्ति ।

अ॒न्धाः । अ॒प॒श्याः । न । द॒भ॒न् । अ॒भि॒ऽख्या । नित्या॑सः । ई॒म् । प्रे॒तारः॑ । अ॒र॒क्ष॒न् ॥५

न । यम् । रिपवः । न । रिषण्यवः । गर्भे । सन्तम् । रेषणाः । रेषयन्ति ।

अन्धाः । अपश्याः । न । दभन् । अभिऽख्या । नित्यासः । ईम् । प्रेतारः । अरक्षन् ॥५

“यम् अग्निं “गर्भे गर्भवद्रक्षके अरणिमध्ये “सन्तं वर्तमानं “रिपवः नराः “न “रेषयन्ति न दुःखयन्ति । तथा “रिषण्यवः अन्ये हिंसकाः । । ' दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ' पा सू ७ ४. ३६) इति क्यचि निपात्यते । ' क्याच्छन्दसि ' इति उः ।। “न हिंसन्ति । कीदृशास्ते । “रेषणाः हिंसनस्वभावाः । यद्वा । तैः क्रियमाणा हिंसनप्रकारा न हिंसन्ति । । किंच अस्य “अभिख्या अभितः ख्यातिं माहात्म्यम् “अन्धाः ज्ञानशक्तिरहिता अविद्वांसः अत एव “अपश्याः अद्रष्टारः । यद्वा । विद्वांसोऽप्यभावयितारः अनुपासका इत्यर्थः । ईदृग्रूपा

उभयेऽपि “न “दभन् न दभ्नुवन्ति न हिंसन्ति ।
लौकिकोपकारेणापि प्रयोजकत्वादिति भावः । तर्ह्यस्य
पारमार्थिकं रूपं के जानन्तीति चेत् उच्यते । “नित्यासः
नित्या अविचलितभक्तयः अग्निहोत्रादिनित्यकर्मरता वा ।
अग्न्यनुग्रहात् स्वयमपि नित्या भविष्यन्तीति भावि
नित्यत्वमाश्रित्य नित्या उपचर्यन्ते । तादृशा यजमानाः
“प्रेतारः यज्ञादिना तमेव तर्पयितारः सन्तः “ईम् एनम्
“अरक्षन् रक्षन्ति यज्ञादिरूपेण भजन्ते इत्यर्थः ॥ ॥ १७ ॥

# ऋग्वेदः सूक्तं १.१४९



## दे. अग्निः। विराट्।

महः स राय एषते पतिर्दन्निन इनस्य वसुनः पद आ ।

उप ध्रजन्तमद्रयो विधन्नित् ॥१॥

स यो वृषा नरां न रोदस्योः श्रवोभिरस्ति जीवपीतसर्गः ।

प्र यः सस्राणः शिश्रीत योनौ ॥२॥

आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो नार्वा ।

सूरो न रुरुक्वाञ्छतात्मा ॥३॥

अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात् ।

होता यजिष्ठो अपां सधस्थे ॥४॥

अयं स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।

मर्तो यो अस्मै सुतुको ददाश ॥५॥

## सायणभाष्यम्

‘ महः सः' इति पञ्चर्चं नवमं सूक्तं दैर्घतमसं वैराजमाग्नेयम् । ‘दशकास्त्रयो विराळेकादशका वा' (अनु. ६. ७-८) इत्युक्तलक्षणसद्भावात् । तथा चानुक्रान्तं- महः स वैराजम्' इति । विनियोगो लैङ्गिकः ॥

म॒हः स रा॒य एषं॑ते॒ पति॒र्दन्नि॒न इ॒नस्य॒ वसुं॑नः प॒द आ ।

उप॒ ध्रजं॑त॒मद्रं॑यो वि॒धन्नित् ॥१

म॒हः । सः । रा॒यः । आ । ई॒ष॒ते॒ । पतिः॑ । दन् । इ॒नः ।
इ॒नस्यं॑ । वसुं॑नः । प॒दे । आ ।

उपं॑ । ध्रजं॑न्तम् । अद्रं॑यः । वि॒धन् । इत् ॥१

महः । सः । रायः । आ । ईषते । पतिः । दन् । इनः ।
इनस्य । वसुनः । पदे । आ ।

उप । ध्रजन्तम् । अद्रयः । विधन् । इत् ॥१

“महः महतः पूज्यस्य “रायः गवादिरूपस्य धनस्य “पतिः पालकः स्वामी “सः अग्निः “दन् ददत् अभिमतं प्रयच्छन् ॥ ददातेः शतरि छान्दसः शपो लुक् । तस्य

‘छन्दस्युभयथा' इति आर्धधातुकत्वात् ‘आतो लोप इटि च' इति आकारलोपः ।। “आ आभिमुख्येन अस्मद्देवयजनं प्रति “ईषते गच्छति । किंच “इनस्य स्वामिनोऽपि “इनः स्वामी सर्वस्य पतिरित्यर्थः । ईदृशोऽयं “वसुनः धनस्य “पदे आस्पदभूते वेदिस्थाने “आ आश्रयति ।। उपसर्गवशाद्योग्यक्रियाध्याहारः ॥ यद्वा । वसुनो निवासयोग्यस्य धनस्यापि इनः इति संबन्धः । यद्वा। वसुप्राप्तिः प्रसिद्धा । किंच “उप “ध्रजन्तम् उपगच्छन्तम् एनम् अभिषवार्थम् “अद्रयः ग्राववन्तो यजमानाः “विधन्नित् परिचरन्त्येव॥ ‘विध विधाने । तौदादिकः । लङि बहुलं छन्दसि' इति अडभावः । निघाताभावश्छान्दसः । यद्वा । पूर्वत्र तच्छब्दश्रुतेः अत्र यच्छब्दाध्याहारेण अस्य संबन्धात् अनिघातः । यद्वा । अद्रयोऽभिषवग्रावाणः स्वशब्दैः उप उपेत्य विधन्नित् पूजयन्त्येव । आह्लादं जनयन्तीत्यर्थः ।।

स यो वृषा॑ न॒रां न रोद॑स्योः॒ श्रवो॑भि॒रस्ति॑ जी॒वपी॑तसर्गः ।

प्र यः स॑स्रा॒णः शि॑श्री॒त योनौ॑ ॥२

सः । यः । वृषा॑ । न॒राम् । न । रोद॑स्योः । श्रव॑ःऽभिः ।
अस्ति॑ । जी॒वपी॑तऽसर्गः ।

प्र । यः । स॒स्रा॒णः । शि॒श्री॒त । योनौ॑ ॥२

सः । यः । वृषा । नराम् । न । रोदस्योः । श्रवःऽभिः ।
अस्ति । जीवपीतऽसर्गः ।

प्र । यः । सस्राणः । शिश्रीत । योनौ ॥२

“सः तादृशः “यः अग्निः “नरां “न मनुष्याणामिव “रोदस्योः
द्यावापृथिव्योरपि “वृषा सेक्ता उत्पादक इत्यर्थः । एवं
सर्वोत्पादकः “श्रवोभिः सर्वत्र श्रूयमाणैर्यशोभिर्युक्तः सन्

"अस्ति वर्तते । सर्वोत्पादकः इत्युक्तं तत्रोपपत्तिमाह। यतोऽयं "जीवपीतसर्गः । जीवैर्नानाविधैः पीतः आस्वादितः सर्गः सृष्टिक्रमो यस्य स तथोक्तः ॥ तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । पुनर्बहुव्रीहौ स एव स्वरः । अत्रायं सृष्टिक्रमः । अयमग्निः स्वदत्तं हविः आदित्यं प्रापय्य तद्रश्मिभिः सह वैद्युतरूपेण मेघद्वारा उदकेन प्रवर्ष्य सर्वान् प्राणिनः प्रापयति' इत्यतो वृष्ट्युत्पादनद्वारा उत्पादयिता । इदानीं साक्षादुत्पादकत्वमाह। “यः अग्निः “योनौ गर्भाशये “सस्राणः प्रविष्टः सन् “शिश्रीत निषिक्तं रेतः पारयति । नृपश्वादिदेहाकारेण परिणमयतीत्यर्थः । यद्यग्निर्न पचेत् पूरयेदेव नोत्पद्यते । तस्मादयं साक्षादेवोत्पादकः। स तादृशोऽग्निर्यशस्वी वर्तते इत्यर्थः । यद्वा। योऽग्निर्नरां न नराणां कर्मसु उत्साहयुक्तानां यजमानानामिव । ‘ नरा मनुष्या नृत्यन्ति कर्मसु' (निरु. ५. १) इति यास्कः । तेषां यथा स्वर्गाद्यभिमतवर्षकः तद्वद्रोदस्योरपि।

आश्रयवाचिना शब्देन आश्रयिणो लक्ष्यन्ते ।
भूलोकवर्तिनां वृष्टिप्रदानेन द्युलोकवर्तिनां हविष्पापणेनेति
भावः। स तादृशोऽग्निः श्रवोभिः हविर्लक्षणैः
सोमाज्यादिभिः अन्नैर्निमित्तभूतैः जीवपीतसर्गो
जीवविशेषैर्यजमानैः अविशेषेण सर्वैर्वा
आस्वादितस्वभावः सन् अस्ति प्रकृष्टो वर्तते । अमुमग्निं
हविर्भिः प्रीणयित्वा स्वाभिमतान् भोगान् भुञ्जते इत्यर्थः
। किंच यः अग्निर्योनौ स्वकीयस्थाने वेदिलक्षणे सस्नाणः
प्रविष्टः सन् शिश्रीत स्वस्मिन् प्राप्तं पुरोडाशादिकं पचति
सोऽयमग्निरस्ति महानुभावो वर्तते ।।

आ यः पुरं॒ नार्मि॑णी॒मदी॑दे॒दत्यः॑ क॒विर्न॑भ॒न्यो॒३॒॑ नार्वा॑ ।

सूरो॒ न रुं॑रु॒क्वांछ॒तात्मां॑ ॥३

आ । यः । पुरंम् । नार्मिणीम् । अदीदेत् । अत्यः । कुविः । नुभुन्यः । न । अर्वा ।

सूरः । न । रुरुक्वान् । शुतऽआत्मा ॥३

आ । यः । पुरम् । नार्मिणीम् । अदीदेत् । अत्यः । कविः । नभन्यः । न । अर्वा ।

सूरः । न । रुरुक्वान् । शतऽआत्मा ॥३

“यः अग्निः “नार्मिणीं नर्मवतीं यजमानानां संबन्धिनीम् उत्तरवेदिम् । यद्वा। नृणां मनसि स्थितां यजमानानां यज्ञार्थं यां भूमिं प्रति अग्न्यागमनमनीषा विद्यते ताम् । “पुरं तत्स्थानम् “आ “अदीदेत् दीपयति । कीदृशोऽयम् । “अत्यः अपेक्षितदेशं प्रति अतनशीलः “कविः क्रान्तदर्शी । तत्र दृष्टान्तः । “अर्वा अरणकुशलः "नभन्यो "न नभस्याकाशे भवो नभस्वान् वायुरिव । किंच “शतात्मा ।

शतं सहस्रम् इत्यपरिमितवचनः । तत्तद्यजमानगृहापेक्षया आहवनीय गार्हपत्याद्यपेक्षया वा नानारूपत्वम् । अथवा मित्रवरुणभेदेन अग्नेः मित्रादिरूपं ‘ त्वमग्ने वरुणो जायसे यत्' (ऋ. सं. ५.३.१), ‘इन्द्रं मित्रं वरुणमग्निमाहुः' (ऋ. सं. १.१६४.४६ ) इत्यादिश्रुतिषु प्रसिद्धम्। अग्नेरेव इन्द्राद्यात्मकत्वमाहुरिति द्वितीयमन्त्रस्यार्थः । तादृशोऽयं “सूरो “न सूर्य इव "रुरुक्वान् दीप्यमानः ॥ ‘रुच दीप्तौ' । छान्दसस्य लिटः क्वसुः । अतः स तादृशोऽग्निरस्ति उत्कृष्टं वर्तते इति पूर्वत्रान्वयः ।।

अ॒भि द्वि॒जन्मा॒ त्री रो॑च॒नानि॒ विश्वा॒ रजां॑सि शुशुचा॒नो अं॑स्थात् ।

होता॒ यजि॑ष्ठो अ॒पां स॒धस्थे॑ ॥४

अ॒भि । द्वि॒ऽजन्मा॑ । त्री । रो॒च॒नानि॑ । विश्वा॑ । रजां॑सि । शु॒शु॒चा॒नः । अ॒स्था॒त् ।

होता॑ । यजि॑ष्ठः । अ॒पाम् । स॒धऽस्थे॑ ॥४

अभि । द्विऽजन्मा । त्री । रोचनानि । विश्वा । रजांसि । शुशुचानः । अस्थात् ।

होता । यजिष्ठः । अपाम् । सधऽस्थे ॥४

अयमग्निः “द्विजन्मा द्वाभ्यामरणीभ्यां जायमानः । यद्वा । मथनात् प्रथमं जन्म । उत्पत्त्यनन्तरं पवमानेष्ट्यादिसंस्काररूपं द्वितीयं जन्मेव । एवं द्विजन्मत्वम् । अथवा द्यावापृथिवीभ्यामुत्पन्नत्वात् । तादृशः अग्निः “त्री “रोचनानि त्रीणि रोचनानि क्षित्यादिस्थानानि गार्हपत्यादीनि वा “अभि “शुशुचानः अभितः प्रकाशयन् । न केवलं त्रीण्येव किंतु “विश्वा

“रजांसि सर्वाण्यपि रञ्जनात्मकानि क्षित्यादिलोकान् शुशुचानः अभितः प्रकाशयन् दीपयन् “होता देवानामाह्वाता “यजिष्ठः यष्टृतमः सन् “अपां प्रोक्षण्याद्युदकानां “सधस्थे सहस्थाने यागदेशे "अस्थात् तिष्ठति ॥

अ॒यं स होता॒ यो द्वि॒जन्मा॒ विश्वा॑ द॒धे वार्या॑णि श्रव॒स्या ।

मर्तो॒ यो अ॑स्मै सु॒तुको॑ द॒दाश॑ ॥५

अ॒यम् । सः । होता॑ । यः । द्वि॒ऽजन्मा॑ । विश्वा॑ । द॒धे । वार्या॑णि । श्र॒व॒स्या ।

मर्तः॑ । यः । अ॒स्मै॒ । सु॒ऽतुकः॑ । द॒दाश॑ ॥५

अयम् । सः । होता । यः । द्विऽजन्मा । विश्वा । दधे । वार्याणि । श्रवस्या ।

मर्तः । यः । अस्मै । सुऽतुकः । ददाश ॥५

“यो "द्विजन्मा "सः एव “होता होमनिष्पादकः अरणीभ्यामुत्पन्नस्यैव गार्हपत्यद्वारा आहवनीयत्वात् आह्वाता वा देवानां सः “अयं “विश्वा विश्वानि “वार्याणि वरणीयानि॥ ‘ ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम् ।। “श्रवस्या श्रवस्यया । श्रवोऽन्नं हविर्लक्षणं तदिच्छया ॥ श्रवःशब्दात् क्यजन्तात् ' अ प्रत्ययात्' इति भावे अप्रत्ययः ॥ “दधे धारयति । “अस्मै उक्तस्वरूपाय अग्नये “यः “मर्तः मर्त्यः “ददाश ददाति सः “सुतुकः शोभनपुत्रो भवति ।। ॥ १८ ॥

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१४ १.४४ १.७४ १.१०४ १.१३४ १.१६४

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१५ १.४५ १.७५ १.१०५ १.१३५ १.१६५

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१६ १.४६ १.७६ १.१०६ १.१३६ १.१६६

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१७ १.४७ १.७७ १.१०७ १.१३७ १.१६७

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१८ १.४८ १.७८ १.१०८ १.१३८ १.१६८

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.१९ १.४९ १.७९ १.१०९ १.१३९ १.१६९

सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं सूक्तं

१.२० १.५० १.८० १.११० १.१४० १.१७०

# ऋग्वेदः सूक्तं १.१५०

← सूक्तं १.१४९

ऋग्वेदः - मण्डल १

सूक्तं १.१५०

दीर्घतमा औचथ्यः।

सूक्तं १.१५१ →

## दे. अग्निः। उष्णिक्

पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा ।

तोदस्येव शरण आ महस्य ॥१॥

व्यनिनस्य धनिनः प्रहोषे चिदररुषः ।

कदा चन प्रजिगतो अदेवयोः ॥२॥

स चन्द्रो विप्र मर्त्यो महो व्राधन्तमो दिवि ।

प्रप्रेत्ते अग्ने वनुषः स्याम ॥३॥

## सायणभाष्यम्

‘ पुरु त्वा' इति तृचात्मकं दशमं सूक्तं दैर्घतमसमाग्नेयमौष्णिहम् । 'पुरु तृचमौष्णिहम्' इत्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोरौष्णिहे छन्दसि अस्य विनियोगः । ‘ अथैतस्याः' इति खण्डे सूत्रितं -’ पुरु त्वा त्वामग्ने' ( आश्व. श्रौ. ४. १३) इति ।।

पु॒रु त्वां दा॒श्वान्वोंचे॒ऽरिरंग्ने॒ तवं स्वि॒दा ।

तो॒दस्येंव शर॒ण आ म॒हस्यं ॥१

पु॒रु । त्वा॒ । दा॒श्वान् । वो॒चे॒ । अ॒रिः । अ॒ग्ने॒ । तव॑ । स्वि॒त् । आ ।

तो॒दस्य॑ऽइव । श॒र॒णे । आ । म॒हस्य॑ ॥१

पुरु । त्वा । दाश्वान् । वोचे । अरिः । अग्ने । तव । स्वित् । आ ।

तोदस्यऽइव । शरणे । आ । महस्य ॥१

हे अग्ने “त्वा त्वां “पुरु बहु “वोचे । यद्वा । बहु दाश्वानिति संबन्धः । पुत्रं देहि वित्तं देहि इत्याद्याशासनानि ब्रवीमीत्यर्थः । किं तूष्णीं नेत्याह । यतः “दाश्वान् अभिमतं हविः दत्तवानस्मि अतः वोचे । इतरसाधारण्येन ब्रुवतः कथं दातव्यमिति न मन्तव्यम् । यतोऽहं हे “अग्ने “तव “स्वित् तवैव “आ आभिमुख्येन “अरिः अर्ता हविरादिप्रापणेन सेवकोऽहम् । तत्र दृष्टान्तः । “महस्य

महतः "तोदस्येव शिक्षकस्य स्वामिनः “शरणे अस्य गृहे यथा गर्भदासादिः "आ समन्तात् नियतो वर्तते तद्वदहमपि । यस्मादेवं तस्मात् अभिमतं बहु वोचे त्वमपि तत्सर्वं देहीत्यर्थः । अत्र निरुक्तं- बहु दाश्वांस्त्वामेवाभिह्वयाम्यरिरमित्र ऋच्छतेः । ईश्वरोऽप्यरिरेतस्मादेव। यदन्यदेवत्या अग्नावाहुतयो हूयन्त इत्येतद्दृष्ट्वैवमवक्ष्यत् तोदस्येव शरण आ महस्य तुदस्येव शरणेऽधि महतः ' (निरु. ५. ७) इति ॥

व्यं॑नि॒नस्यं॑ ध॒निनः॑ प्रहो॒षे चि॒दरं॑रुषः ।

कु॒दा च॒न प्र॒जिगं॑तो॒ अदें॑वयोः ॥२

वि । अ॒नि॒नस्यं॑ । ध॒निनः॑ । प्र॒ऽहो॒षे । चि॒त् । अरं॑रुषः ।

कु॒दा । च॒न । प्र॒ऽजिगं॑तः । अदें॑वऽयोः ॥२

वि । अनिनस्य । धनिनः । प्रऽहोषे । चित् । अररुषः ।

कदा । चन । प्रऽजिगतः । अदेवऽयोः ॥२

पूर्वमन्त्रे स्वाभीष्टं बहु विज्ञापयामीत्युक्तम् । अन्न तु स्वविलक्षणेभ्यो दानादिरहितेभ्यो दानं न दातव्यमिति प्रार्थयते । हे अग्ने त्वां विशेषेण ब्रवीमि । उपसर्गश्रुतेः योग्यक्रियाध्याहारः । अथवा संनिहितत्वात् वोचे इत्यनुषज्यते । अस्मदर्थं यत् व्यजिज्ञपन्' तद्विरुद्धं वोचे । वक्ष्यमाणस्वरूपस्य न दातव्यम् इति ब्रवीमि" इत्यर्थः । तेषां स्वरूपमाह । "अनिनस्य अस्वामिनः त्वाम् अस्वामिनं कुर्वाणस्य तथा "धनिनः समग्रधनवतः । पूर्वमेव धनवतो दानस्य निरर्थकत्वात् तन्निवार्यते । यद्वा । यागाद्यनुपयोगिधनवतः इत्यर्थः । किंच "प्रहोषे प्रकर्षेण होतुम् अररुषः अददतो दक्षिणारूपेण । यद्वा । प्रहोषेऽनिनस्येति संबन्धः । प्रकर्षेण होतुमसमर्थस्येत्यर्थः

। अत्र इनशब्देन तत्स्थं सामर्थ्यं लक्ष्यते । चिच्छब्दः समुच्चयार्थः । किंच “कदा “चन “प्रजिगतः कदाचिदपि प्रकर्षेण देवान् अस्तुवतः । अत्र चन इति निपातद्वयसमुदायः । तत्र चशब्दः समुच्चये नशब्दो निषेधे । किंच “अदेवयोः देवानात्मनोऽनिच्छतः । एतेषां न दातव्यमिति विवोचे इत्यर्थः । निन्दितानां स्वरूपनिरूपणेन स्वस्य अतादृशत्वात् बहु वोचे इत्येतत् युक्तमेवेत्युक्तं भवति । यद्वा । चन इति चिच्छब्दपर्यायः । उक्तप्रकारेण दुष्टस्यापि कदाचित् प्रजिगतो यदाकदाचित् त्वां स्तुवतो विवोचे । तादृशस्य दातव्यमिति विशेषेण ब्रवीमि । किमु वक्तव्यमस्मदर्थमिति भावः ।।

स च॒न्द्रो विप्र॒ मर्त्यो॑ म॒हो व्राध॑तमो दि॒वि ।

प्रप्रेत्ते॑ अग्ने व॒नुषः॑ स्याम ॥३

सः । च॒न्द्रः । वि॒प्र॒ । मर्त्यः॑ । म॒हः । व्राधं॑न्ऽतमः । दि॒वि ।

प्रऽप्रं । इत् । ते॒ । अ॒ग्ने॒ । व॒नुषः॑ । स्या॒म॒ ॥३

सः । चन्द्रः । विप्र । मर्त्यः । महः । व्राधन्ऽतमः । दिवि ।

प्रऽप्र । इत् । ते । अग्ने । वनुषः । स्याम ॥३

हे अग्ने “विप्र मेधाविन् यः “मर्त्यः त्वां यजते “सः मर्त्यो यजमानः “दिवि द्युलोके “चन्द्रः सर्वेषाम् आह्लादकश्चन्द्रसदृशो भवति । यद्वा । चन्द्र एव भवति । यजमानानां चन्द्रत्वप्राप्तिं छन्दोगा आमनन्ति- पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा' (छा. उ. ५. १०. ४) इति । ' सोमलोके विभूतिमनुभूय' (प्र. उ. ५.४) इति च । तथा मुण्डकेऽपि द्युलोकप्राप्तिराम्नायते–' एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति । तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां

पतिरेकोऽधिवासः' इति, " एष वः पुण्यः सुकृतो ब्रह्मलोकः' (मु. उ. १. २. ५-६ ) इति च । पुनः स एव विशेष्यते। "महः महतोऽपि "व्राधन्तमः प्रवृद्धतमः । इतरदेवानामपि श्रेष्ठ इत्यर्थः। अतः "अग्ने' "ते तव "प्रप्रेत् प्रकर्षेणैव "वनुषः संभक्तारः "स्याम । यद्वा । प्रीणयित्वा प्रप्रेत् स्याम । प्रकृष्टा एव भवेम ॥ ॥ १९ ॥

## मण्डल

१

सूक्तं १.१

सूक्तं १.२

सूक्तं १.३

सूक्तं १.४

सूक्तं १.५

सूक्तं १.६

सूक्तं १.३१

सूक्तं १.३२

सूक्तं १.३३

सूक्तं १.३४

सूक्तं १.३५

सूक्तं १.३६

सूक्तं १.६१

सूक्तं १.६२

सूक्तं १.६३

सूक्तं १.६४

सूक्तं १.६५

सूक्तं १.६६

सूक्तं १.९१

सूक्तं १.९२

सूक्तं १.९३

सूक्तं १.९४

सूक्तं १.९५

सूक्तं १.९६

सूक्तं १.१२१

सूक्तं १.१२२

सूक्तं १.१२३

सूक्तं १.१२४

सूक्तं १.१२५

सूक्तं १.१२६

सूक्तं १.१५१

सूक्तं १.१५२

सूक्तं १.१५३

सूक्तं १.१५४

सूक्तं १.१५५

सूक्तं १.१५६

सूक्तं १.१८१

सूक्तं १.१८२

सूक्तं १.१८३

सूक्तं १.१८४

सूक्तं १.१८५

सूक्तं १.१८६

# ऋग्वेदः सूक्तं १.१५१

← सूक्तं १.१५०

ऋग्वेदः - मण्डल १

सूक्तं १.१५१

दीर्घतमा औचथ्यः

सूक्तं १.१५२ →

## दे. १ मित्रः, २-९ मित्रावरुणौ । जगती।

---

मित्रं न यं शिम्या गोषु गव्यवः स्वाध्यो विदथे अप्सु जीजनन् ।

अरेजेतां रोदसी पाजसा गिरा प्रति प्रियं यजतं जनुषामवः ॥१॥

यद्ध त्यद्वां पुरुमीळ्हस्य सोमिनः प्र मित्रासो न दधिरे स्वाभुवः ।

अध क्रतुं विदतं गातुमर्चत उत श्रुतं वृषणा पस्त्यावतः ॥२॥

आ वां भूषन्क्षितयो जन्म रोदस्योः प्रवाच्यं वृषणा दक्षसे महे ।

यदीमृताय भरथो यदर्वते प्र होत्रया शिम्या वीथो अध्वरम् ॥३॥

प्र सा क्षितिरसुर या महि प्रिय ऋतावानावृतमा घोषथो बृहत् ।

युवं दिवो बृहतो दक्षमाभुवं गां न धुर्युप युञ्जाथे अपः ॥४॥

मही अत्र महिना वारमृण्वथोऽरेणवस्तुज आ सद्मन्धेनवः ।

स्वरन्ति ता उपरताति सूर्यमा निम्रुच उषसस्तक्ववीरिव ॥५॥

आ वामृताय केशिनीरनूषत मित्र यत्र वरुण गातुमर्चथः ।

अव त्मना सृजतं पिन्वतं धियो युवं विप्रस्य मन्मनामिरज्यथः ॥६॥

यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः ।

उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू ॥७॥

युवां यज्ञैः प्रथमा गोभिरञ्जत ऋतावाना मनसो न प्रयुक्तिषु ।

भरन्ति वां मन्मना संयता गिरोऽदृप्यता मनसा रेवदाशाथे ॥८॥

रेवद्वयो दधाथे रेवदाशाथे नरा मायाभिरितऊति माहिनम् ।

न वां द्यावोऽहभिर्नोत सिन्धवो न देवत्वं पणयो नानशुर्मघम् ॥९॥

## सायणभाष्यम्

‘ मित्रं न यम्' इति नवर्चमेकादशं सूक्तं दैर्घतमसं जागतं मैत्रावरुणम् । आद्या मैत्र्येव । अत्रानुक्रमणिका -- मित्रं नव मैत्रावरुणं हि जागतं मैत्र्याद्या ' इति । विनियोगो लैङ्गिकः ॥

मि॒त्रं न यं शिम्या॒ गोषु॑ ग॒व्यवः॑ स्वा॒ध्यो॑ वि॒दथे॑ अ॒प्सु जीज॑नन् ।

अरे॑जेता॒ं रोद॑सी॒ पाज॑सा गि॒रा प्रति॑ प्रि॒यं य॑ज॒तं ज॒नुषा॒मवः॑ ॥१

मि॒त्रम् । न । यम् । शिम्या॑ । गोषु॑ । ग॒व्यवः॑ । सु॒ऽआ॒ध्यः॑ । वि॒दथे॑ । अ॒प्ऽसु । जीज॑नन् ।

अरेंजेताम् । रोदंसी॒ इतिं । पाजंसा । गि॒रा । प्रतिं । प्रि॒यम् । य॒ज॒तम् । ज॒नुषांम् । अवः॑ ॥१

मित्रम् । न । यम् । शिम्या । गोषु । गव्यवः । सुऽआध्यः । विदथे । अप्ऽसु । जीजनन् ।

अरेजेताम् । रोदसी इति । पाजसा । गिरा । प्रति । प्रियम् । यजतम् । जनुषाम् । अवः ॥१

"यम् अग्निं “शिम्या । कर्मनामैतत्, 'शिमी शक्तिः' (नि. २.१.२४) इति तन्नामसूक्तत्वात् । प्रकाशवृष्ट्युत्पादनादिकर्मणा “मित्रं “न मित्रमिव स्थितम् । यद्वा । शिम्या इत्येतत् क्रियया सह संबध्यते । “गोषु बह्वीषु निमित्तभूतासु “गव्यवः गा आत्मन इच्छन्तः । अत्र यद्यपि गव्यवः इत्येवालं न गोष्विति, तथापि गव्यव इत्यत्र गोस्वामित्वं प्रतिपाद्यते। तच्चैकया द्वित्राभिरपि स्यात् । अतः स्पृहणीया बह्वय इत्यवगमयितुं गोष्विति पदम् ।

यथा ‘गवामसि गोपतिः' (ऋ. सं. ७, ९८.६ ), गणानां त्वा गणपतिम् ' (ऋ. सं. २.२३.१ )। तथा “स्वाध्यः सुष्ठु अध्यातारः फलस्योत्पादयितारः शोभनध्वाना वा “विदथे यागे "अप्सु अन्तरिक्षे वैद्युतरूपेण वर्तमानम् । आप इत्यन्तरिक्षनाम, आपः पृथिवी ' (नि. १. ३.८) इति तन्नामसूक्तत्वात्। अग्नेरन्तरिक्षोत्पत्तिः यदग्ने दिविजा अस्यप्सुजा वा' (ऋ. सं. ८.४३. २८), ‘ अप्स्वग्ने सधिष्टव' (ऋ. सं. ८. ४३. ९) इत्यादिमन्त्रान्तरेषु प्रसिद्धा। “प्रियं सर्वेषां प्रियतमं प्रीणयितारं वा “यजतं यष्टव्यमग्निं “जनुषां जन्मवतां प्राणिनाम् “अवः “प्रति रक्षणं निमित्तीकृत्य शिम्या मथनादिकर्मणा "जीजनन् जनयन्ति यजमानाः । यद्वा । अप्सु निमित्तभूतासु जीजनन् सर्वप्राणिनामुपकाराय वृष्ट्यर्थं चेत्यर्थः ।
एवमुत्पन्नस्याग्नेः “पाजसा बलेन “गिरा भयंकरशब्देन च “रोदसी द्यावापृथिव्यौ "अरेजेताम् अकम्पेताम् । अग्नेः सकाशात् कम्पनम् ‘ अरेजेतां रोदसी होतृवूर्ये' (ऋ. सं. १.

३१.३ ) इत्यादिश्रुतिषु प्रसिद्धम् । न च सर्वरक्षणार्थम् उत्पादितोऽग्निः लोकद्वयस्य भीतिमजनयत् किमेतदिति वाच्यं निन्दास्तुतित्वात् । यथा लोकौ बिभीतस्तथा प्रवृद्धोऽभवत् इति स्तुतौ पर्यवसानात् । यद्यप्यत्राग्निरेव प्रतिपाद्यते मित्रस्तु परं दृष्टान्तित एव तथापि द्युस्थानस्याग्नेरेव मित्रत्वात् मन्त्रस्य मैत्रत्वमविरुद्धम् । यद्वा । मित्रं न सखायमिव स्थितं मित्रनामकं देवं यज्ञेऽन्तरिक्षे च ऋत्विजः प्रादुर्भावयन्ति । शिष्टम् एतद्विशेषेण तथैव योजनीयम् ॥

यद्ध॒ त्यद्वां॑ पुरुमी॒ळ्हस्य॑ सो॒मिन॒ः प्र मि॒त्रासो॒ न द॑धि॒रे स्वा॒भुव॑ः ।

अध॒ क्रतुं॑ विदतं गा॒तुमर्च॑त उ॒त श्रु॑तं वृषणा प॒स्त्या॑वतः ॥२

यत् । ह॒ । त्यत् । वा॒म् । पु॒रु॒ऽमी॒ळ्हस्यं । सो॒मिनः॑ । प्र ।
मि॒त्रासः॑ । न । द॒धि॒रे । सु॒ऽआ॒भुवः॑ ।

अधं । क्रतुंम् । वि॒द॒त॒म् । गा॒तुम् । अर्चते । उ॒त । श्रु॒त॒म् ।
वृ॒ष॒णा॒ । प॒स्त्यंऽवतः ॥२

यत् । ह । त्यत् । वाम् । पुरुऽमीळ्हस्य । सोमिनः । प्र ।
मित्रासः । न । दधिरे । सुऽआभुवः ।

अध । क्रतुम् । विदतम् । गातुम् । अर्चते । उत । श्रुतम् ।
वृषणा । पस्त्यऽवतः ॥२

हे मित्रावरुणौ “यत् यस्मात् कारणात् “वां युवां
“पुरुमीळ्हस्य बहुलाभीष्टसेचनस्य “सोमिनः “स्वाभुवः
सोमवतः स्वाभवनशीलस्य ॥ कर्मणि षष्ठी ॥ “त्यत्
उक्तलक्षणं कर्म “प्र “मित्रासो “न मित्राणीव मित्रभूता
ऋत्विजः प्र “दधिरे प्रकर्षेण धारयन्ति । “ह इति पूरणः ।

“अध अतः कारणात् “गातुं युष्मद्गमनम् “अर्चते ॥ षष्ठ्यर्थे चतुर्थी ॥ अर्चतः पूजयतो यजमानस्य “क्रतुं कर्म “विदतं जानीतम् ।। विदेर्लोटि व्यत्ययेन शः ॥ ”उत अपि च हे “वृषणा कामानां वर्षितारौ युवां “पस्त्यावतः । पस्त्या इति गृहनाम, पस्त्या दुरोणे' (नि. ३. ४. ६) इति तन्नामसूक्तत्वात् । सदःप्राचीनवंशादिगृहवतो यजमानस्याह्वानं स्तोत्रं वा “श्रुतं शृणुतम् ॥ छान्दसो विकरणस्य लुक् ॥ यद्वा । यद्यस्मात् सोमिनः सोमवतः पुरुमीळ्हस्यैतन्नामकस्य राज्ञो मित्रासो न मित्राणीव स्थिताः स्वाभुवः स्वाभवनशीलाः स्वस्वव्यापारसमर्था दधिरे अध अतः कारणात् तस्य अर्चते अर्चतः क्रतुं विदतमित्यादि पूर्ववत् ॥

आ वां भूषन्क्षितयो॒ जन्म॒ रोदं॑स्योः प्र॒वाच्यं॑ वृषणा॒ दक्षं॑से म॒हे ।

यदीमृताय भरथो यदर्वते प्र होत्रया शिम्या वीथो अध्वरम् ॥३

आ । वाम् । भूषन् । क्षितयः । जन्म । रोदस्योः ।
प्रऽवाच्यम् । वृषणा । दक्षसे । महे ।

यत् । ईम् । ऋताय । भरथः । यत् । अर्वते । प्र । होत्रया । शिम्या । वीथः । अध्वरम् ॥३

आ । वाम् । भूषन् । क्षितयः । जन्म । रोदस्योः ।
प्रऽवाच्यम् । वृषणा । दक्षसे । महे ।

यत् । ईम् । ऋताय । भरथः । यत् । अर्वते । प्र । होत्रया । शिम्या । वीथः । अध्वरम् ॥३

हे “वृषणा कामानां वर्षितारौ हे मित्रावरुणौ "वां युवयोः संबन्धि “जन्म जननम् उत्पत्तिम् "रोदस्योः द्यावापृथिव्योः सकाशात् । द्यावापृथिवीभ्यामेव सर्वेषामुत्पत्तेः । यद्वा ।

मित्र इति सर्वोपकारी अग्निरुच्यते वरुण इति तमोनिवारक आदित्यः उभयोः पृथिवीद्युस्थानत्वात् । ततः पूर्वमन्त्रे मित्रदृष्टान्तत्वेन अग्निः स्तुतः । अत इदमधिगम्यते अग्निरेव मित्र इति । तथान्यत्रापि । 'अग्निं मित्रं न क्षितिषु प्रशंस्यम्' (ऋ. सं. २. २. ३ ), 'मित्रं न ये सुधितं भृगवो दधुः' (ऋ. सं. ६. १५. २) इति च । "प्रवाच्यं स्तुत्यं तादृग्युवयोः जन्म "महे महते "दक्षसे सर्वविषयबलाय "क्षितयः मनुष्या यजमानाः "आ "भूषन् सर्वतोऽलंकुर्वन्ति श्लाघन्ते इत्यर्थः । जन्मनः प्रवाच्यत्वमाह। "यदीं यस्मादेव कारणात् । अथवा। ईम् इत्यनर्थकः । मिताक्षरेष्वनर्थकाः कमीमिद्विति' इत्युक्तत्वात् । "ऋताय यज्ञाय "भरथः सामर्थ्यम् । "यत् यस्माच्च कारणात् "अर्वते युष्मान् प्राप्तवते यजमानाय च भरथोऽभिमतं फलम् । अथवा । उभयत्र कर्मणः संप्रदानत्वात् चतुर्थी। यज्ञं यजमानं च भरथ इत्यर्थः । यस्माच्च "होत्रया स्तुतिरूपया वाचा "शिम्या

हविष्प्रदानादिकर्मणा च “प्र “वीथः प्रकर्षेण प्राप्नुथः । तस्मात् प्रवाच्यं जन्म भूषयन्तीत्यर्थः । होत्रा इति वाङ्नाम, ‘होत्रा गीः ' ( नि. १. ११. ३५) इति तन्नामसु पाठात् ॥

प्र सा क्षि॒तिरं॑सु॒र या महिं प्रि॒य ऋतां॑वानावृ॒तमा घों॑षथो बृ॒हत् ।

युवं दि॒वो बृं॑ह॒तो दक्षं॑मा॒भुवं॒ गां न धु॒र्युपं युञ्जाथे अ॒पः ॥४

प्र । सा । क्षि॒तिः । अ॒सु॒रा॒ । या । महिं । प्रि॒या । ऋतं॑ऽवानौ । ऋ॒तम् । आ । घो॒ष॒थः॒ । बृ॒हत् ।

यु॒वम् । दि॒वः । बृ॒ह॒तः । दक्षं॑म् । आ॒ऽभुवं॑म् । गाम् । न । धु॒रि । उपं । यु॒ञ्जा॒थे॒ इतिं । अ॒पः ॥४

प्र । सा । क्षितिः । असुरा । या । महि । प्रिया ।
ऋतऽवानौ । ऋतम् । आ । घोषथः । बृहत् ।

युवम् । दिवः । बृहतः । दक्षम् । आऽभुवम् । गाम् । न ।
धुरि । उप । युञ्जाथे इति । अपः ॥४

हे “असुरा असुरौ बलवन्तौ मित्रावरुणौ युवयोः “या
क्षितिः देवयजनरूपा “महि महदत्यधिकं “प्रिया प्रियतरा
प्रीणयित्री वा "सा “क्षितिः “प्र प्रकर्षेण संपादिता ।
उपसर्गश्रुतेः योग्यक्रियाध्याहारः। तामासीदतमिति शेषः ।
यागभूमिर्देवानां प्रियेति प्रसिद्धम् । आसाद्य च हे
“ऋतावानौ ऋतवन्तौ युवां "बृहत् प्रवृद्धम् “ऋतम्
अस्मदीयं यज्ञम् “आ “घोषथः अवैकल्येन संपादितः इति
स्तुतमित्यर्थः । यतः “युवं युवां "बृहतः महतः “दिवः
द्युलोकस्य धुरि “दक्षं तर्पणवहने समर्थम् । अथवा बृहतो
दिवो महतो द्युलोकस्थदेवान् दक्षं प्रीणयितुमिति शेषः ।

यद्वा । कर्मणि षष्ठी । दिवो द्योतनात्मकं बृहतः प्रभूतं दक्षम् अभिमतसाधनसमर्थम् । “आभुवं सर्वतो भवनशीलम् “अपः कर्म सोमयागरूपम् “उप "युञ्जाथे सेवेथे तत्रत्यं हविः स्वीकुरुथ इत्यर्थः । उपयोगे दृष्टान्तः । “धुरि शारीरबलस्य निर्वाहे तदर्थं “गां “न धेनुमिव । तां यथोपयुञ्जते तद्वत् । यद्वा । विकारे प्रकृतिशब्दः । क्षीरादिकमिव । तस्मात् ऋतम् आघोषथः॥

म॒ही अत्रं महि॒ना वारंमृण्वथोऽरे॒णव॒स्तुज॒ आ सद्मं॑न्धे॒नवः॑ ।

स्वरं॑न्ति॒ ता उं॑प॒रतां॑ति॒ सूर्य॒मा नि॒म्रुचं॑ उ॒षसं॑स्तक्व॒वीरिं॑व ॥ ५

म॒ही इति॑ । अत्रं॑ । म॒हि॒ना । वारं॑म् । ऋ॒ण्व॒थ॒ः । अ॒रे॒णवः॑ । तुजः॑ । आ । सद्मं॑न् । धे॒नवः॑ ।

स्वरंन्ति । ताः । उ॒प॒र॑ऽतांति । सूर्यम् । आ । नि॒ऽम्रुचः॑ । उ॒षसः॑ । त॒क्व॒वीःऽइंव ॥५

मही इति । अत्र । महिना । वारम् । ऋण्वथः । अरेणवः । तुजः । आ । सद्मन् । धेनवः ।

स्वरन्ति । ताः । उपरऽताति । सूर्यम् । आ । निऽम्रुचः । उषसः । तक्ववीःऽइव ॥५

हे मित्रावरुणौ युवां “मही महत्याम् ॥ सप्तम्येकवचने पूर्वसवर्णदीर्घः । ‘ईदूतौ च सप्तम्यर्थे । (पा. सू. १. १. १९) इति प्रगृह्यता ॥ "अत्र अस्यां पृथिव्यां “महिना महत्त्वेन या धेनूः “वारं वरणीयं प्रदेशम् “ऋण्वथः गमयथः । अन्तर्भावितण्यर्थोऽयम् । गमनादिव्यवहारस्य तयोरधीनत्वात् द्यावापृथिव्योः अभिमानिदेवत्वाच्च मित्रावरुणयोः । ता एताः “धेनवः गावः सायंकाले युष्मन्महत्त्वेन “अरेणवः अनवद्याः तस्कराद्यनपहारेण

अनष्टा वा “तुजः क्षीराणां प्रदात्र्यः ॥ तुजतिः दानकर्मा ॥
“सद्मन सद्मनि गोष्ठे “आ आश्रिता आगच्छन्ति वा ।।
उपसर्गश्रुतेर्योग्यक्रियाध्याहारः।। ”ताः एवंकारिता धेनवः
"उपरताति उपरतातौ ॥ सप्तम्या लुक् । मेघानां
विस्तारवति अन्तरिक्षे मेघाच्छन्ने सति “सूर्यं सर्वस्य
प्रसवितारं सुवीर्यं शोभनसामर्थ्यं वा । ‘सुवीर्यो मर्या यथा
गोपायत इति तत्सूर्यस्य सूर्यत्वम् (तै. ब्रा. २. २. १०) इति
श्रुत्यन्तरात् । आदित्यमभिलक्ष्य “स्वरन्ति शब्दयन्ति
सुखसंचाराय ।। ‘ स्वृ शब्दोपतापयोः '। भौवादिकः ॥
कस्मिन् काले इति तदुच्यते । “निम्रुचः “उषसः ।
सर्वेष्वपि सायंकालेषु उषःकालेषु च । तत्र दृष्टान्तः ।
“तक्ववीरिव । तक्वा स्तेनः । तस्य वेता गन्ता मनुष्यः ।
स यथा क्रोशति तद्वत् । एवं निरुद्धानां गवां सुखचारः
युष्मदायत्तः इति तयोः स्तुतिः ॥ ॥ २० ॥

आ वा॑मृ॒ताय॑ के॒शिनी॑रनूषत॒ मित्र॒ यत्र॒ वरु॑ण गा॒तुमर्च॑थः ।

अव॒ त्मना॑ सृ॒जतं॒ पिन्व॑तं॒ धियो॑ यु॒वं विप्र॑स्य॒

मन्म॑नामिरज्यथः ॥६

आ । वा॒म् । ऋ॒ताय॑ । के॒शिनीः॑ । अ॒नू॒ष॒त॒ । मित्र॑ । यत्र॑ ।

वरु॑ण । गा॒तुम् । अर्च॑थः ।

अव॑ । त्मना॑ । सृ॒जत॑म् । पिन्व॑तम् । धियः॑ । यु॒वम् ।

विप्र॑स्य । मन्म॑नाम् । इ॒र॒ज्य॒थ॒ः ॥६

आ । वाम् । ऋताय । केशिनीः । अनूषत । मित्र । यत्र ।

वरुण । गातुम् । अर्चथः ।

अव । त्मना । सृजतम् । पिन्वतम् । धियः । युवम् ।

विप्रस्य । मन्मनाम् । इरज्यथः ॥६

हे मित्रावरुणौ “केशिनीः केशवत्योऽग्नेर्ज्वाला: “वां युवाम् "ऋताय यज्ञार्थम् “आ "अनूषत । हविःसमर्पणेनाभिपूजयन्तीत्यर्थः । कुत्रेति तदुच्यते । हे “मित्र हे “वरुण युवामुभौ “यत्र यागे “गातुं गमनं देवयजनदेशं वा । गातुरिति पृथिवीनाम, गातुः पूषा ' (नि. १. १. २०) इत्युक्तत्वात् ।। “अर्चथः पूजयथः स्वीकुरुथ इत्यर्थः । आगत्य च “त्मना आत्मनैव "अव “सृजतं वृष्टिम् अवाङ्मुखं विसृजतम् । तथा कृत्वा “धियः अस्मदीयानि कर्माणि “पिन्वतं वर्धयतम् इत्यर्थः । एवं कृत्वा “विप्रस्य मेधाविनः यजमानस्य “मन्मनां मननवतीनां स्तुतीनां “युवं युवाम् “इरज्यथः ईश्वरौ स्वामिनौ भवथः । इरज्यतिरैश्वर्यकर्मा, “ इरज्यति पत्यते ' ( नि. २. २१. १ ) इति तन्नामसु उक्तत्वात् ॥

यो वां य॒ज्ञैः शंशमा॒नो ह॒ दाशंति क॒विर्होता॒ यजंति

मन्म॒साध॑नः ।

उपा॑ह॒ तं गच्छ॑थो वी॒थो अ॑ध्व॒रमच्छा॒ गिर॑ः सुम॒तिं गं॑न्तमस्म॒यू ॥७

यः । वा॒म् । य॒ज्ञैः । श॒श॒मा॒नः । ह॒ । दाश॑ति । क॒विः । होता॑ । यज॑ति । म॒न्म॒ऽसाध॑नः ।

उप॑ । अह॑ । तम् । गच्छ॑थः । वी॒थः । अ॒ध्व॒रम् । अच्छ॑ । गिर॑ः । सु॒ऽम॒तिम् । ग॒न्त॒म् । अ॒स्म॒यू इत्य॑स्म॒ऽयू ॥७

यः । वाम् । यज्ञैः । शशमानः । ह । दाशति । कविः । होता । यजति । मन्मऽसाधनः ।

उप । अह । तम् । गच्छथः । वीथः । अध्वरम् । अच्छ । गिरः । सुऽमतिम् । गन्तम् । अस्मयू इत्यस्मऽयू ॥७

यः "ह यः खलु यजमानः “वां युवामुद्दिश्य युवाभ्यां वा “यज्ञैः यागैर्निमित्तभूतैः “शशमानः शंसमानः “दाशति हविरादिकं स्वस्वत्वं निवर्त्य युष्मत्स्वत्वापादनं करोति । य एव “कविः अनूचानः ‘ येऽनूचानास्ते कवयः' (ऐ. ब्रा. २.२) इति श्रुतेः । अथवा कविर्मेधावी “होता सम्यग्होमनिष्पादको यजमानः “मन्मसाधनः मननीयद्रव्यदक्षिणादिसाधनोपेतः सन् "यजति सोमयागादिकं करोति । “तम् एव यजमानं °सुमतिं शोभनप्रज्ञम् "उप उपलक्ष्य “गच्छथः प्राप्नुथः खलु। “अध्वरं तदीयं यज्ञं “वीथः कामयेथे। किंच “अस्मयू अस्मान् कामयमानौ युवां “गिरः स्तुतीः "अच्छ अभिलक्ष्य “गन्तं गच्छतम् । तादृशं मां प्राप्य स्तुतीः स्वीकुरुतमित्यर्थः । अत्र यद्यपि तम् इति सामान्यनिर्देशः प्रतिभाति तथापि अस्मयू इत्युक्तत्वात् दीर्घतमाः स्वात्मानमेव परोक्षतया उक्तवानिति गम्यते । यद्वा । यो दाशति यश्च यजते तमुपेत्य तदीयं यज्ञं कामयेथे ।

अतोऽस्मयू युवां सुमतिं मां मदीया गिरः स्तुती: अच्छ अभिलक्ष्य गच्छतम् ॥

युवां यज्ञैः प्रंथमा गोभिंरञ्जत ऋतांवाना मनंसो न प्रयुंक्तिषु ।

भरंन्ति वां मन्मंना संयता गिरोऽदृंप्यता मनंसा रेवदांशाथे ॥८

युवाम् । यज्ञैः । प्रथमा । गोभिंः । अञ्जते । ऋतंऽवाना । मनंसः । न । प्रऽयुंक्तिषु ।

भरंन्ति । वाम् । मन्मंना । सम्ऽयतां । गिरंः । अदृंप्यता । मनंसा । रेवत् । आशाथे इतिं ॥८

युवाम् । यज्ञैः । प्रथमा । गोभिः । अञ्जते । ऋतऽवाना । मनसः । न । प्रऽयुक्तिषु ।

भरन्ति । वाम् । मन्मना । सम्ऽयता । गिरः । अदृप्यता । मनसा । रेवत् । आशाथे इति ॥८

हे “ऋतावाना यज्ञवन्तौ वृष्दट्युकवन्तौ वा मित्रावरुणौ “युवां “प्रथमा प्रथमौ “यज्ञैः यजनसाधनैः "गोभिः गोविकारैः पयआदिभिः “अञ्जते व्यञ्जयन्ति यजमानाः । देवभागं यागेषु क्षीरादिभिः यजन्ते इत्यर्थः । यद्वा । गोभिः अञ्जते स्तुवन्ति तत्र दृष्टान्तः । “प्रयुक्तिषु प्रयोगेषु “मनसो “न ॥ कर्मणि षष्ठी ।। मन इव । तद्यथा प्रथमं व्यञ्जयन्ति मुख्यं कुर्वन्ति तत्पूर्वकत्वात् सर्वव्यवहारस्य । किंच "वां युवां “मन्मना मननवता “संयता युवामेव सम्यग्गच्छता चित्तेन “गिरः स्तुतीः “भरन्ति संपादयन्ति । यस्मादेवं तस्मात् “अदृप्यता अनभिभववता “मनसा प्रकृष्टेन चेतसा युक्तौ सन्तौ “रेवत् धनवत् कर्म अस्मदीयम् "आशाथे अश्नुवाथे व्याप्नुथः ददाथे इत्यर्थः ।

अश्नोतेर्लिटि ‘ अनित्यभागमशासनम्' इति वचनात्
इडभावः ॥

रे॒वद्वयों दधाथे रे॒वदांशाथे॒ नरां मा॒याभिंरि॒तऊंति॒ माहिंनम्
।

न वा॒ं द्यावोऽहंभि॒र्नोत सिन्धंवो॒ न देंव॒त्वं प॒णयो॒
नानंशुर्म॒घम् ॥९

रे॒वत् । वयः॑ । द॒धा॒थे॒ इतिं । रे॒वत् । आ॒शा॒थे॒ इतिं । नरां ।
मा॒याभिः॑ । इ॒तऽऊंति । माहिंनम् ।

न । वा॒म् । द्यावः॑ । अहंऽभिः । न । उ॒त । सिन्धंवः । न ।
दे॒व॒ऽत्वम् । प॒णयः॑ । न । आ॒न॒शु॒ः । म॒घम् ॥९

रेवत् । वयः । दधाथे इति । रेवत् । आशाथे इति । नरा ।
मायाभिः । इतऽऊति । माहिनम् ।

न । वाम् । द्यावः । अहऽभिः । न । उत । सिन्धवः । न । देवऽत्वम् । पणयः । न । आनशुः । मघम् ॥९

हे मित्रावरुणौ युवां “रेवत् धनवत् “वयः अन्नं “दधाथे उभयं च धारयथः । यस्मादेवं तस्मात् “रेवत् धनवत्। सहदृष्टत्वात् वयः इति गम्यते । धनविशिष्टमन्नं हे "नरा नेतारौ युवाम् "आशाथे अश्नुवाथे अस्मभ्यं ददाथे इत्यर्थः। कीदृशम्। “मायाभिः युवयोः प्रज्ञाभिः “इतऊति इतोऽस्मदभिमुखं गमनवत् इतो रक्षणवद्वा “माहिनम् । महन्नामैतत् । अतिमहत्। ईदृशोर्युवयोः एतादृशं सामर्थ्यं कुत इस्यत आह। “वां युवयोः देवत्वम् “अहभिः अहोभिः रात्रिभिः । अत्र अहःशब्देन रात्रिरभिधीयते द्योशब्देन अहःपृथगभिधानात् । ताभिः सहिताः “द्यावः दिवसाः “न “आनशुः न प्राप्नुवन्ति। अहश्च रात्रिश्चोभे न तरतः ‘ इत्यर्थः । “उत अपि च सिन्धवः स्यन्दनशीला नद्यः “न चैव आनशुः तथा युवयोः “देवत्वं “पणयः असुरा अपि “न

आनशुः । “मघं धनं च “न आनशिरे । लोकत्रये युवयोः पराभवितारो न केऽपि सन्तीत्यर्थः ॥ ॥ २१ ॥

# ऋग्वेदः सूक्तं १.१५२

← सूक्तं १.१५१

ऋग्वेदः - मण्डल १

सूक्तं १.१५२

दीर्घतमा औचथ्यः।

सूक्तं १.१५३ →

## दे. मित्रावरुणौ । त्रिष्टुप्।

युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः ।

अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ॥१॥

एतच्चन त्वो वि चिकेतदेषां सत्यो मन्त्रः कविशस्त ऋघावान् ।

त्रिरश्रिं हन्ति चतुरश्रिरुग्रो देवनिदो ह प्रथमा अजूर्यन् ॥२॥

अपादेति प्रथमा पद्वतीनां कस्तद्वां मित्रावरुणा चिकेत ।

गर्भो भारं भरत्या चिदस्य ऋतं पिपर्त्यनृतं नि तारीत् ॥३॥

प्रयन्तमित्परि जारं कनीनां पश्यामसि नोपनिपद्यमानम् ।

अनवपृग्णा वितता वसानं प्रियं मित्रस्य वरुणस्य धाम ॥४॥

अनश्वो जातो अनभीशुरर्वा कनिक्रदत्पतयदूर्ध्वसानुः ।

अचित्तं ब्रह्म जुजुषुर्युवानः प्र मित्रे धाम वरुणे गृणन्तः ॥५॥

आ धेनवो मामतेयमवन्तीर्ब्रह्मप्रियं पीपयन्सस्मिन्नूधन् ।

पित्वो भिक्षेत वयुनानि विद्वानासाविवासन्नदितिमुरुष्येत् ॥६॥

आ वां मित्रावरुणा हव्यजुष्टिं नमसा देवाववसा ववृत्याम् ।

अस्माकं ब्रह्म पृतनासु सह्या अस्माकं वृष्टिर्दिव्या सुपारा ॥७॥

## सायणभाष्यम्

‘युवं वस्त्राणि ' इति सप्तर्चं द्वादशं सूक्तं दैर्घतमसम् । अनादेशपरिभाषया त्रैष्टुभम् । मैत्रावरुणं पूर्वत्र ‘मैत्रावरुणं

हि ' इत्युक्तत्वात् । सूक्तविनियोगो लैङ्गिकः । मैत्रावरुणे पशावाद्या वपायाज्या । ‘ प्रदानानाम् ' इति खण्डे सूत्रितं - ‘ युवं वस्त्राणि पीवसा वसाथे प्र बाहवा सिसृतं जीवसे नः ( आश्व. श्रौ. ३. ८) इति । सैव समावर्तने नववस्त्रधारणे विनियुक्ता । सूत्रितं च - ‘ युवं वस्त्राणि पीवसा वसाथे इत्यहते वाससी आच्छाद्य' ( आश्व. गृ. ३. ८. ९) इति ॥

यु॒वं वस्त्रा॑णि पीव॒सा व॑साथे यु॒वोरच्छि॑द्रा॒ मन्त॑वो ह॒ सर्गा॑ः ।

अवा॑तिरत॒मनृ॑तानि॒ विश्वं॑ ऋ॒तेन॑ मित्रावरुणा सचेथे ॥१

यु॒वम् । वस्त्रा॑णि । पी॒व॒सा । व॒सा॒थे॒ इति॑ । यु॒वोः । अच्छि॑द्राः । मन्त॑वः । ह॒ । सर्गाः॑ ।

अवं । अ॒ति॒र॒त॒म् । अनृंतानि । विश्वां । ऋ॒तेनं ।
मि॒त्रा॒व॒रु॒णा॒ । स॒चे॒थे॒ इतिं ॥१

युवम् । वस्त्राणि । पीवसा । वसाथे इति । युवोः ।
अच्छिद्राः । मन्तवः । ह । सर्गाः ।

अव । अतिरतम् । अनृतानि । विश्वा । ऋतेन ।
मित्रावरुणा । सचेथे इति ॥१

हे मित्रावरुणौ “पीवसा पीनौ “युवं युवाम् । यद्वा । पीवसा पीनानि अच्छिन्नानि “वस्त्राणि आच्छादनयोग्यानि वासांसि “वसाथे आच्छादयथः । यद्वा । पीवसा स्थूलेन प्रभूतेन तेजसा वस्त्राणि दधाथे अविच्छिन्नानि वस्त्रस्थानीयानि तेजांसि धारयथ इत्यर्थः। किंच युवयोः “सर्गाः सृष्टयः “अच्छिद्राः अच्छिन्नाः “मन्तवो "ह मननीयाश्च । ईदृशौ युवां “विश्वा विश्वानि सर्वाणि “अनृतानि असत्यानि अप्रियाणि पापानि "अवातिरतं

नाशयतम् ॥ विश्व इत्यत्र संहितायाम् ‘ ऋत्यकः' इति प्रकृतिभावो ह्रस्वत्वं च ॥ “ऋतेन फलेन तत्साधनेन यज्ञेन वा "सचेथे संगच्छेथे । अस्मभ्यं योजयथ इत्यर्थः ॥

एतच्चन त्वो वि चिकेतदेषां सत्यो मन्त्रः कविशस्त ऋघावान् ।

त्रिरश्रिं हन्ति चतुरश्रिरुग्रो देवनिदो ह प्रथमा अजूर्यन् ॥२

एतत् । चन । त्वः । वि । चिकेतत् । एषाम् । सत्यः । मन्त्रः । कविऽशस्तः । ऋघावान् ।

त्रिःऽअश्रिम् । हन्ति । चतुःऽअश्रिः । उग्रः । देवऽनिदः । ह । प्रथमाः । अजूर्यन् ॥२

एतत् । चन । त्वः । वि । चिकेतत् । एषाम् । सत्यः । मन्त्रः । कविऽशस्तः । ऋघावान् ।

त्रिःऽअश्रिम् । हन्ति । चतुःऽअश्रिः । उग्रः । देवऽनिदः । ह । प्रथमाः । अजूर्यन् ॥२

“एषाम् एतयोर्मध्ये ॥ बहुवचनं पूजार्थम् । यद्वा । तदनुचरापेक्षया बहुवचनम् ॥ एतयोर्मध्ये “त्वः “चन एक एव “एतत् वक्ष्यमाणं सामर्थ्यरूपं कर्म “वि “चिकेतत् विशेषेण चेतति अनुतिष्ठतीत्यर्थः । सः विशेष्यते । स एकः "सत्यः अबाध्यः सत्सु भवो वा “मन्त्रः मननवान् “कविशस्तः कविभिर्मेधाविभिः शंसनीयः “ऋघावान हिंसावान् । अनेन वक्ष्यमाणस्य सामर्थ्यस्य संभाविता। प्रतिपादिता अभवदित्युक्तम् । किं तत् इत्याशङ्क्याह । “त्रिरश्रिम् । अश्रित्रयोपेतमायुधं त्रिरश्रि । तद्वन्तम् ॥ मत्वर्थो लुप्यते ॥ उपलक्षणमेतत् । सर्वायुधसंपन्नमित्यर्थः । एतन्नामानं वा । “चतुरश्रिः ततोऽप्यधिकायुधवान्। न केवलमायुधसामर्थ्यं किंतु "उग्रः स्वयमुद्गूर्णबलः "हन्ति हिनस्ति अतिबलं शत्रुम् । किंच युवयोः एकस्यैव

सामर्थ्येन "देवनिदो “ह देवनिन्दकास्तु "प्रथमाः समर्थाः सन्तोऽपि “अजूर्यन् स्वयमेव जीर्णा भवन्ति ।। जीर्यतेः श्यनि ‘ बहुलं छन्दसि इति उत्वम् ॥ युवयोर्मध्ये एकोऽपि महाबलः । मिलितयोस्तु सामर्थ्ये किमु वक्तव्यमिति भावः । अथवा । एषां युवयोः एतत् उत्तरत्र वक्ष्यमाणं सामर्थ्यम् एकः सत्यादिलक्षणो वि चिकेतत् विशेषेण जानाति । शेषं पूर्ववत् ॥

अ॒पादें॑ति प्रथ॒मा प॒द्वतीं॑ना॒ं कस्तद्वां॑ मित्रावरु॒णा चिं॑केत ।

गर्भो॑ भा॒रं भं॑र॒त्या चिं॑दस्य ऋ॒तं पिप॒र्त्यनृं॑तं॒ नि तां॑रीत् ॥३

अ॒पात् । ए॒ति॒ । प्र॒थ॒मा । प॒त्ऽवतीं॑नाम् । कः । तत् । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । आ । चि॒के॒त॒ ।

गर्भः । भा॒रम् । भ॒र॒ति॒ । आ । चि॒त् । अ॒स्य॒ । ऋ॒तम् । पिपं॑र्ति । अनृं॑तम् । नि । ता॒री॒त् ॥३

अपात् । एति । प्रथमा । पत्ऽवतीनाम् । कः । तत् । वाम् । मित्रावरुणा । आ । चिकेत ।

गर्भः । भारम् । भरति । आ । चित् । अस्य । ऋतम् । पिपर्ति । अनृतम् । नि । तारीत् ॥३

हे मित्रावरुणा मित्रावरुणौ "पद्वतीनां पादवतीनां मनुष्यादीनां प्रजानां “प्रथमा प्रथमभाविनी “अपात् पादरहिता उषाः । प्रतिदिनं सूर्यचन्द्रादिवत् स्वस्याः परिभ्रमणाभावात् सूर्यगमनेनैव स्वगमनात् अपात् इति च एति इति च उपचर्यते । “तत् तादृशं “वां युवयोः प्रसिद्धं कर्म “कः “आ “चिकेत कः आभिमुख्येन जानाति ॥ ‘ कित ज्ञाने ॥ तत्स्तुत्यमित्यर्थः । मित्रावरुणयोः अहोरात्रदेवत्वात् अहोरात्रयोः अन्तरालस्यैव उषस्त्वात्

एतत्कर्मत्वम् । किंच “अस्य लोकस्य “भारं निर्वाहं “गर्भः युवयोर्गर्भस्थानीयः शिशुरादित्यः । अहोरात्रयोर्मध्यकाले उत्पत्तेः ताभ्यामेव मित्रावरुणत्वात् अहोरात्रे वै मित्रावरुणौ । (तै. सं. २. ४. १०. १ ) इति श्रुतेः । स आहरति “चित् । समन्तान्निर्वहत्येव । हरति वा अस्य भारं जाड्यम् । चित् इत्यवधारणे । तत्कथमिति तदुच्यते । “ऋतं सत्यं जगतः प्रकाशगमनादिरूपं “पिपर्ति पूरयति । “अनृतम् उक्तविलक्षणमन्धकारं गमनादिनिरोधं च “नि “तारीत् नितरति निमज्जयति नाशयतीत्यर्थः । शिशोर्जगद्भारवहनरूपं कर्म युष्मत्सामर्थ्यादिति ॥

प्र॒यन्त॒मित्परिं जा॒रं क॒नीनां॒ पश्यांमसि॒ नोपंनि॒पद्यंमानम् ।

अनंवपृग्णा॒ वितंता॒ वसांनं प्रि॒यं मि॒त्रस्य॒ वरुंणस्य॒ धामं ॥४

प्र॒ऽयन्तं॑म् । इत् । परिं॑ । जा॒रम् । क॒नीनां॑म् । पश्यां॑मसि ।
न । उ॒प॒ऽनि॒पद्यं॑मानम् ।

अनं॑वऽपृग्णा । विऽतं॑ता । वसां॑नम् । प्रि॒यम् । मि॒त्रस्यं॑ ।
वरुं॑णस्य । धामं॑ ॥४

प्रऽयन्तम् । इत् । परि । जारम् । कनीनाम् । पश्यामसि ।
न । उपऽनिपद्यमानम् ।

अनवऽपृग्णा । विऽतता । वसानम् । प्रियम् । मित्रस्य ।
वरुणस्य । धाम ॥४

“कनीनां कमनीयानां दीप्तानां
कन्यकास्थानीयानामुषसाम् ॥ कनतेः कान्तिकर्मण इञ् ।
‘ कृदिकारादक्तिनः' इति ङीष् । आमि कन्याशब्दस्य वा
छान्दसं संप्रसारणम् ॥ तासां “जारम् आदित्यं
“प्रयन्तमित प्रगच्छन्तमेव “परि “पश्यामसि वयं

परिपश्यामः “उपनिपद्यमानं क्षणमात्रमपि निषीदन्तं “न पश्यामः। एतदपि तयोः सामर्थ्यम् । पुनस्तदेव विशेष्यते । अनवपृग्णा अनवपृग्णानि अत एव विततानि तेजांसि “वसानम् आच्छादयन्तं "प्रियं सर्वेषां प्रियभूतं “मित्रस्य “वरुणस्य च “धाम तेजःस्थानभूतम् । यद्वा । प्रियं धामेति संबध्यते । तयोः प्रेमस्थानम् । ईदृशमादित्यं युष्मदनुज्ञया संचरन्तं पश्यामसि ॥

अ॒न॒श्वो जा॒तो अ॑नभी॒शुरर्वा॒ कनि॑क्रदत्पतयदू॒र्ध्वसा॑नुः ।

अ॒चित्तं॒ ब्रह्म॑ जुजुषु॒र्युवा॑न॒ः प्र मि॒त्रे धाम॒ वरु॑णे गृ॒णन्त॑ः ॥५

अ॒न॒श्वः । जा॒तः । अ॒न॒भी॒शुः । अर्वा॑ । कनि॑क्रदत् । प॒त॒य॒त् । ऊ॒र्ध्वऽसा॑नुः ।

अ॒चित्तं॑म् । ब्रह्मं॑ । जु॒जु॒षुः॒ । युवां॑नः । प्र । मि॒त्रे । धाम॑ ।
वरु॑णे । गृ॒णन्तः॑ ॥५

अनश्वः । जातः । अनभीशुः । अर्वा । कनिक्रदत् ।
पतयत् । ऊर्ध्वऽसानुः ।

अचित्तम् । ब्रह्म । जुजुषुः । युवानः । प्र । मित्रे । धाम ।
वरुणे । गृणन्तः ॥५

स एवादित्यः “अनश्वः यद्यपि शीघ्रगाम्यश्वरहितः तथा
“अनभीशुः आलम्बनाधारप्रग्रहस्थानीयरश्मिरहितः
तथापि “अर्वा “जातः शीघ्रगमनवान् संपन्नः ।
तथाविधोऽयमादित्यः “कनिक्रदत् अत्यर्थं क्रन्दयन् ।
क्रन्देर्यङ्लुगन्तात् शतरि दाधर्त्यादौ निपात्यते ॥
“ऊर्ध्वसानुः उपर्युपरि समुच्छ्रयणः सन् "पतयत् गच्छति ।
“अचित्तं चित्ताविषयं “ब्रह्म परिवृढम् उक्तरूपं कर्म "मित्रे
“वरुणे च उभयोः “धाम तेजःस्थानं “युवानः मिश्रयन्तः

तयोर्धाम्नि आरोपयन्तः तथा “प्र “गृणन्तः युवयोः तेजःप्रभवमिति प्रकर्षेण स्तुवन्तः “जुजुषुः सेवन्ते । मनुष्याः सूर्यस्य निरालम्बान्तरिक्षसंचारात्मकं कर्म वरुणमित्रयोरधीनम् इति स्तुवन्तीत्यर्थः ॥

आ धे॒नवों मामते॒यमवंन्तीर्ब्र॑ह्म॒प्रियं पीपय॒न्सस्मि॒न्नूधंन् ।

पि॒त्वो भिंक्षेत व॒युनांनि वि॒द्वाना॒साविवांस॒न्नदिंतिमुरुष्येत् ॥६

आ । धे॒नवः॑ । मा॒म॒ते॒यम् । अवंन्तीः । ब्र॒ह्म॒ऽप्रियंम् । पी॒प॒य॒न् । सस्मिंन् । ऊधंन् ।

पि॒त्वः । भि॒क्षे॒त॒ । व॒युनांनि । वि॒द्वान् । आ॒सा । आ॒ऽविवांसन् । अदिंतिम् । उ॒रु॒ष्ये॒त् ॥६

आ । धेनवः । मामतेयम् । अवन्तीः । ब्रह्मऽप्रियम् ।
पीपयन् । सस्मिन् । ऊधन् ।

पित्वः । भिक्षेत । वयुनानि । विद्वान् । आसा ।
आऽविवासन् । अदितिम् । उरुष्येत् ॥६

“मामतेयं ममतायाः पुत्रं दीर्घतमसं मां “ब्रह्मप्रियं परिवृढस्य कर्मणः प्रियतमं परिवृढस्याग्नेः प्रीणयितारं वा “अवन्तीः अवन्त्यः प्रीणयन्त्यः ”धेनवः गावः "सस्मिन् स्वकीये “ऊधन् ऊधसि “आ “पीपयन् सर्वत आप्याययन्तु ॥ प्यायतेर्णिचि छान्दसः पीभावः ॥ ऊधोगतेन क्षीरेण युवाभ्यां प्रदेयेन नोऽस्मान् रक्षन्ति इत्यर्थः। मित्रावरुणाभ्यां पयस्या' (तै.सं.७.५.२२.१) इति श्रुतेः। एवं प्रदत्तहविः “वयुनानि अनुष्ठानविषयज्ञानानि “विद्वान् जानन् हुतशेषो भक्षणीय इत्यवगच्छन् दीर्घतमाः “पित्वः पितोर्हुतशिष्टस्य अन्नस्य तादृगन्नम् “आसा आस्येन

भक्षयितुं "भिक्षेत याचेत युष्मान् । किंच “विवासन् युवां परिचरन् “अदितिम् अखण्डितम् अन्यूनमेतत्कर्म “उरुष्येत् । यथा शिष्टं भिक्षेत यथा च कर्म समापनेन रक्षेत् तथा अपीपयन्नित्यर्थः ॥

मैत्रावरुणपशौ वपाया एषानुवाक्या । सूत्रितं च - ‘ आ वां मित्रावरुणा हव्यजुष्टिमा यातं मित्रावरुणा ' (आश्व. श्रौ. ३. ८) इति ।।

आ वां मित्रावरुणा हव्यजुंष्टिं नमंसा देवाववंसा ववृत्याम् ।

अस्माकं ब्रह्म पृतंनासु सह्या अस्माकं वृष्टिर्दिव्या सुंपारा ॥७

आ । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । ह॒व्यऽजु॑ष्टिम् । नम॑सा । दे॒वौ॒ । अव॑सा । व॒वृ॒त्या॒म् ।

अ॒स्माक॑म् । ब्रह्म॑ । पृत॑नासु । स॒ह्याः॒ । अ॒स्माक॑म् । वृ॒ष्टिः । दि॒व्या । सु॒ऽपा॒रा ॥७

आ । वाम् । मित्रावरुणा । हव्यऽजुष्टिम् । नमसा । देवौ । अवसा । ववृत्याम् ।

अस्माकम् । ब्रह्म । पृतनासु । सह्याः । अस्माकम् । वृष्टिः । दिव्या । सुऽपारा ॥७

हे “देवौ देवनशीलौ “मित्रावरुणा मित्रावरुणौ “वां युवां "हव्यजुष्टिं हविःसेवां “नमसा नमस्कारोपलक्षितेन स्तोत्रेण “अवसा रक्षणेन निमित्तभूतेन “आ ”ववृत्याम् आवर्तयेयम् । यद्वा । नमस्कारेण अवसा अन्नेन च आ ववृत्याम् । किंच हे मित्रावरुणौ “अस्माकं संबन्धि “ब्रह्म इदानीं

क्रियमाणं परिवृढं कर्म “पृतनासु संग्रामेषु “सह्याः सह्यात् शत्रून् अभिभूयात् । अनेन कर्मणा शत्रून् अभिभवेयमित्यर्थः । किंच “अस्माकं “दिव्या दिवि भवा “वृष्टिः "सुपारा सुष्ठु पारयित्री भवत्विति शेषः । वृष्टौ सत्यां व्रीह्यादिद्वारा कर्मसमाप्तेरिति भावः ॥ ॥ २२ ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.७ | सूक्तं १.३७ | सूक्तं १.६७ | सूक्तं १.९७ | सूक्तं १.१२७ | सूक्तं १.१५७ | सूक्तं १.१८७ |
| सूक्तं १.८ | सूक्तं १.३८ | सूक्तं १.६८ | सूक्तं १.९८ | सूक्तं १.१२८ | सूक्तं १.१५८ | सूक्तं १.१८८ |
| सूक्तं १.९ | सूक्तं १.३९ | सूक्तं १.६९ | सूक्तं १.९९ | सूक्तं १.१२९ | सूक्तं १.१५९ | सूक्तं १.१८९ |
| सूक्तं १.१० | सूक्तं १.४० | सूक्तं १.७० | सूक्तं १.१०० | सूक्तं १.१३० | सूक्तं १.१६० | सूक्तं १.१९० |
| सूक्तं १.११ | सूक्तं १.४१ | सूक्तं १.७१ | सूक्तं १.१०१ | सूक्तं १.१३१ | सूक्तं १.१६१ | सूक्तं १.१९१ |
| सूक्तं १.१२ | सूक्तं १.४२ | सूक्तं १.७२ | सूक्तं १.१०२ | सूक्तं १.१३२ | सूक्तं १.१६२ | |
| सूक्तं १.१३ | सूक्तं १.४३ | सूक्तं १.७३ | सूक्तं १.१०३ | सूक्तं १.१३३ | सूक्तं १.१६३ | |

# ऋग्वेदः सूक्तं १.१५३

← सूक्तं १.१५२

ऋग्वेदः - मण्डल १

सूक्तं १.१५३

दीर्घतमा औचथ्यः

सूक्तं १.१५४ →

## दे. मित्रावरुणौ । त्रिष्टुप् ।

यजामहे वां महः सजोषा हव्येभिर्मित्रावरुणा नमोभिः ।

घृतैर्घृतस्नू अध यद्वामस्मे अध्वर्यवो न धीतिभिर्भरन्ति ॥१॥

प्रस्तुतिर्वां धाम न प्रयुक्तिरयामि मित्रावरुणा सुवृक्तिः ।

अनक्ति यद्वां विदथेषु होता सुम्नं वां सूरिर्वृषणावियक्षन् ॥२॥

पीपाय धेनुरदितिरृताय जनाय मित्रावरुणा हविर्दे ।

हिनोति यद्वां विदथे सपर्यन्स रातहव्यो मानुषो न होता ॥३॥

उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः ।

उतो नो अस्य पूर्व्यः पतिर्दन्वीतं पातं पयस उस्रियायाः ॥४॥

## सायणभाष्यम्

' यजामहे वाम्' इति चतुर्ऋचं चतुर्दशं सूक्तं दैर्घतमसं त्रैष्टुभं मैत्रावरुणम् । ' यजामहे चतुष्कम्' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ।।

यजा॑महे वां म॒हः स॒जोषा॑ ह॒व्येभि॑र्मित्रावरुणा॒ नमो॑भिः ।

घृ॒तैर्घृ॑तस्नू॒ अध॒ यद्वा॑म॒स्मे अ॑ध्व॒र्यवो॒ न धी॒तिभि॒र्भर॑न्ति ॥१

यजा॑महे । वा॒म् । म॒हः । स॒ऽजोषाः॑ । ह॒व्येभिः॑ ।
मि॒त्रा॒व॒रु॒णा॒ । नमः॑ऽभिः ।

घृ॒तैः । घृ॒त॒स्नू॒ इति॑ घृतऽस्नू । अध॑ । यत् । वा॒म् । अ॒स्मे
इति॑ । अ॒ध्व॒र्यवः॑ । न । धी॒तिऽभिः॑ । भर॑न्ति ॥१

यजामहे । वाम् । महः । सऽजोषाः । हव्येभिः ।
मित्रावरुणा । नमःऽभिः ।

घृतैः । घृतस्नू इति घृतऽस्नू । अध । यत् । वाम् । अस्मे
इति । अध्वर्यवः । न । धीतिऽभिः । भरन्ति ॥१

हे “घृतस्नू घृतस्य स्रावयितारौ मित्रावरुणौ “महः महान्तौ “वां “यजामहे पूजयामो यजमानाः ऋत्विजश्च । कीदृशाः । “सजोषाः समानप्रीतियुक्ताः । केन साधनेनेति तदुच्यते । “हव्येभिः पुरोडाशादिभिः “नमोभिः नमस्कारोपलक्षितैः। “अध अपि च “यत् यस्मात् कारणात्

“वां युवाम् “अध्वर्यवः अस्मदीया अध्वर्यवोऽपि । अत्र नशब्दोऽप्यर्थे । तेऽपि “धीतिभिः कर्मभिः स्वकीयैः “भरन्ति पोषयन्ति तस्मात् यजामहे । ।

प्रस्तुंतिर्वां धाम न प्रयुंक्तिरयांमि मित्रावरुणा सुवृक्तिः ।

अनक्ति यद्वां विदथेंषु होतां सुम्नं वां सूरिर्वृषणावियंक्षन् ॥ २

प्रऽस्तुंतिः । वाम् । धामं । न । प्रऽयुंक्तिः । अयांमि । मित्रावरुणा । सुऽवृक्तिः ।

अनक्तिं । यत् । वाम् । विदथेंषु । होतां । सुम्नम् । वाम् । सूरिः । वृषणौ । इयंक्षन् ॥२

प्रऽस्तुतिः । वाम् । धाम । न । प्रऽयुक्तिः । अयामि । मित्रावरुणा । सुऽवृक्तिः ।

अनक्ति । यत् । वाम् । विदथेषु । होता । सुम्नम् । वाम् । सूरिः । वृषणौ । इयक्षन् ॥२

हे मित्रावरुणौ “वां युवयोः संबन्धिनो यागस्य “प्रस्तुतिः प्रस्तावना करोमीति संकल्प एव “न “प्रयुक्तिः कृत्स्नप्रयोगो न संपन्नः । तावतैव युवयोः “धाम तेजःस्थानम् “अयामि प्राप्नोमि । “सुवृक्तिः युवयोः शोभनावर्जकश्च युष्मत्परिग्रहादस्मि । “यत् यदा तु “विदथेषु यज्ञेषु “वां युवां “होता होमनिष्पादकोऽयमध्वर्युः “अनक्ति हविषा आगच्छति होमं करोतीत्यर्थः। यद्वा । होता देवानामाह्वाता एतन्नामकः ऋत्विक् शस्त्रादिना वाम् अनक्ति व्यञ्जयति । तदा “सूरिः युष्मन्माहात्म्यवित् “इयक्षन् यागं कर्तुमिच्छन् अहं हे “वृषणौ कामानां वर्षितारौ “वां युवयोः “सुम्नं युष्मदसंबन्धि सुखं देवत्वलक्षणम् अयामीति शेषः ॥

पी॒पायं॑ धे॒नुरदि॑तिरृ॒ताय॒ जना॑य मित्रावरुणा हवि॒र्दे ।

हि॒नोति॒ यद्वां॑ वि॒दथे॑ सप॒र्यन्स रा॒तहं॑व्यो॒ मानु॑षो॒ न होता॑ ॥ ३

पी॒पायं॑ । धे॒नुः । अदि॑तिः । ऋ॒तायं॑ । जना॑य । मि॒त्रा॒व॒रु॒णा॒ । ह॒वि॒ःऽदे ।

हि॒नोति॑ । यत् । वा॒म् । वि॒दथे॑ । स॒प॒र्यन् । सः । रा॒तऽहं॑व्यः । मानु॑षः । न । होता॑ ॥३

पीपाय । धेनुः । अदितिः । ऋताय । जनाय । मित्रावरुणा । हविःऽदे ।

हिनोति । यत् । वाम् । विदथे । सपर्यन् । सः । रातऽहव्यः । मानुषः । न । होता ॥३

हे "मित्रावरुणा मित्रावरुणौ "ऋताय युष्मत्संबन्धियज्ञाय “हविर्दे हविषो दात्रे ।। ‘आतो मनिन्’ इति विच् । भत्वे आतो धातोः' इति आकारलोपः ॥ “जनाय यजमानाय च “धेनुः प्रीणयित्री गौः। “अदितिः अदीना बहुक्षीरा सती “पीपाय क्षीरेण पुनःपुनः आप्यायताम् ॥ प्यायतेश्छान्दसः प्रार्थनायां लिट् । ‘ लिड्यङोश्च' इति पीभावः ॥ पयस्यादिहविष्कं यज्ञं पयोव्रतादिषु यजमानं चेत्यर्थः । कस्मिन् काले इति चेत् तत्राह । “यत् यदा "सः प्रसिद्धः “रातहव्यः एतन्नामा राजा “सपर्यन् स्तुत्या पूजयन् “मानुषः “होता “न मनुष्यस्य यजमानस्य संबन्धी एतन्नामक ऋत्विगिव "विदथे यज्ञे “वां “हिनोति हविरादिना प्रीणयति । तदा पीपायेत्याह ।

उ॒त वां॑ वि॒क्षु मद्या॒स्वन्धो॒ गाव॒ आप॑श्च पीपयन्त दे॒वीः ।

उ॒तो नो॑ अ॒स्य पू॒र्व्यः पति॒र्दन्वी॒तं पा॒तं पय॑स उ॒स्रिया॑याः ॥ ४

उ॒त । वा॒म् । वि॒क्षु । मद्या॑सु । अन्धः॑ । गावः॑ । आपः॑ । च॒ । पी॒प॒य॒न्त॒ । दे॒वीः ।

उ॒तो इति॑ । न॒ः । अ॒स्य । पू॒र्व्यः । पतिः॑ । दन् । वी॒तम् । पा॒तम् । पय॑सः । उ॒स्रिया॑याः ॥४

उत । वाम् । विक्षु । मद्यासु । अन्धः । गावः । आपः । च । पीपयन्त । देवीः ।

उतो इति । नः । अस्य । पूर्व्यः । पतिः । दन् । वीतम् । पातम् । पयसः । उस्रियायाः ॥४

“उत अपि च हे मित्रावरुणौ “वां युवाम् “अन्धः अदनीयमन्नं पयोरूपं पुरीडाशादिरूपं वा “देवीः द्योतनशीलाः “गावः “आपश्च व्रीह्यादिप्रवर्धकान्युदकानि

च “मद्यासु युष्माभिर्मदनीयासु “विक्षु प्रजासु यजमानलक्षणासु तासामभिवृद्ध्यर्थं “पीपयन्त आप्याययन्तु। “उतो अपि च “नः अस्मत्संबन्धिनः “अस्य यज्ञस्य “पूर्व्यः पूर्वकालीनः “पतिः पालकोऽग्निः “दन् दाता भवत्विति शेषः । अग्नौ हूयमानत्वात् सर्वेषामपि हविषाम् । यस्मादेवं तस्मात् हे मित्रावरुणौ "वीतं भक्षयतं पुरोडाशादिकम् । “उस्रियायाः क्षीराद्युत्स्राविण्या गोः “पयसः पयः “पातम् । यद्वा । घनीभूतं पयस्याया वीतं स्रवद्रूपं पातम् ॥ ॥ २३ ॥

# ऋग्वेदः सूक्तं १.१५४

← सूक्तं १.१५३

ऋग्वेदः - मण्डल १

सूक्तं १.१५४

दीर्घतमा औचथ्यः

सूक्तं १.१५५ →

## दे. विष्णुः। त्रिष्टुप् ।

विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।

यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥

प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥२॥

प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।

य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥३॥

यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।

य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥४॥

तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।

उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥५॥

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।

अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥६॥

## सायणभाष्यम्

विष्णोर्नु कम्' इति षड्टचं पञ्चदशं सूक्तं दैर्घतमसं त्रैष्टुभं वैष्णवम् । अत्रानुक्रमणिका - विष्णोः षड्वैष्णवं हि ' इति । अभिप्लवषडहेषूक्थ्येषु तृतीयसवने स्तोमवृद्धावच्छावाकस्य स्तोमातिशंसनार्थम्

इदमादिसूक्तद्वयं विनियुक्तम् । स्तोमे वर्धमाने' इति खण्डे सूत्रितं - विष्णोर्नु कमिति सूक्ते परोमात्रयेत्यच्छावाकः' (आश्व. श्रौ. ७. ९.) इति । तथा तृतीयसवने सोमातिरेके उत्तरोत्तरसंस्थोपगन्तव्या आतिरात्रात् ततोऽप्यतिरिक्ते तदर्थमेव शस्त्रमुपजनयितव्यम् । तत्रैतदेव सूक्तम् । ‘ सोमातिरेके' इति खण्डे सूत्रितं - ‘ महाँ इन्द्रो नृवद्विष्णोर्नु कम्' (आश्व. श्रौ. ६. ७) इति॥ आग्निमारुतशस्त्रे आद्या विनियुक्ता । ‘ अथ यथेतम्' इति खण्डे सूत्रितं - ‘ विष्णोर्नु कं वीयांणि प्र वोचं तन्तुं तन्वन्रजसो भानुमन्विहि ' ( आश्व. श्रौ. ५. २० ) इति ॥

विष्णो॒र्नु कं वी॒र्या॑णि॒ प्र वो॑चं॒ यः पार्थि॑वानि विम॒मे रजां॑सि ।

यो अस्क॑भाय॒दुत्त॑रं स॒धस्थं॑ विचक्रमा॒णस्त्रे॒धोरु॑गा॒यः ॥१

विष्णोः॑ । नु । क॒म् । वी॒र्या॑णि । प्र । वो॒च॒म् । यः ।
पार्थि॑वानि । वि॒ऽम॒मे । रजां॑सि ।

यः । अस्क॑भायत् । उत्ऽत॑रम् । स॒धऽस्थ॑म् ।
वि॒ऽच॒क्र॒मा॒णः । त्रे॒धा । उ॒रु॒ऽगा॒यः ॥१

विष्णोः । नु । कम् । वीर्याणि । प्र । वोचम् । यः ।
पार्थिवानि । विऽममे । रजांसि ।

यः । अस्कभायत् । उत्ऽतरम् । सधऽस्थम् ।
विऽचक्रमाणः । त्रेधा । उरुऽगायः ॥१

हे नराः "विष्णोः व्यापनशीलस्य देवस्य “वीर्याणि
वीरकर्माणि “नु "कम् अतिशीघ्रं “प्र “वोचम् प्रब्रवीमि ।
अत्र यद्यपि नु कम् इति पदद्वयं तथापि यास्केन '
नवोत्तराणि पदानि ' (नि. ३. १३ ) इत्युक्तत्वात् शाखान्तरे
एकत्वेन पाठाच्च नु इत्येतस्मिन्नेवार्थे नु कम् इति

पदद्वयम् । कानि तानीति तत्राह । "यः विष्णुः “पार्थिवानि पृथिवीसंबन्धीनि “रजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि रजांसि “विममे विशेषेण निर्ममे । अत्र त्रयो लोका अपि पृथिवी शब्दवाच्याः । तथा च मन्त्रान्तरं -- यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः ( ऋ. सं. १. १०८.९) इति। तैत्तिरीयेऽपि - योऽस्यां पृथिव्यामस्यायुषा' इत्युपक्रम्य ‘यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्' (तै. सं. १. २. १२. १ ) इति । तस्मात् लोकत्रयस्य पृथिवीशब्दवाच्यत्वम् । किंच “यः च विष्णुः “उत्तरम् उद्गततरमतिविस्तीर्णं “सधस्थं सहस्थानं लोकत्रयाश्रयभूतमन्तरिक्षम् “अस्कभायत् तेषामाधारत्वेन स्तम्भितवान् निर्मितवानित्यर्थः । अनेन अन्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति । यद्वा । यो विष्णुः पार्थिवानि पृथिवीसंबन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान् विममे विविधं निर्मितवान् ।

रजःशब्दो लोकवाची, ‘ लोका रजांस्युच्यन्ते । इति यास्केनोक्तत्वात् । किंच यश्चोत्तरम् उद्गततरम् उत्तरभाविनं सधस्थं सहस्थानं पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकम् अस्कभायत् स्कम्भितवान् सृष्टवानित्यर्थः ॥ स्कम्भेः 'स्तम्भुस्तुम्भु इति विहितस्य श्नः छन्दसि शायजपि' इति व्यत्ययेन शायजादेशः ॥ अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान् विममे । भूरादिलोकत्रयमित्यर्थः । भूम्याम् उपार्जितकर्मभोगार्थत्वात् इतरलोकानां तत्कारणत्वम्। किंच यश्चोत्तरम् उत्कृष्टतरं सर्वेषां लोकानामुपरिभूतम् । अपुनरावृत्तेः तस्योत्कृष्टत्वम् । सधस्थम् उपासकानां सहस्थानं सत्यलोकमस्कभायत् स्कम्भितवान् ध्रुवं स्थापितवानित्यर्थः । किं कुर्वन् । “त्रेधा “विचक्रमाणः त्रिप्रकारं स्वसृष्टान् लोकान्विविधं क्रममाणः । विष्णोस्त्रेधा क्रमणम् इदं विष्णुर्वि चक्रमे ' ( ऋ. सं. १, २२, १७ ) इत्यादिश्रुतिषु प्रसिद्धम् । अत एव “उरुगायः

उरुभिः महद्भिः गीयमानः अतिप्रभूतं गीयमानो वा । य एवं कृतवान् तादृशस्य विष्णोर्वीर्याणि प्र वोचम् ॥

तृतीयसवने सोमातिरेके एव शस्त्रमुपजनयितव्यम् । तत्र 'प्र तत्' इत्ययमनुरूपस्तृचः । ' सोमातिरेके ' इति खण्डे सूत्रितं - ' प्र तद्विष्णुः स्तवते वीर्येणेति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ६. ७) इति । वाजपेयेनाधिपत्यकामः' इति खण्डे सूत्रितं -'प्र तत्ते अद्य शिपिविष्ट नाम प्र तद्विष्णुः स्तवते वीर्येण ' ( आश्व. श्रौ. ९. ९) इति ।।

प्र तद्विष्णुंः स्तवते वी॒र्येंण मृ॒गो न भी॒मः कुं॑च॒रो गिं॑रि॒ष्ठाः ।

यस्यो॒रुषुं त्रि॒षु वि॒क्रमं॑णेष्वधिक्षि॒यन्ति॒ भुवं॑नानि॒ विश्वां ॥२

प्र । तत् । विष्णुः । स्त॒व॒ते॒ । वी॒र्येण । मृ॒गः । न । भी॒मः । कु॒च॒रः । गि॒रि॒ऽस्थाः ।

यस्यं । उ॒रुषुं । त्रि॒षु । वि॒ऽक्रमंणेषु । अ॒धि॒ऽक्षि॒यन्तिं । भुवंनानि । विश्वां ॥२

प्र । तत् । विष्णुः । स्तवते । वीर्येण । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः ।

यस्य । उरुषु । त्रिषु । विऽक्रमणेषु । अधिऽक्षियन्ति । भुवनानि । विश्वा ॥२

यस्येति वक्ष्यमाणत्वात् स इति अवगम्यते । स महानुभावः “वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण "स्तवते स्तूयते सर्वैः ॥ कर्मणि व्यत्ययेन शप् । वीर्येण स्तूयमानत्वे दृष्टान्तः । “मृगो “न सिंहादिरिव । यथा स्वविरोधिनो मृगयिता सिंहः “भीमः भीतिजनकः “कुचरः

कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता वा "गिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते । अस्मिन्नर्थे निरुक्तं - मृगो न भीमः कुचरो गिरिष्ठाः । मृग इव भीमः कुचरो गिरिष्ठा मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव । कुचर इति चरतिकर्म कुत्सितमथ चेद्देवताभिधानं क्वायं न चरतीति वा । गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा' (निरु. १, २० ) इति । तद्वदयमपि मृगोऽन्वेष्टा शत्रूणां भीमो भयानकः सर्वेषां भीत्यपादानभूतः । परमेश्वराद्भीतिः 'भीषास्माद्वातः पवते ' ( तै. आ. ८.८. १) इत्यादिश्रुतिषु प्रसिद्धा । किंच कुचरः शत्रुवधादिकुत्सितकर्मकर्ता कुषु सर्वासु भूमिषु लोकत्रये संचारी वा तथा गिरिष्ठाः गिरिवत् उच्छ्रितलोकस्थायी । यद्वा । गिरि मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः । ईडशोऽयं स्वमहिम्ना स्तूयते । किंच "यस्य विष्णोः "उरुषु विस्तीर्णेषु त्रिसंख्याकेषु "विक्रमणेषु पादप्रक्षेपेषु "विश्वा

सर्वाणि “भुवनानि भूतजातानि “अधिक्षियन्ति आश्रित्य निवसन्ति स विष्णुः स्तूयते ॥

प्र विष्णंवे शूषमेंतु मन्मं गिरिक्षितं उरुगायाय वृष्णें ।

य इदं दीर्घं प्रयंतं सधस्थमेकों विममे त्रिभिरित्पदेभिंः ॥ ३

प्र । विष्णंवे । शूषम् । एतु । मन्मं । गिरिऽक्षितें । उरुऽगायायं । वृष्णें ।

यः । इदम् । दीर्घम् । प्रऽयंतम् । सधऽस्थंम् । एकः । विऽममे । त्रिऽभिः । इत् । पदेऽभिः ॥३

प्र । विष्णवे । शूषम् । एतु । मन्म । गिरिऽक्षिते । उरुऽगायाय । वृष्णे ।

यः । इदम् । दीर्घम् । प्रऽयतम् । सधऽस्थम् । एकः । विऽममे । त्रिऽभिः । इत् । पदेऽभिः ॥३

“विष्णवे सर्वव्यापकाय “शूषम् अस्मत्कृत्यादिजन्यं बलं महत्त्वं “मन्म मननं स्तोत्रं मननीयं शूषं बलं वा विष्णुम् “एतु प्राप्नोतु ॥ कर्मणः संप्रदानत्वात् चतुर्थी । कीदृशाय । “गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते “उरुगायाय बहुभिर्गीयमानाय "वृष्णे वर्षित्रे कामानाम् । एवंमहानुभावं शूषं प्राप्नोतु । कोऽस्य विशेष इति उच्यते । “यः विष्णुः “इदं प्रसिद्धं दृश्यमानं “दीर्घम् अतिविस्तृतं “प्रयतं नियतं “सधस्थ सहस्थानं लोकत्रयम् “एकः “इत् एक एवाद्वितीयः सन् “त्रिभिः “पदेभिः पादैः “विममे विशेषेण निर्मितवान् ।

यस्य॒ त्री पू॒र्णा मधु॑ना प॒दान्यक्षी॑यमाणा स्व॒धया॑ मद॑न्ति ।

य उं त्रि॒धातुं पृथि॒वीमु॒त द्यामेकों दा॒धार॒ भुवंनानि॒ विश्वां ॥ ४

यस्यं । त्री । पू॒र्णा । मधुंना । प॒दानिं । अक्षींयमाणा । स्व॒धयां । मदंन्ति ।

यः । उ॒ं इतिं । त्रि॒ऽधातुं । पृ॒थि॒वीम् । उ॒त । द्याम् । एकः॑ । दा॒धारं । भुवंनानि । विश्वां ॥४

यस्य । त्री । पूर्णा । मधुना । पदानि । अक्षीयमाणा । स्वधया । मदन्ति ।

यः । ऊं इति । त्रिऽधातु । पृथिवीम् । उत । द्याम् । एकः । दाधार । भुवनानि । विश्वा ॥४

“यस्य विष्णोः “मधुना मधुरेण दिव्येनामृतेन “पूर्णा पूर्णानि त्रीणि "पदानि पादप्रक्षेपणानि “अक्षीयमाणा अक्षीयमाणानि “स्वधया अन्नेन “मदन्ति मादयन्ति

तदाश्रितजनान् । “य “उ य एव “पृथिवीं प्रख्यातां भूमिं “द्याम् “उत द्योतनात्मकमन्तरिक्षं च “विश्वा “भुवनानि सर्वाणि भूतजातानि चतुर्दश लोकांश्च । यद्वा । पृथिवीशब्देन अधोवर्तीनि अतलवितलादिसप्तभुवनान्युपात्तानि । द्युशब्देन तद्वान्तररूपाणि भूरादिसप्तभुवनानि । एवं चतुर्दश लोकान् विश्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजातानि । “त्रिधातु । त्रयाणां धातूनां समाहारस्त्रिधातु । पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा “दाधार धृतवान् ॥ तुजादित्वात् अभ्यासस्य दीर्घत्वम् ॥ उत्पादितवानित्यर्थः । छन्दोगारण्यके - ‘ तत्तेजोऽसृजत तदन्नमसृजत ता आप ऐक्षन्त ' इति भूतत्रयसृष्टिमुक्त्वा हन्ताहमिमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणि ' ( छा. उ. ६. ३. २-३.) इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता । यद्वा । त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः ॥

आतिथ्यायां तदस्य' इत्येषा प्रधानस्य याज्या ।
“अथातिथ्या' इति खण्डे सूत्रितम् - इदं विष्णुर्वि चक्रमे
तदस्य प्रियमभि पाथो अश्याम् ' ( आश्व. श्रौ. ४. ५) इति
।

तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।

उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व
उत्सः ॥५

तत् । अस्य । प्रियम् । अभि । पाथः । अश्याम् । नरः ।
यत्र । देवऽयवः । मदन्ति ।

उरुऽक्रमस्य । सः । हि । बन्धुः । इत्था । विष्णोः । पदे ।
परमे । मध्वः । उत्सः ॥५

तत् । अस्य । प्रियम् । अभि । पाथः । अश्याम् । नरः । यत्र । देवऽयवः । मदन्ति ।

उरुऽक्रमस्य । सः । हि । बन्धुः । इत्था । विष्णोः । पदे । परमे । मध्वः । उत्सः ॥५

“अस्य महतो विष्णोः “प्रियं प्रियभूतं “तत् सर्वैः सेव्यत्वेन प्रसिद्धं "पाथः । अन्तरिक्षनामैतत्, ‘पाथोऽन्तरिक्षं पथा व्याख्यातम्' (निरु. ६. ७) इति यास्केनोक्तत्वात्। अविनश्वरं ब्रह्मलोकमित्यर्थः। “अश्याम् व्याप्नुयाम् । तदेव विशेष्यते । “यत्र स्थाने “देवयवः देवं द्योतनस्वभावं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तः “नरः “मदन्ति तृप्तिमनुभवन्ति । तदश्यामित्यन्वयः । पुनरपि तदेव विशेष्यते । “उरुक्रमस्य अत्यधिकं सर्वं जगदाक्रममाणस्य तत्तदात्मना अत एब “विष्णोः व्यापकस्य परमेश्वरस्य “परमे उत्कृष्टे निरतिशये

केवलसुखात्मके “पदे स्थाने “मध्वः मधुरस्य “उत्सः निष्यन्दो वर्तते । तदश्याम् । यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति संकल्पमात्रेण अमृतकुल्यादिभोगा: प्राप्यन्ते तादृशमित्यर्थः। ततोऽधिकं नास्तीत्याह । “इत्था इत्थमुक्तप्रकारेण “स “हि “बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतो हितकरः वा तस्य पदं प्राप्तवतां न पुनरावृत्तेः । ‘ न च पुनरावर्तते ' इति श्रुतेस्तस्य बन्धुत्वम् । हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः ॥

ता वा॒ं वास्तू॑न्युश्मसि॒ गम॑ध्यै॒ यत्र॒ गावो॒ भूरि॑शृङ्गा अ॒यास॑ः ।

अत्राह॒ तदु॑रुगा॒यस्य॒ वृष्ण॑ः पर॒मं प॒दमव॑ भाति॒ भूरि॑ ॥६

ता । वा॒म् । वास्तू॑नि । उ॒श्म॒सि॒ । गम॑ध्यै । यत्र॑ । गाव॑ः । भूरि॑ऽशृङ्गाः । अ॒यास॑ः ।

अत्र॑ । अह॑ । तत् । उ॒रु॒ऽगा॒यस्य॑ । वृष्ण॑ः । प॒र॒मम् । प॒दम् । अव॑ । भा॒ति॒ । भूरि॑ ॥६

ता । वाम् । वास्तूनि । उश्मसि । गमध्यै । यत्र । गावः । भूरिऽशृङ्गाः । अयासः ।

अत्र । अह । तत् । उरुऽगायस्य । वृष्णः । परमम् । पदम् । अव । भाति । भूरि ॥६

हे पत्नीयजमानौ “वां युष्मदर्थं “ता तानि गन्तव्यत्वेन प्रसिद्धानि “वास्तूनि सुखनिवासयोग्यानि स्थानानि “गमध्यै युवयोः गमनाय “उश्मसि कामयामहे । तदर्थं विष्णुं प्रार्थयाम इत्यर्थः । तानीत्युक्तं कानीत्याह । “यत्र येषु वास्तुषु "गावः रश्मयः भूरिशृङ्गाः अत्यन्तोन्नत्युपेता

बहुभिराश्रयणीया वा “अयासः अयना गन्तारोऽतिविस्तृताः । यद्वा । यासो गन्तारः । अतादृशाः । अत्यन्तप्रकाशयुक्ता इत्यर्थः । “अत्राह अत्र खलु वास्त्वाधारभूतं द्युलोके “उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य “वृष्णः कामानां वर्षितुर्विष्णोस्तत्तादृशं सर्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धं परमं निरतिशयं “पदं स्थानं “भूरि अतिप्रभूतम् “अव “भाति स्वमहिम्ना स्फुरति । अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षणेन व्याख्यातः - तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृङ्गं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वायासोऽयनाः । तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि । पादः पद्यतेः' (निरु. २. ७) इति ॥ ॥ २४ ॥

**टिप्पणी**

१.१५४.१ विष्णोर्नु कं वीर्याणि इति

तु. विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह । यः पार्थिवान्यपि कविर्विममे रजांसि । चस्कम्भ यः स्वरहसास्खलता त्रिपृष्ठं । यस्मात् त्रिसाम्यसदनाद् उरुकम्पयानम् ॥ भागवतपुराणम् २.७.४० ॥

१.१५४.२ प्र तद्विष्णुः स्तवते वीर्येण इति

भीम उपरि पौराणिकसंदर्भा-

भीम उपरि टिप्पणी

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.७ | १.३७ | १.६७ | १.९७ | १.१२७ | १.१५७ | १.१८७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.८ | १.३८ | १.६८ | १.९८ | १.१२८ | १.१५८ | १.१८८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.९ | १.३९ | १.६९ | १.९९ | १.१२९ | १.१५९ | १.१८९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१० | १.४० | १.७० | १.१०० | १.१३० | १.१६० | १.१९० |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.११ | १.४१ | १.७१ | १.१०१ | १.१३१ | १.१६१ | १.१९१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१२ | १.४२ | १.७२ | १.१०२ | १.१३२ | १.१६२ | |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१३ | १.४३ | १.७३ | १.१०३ | १.१३३ | १.१६३ | |

# ऋग्वेदः सूक्तं १.१५५

← सूक्तं १.१५४

ऋग्वेदः - मण्डल १

सूक्तं १.१५५

दीर्घतमा औचथ्यः

सूक्तं १.१५६ →

## दे. विष्णुः, १-३ इन्द्राविष्णू। जगती ।

प्र वः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत ।

या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना ॥१॥

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।

या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥२॥

ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे ।

दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥३॥

तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीळ्हुषः ।

यः पार्थिवानि त्रिभिरिद्विगामभिरुरु क्रमिष्टोरुगायाय जीवसे ॥४॥

द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति ।

तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः ॥५॥

चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् ।

बृहच्छरीरो विमिमान ऋक्वभिर्युवाकुमारः प्रत्येत्याहवम् ॥६॥

## सायणभाष्यम्

‘प्र वः पान्तम्' इति षडृचं षोडश सूक्तं दैर्घतमसं जागतम् । पूर्वत्र वैष्णवं हि' इत्युक्तत्वात् वैष्णवम् । आद्यस्तृच इन्द्रदेवताकश्च । प्र वो जागतं त्वैन्द्रश्चाद्यस्तृचः'

इत्यनुक्रमणिका। आभिप्लविकेषूक्थ्येषु स्तोमातिशंसने उक्तो विनियोगः ॥

प्र व॒ः पान्त॒मन्धंसो धियाय॒ते म॒हे शूरांय॒ विष्णंवे चार्चत ।

या सानुंनि॒ पर्वंताना॒मदांभ्या म॒हस्त॒स्थत॒ुरर्वंतेव सा॒धुनां ॥ १

प्र । व॒ः । पान्तंम् । अन्धंसः । धि॒या॒ऽय॒ते । म॒हे । शूरांय । विष्णंवे । च॒ । अ॒र्च॒त॒ ।

या । सानुंनि । पर्वंतानाम् । अदांभ्या । म॒हः । त॒स्थतुंः । अर्वंताऽइव । सा॒धुनां ॥१

प्र । वः । पान्तम् । अन्धसः । धियाऽयते । महे । शूराय । विष्णवे । च । अर्चत ।

या । सानुनि । पर्वतानाम् । अदाभ्या । महः । तस्थतुः । अर्वताऽइव । साधुना ॥१

हे अध्वर्य्वादयः “वः युष्माकं संबन्धि “पान्तं पालनस्वभावं पातव्यं वा “अन्धसः अन्धः सोमरूपमन्नं “प्र “अर्चत प्रकर्षेण संपादयत । कस्मै । “धियायते स्तुतीरिच्छते “महे महते “शूराय विक्रान्तायेन्द्राय "विष्णवे व्यापकायैतन्नामकाय देवाय “च । कस्तयोरतिशय इति उच्यते । “या यौ इन्द्राविष्णू “पर्वतानां प्रीणनवतां पूरणवतां वा । पर्वतशब्दो यास्केनैवं निरुक्तः -- ‘ पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा ' इति । उक्तलक्षणानां लोकानाँ “सानुनि समुच्छ्रितप्रदेशे । सर्वलोके इत्यर्थः । अथवा मेघानां समुच्छ्रितप्रदेशे । पर्वतशब्दः मेघनामसु उक्तत्वात् । तत्र “तस्थतुः तिष्ठतः । कीदृशौ तौ । “अदाभ्या अदम्भनीयौ परैरनभिभाव्यौ अत एव "महः महान्तौ । यद्वा । महो महसि स्वतेजसि सानुनीत्यनेन

संबन्धः । तत्र दृष्टान्तः । “साधुना अभिमतदेशप्रापणसमर्थेन “अर्वता वेगवताश्वेन “इव । तेन यथा अत्युच्छ्रितं प्रदेशमारोहति तद्वदुच्चं पदमारूढौ । तस्माताभ्यामर्चत ।।

सोमातिरेके तृतीयसवने एषा वैकल्पिकी याज्या। तथा च सूत्रितं - ‘ त्वेषमित्था समरणं शिमीवतोरिति वा याज्या' (आश्व. श्रौ. ६. ७) इति ॥

त्वे॒षमि॒त्था स॒मरं॑णं॒ शिमीं॑वतो॒रिन्द्रा॑विष्णू सु॒त॒पा वा॑मुरुष्यति ।

या मर्त्या॑य प्रतिधी॒यमा॑न॒मित्कृ॒शानो॒रस्तु॑रस॒नामु॑रु॒ष्यथः॑ ॥२

त्वे॒षम् । इ॒त्था । स॒म्ऽअरं॑णम् । शिमीं॑ऽवतोः । इन्द्रा॑विष्णू॒ इतिं । सु॒त॒ऽपाः । वा॒म् । उ॒रु॒ष्य॒ति॒ ।

या । मर्त्या॑य । प्र॒ति॒ऽधी॒यमा॑नम् । इत् । कृ॒शानोः॑ । अस्तुः॑ । अ॒स॒नाम् । उ॒रु॒ष्यथः॑ ॥२

त्वेषम् । इत्था । सम्ऽअरणम् । शिमीऽवतोः । इन्द्राविष्णू इति । सुतऽपाः । वाम् । उरुष्यति ।

या । मर्त्याय । प्रतिऽधीयमानम् । इत् । कृशानोः । अस्तुः । असनाम् । उरुष्यथः ॥२

हे "इन्द्राविष्णू "शिमीवतोः इष्टप्रदानादिकर्मवतोः “वां युवयोः “इत्था इत्थं “त्वेषं प्रदीप्तं “समरणं सम्यग्यागदेशगमनं "सुतपाः हुतशिष्टसोमपीतयजमानः "उरुष्यति रक्षति यागेन पूजयति । यद्वा । शिमीवतोः प्रहरणादिकर्मवतोः वां युवयोः त्वेषं दीप्तं शौर्योपेतं

समरणं सम्यक्परस्परगमनोपेतं वृष्टिप्रदानाय मेघविदारणरूपं यजमान उरुष्यति रक्षति स्तौतीत्यर्थः । कस्तयोरतिशय इति उच्यते । “या यौ इन्द्राविष्णू “मर्त्याय मनुष्याय हविर्दात्रे यजमानाय "प्रतिधीयमानमित् प्रतिधातव्यं फलरूपम् “असनाम् असनं चलनशीलं प्रदानशीलमन्नादिकम् “अस्तुः अभिमतक्षेप्तुर्निरसितुर्वा शत्रूणां “कृशानोः अग्नेः सकाशात् "उरुष्यथः अविच्छेदेन प्रवर्तयथः । वह्नौ हुतं हविः स्वीकृत्य तन्मुखादेव फलमपि दास्यथ इत्यर्थः ।

ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरां नयति रेतसे भुजे ।

दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥३

ताः । ईम् । वर्धन्ति । महि । अस्य । पौंस्यम् । नि । मातरां । नयति । रेतसे । भुजे ।

दधा॑ति । पु॒त्रः । अव॑रम् । पर॑म् । पि॒तुः । नाम॑ । तृ॒तीय॑म् । अधि॑ । रो॒च॒ने । दि॒वः ॥३

ताः । ईम् । वर्धन्ति । महि । अस्य । पौंस्यम् । नि । मातरा । नयति । रेतसे । भुजे ।

दधाति । पुत्रः । अवरम् । परम् । पितुः । नाम । तृतीयम् । अधि । रोचने । दिवः ॥३

“ताः सोमरूपाः प्रसिद्धा आहुतयो यजमानेन हुताः “ईम् एतत् “अस्य इन्द्रस्य “महि महत् “पौंस्यं पुंसः कर्म वक्ष्यमाणरूपं बलं “वर्धन्ति वर्धयन्ति । ईमित्यनर्थको वा । स चेन्द्रः सोमपानजनितं सामर्थ्यं “मातरा द्यावापृथिव्यौ “नि “नयति नितरां प्रापयति । किमर्थम् । "रेतसे प्राणिनां पुत्राद्युत्पादनसामर्थ्याय “भुजे तेषां भोगाय रक्षणाय वा । कुत्रेति तदुच्यते । “दिवः द्योतमानस्यादित्यस्य “अधि अधिकं “रोचने रोचमाने मण्डले। “नाम नमनं

द्यावापृथिव्योः स्थापितं सामर्थ्यं “पुत्रः पुरुत्राता सर्वो जनः “पितुः पालकाद्विष्णोरनुग्रहात् । यद्वा । पितुः स्वोत्पादकात् स्वयमुत्पन्नं सत् “अवरं निकृष्टं नाम पौत्रसंज्ञं “परं तदुत्कृष्टं पुत्र इति नाम तदुभयापेक्षया “तृतीयं पितेति नाम “दधाति धारयति । त्रीणि वाव रेतांसि पिता पुत्रः पौत्रः' (तै. सं. ५. ६. ८. ४ ) इति श्रुतेः । अस्यायमर्थः । अग्नौ हुताः सोमाहुतयः आदित्यमण्डलं प्राप्य द्वादशात्मनः सवितुर्मूर्त्यन्तरौ इन्द्राविष्णू पोषयन्ति तुष्टौ तौ मेघद्वारा वर्षतः । तया वृष्ट्या सस्यादिद्वारा प्रजाः पुत्रपौत्रादिरूपेण वर्धयत इत्येवं महानुभावौ इन्द्राविष्णू इति ॥

तत्त॒दिदं॑स्य॒ पौंस्यं॑ गृणीमसी॒नस्यं॑ त्रा॒तुरं॑वृ॒कस्यं॑ मी॒ळ्हुषं॑ः ।

यः पार्थिवानि त्रि॒भिरिद्विगा॑मभिरु॒रु क्रमिं॑ष्टोरुगा॒याय॑ जी॒वसे॑ ॥४

तत्ऽतं॑त् । इत् । अ॒स्य॒ । पौंस्यं॑म् । गृ॒णी॒म॒सि॒ । इ॒नस्यं॑ । त्रा॒तुः । अ॒वृ॒कस्यं॑ । मी॒ळ्हुषः॑ ।

यः । पार्थिवानि । त्रि॒ऽभिः । इत् । विगा॑मऽभिः । उ॒रु । क्रमिं॑ष्ट । उ॒रु॒ऽगा॒याय॑ । जी॒वसे॑ ॥४

तत्ऽतत् । इत् । अस्य । पौंस्यम् । गृणीमसि । इनस्य । त्रातुः । अवृकस्य । मीळ्हुषः ।

यः । पार्थिवानि । त्रिऽभिः । इत् । विगामऽभिः । उरु । क्रमिष्ट । उरुऽगायाय । जीवसे ॥४

“अस्य महानुभावस्य “तत्तत् “पौंस्यं पुंस्त्वं पराक्रमातिशयं “गृणीमसि गृणीमः स्तुमः । कीदृशस्यास्य । “इनस्य सर्वस्य स्वामिनः “त्रातुः पालकस्य “अवृकस्य । वृको

हिंसकः शत्र्वादिः । तद्रहितस्य "मीळ्हुषः सेक्तुर्नित्यतरुणस्य । स्तुत्येषु पराक्रमेषु मध्ये एकमुदाहरति । “यः विष्णुः “पार्थिवानि पृथिव्यादीनि प्रथनवन्ति वा सामर्थ्यात् रजांसीति गम्यते । लोकत्रयस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुदाहृतम् । तानि “त्रिभिरिद्धिगामभिः त्रिभिरेव विविधगमनैः "उरु विस्तीर्णं यथा भवति तथा “क्रमिष्ट क्रान्तवान् विचक्रमे इत्यर्थः । “उरुगायाय उगातव्याय “जीवसे लोकत्रयरक्षणाय । यद्वा । उरुगायाय ॥ षष्ठ्यर्थे चतुर्थी ॥ उरुगायस्य विष्णोरीदृशं पराक्रमं गृणीमसि । किमर्थम् । जीवसे जीवनाय रक्षणाय ॥

द्वे इदंस्य॒ क्रमंणे स्व॒र्दृशोंऽभि॒ख्याय॒ मर्त्यों भुरण्यति ।

तृ॒तीयं॑मस्य॒ नकि॒रा दं॑धर्षति॒ वयं॑श्च॒न प॒तयं॑न्तः पत॒त्रिणं॑ः ॥५

द्वे इतिं । इत् । अ॒स्य॒ । क्रमं॑णे॒ इतिं । स्व॒ःऽदृशः॑ । अ॒भि॒ऽख्यायं । मर्त्यः॑ । भु॒र॒ण्य॒ति॒ ।

तृ॒तीयं॑म् । अ॒स्य॒ । नकिः॑ । आ । द॒धृ॒र्ष॒ति॒ । वयः॑ । च॒न । प॒तयं॑न्तः । प॒त॒त्रिणः॑ ॥५

द्वे इति । इत् । अस्य । क्रमणे इति । स्वःऽदृशः । अभिऽख्याय । मर्त्यः । भुरण्यति ।

तृतीयम् । अस्य । नकिः । आ । दधर्षति । वयः । चन । पतयन्तः । पतत्रिणः ॥५

“अस्य “स्वर्दृशः स्वर्गस्य सर्वस्य वा द्रष्टुर्विष्णोः “द्वे “इत् “क्रमणे द्वे एव पदे "मर्त्यः मनुष्यः “अभिख्याय सर्वभूत्यादिना प्रख्याय “भुरण्यति गच्छति भजते।

भुरण्यतिः कण्ड्वादिर्गतिकर्मा, ‘भुरण्यति शवति ' (नि. २. १४. १६) इति तत्कर्मसु पाठात् । प्रसिद्धत्वात् भूलोकं वृष्ट्यागमनादन्तरिक्षं चेत्युभे क्रमणे जानाति । “अस्य विष्णोः “तृतीयं क्रमणं द्युलोकाख्यं कोऽपि मर्त्यः ”नकिः नैव “आ “दधर्षति बुद्ध्या नाभिभवति ज्ञातुं न शक्नोतीत्यर्थः । न केवलं मनुष्य एव अपि तु “वयश्चन वेतारो मरुतोऽपि । कीदृशास्ते । “पतयन्तः सर्वत्र गमनसमर्थाः तथा “पतत्रिणः पतनशीला गरुडादयो वायवो वा नकिरा दधर्षति नैव शक्नुवन्ति ॥ धृषेर्लेटि अडागमः ॥ सत्यलोकस्य अत्यन्तविप्रकृष्टत्वेन सर्वेषामविषयत्वादिति भावः ॥

च॒तुर्भि॑ः सा॒कं नंव॒तिं च॒ नामंभिश्च॒क्रं न वृ॒त्तं व्यतीँरवीविपत् ।

बृ॒हच्छ॑रीरो वि॒मिमा॑न॒ ऋक्व॑भि॒र्युवाकु॑मार॒ः प्रत्ये॑त्याह॒वम् ॥६

च॒तुःऽभि॑ः । सा॒कम् । न॒व॒तिम् । च॒ । नाम॑ऽभिः । च॒क्रम् । न । वृ॒त्तम् । व्यती॑न् । अ॒वी॒वि॒प॒त् ।

बृ॒हत्ऽश॑रीरः । वि॒ऽमिमा॑नः । ऋक्व॑ऽभिः । युवा॑ । अकु॑मारः । प्रति॑ । ए॒ति॒ । आ॒ऽह॒वम् ॥६

चतुःऽभिः । साकम् । नवतिम् । च । नामऽभिः । चक्रम् । न । वृत्तम् । व्यतीन् । अवीविपत् ।

बृहत्ऽशरीरः । विऽमिमानः । ऋक्वऽभिः । युवा । अकुमारः । प्रति । एति । आऽहवम् ॥६

अयमादित्यात्मा विष्णुः “चतुर्भिः “साकं सहितां "नवतिं “च । चतुर्नवतिमित्यर्थः । एतत्संख्याकान् कालावयवान् “नामभिः स्वकीयनमनप्रकारैः प्रेरणविशेषैः “वृत्तं यथा

भवति तथा “व्यतीन् विविधातनस्वभावान् वृत्तं “चक्रं “न बह्वरोपेतं चक्रमिव तं यथा शत्रोरुपरि प्रक्षेपेण भ्रमयति तद्वदुक्तसंख्याकान् कालावयवान् “अवीविपत् कम्पयति भ्रमयति॥ ‘ टुवेपृ कम्पने '। ण्यन्तात् लुङि चङि रूपम् ॥ के पुनस्ते उच्यते । संवत्सर एकः । अयने द्वे। पञ्चर्तवः । द्वादश मासाः । चतुर्विंशत्यर्धमासाः । त्रिंशदहोरात्राः । अष्टौ यामाः । एकस्मिन् दिने पर्यावर्तमानानि मेषादीनि द्वादश लग्नानीति मिलित्वा चतुरधिकनवतिसंख्याकानवीविपत्। नन्वादित्यः स्वयमपि इतरवत्परिभ्रमति कथं भ्रमयति इत्युच्यते । नैष दोषः । एतेषां भ्रामकस्य धुवस्य विष्णोः मूर्त्यन्तरत्वात्। अथवा स्वभ्रमणाधीनत्वादितरेषां परिभ्रमणस्य अतः स्वयं भ्रमयति इत्युच्यते । एवं कलात्मकः विष्णुः “बृहच्छरीरः विराडात्मना सर्वदेवमनुष्यादिशरीराणां स्वशरीरत्वात् । बृहच्छरीरत्वमेवोपपादयति । “विमिमानः विविधमात्मानं मिमानो देवतिर्यगात्मना विभज्य स्थापयन् । यद्वा ।

“ऋक्वभिः स्तुतिमद्भिः मन्त्रवद्भिः वा विमिमानः । यद्यपि विभुस्तथापि भक्त्याधीनत्वात् स्तुत्या मीयते । “युवा सर्वत्र मिश्रणशीलो नित्यतरुणो वा अत एव “अकुमारः अनल्पः एवंभूतो महाविष्णुः “आहवम् आह्वानं “प्रत्येति गच्छति यज्ञदेशम् ॥ ॥ २५ ॥

# मण्डल

## १

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |

# ऋग्वेदः सूक्तं १.१५६

← सूक्तं १.१५५

ऋग्वेदः - मण्डल १

सूक्तं १.१५६

दीर्घतमा औचथ्यः

सूक्तं १.१५७ →

## दे. विष्णुः । जगती ।

---

भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः ।

अधा ते विष्णो विदुषा चिदर्ध्य स्तोमो यज्ञश्च राध्यो हविष्मता ॥१॥

यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति ।

यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥२॥

तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन ।

आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥३॥

तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः ।

दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते ॥४॥

आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः ।

वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत् ॥५॥

## सायणभाष्यम्

‘ भवा मित्रः' इति पञ्चर्चं सप्तदशं सूक्तं दैर्घतमसम् । ' जागतं तु ' इत्युक्तत्वादिदमपि जागतम् । 'वैष्णवं हि ' इत्युक्तत्वाद्वैष्णवम् । ‘भव पञ्च' इत्यनुक्रान्तम् ॥ उक्थ्ये तृतीयसवने अच्छावाकशस्त्रे एतत् सूक्तं विनियुक्तम् । 'उक्थ्ये तु होत्रकाणाम्' इति खण्डे सूत्रितं - भवा मित्रः सं वां कर्मणा ' ( आश्व. श्रौ. ६. १) इति । सौम्यचरोरुभयतो

वृतेन यष्टव्यं तत्रोपरितने घृतयागे ‘ उरु विष्णो वि क्रमस्व' इति प्राकृता याज्या। दशमेऽहनि तु तस्याः स्थाने ' भवा मित्रः इत्येषा प्रयोक्तव्या ।' दशमेऽहनि' इति खडे सूत्रितम् -' उरु विष्णो वि क्रमस्वेति घृतयाज्यास्थाने भवा मित्रः' (आश्व. श्रौ. ८. १२ ) इति ॥

भवां मि॒त्रो न शेव्यों घृ॒तासुंति॒र्विभूंतद्युम्न एव॒या उं सु॒प्रथां॒ः ।

अधां ते विष्णो वि॒दुषां चि॒दर्ध्य॒ः स्तोमों य॒ज्ञश्च॒ राध्यों ह॒विष्मंता ॥१

भवं । मि॒त्रः । न । शेव्यः॑ । घृ॒तऽआंसुतिः । विभूंतऽद्युम्नः । ए॒व॒ऽयाः । उ॒ं इतिं । स॒ऽप्रथाः॑ ।

अधं । ते॒ । वि॒ष्णो॒ इतिं । वि॒दुषां । चि॒त् । अर्ध्यः॑ । स्तोमः॑ । य॒ज्ञः । च॒ । राध्यः॑ । ह॒विष्मंता ॥१

भव । मित्रः । न । शेव्यः । घृतऽआसुतिः । विभूतऽद्युम्नः । एवऽयाः । ऊं इति । सऽप्रथाः ।

अध । ते । विष्णो इति । विदुषा । चित् । अर्ध्यः । स्तोमः । यज्ञः । च । राध्यः । हविष्मता ॥१

हे विष्णो “मित्रो “न । मितेर्दुःखात् त्राता सखा आदित्यो वा मित्रः। ‘प्रमीतेस्त्रायते' (निरु. १०. २१) इति निरुक्तम् । तद्वत् "शेव्यः सुखे साधुः सुखकर्ता “घृतासुतिः । घृतमुदकम् आसूयते येन स तादृशः । यद्वा । घृतमाज्यमाभिमुख्येन नीयते यस्मै स तादृशः । “विभूतद्युम्नः प्रभूतयशाः प्रभूतान्नो वा “एवयाः रक्षणस्य मिश्रयिता प्रापयिता । "सप्रथाः सर्वतः पृथुः । प्रतिविशेषणं नः “भव इति संबन्धः । द्व्यचोऽतस्तिङः '

इति दीर्घः। “उ इति पादपूरणः ॥ हे “विष्णो त्वं यस्मादीदृशो भवसि “अध अस्मात् “ते तव “स्तोमः स्तोत्रविशेषः “विदुषा त्वन्माहात्म्यवेदित्रा यजमानेन “अर्घ्यः पुनःपुनः प्रवर्धनार्हः । एकवारकरणे न संपूर्यते इत्यर्थः । तथा ते “यज्ञश्च "हविष्मता तेन यजमानेन “राध्यः समाराधनीयः। यद्वा । विदुषा होत्रा स्तोमो राध्यो हविष्मता यज्ञश्च राध्यः ॥

यः पूर्व्याय॑ वे॒धसे॒ नवीं॑यसे सु॒मज्जा॑नये॒ विष्ण॑वे॒ ददा॑शति ।

यो जा॒तम॑स्य मह॒तो महि॒ ब्रव॒त्सेदु॒ श्रवो॑भि॒र्युज्यं॑ चिद॒भ्यं॑सत् ॥२

यः । पू॒र्व्याय॑ । वे॒धसे॑ । नवी॑यसे । सु॒मत्ऽजा॑नये । विष्ण॑वे । ददा॑शति ।

यः । जा॒तम् । अ॒स्य॒ । म॒ह॒तः । महिं । ब्रवंत् । सः । इत् ।
उ॒ं इतिं । श्रव॑ःऽभिः । युज्यंम् । चि॒त् । अ॒भि । अ॒स॒त् ॥२

यः । पूर्व्याय । वेधसे । नवीयसे । सुमत्ऽजानये । विष्णवे
। ददाशति ।

यः । जातम् । अस्य । महतः । महि । ब्रवत् । सः । इत् ।
ऊं इति । श्रवःऽभिः । युज्यम् । चित् । अभि । असत् ॥२

"यः यो मर्त्यः “पूर्व्याय पूर्वकालीनाय नित्यायेत्यर्थः ।
"वेधसे विविधजगत्कर्त्रे “नवीयसे नित्यनूतनाय
अत्यन्तरमणीयायेत्यर्थः । स्तुत्याय वा “सुमज्जानये
स्वयमेवोत्पन्नाय ॥ जनेरौणादिक इण् ॥ ‘
सुमत्स्वयमित्यर्थः' (निरु. ६. २२) इति यास्कः । यद्वा ।
सुतरां मादयतीति सुमत्। तादृशी जाया यस्य स तथोक्तः
। तस्मै सर्वजगन्मादनशीलश्रीपतये इत्यर्थः ॥ बहुव्रीहौ
‘जायाया निङ्' (पा. सू. ५. ४. १३४ ) इति निङादेशः

समासान्तः । वलि लोपः ॥ उक्तगुणकाय "विष्णवे व्यापकाय “ददाशति हविरादिकं ददाति । किंच "अस्य विष्णोः "महतः महानुभावस्य “महि महत् पूज्यं “जात जन्म उत्पतिं हिरण्यगर्भादिरूपं जन्म “ब्रवत् ब्रूयात् ॥ ब्रवीतेर्लेटि अडागमः ॥ संकीर्तयेत्। “सेदु । उशब्दोऽपिशब्दार्थः । सोऽपि दाता स्तोता च “श्रवोभिः अन्नैः कीर्तिभिर्वा युक्तः सन् “युज्यं “चित सर्वैर्गन्तव्यमेव तत्पदम् “अभि आभिमुख्येन “असत् गच्छति प्राप्नोति ॥

तमुं स्तोतारः पूर्व्यं यथां विद ऋतस्य गर्भं जनुषां पिपर्तन
।

आस्यं जानन्तो नामं चिद्विवक्तन महस्तें विष्णो सुमतिं भंजामहे ॥३

तम् । ऊं इतिं । स्तोतारः । पूर्व्यम् । यथां । विद । ऋतस्यं । गर्भम् । जनुषां । पिपर्तन ।

आ । अस्य । जानन्तः । नामं । चित् । विवक्तन । महः । ते । विष्णो इतिं । सुऽमतिम् । भजामहे ॥३

तम् । ऊं इति । स्तोतारः । पूर्व्यम् । यथा । विद । ऋतस्य । गर्भम् । जनुषा । पिपर्तन ।

आ । अस्य । जानन्तः । नाम । चित् । विवक्तन । महः । ते । विष्णो इति । सुऽमतिम् । भजामहे ॥३

हे “स्तोतारः “तमु तमेव विष्णुं “पूर्व्यं पूर्वार्हम् अनादिसंसिद्धम् “ऋतस्य “गर्भं यज्ञस्य गर्भभूतं यज्ञात्मनोत्पन्नमित्यर्थः । यज्ञो वै विष्णुः '(श. ब्रा. १. १. २. १३) इति श्रुतेः । यद्वा । ऋतस्योदकस्य गर्भं गर्भकारणम् उदकोत्पादकमित्यर्थः । ‘ अप एव ससर्जादौ'

(मनु. १.८) इति स्मृतेः । एवंभूतं विष्णुं “यथा “विद जानीथ तथा “जनुषा जन्मना स्वत एव न केनचिद्वरलाभादिना पिपर्तन स्तोत्रादिना प्रीणयत यावदस्य माहात्म्यं जानीथ तावदित्यर्थः ॥ विदेर्लटि मध्यमबहुवचनम् । ' विद ऋतस्य ' इत्यत्र संहितायाम् ‘ ऋत्यकः' इति प्रकृतिभावः ॥ किंच “अस्य महानुभावस्य विष्णोः “नाम “चित् सर्वैर्नमनीयमभिधानं सार्वात्म्यप्रतिपादकं विष्णुरित्येतन्नाम “जानन्तः पुरुषार्थप्रदमित्यधिगच्छन्तः “आ समन्तात् “विवक्तन वदत संकीर्तयत । यद्वा । नाम यज्ञात्मना नमनं विष्णोरेव सर्वेषां स्वर्गापवर्गसाधनाय इष्ट्याद्यात्मना द्रव्यदेवतात्मना वा परिणामम् आ जानन्तो यूयं विवक्तन ब्रूत स्तुत ॥ वचेर्लोटि छान्दसः शपः श्लुः । बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । पूर्ववत् तनादेशः ॥ इदानीं साक्षात्कृत्याह । हे “विष्णो सर्वात्मक देव "महः महतः "ते

तव “सुमतिं सुष्टुतिं शोभात्मिकां बुद्धिं वा “भजामहे सेवामहे वयं यजमानाः ॥

अग्नीषोमप्रणयने 'तमस्य राजा ' इत्येषा प्रयोक्तव्या। ‘ अग्नीषोमौ प्रणेष्यत्सु' इति खण्डे सूत्रितं -- तमस्य राजा वरुणस्तमश्विनेत्यर्धर्चं आरमेत् ' ( आश्व. श्रौ. ४. १० ) इति ।।

तमं॑स्य॒ राजा॒ वरु॑ण॒स्तम॒श्विना॒ क्रतुं॑ सचन्त॒ मारु॑तस्य वे॒धसः॑ ।

दा॒धार॒ दक्षं॑मुत्त॒मम॑ह॒र्विदं॑ व्र॒जं च॒ विष्णु॒ः सखि॑वाँ अपोर्णु॒ते ॥४

तम् । अ॒स्य॒ । राजा॑ । वरु॑णः । तम् । अ॒श्विना॑ । क्रतु॑म् । स॒च॒न्त॒ । मारु॑तस्य । वे॒धसः॑ ।

दा॒धारं । दक्षं॑म् । उ॒त्ऽत॒मम् । अ॒ह॒ःऽविदं॑म् । व्र॒जम् । च॒ ।
विष्णुः॑ । सखिं॑ऽवान् । अ॒प॒ऽऊ॒र्णु॒ते ॥४

तम् । अस्य । राजा । वरुणः । तम् । अश्विना । क्रतुम् ।
सचन्त । मारुतस्य । वेधसः ।

दाधार । दक्षम् । उत्ऽतमम् । अहःऽविदम् । व्रजम् । च ।
विष्णुः । सखिऽवान् । अपऽऊर्णुते ॥४

“मारुतस्य । मरुतामृत्विजां संघातः मारुतम् । तद्वतः ॥
मत्वर्थो लुप्यते ॥ मरुतां देवानां संबन्धिनो वा “वेधसः
मेधाविनः “अस्य यजमानस्य “तं प्रसिद्धं “क्रतुं याग
यज्ञात्मकं विष्णुम्। यज्ञो वै विष्णुः' इति श्रुतेः । “राजा
राजमानः “वरुणः “सचन्त सेवते । "तम् एवं क्रतुं यागम्
“अश्विना अश्विनी सचेते। अन्येऽपि देवाः सचन्ते सेवन्ते ।
किंच “विष्णुः सवनत्रयात्मना व्याप्तो विष्णुः “सखिवान्
यजमानादिसखिभिर्युक्तः सन् “उत्तमम् उत्कृष्टतमम्

“अहर्विदम् अहर्वेत्तारं स्वर्गोत्पादकमित्यर्थः। “दक्षं बलं फलप्रदानसामर्थ्यरूपं “दाधार धृतवान् । किंच "व्रजं च मेघं च । व्रज इति मेघनाम, ‘व्रजः चरुः' (नि. १. १०. ११) इति तन्नामसु पाठात् । तं वृष्ट्युदकाय “अपोर्णुते अपगतावरणं करोति । आहुतिद्वारा यज्ञस्यैव वृष्ट्युत्पादकत्वात् । यद्वा । मारुतस्य मरुत्संघातस्य देवगणस्य वेधसो विधातुः स्रष्टुर्विष्णोः क्रतुं कर्म पालनादिरूपं वरुणादयः सचन्ते । तदधीनत्वात् पालनस्य। स च सखिवान् इन्द्रमरुदादिसहायोपेतः सन् उक्तलक्षणं दक्षं वृष्ट्युत्पादनादिसामर्थ्यरूपं बलं दाधार तथा व्रजं चापोर्णुते ॥

आ यो वि॒वायं स॒चथांय॒ दैव्य॒ इन्द्रांय॒ विष्णुंः सु॒कृतें सु॒कृत्तंरः ।

वे॒धा अ॑जिन्वत्त्रिषध॒स्थ आर्य॑मृ॒तस्य॑ भा॒गे यज॑मान॒माभ॑जत् ॥५

आ । यः । वि॒वाय॑ । स॒चथा॑य । दैव्यः॑ । इन्द्रा॑य । विष्णुः॑ । सु॒ऽकृते॑ । सु॒कृत्ऽत॑रः ।

वे॒धाः । अ॒जि॒न्व॒त् । त्रि॒ऽस॒ध॒स्थः । आर्य॑म् । ऋ॒तस्य॑ । भा॒गे । यज॑मानम् । आ । अ॒भ॒ज॒त् ॥५

आ । यः । विवाय । सचथाय । दैव्यः । इन्द्राय । विष्णुः । सुऽकृते । सुकृत्ऽतरः ।

वेधाः । अजिन्वत् । त्रिऽसधस्थः । आर्यम् । ऋतस्य । भागे । यजमानम् । आ । अभजत् ॥५

यः विष्णुः “दैव्यः दिवि भवः “सुकृत्तरः शोभनफलप्रदानां मध्ये श्रेष्ठः “आ “विवाय आगच्छति ॥ वेतेर्लिटि रूपम् । किमर्थम् । "सचथाय सचनाय यागसहायकरणाय। कस्मै

। “इन्द्राय। इरां हविर्लक्षणान्नं द्रावयतीतीन्द्रो यजमानः। ‘इन्द्र इरां दृणातीति इदंकरणादित्याग्रायणः ( निरु. १०, ८) इति यास्केनोक्तनिर्वचनस्यात्रापि सद्भावात् ॥ तस्मै उक्तरूपाय यजमानाय “सुकृते शोभनस्तुतिकर्त्रे । आगत्य च “वेधाः अभिमतफलविधाता “त्रिषधस्थः त्रिसंख्योपेतसहस्थानवान् । सवनत्रयस्थानः क्षित्यादिस्थानत्रयो वा विष्णुः । “आर्यम् आगन्तव्यं यजमानम् “अजिन्वत् प्रीणयति ॥ जिवि प्रीणनार्थः । इदित्वात् नुम् ॥ तदर्थम् “ऋतस्य यज्ञस्य “भागे हुतशेषरूपे तं “यजमानम् आभजत भजति समीपयतीत्यर्थः। यद्वा । ऋतस्य यज्ञस्य भागे फले यजमानम् आभिजत् स्वामित्वेन स्थापयति ॥ ॥ २६ ॥ ॥ २१ ॥

# ऋग्वेदः सूक्तं १.१५७

← सूक्तं १.१५६

ऋग्वेदः - मण्डल १

सूक्तं १.१५७

दीर्घतमा औचथ्यः

सूक्तं १.१५८ →

## दे. अश्विनौ। जगती, ५-६ त्रिष्टुप्।

अबोध्यग्निर्ज्म उदेति सूर्यो व्युषाश्चन्द्रा मह्यावो अर्चिषा ।

आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् ॥१॥

यद्युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् ।

अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥२॥

अर्वाङ्त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।

त्रिवन्धुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे ॥३॥

आ न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया मिमिक्षतम् ।

प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥४॥

युवं ह गर्भं जगतीषु धत्थो युवं विश्वेषु भुवनेष्वन्तः ।

युवमग्निं च वृषणावपश्च वनस्पतीँरश्विनावैरयेथाम् ॥५॥

युवं ह स्थो भिषजा भेषजेभिरथो ह स्थो रथ्या राथ्येभिः ।

अथो ह क्षत्रमधि धत्थ उग्रा यो वां हविष्मान्मनसा ददाश ॥६॥

## सायणभाष्यम्

द्वाविंशेऽनुवाके अष्टौ सूक्तानि । तत्र ‘ अबोध्यग्निर्ज्मः' इति प्रथमं सूक्तं षड्टृचं दैर्घतमसमाश्विनम् । पूर्वत्र ‘ जागतं तु ' इति तुशब्दादिदमपि जागतम् । अन्त्ये द्वे त्रिष्टुभौ ।

“अबोधि षळाश्विनं त्वन्त्ये त्रिष्टुभौ ' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दस्यस्य विनियोगः । ‘ अथाश्विनः' इति खण्डे सूत्रितम् – अबोध्यग्निर्ज्म एष स्य भानुः ' ( आश्व. श्रौ. ४. १५) इति ॥

अबो॑ध्य॒ग्निर्ज्म उदे॑ति॒ सूर्यो॒ व्यु१॒॑षाश्च॒न्द्रा म॒ह्या॑वो अ॒र्चिषा॑ ।

आयु॑क्षाताम॒श्विना॒ यात॑वे॒ रथ॒ं प्रासा॑वीद्दे॒वः स॑वि॒ता जग॒त्पृथ॑क् ॥१

अबो॑धि । अ॒ग्निः । ज्मः । उत् । ए॒ति॒ । सूर्यः॑ । वि । उ॒षाः । च॒न्द्रा । म॒ही । आ॒व॒ः । अ॒र्चिषा॑ ।

अयु॑क्षाताम् । अ॒श्विना॑ । यात॑वे । रथ॑म् । प्र । अ॒सा॒वी॒त् । दे॒वः । स॒वि॒ता । जग॑त् । पृथ॑क् ॥१

अबोधि । अग्निः । ज्मः । उत् । एति । सूर्यः । वि । उषाः । चन्द्रा । मही । आवः । अर्चिषा ।

अयुक्षाताम् । अश्विना । यातवे । रथम् । प्र । असावीत् । देवः । सविता । जगत् । पृथक् ॥१

अयम् "अग्निः विहितः सन् "ज्मः ज्मायाः पृथिव्या वेदिलक्षणायाः संबन्धी सन् "अबोधि प्रतिबोधितः । ज्मेति पृथिवीनाम, 'ग्मा ज्मा' (नि. १.१.३) इति तन्नामसूक्तत्वात् । किंच "सूर्यः "उदेति । "मही महती "उषाः "अर्चिषा प्रकृष्टेन तेजसा "चन्द्रा प्राणिनाम् आह्लादिनी सती "वि "आवः तमांसि विवासयति ॥ वसेर्लुङि' छान्दुसः च्लेर्लुक्। 'छन्दस्यपि दृश्यते' इति आडागमः ।। यतः इयमुषा उदेति यतश्च सूर्यो यतश्चायमग्निः प्रबुद्धो भवति अतः कारणात् हे अश्विनौ युष्मत्संबन्धिनं "रथं "यातवे देवयजनगमनाय

रासभाभ्याम् “आयुक्षाताम् आभिमुख्येन युञ्जाथाम् । तथा “सविता सर्वकर्मणोऽनुज्ञाता “देवः "जगत् जङ्गमं प्राणिजातं “पृथक् स्वस्वकर्मानुरोधेन “प्रासावीत् प्रसौतु अनुजानातु ॥

यद्यु॒ञ्जाथे॒ वृष॑णमश्विना॒ रथं॑ घृ॒तेन॑ नो॒ मधु॑ना क्ष॒त्रमु॑क्षतम् ।

अ॒स्माकं॒ ब्रह्म॒ पृत॑नासु जिन्वतं व॒यं धना॒ शूर॑साता भजेमहि ॥२

यत् । यु॒ञ्जाथे॒ इति॑ । वृष॑णम् । अ॒श्वि॒ना॒ । रथ॑म् । घृ॒तेन॑ । नः॒ । मधु॑ना । क्ष॒त्रम् । उ॒क्ष॒त॒म् ।

अ॒स्माक॑म् । ब्रह्म॑ । पृत॑नासु । जि॒न्व॒त॒म् । व॒यम् । धना॑ । शूर॑ऽसाता । भ॒जे॒म॒हि॒ ॥२

यत् । युञ्जाथे इति । वृषणम् । अश्विना । रथम् । घृतेन । नः । मधुना । क्षत्रम् । उक्षतम् ।

अस्माकम् । ब्रह्म । पृतनासु । जिन्वतम् । वयम् । धना । शूरऽसाता । भजेमहि ॥२

हे “अश्विना अश्विनौ “यत् यदा “वृषणं वृष्ट्यादिवर्षकं “रथं “युञ्जाथे योजयथः तदा “नः “क्षत्रम् अस्मदीयं बलं क्षत्रियजातं वा “घृतेन उदकेन "मधुना मधुरेण “उक्षतं प्रवर्धयतमित्यर्थः। यद्वा। घृतेन क्षरणरूपेण मधुना मधुरेण अमृतेनोक्षतं युष्मद्रथस्थेन मधुना अस्मदीयं बलं प्रवर्धयतमित्यर्थः । अश्विनोः रथस्य मधुपूर्णत्वं मधुवाहनो रथः' इत्यादिषु प्रसिद्धम् । किंच “अस्माकं “पृतनासु अस्मदीयासु पुत्रभृत्यादिमनुष्यरूपासु प्रजासु “ब्रह्म ब्राह्मं तेजः “जिन्वतम् । पृतना इति मनुष्यनाम, ‘ विवस्वन्तः पृतनाः' (नि. २. ३. २५) इति तन्नामसूक्तत्वात् । यद्वा ।

पृतनासु परकीयासु प्रजासु ब्रह्म तासां परिवृढमन्नमस्माकं जिन्वतं प्रीणयतम् । ब्रह्म इति अन्ननाम, ब्रह्म वर्चः' (नि. २. ७. २५) इति तन्नामसूक्तत्वात् । “वयं च “शूरसाता शूरसातौ शूराणां प्रहारादिना युक्ते संग्रामे “धना तदीयानि धनानि बहुविधानि “भजेमहि लभेमहि ।

अ॒र्वाङ्त्रि॑च॒क्रो म॑धु॒वाह॑नो॒ रथो॑ जी॒राश्वो॑ अ॒श्विनो॒र्यातु॒ सुष्टु॑तः ।

त्रि॒व॒न्धु॒रो म॒घवा॑ वि॒श्वसौ॑भग॒ः शं न॒ आ व॑क्षद्द्वि॒पदे॒ चतु॑ष्पदे ॥३

अ॒र्वाङ् । त्रि॒ऽच॒क्रः । म॒धु॒ऽवाह॑नः । रथ॑ः । जी॒रऽअ॑श्वः । अ॒श्विनो॑ः । या॒तु॒ । सु॒ऽस्तु॑तः ।

त्रि॒ऽव॒न्धु॒रः । म॒घऽवां । वि॒श्वऽसौंभगः । शम् । न॒ः । आ । व॒क्ष॒त् । द्वि॒ऽपदें । चतुःऽपदे ॥३

अर्वाङ् । त्रिऽचक्रः । मधुऽवाहनः । रथः । जीरऽअश्वः । अश्विनोः । यातु । सुऽस्तुतः ।

त्रिऽवन्धुरः । मघऽवा । विश्वऽसौभगः । शम् । नः । आ । वक्षत् । द्विऽपदे । चतुःऽपदे ॥३

“अश्विनोः “रथः “अर्वाङ् अस्मदभिमुखः "यातु गच्छतु । कीदृशः । “त्रिचक्रः चक्रत्रययुक्तः "मधुवाहनः मधुवोढा “जीराश्वः शीघ्रगाम्यश्वोपेतः “सुष्टुतः अत एवास्माभिः स्तूयमानः “त्रिवन्धुरः निम्नोन्नतकाष्ठत्रयोपेतः । सारथ्याश्रयस्थानं वन्धुरम् । “मघवा धनवान् अत एव “विश्वसौभगः सर्वसौभाग्योपेतः । ईदृशोऽश्विनोः रथः “नः अस्माकं “द्विपदे पुत्रादिप्रजायै “चतुष्पदे पशवे च “शं

सुखम् “आ “वक्षत् आवहतु ॥ वहेर्लेटि अडागमः । सिप् ॥

आ न॒ ऊर्जं॑ वहतमश्विना यु॒वं मधु॑मत्या न॒ः कशं॑या मिमिक्षतम् ।

प्रायु॒स्तारिं॑ष्ट॒ं नी रपांसि मृक्षत॒ं सेधं॑त॒ं द्वेषो॒ भवं॑तं सचा॒भुवां ॥४

आ । न॒ः । ऊर्जं॑म् । व॒ह॒त॒म् । अ॒श्वि॒ना॒ । यु॒वम् । मधु॑ऽमत्या । न॒ः । कशं॑या । मि॒मि॒क्ष॒त॒म् ।

प्र । आयु॑ः । तारिं॑ष्टम् । निः । रपांसि । मृ॒क्ष॒त॒म् । सेधं॑तम् । द्वेष॑ः । भवं॑तम् । स॒चा॒ऽभुवां ॥४

आ । नः । ऊर्जम् । वहतम् । अश्विना । युवम् । मधुऽमत्या । नः । कशया । मिमिक्षतम् ।

प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधतम् । द्वेषः । भवतम् । सचाऽभुवा ॥४

हे "अश्विना अश्विनौ “युवं युवां “नः अस्माकम् “ऊर्जं बलं प्राणनसमर्थमन्नं वा “आ “वहतं प्रापयतम् । किंच “नः अस्मान् “मधुमत्या माधुर्योपेतया “कशया वाचा इष्टप्रदानरूपया “मिमिक्षतं सिञ्चतं प्रीणयतम् । कशा इति वाङ्नाम, कशा धिषणा ' (नि. १.११.४३) इति तन्नामसूक्तत्वात। यद्वा । मधुमत्या मधुरवृष्टिमत्या माधुर्योपेतया कशया अश्वताडन्या नोऽस्मान् मिमिक्षतम् । मधु इति उदकनाम, ‘मधु पुरीषम् ' (नि. १. १२. ११ ) इति तन्नामसूक्तत्वात् । कशया अश्वताडनेन शीघ्रमागत्य वृष्टिरूपं फलं दास्यतः इति कशाया मधुमत्त्वम् । किंच “आयुः आयुष्यं “प्र “तारिष्टं प्रवर्धयतम् ॥ प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ तथा “रपांसि “मृक्षतं पापानि निःशेषेण शोधयतम् । ‘रपो रिप्रमिति पापनामनी भवतः '

(निरु. ४.२१) इति यास्कः । किंच द्वेषः द्वेष्यममित्रादिकं “सेधतं नाशयतम् । इदं च भाव्यम् । “सचाभुवा सहभुवौ अस्मत्कार्येषु सहभवनवन्तौ “भवतं भवन्तौ ऐकमत्यं भजत इत्यर्थः॥ वाक्यभेदादिनिघातः ।।

यु॒वं ह॒ गर्भं॒ जग॑तीषु धत्थो यु॒वं विश्वे॑षु॒ भुव॑नेष्व॒न्तः ।

यु॒वम॒ग्निं च॑ वृषणाव॒पश्च॒ वन॒स्पतीँ॑रश्विना॒वैर॑येथाम् ॥५

यु॒वम् । ह॒ । गर्भ॑म् । जग॑तीषु । ध॒त्थ॒ः । यु॒वम् । विश्वे॑षु । भुव॑नेषु । अ॒न्तरिति॑ ।

यु॒वम् । अ॒ग्निम् । च॒ । वृ॒ष॒णौ॒ । अ॒पः । च॒ । व॒न॒स्पती॑न् । अ॒श्वि॒नौ॒ । ऐर॑येथाम् ॥५

युवम् । ह । गर्भम् । जगतीषु । धत्थः । युवम् । विश्वेषु । भुवनेषु । अन्तरिति ।

युवम् । अग्निम् । च । वृषणौ । अपः । च । वनस्पतीन् । अश्विनौ । ऐरयेथाम् ॥५

हे "अश्विनौ "युवं “ह युवां खलु “जगतीषु "अन्तः गमनशीलासु गोषु मध्ये “गर्भं “धत्थः धारयथः । न केवलं गोष्वेव अपि तु "युवं युवां “विश्वेषु सर्वेषु “भुवनेषु भूतजातेष्वन्तर्मध्ये गर्भं धत्थः । वृष्टिद्वारा आमिषरूपत्वेन गर्भस्थरेतसः पोषकत्वात् । किंच हे “वृषणौ कामानां वर्षितारौ “युवं युवाम् “अग्निं “च "अपश्च “वनस्पतीन् च “ऐरयेथां प्रवर्तयेथाम् । आहुतिभोगायाग्निं स्वीकृत्य च वृष्ट्युदकानि उदकैः ओषधिवनस्पत्यादिकम् एतान्यस्मदर्थं प्रैरयेथाम् ।।

यु॒वं ह॑ स्थो भि॒षजा॑ भेष॒जेभि॒रथो॑ ह स्थो र॒थ्या॒३॑ राथ्यो॑भिः
।

अथो॑ ह क्ष॒त्रमधि॑ धत्थ उग्रा॒ यो वां॑ ह॒विष्मा॒न्मन॑सा द॒दाश॑ ॥६

यु॒वम् । ह॒ । स्थ॒ः । भि॒षजा॑ । भे॒ष॒जेभि॑ः । अथो॒ इति॑ । ह॒ । स्थ॒ः । र॒थ्या॑ । रथ्ये॑भि॒रिति॒ रथ्ये॑भिः ।

अथो॒ इति॑ । ह॒ । क्ष॒त्रम् । अधि॑ । ध॒त्थ॒ । उ॒ग्रा॒ । यः । वा॒म् । ह॒विष्मा॑न् । मन॑सा । द॒दाश॑ ॥६

युवम् । ह । स्थः । भिषजा । भेषजेभिः । अथो इति । ह । स्थः । रथ्या । रथ्येभिरिति रथ्येभिः ।

अथो इति । ह । क्षत्रम् । अधि । धत्थ । उग्रा । यः । वाम् । हविष्मान् । मनसा । ददाश ॥६

हे अश्विनौ "युवं युवां "ह खलु "भेषजेभिः भेषजैरौषधैः।' भेषजौषधभैषज्यान्यगदो जायुः 'अगदं तत्रौषधम्' इति चाभिधानात्। तैः "भिषजा भिषजौ "स्थः। हशब्दः

‘अश्विनौ हि देवानां भिषजौ' इत्यादिप्रसिद्धिद्योतनार्थः । “अथो अपि च “रथ्येभिः रथवोढृभिरश्वैः “रथ्या रथवन्तौ “स्थः । ‘ आ वां रथो अश्विना' ( ऋ. सं. १. ११८. १) इत्यादिप्रसिद्धिद्योतनार्थो हशब्दः । अनयोः रथेन विशेषसंबन्धः “युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति' (ऋ. सं. १. ३४. १०) इत्यादिमन्त्रान्तरेषु प्रसिद्धः । “अथो अपि च युवयोः “क्षत्रं बलम् “अधि "ह अधिकं खलु । हशब्दः प्रसिद्धौ । यस्मादेवं तस्मात् हे “उग्रा उद्गूर्णसामर्थ्यावश्विनौ “वां युवाभ्यां “यः “हविष्मान् आज्यपुरोडाशादिहविर्युक्तो यजमानः “मनसा युष्मदायत्तेन चेतसा “ददाश ददाति हविरादिकं तं “धत्थः धारयथः अत्यधिकमनुगृह्णीथ इत्यर्थः। प्रभूतबलौ युवां रथमारुह्य अस्मद्देवयजनमागत्य हविष्प्रदं मां धृत्वा अस्मद्यज्ञे अस्मान्विचिकित्सतमिति तात्पर्यार्थः ॥ ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति
श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क
भूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके
द्वितीयोऽध्यायः समाप्तः ॥

सूक्तं १.२१ सूक्तं १.५१ सूक्तं १.८१ सूक्तं १.१११ सूक्तं १.१४१ सूक्तं १.१७१

सूक्तं १.२२ सूक्तं १.५२ सूक्तं १.८२ सूक्तं १.११२ सूक्तं १.१४२ सूक्तं १.१७२

सूक्तं १.२३ सूक्तं १.५३ सूक्तं १.८३ सूक्तं १.११३ सूक्तं १.१४३ सूक्तं १.१७३

सूक्तं १.२४ सूक्तं १.५४ सूक्तं १.८४ सूक्तं १.११४ सूक्तं १.१४४ सूक्तं १.१७४

सूक्तं १.२५ सूक्तं १.५५ सूक्तं १.८५ सूक्तं १.११५ सूक्तं १.१४५ सूक्तं १.१७५

सूक्तं १.२६ सूक्तं १.५६ सूक्तं १.८६ सूक्तं १.११६ सूक्तं १.१४६ सूक्तं १.१७६

सूक्तं १.२७ सूक्तं १.५७ सूक्तं १.८७ सूक्तं १.११७ सूक्तं १.१४७ सूक्तं १.१७७

# ऋग्वेदः सूक्तं १.१५८



## दे. अश्विनौ। त्रिष्टुप्, ६ अनुष्टुप्

वसू रुद्रा पुरुमन्तू वृधन्ता दशस्यतं नो वृषणावभिष्टौ ।

दस्रा ह यद्रेक्ण औचथ्यो वां प्र यत्सस्राथे अकवाभिरूती ॥१॥

को वां दाशत्सुमतये चिदस्यै वसू यद्धेथे नमसा पदे गोः ।

जिगृतमस्मे रेवतीः पुरंधीः कामप्रेणेव मनसा चरन्ता ॥२॥

युक्तो ह यद्वां तौग्र्याय पेरुर्वि मध्ये अर्णसो धायि पज्रः ।

उप वामवः शरणं गमेयं शूरो नाज्म पतयद्भिरेवैः ॥३॥

उपस्तुतिरौचथ्यमुरुष्येन्मा मामिमे पतत्रिणी वि दुग्धाम् ।

मा मामेधो दशतयश्चितो धाक्प्र यद्वां बद्धस्त्मनि खादति क्षाम् ॥४॥

न मा गरन्नद्यो मातृतमा दासा यदीं सुसमुब्धमवाधुः ।

शिरो यदस्य त्रैतनो वितक्षत्स्वयं दास उरो अंसावपि ग्ध ॥५॥

दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे ।

अपामर्थं यतीनां ब्रह्मा भवति सारथिः ॥६॥

## सायणभाष्यम्

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ तृतीयाध्याय आरभ्यते'। 'वसू रुद्रा' इत्येतत्
अनुवाकापेक्षया द्वितीयं सूक्तं षडृचं दैर्घतमसम् । पूर्वत्र ‘
आश्विनं तु ' इत्युक्तत्वात् इदमप्याश्विनम् ।
अनादेशपरिभाषया त्रैष्टुभम् । ‘ दीर्घतमा मामतेयः'
इत्यन्त्या अनुष्टुप् । तथा चानुक्रान्तं - ‘ वसू अन्त्यानुष्टुप् '
इति ॥ अस्य विशेषविनियोगो लैङ्गिकः ॥

वसूं रु॒द्रा पुंरु॒मन्तूं वृ॒धन्तां दश॒स्यतं नो वृषणाव॒भिष्टौं ।

दस्रां ह॒ यद्रेक्णं औच॒थ्यो वा॒ं प्र यत्स॒स्राथे॒ अकंवाभिरू॒ती
॥१

वस॒ू इतिं । रु॒द्रा । पु॒रु॒मन्तू॒ इतिं पु॒रु॒ऽमन्तूं । वृ॒धन्तां ।
द॒श॒स्यतंम् । न॒ः । वृ॒ष॒ण॒ौ । अ॒भिष्टौं ।

दस्रा॑ । ह॒ । यत् । रेक्णः॑ । औ॒च॒थ्यः । वा॒म् । प्र । यत् ।
स॒स्राथे॒ इति॑ । अक॑वाभिः । ऊ॒ती ॥१

वसू इति । रुद्रा । पुरुमन्तू इति पुरुऽमन्तू । वृधन्ता ।
दशस्यतम् । नः । वृषणौ । अभिष्टौ ।

दस्रा । ह । यत् । रेक्णः । औचथ्यः । वाम् । प्र । यत् ।
सस्राथे इति । अकवाभिः । ऊती ॥१

हे “वृषणौ कामानां वर्षितारौ “दस्रा
अस्मद्विरोध्युपक्षपयितारौ हे अश्विनौ युवां “नः अस्मभ्यं
“दशस्यतं दत्तं दित्सितं फलम् । कीदृशौ युवाम् । “वसू
वासयितारौ प्रजानाम् । वसुना धनेन तद्वन्तौ वा ॥
मत्वर्थो लुप्यते ॥ "रुद्रा रुद्रौ । रुद्दुःखं तद्धेतुभूतं पापं वा ।
तस्य द्रावयितारौ । संग्रामे भयंकरं शब्दयन्तौ वा । रुद्रो
रौतीति सतः ' (निरु. १०. ५) इति यास्कः । “पुरुमन्तू
बहूनां ज्ञातारौ ॥ मनेरौणादिकः तुन्प्रत्ययः ॥ “वृधन्ता

वर्धमानौ स्तोत्रादिना “अभिष्टौ आभिमुख्येन पूजितौ अभीष्टसाधकौ वा । हशब्दः उक्तगुणप्रसिद्धिद्योतनार्थः । किमर्थं दीयते इति चेत् । “यत् यस्मात् “औचथ्यः उचथ्यस्य पुत्रो दीर्घतमाः “वां युवां “रेक्णः धनं स्तुतिव्याजेन प्रार्थयते तदर्थम् । यद्वा । अयं यजमानो यद्यस्मात् रेक्णो हविर्लक्षणमन्नं वां युवाभ्यां दास्यति ददातीति शेषः । यस्माच्च “अकवाभिः अकुत्सितैः “ऊती ऊतिभिः रक्षणैः ॥ ‘ सुपां सुलुक्° ' इति तृतीयायाः पूर्वसवर्णदीर्घः ॥ “प्र “सस्राथे प्रसारयथः प्रकर्षेण दत्थः तस्माद्वशस्यतम् । यस्मादभिमतप्रदौ यस्माच्चायं प्रार्थयते ददाति वा हविः तस्माद्वशस्यतमित्यर्थः ॥

को वां दाशत्सुम॒तयें चिद॒स्यै वसू॒ यद्धेथे॒ नमंसा प॒दे गोः ।

जि॒गृ॒तम॒स्मे रे॒वती॒ः पुरंधीः काम॒प्रेणेंव॒ मनंसा॒ चरंन्ता ॥२

कः । वा॒म् । दा॒श॒त् । सु॒ऽम॒तयें । चि॒त् । अ॒स्यै । वसू॒ इतिं । यत् । धेथे॒ इतिं । नमंसा । प॒दे । गोः ।

जि॒गृ॒तम् । अ॒स्मे इतिं । रे॒वतीः॑ । पुरंम्ऽधीः । का॒म॒प्रेणंऽइव । मनंसा । चरंन्ता ॥२

कः । वाम् । दाशत् । सुऽमतये । चित् । अस्यै । वसू इति । यत् । धेथे इति । नमसा । पदे । गोः ।

जिगृतम् । अस्मे इति । रेवतीः । पुरम्ऽधीः । कामप्रेणऽइव । मनसा । चरन्ता ॥२

हे “वसू वासयितारावश्विनौ “वां युवयोः संबन्धिन्यै “अस्यै वक्ष्यमाणरूपायै "सुमतये “चित् शोभनबुद्धौ । चित् पूजायामप्यर्थे वा । स्वल्पेनैव हविषा महत्फलप्रदानरूपायै ईदृश्यै अपि बुद्धौ प्रीणनाय “कः “दाशत् को दद्यात् दातुं शक्नुयात् । युवयोः

प्रभावस्यातिमहत्त्वादिति भावः ॥ दाशतेर्लेट्यडागमः ॥
कथं मतेः सौष्ठवमिति तदुच्यते । “यत् यस्मात्कारणात्
गोः “पदे भूम्याः सर्वैर्गन्तव्यायाः स्तुत्याया वा वेदिरूपायाः
स्थाने। एतावती वै पृथिवी यावती वेदिः' (तै. सं. २. ६. ४.
३ ) इति श्रुतेः। गौरिति भूमिनाम । तथा च निरुक्तं -
गौरिति पृथिव्या नामधेयं यद्दूरं गता भवति यच्चास्यां
भूतानि गच्छन्ति गातेर्वौकारो नामकरणः ' (निरु. २. ५ )
इति । तादृशे स्थाने अस्माभिः प्रार्थितौ सन्तौ “नमसा
हविर्लक्षणेन यवमात्रप्रकारेणान्नेन' “धेथे धारयथो
बहुप्रदानविषयां बुद्धिम् ।। दधातेर्लटि • बहुलं छन्दसि '
इति विकरणस्य लुक् । धातोर्ह्रस्वत्वम् । ‘ आतो ङितः '
(पा. सू. ७. २. ८१ ) इति इयादेशः ॥ यस्मादेवं तस्मात्
“अस्मे अस्मभ्यं “रेवतीः क्षीरादिधनवतीः “पुरंधीः
शरीरधारिकाः शरीराभिवृद्धिहेतूः गाः “जिगृतं शब्दयतं
दत्तमित्यर्थः॥‘गृ शब्दे'। छान्दसः शपः श्लुः ।
अभ्यासस्येत्वं ह्रस्वत्वं च ॥ पुनस्तावेव विशेष्येते ।

“कामप्रेणेव । इवशब्दः एवकारार्थः । कामपूरकेणैव
“मनसा सह “चरन्ता चरन्तौ । यजमानस्य कामाः
पूरणीया इति कृतसंकल्पावित्यर्थः ॥ ‘ प्रा पूरणे'। कामं
प्रातीति कामप्रः । आतोऽनुपसर्गे कः' ।

यु॒क्तो ह॒ यद्वां॑ तौ॒ग्र्याय॑ पे॒रुर्वि मध्ये॒ अर्ण॑सो॒ धायि॑ प॒ज्रः ।

उप॑ वा॒मवः॑ शर॒णं ग॑मेयं॒ शूरो॒ नाज्म॑ प॒तय॑द्भि॒रेवैः॑ ॥३

यु॒क्तः । ह॒ । यत् । वा॒म् । तौ॒ग्र्याय॑ । पे॒रुः । वि । मध्ये॑ ।
अर्ण॑सः । धायि॑ । प॒ज्रः ।

उप॑ । वा॒म् । अवः॑ । श॒र॒णम् । ग॒मे॒य॒म् । शूरः॑ । न । अज्म॑
। प॒तय॑त्ऽभिः । एवैः॑ ॥३

युक्तः । ह । यत् । वाम् । तौग्र्याय । पेरुः । वि । मध्ये ।
अर्णसः । धायि । पज्रः ।

उप । वाम् । अवः । शरणम् । गमेयम् । शूरः । न । अज्म । पतयत्ऽभिः । एवैः ॥३

अत्रेतिहासमाहुः । तौग्र्यनामकं राजानं युद्धे शत्रवः पराभाव्य पाशैर्दृढं बद्ध्वा समुद्रमध्ये प्रचिक्षिपुः । स च उत्तरीतुमशक्तः सन् अश्विनौ तुष्टाव । तौ च तुष्टौ शीघ्रमेव रथमश्वैर्योजयित्वा समुद्रमागत्य तमुत्तार्य अपालयतामिति । अयमर्थः ' अजोहवीदश्विना तौग्र्यः' (ऋ. सं १. ११७. १५) इत्यादिमन्त्रान्तरे प्रसिद्धः । सोऽत्रोच्यते । हे अश्विनौ "वां युवयोः संबन्धी "पेरुः पारणकुशलो रथः "युक्तो "ह अश्वैर्युक्तः खलु । हशब्दो मन्त्रान्तरप्रसिद्धिद्योतनार्थः । स च उदाहृतः । कस्मै । "तौग्र्याय एतन्नाम्ने राज्ञे तद्बन्धमोचनार्थम् । कुत्रेति तदुच्यते । "अर्णसः अम्भसः "मध्ये समुद्रस्य मध्ये । स च "पज्रः पाजसा बलेन तीर्णः सन् "वि "धायि धारितः स्थापितः । यस्मादेवं तस्मात् "वां युवयोः "अवः रक्षणं "शरणम् "उप "गमेयं संप्राप्नुयाम्

ऐहिकदुःखाद्विमुक्तो युष्मत्स्थानं संभजेयम् । गतौ दृष्टान्तः । “पतयद्भिरेवैः अश्वैः “शूरो “न शूर इव । स यथा “अज्म जित्वा निर्भयं स्वगृहं प्राप्नोति तद्वत् ॥

उप॑स्तुतिरौच॒थ्यमु॑रुष्ये॒न्मा मामि॒मे प॑त॒त्रिणी॒ वि दु॑ग्धाम् ।

मा मामेधो॒ दश॑तयश्चि॒तो धा॒क्प्र यद्वां॑ ब॒द्धस्त्मनि॒ खाद॑ति॒ क्षाम् ॥४

उप॑ऽस्तुतिः । औ॒च॒थ्यम् । उ॒रु॒ष्ये॒त् । मा । माम् । इ॒मे इति॑ । प॒त॒त्रिणी॒ इति॑ । वि । दु॒ग्धा॒म् ।

मा । माम् । एधः॑ । दश॑ऽतयः । चि॒तः । धा॒क् । प्र । यत् । वा॒म् । ब॒द्धः । त्मनि॑ । खाद॑ति । क्षाम् ॥४

उपऽस्तुतिः । औचथ्यम् । उरुष्येत् । मा । माम् । इमे इति । पतत्रिणी इति । वि । दुग्धाम् ।

मा । माम् । एधः । दशऽतयः । चितः । धाक् । प्र । यत् । वाम् । बद्धः । त्मनि । खादति । क्षाम् ॥४

अत्राख्यानमाहुः । जराझर्झरितगात्रं जात्यन्धं दीर्घतमसं मामतेयं वरिवसितुमशक्नुवानाः स्वगर्भदासा अग्नौ प्रदाहाय प्रचिक्षिपुः । तत्र क्षिप्तोऽश्विनावस्तावीत् । तौ चैनमरक्षताम् । ततोऽप्यम्रियमाणमुदकेषु अपातयन्। तत्र निमग्नः पुनरश्विनौ तुष्टाव । तुष्टौ सन्तौ तौ जलादुदहार्ष्टाम् । एवमवध्यं तं त्रैतनो नामकः कश्चिद्दासः अस्य शिरो वक्षश्च व्यतक्षत् । ततोऽप्यपालयतामिति । तदिदम् ऋग्द्वयाभ्यामुच्यते । हे अश्विनौ "उपस्तुतिः युवां बुद्ध्योपेत्य क्रियमाणा स्तुतिः "औचथ्यम् उचथस्य पुत्रं दीर्घतमसं माम् "उरुष्येत् रक्षेत् दाहाद्युपद्रवात् । 'उरुष्यती रक्षाकर्मा' (निरु. ५. २३) इति यास्कः । एवं सामान्येनोक्त्वा विशेषेण प्रत्युपद्रवपरिहारं प्रार्थयते । "इमे प्रसिद्धे "पतत्रिणी पतनशीले पुनरावर्तनशीले

अहोरात्रे “मां “मा “वि “दुग्धां विशेषेण दोहगतसारं मा कार्ष्टां प्राणनिर्गमनानुकूल्यं मा कुरुतामित्यर्थः । किंच “मां “दशतयः दशवारः “चितः संचितः संपादितः “एधः प्रज्वालितेन्धनसंघः “मा “धाक् मा धाक्षीत् ॥ दहतेर्लुङि सिचि हलन्तलक्षणा वृद्धिः। ‘बहुलं छन्दसि ' इति इडभावः । हल्ङ्यादिसंयोगान्तलोपौ ॥ दुःसहदुःखप्राप्तिं दर्शयति । “यत् यस्मात् “वां युवयोः संबन्धी अयं जनः “बद्धः पाशैः गाढं वेष्टितः सन् “त्मनि आत्मनि आत्मना “क्षां भूमिं “खादति भक्षयति गन्तुमशक्तः सन् भूमौ परिलुठतीत्यर्थः । तस्मादुपस्तुतिरौचथ्यमुरुष्येत् इति ॥

अस्याः पञ्चम्या विनियोगमाह शौनकः - ‘ आततायिनमायान्तं दृष्ट्वा व्याघ्रमथो वृकं । न मा गरन्निति जपंस्तेभ्य एव प्रमुच्यते । त्रिरात्रोपोषितो रात्रौ जपेदा सूर्यदर्शनात् । आप्लुत्य प्रयतः

सूर्यमुपतिष्ठेद्दिवाकरं । पश्यन्ति तस्करा नैनं तथान्ये पापबुद्धयः । एकः शतानि त्रायेत तस्करेभ्यश्चरन् पथि ' ( ऋग्वि. १. १४१ ) इति ॥

न मां गरन्नद्यो॑ मा॒तृत॑मा दा॒सा यदी॒ं सुसं॑मुब्धम॒वाधुः॑ ।

शिरो॒ यद॑स्य त्रैत॒नो वि॒तक्ष॑त्स्व॒यं दा॒स उरो॒ अंसा॒वपि॑ ग्ध ॥ ५

न । मा॒ । ग॒र॒न् । न॒द्यः॑ । मा॒तृऽत॑माः । दा॒साः । यत् । ई॒म् । सुऽसं॑मुब्धम् । अ॒व॒ऽअधुः॑ ।

शिरः॑ । यत् । अ॒स्य॒ । त्रै॒त॒नः । वि॒ऽतक्ष॑त् । स्व॒यम् । दा॒सः । उरः॑ । अंसौ॑ । अपि॑ । ग्धेति॑ग्ध ॥५

न । मा । गरन् । नद्यः । मातृऽतमाः । दासाः । यत् । ईम् । सुऽसमुब्धम् । अवऽअधुः ।

शिरः । यत् । अस्य । त्रैतनः । विऽतक्षत् । स्वयम् । दासः । उरः । अंसौ । अपि । ग्धेतिग्ध ॥५

“नद्यः नदनशीला: "मातृतमाः मातृवज्जगतां हितकारिण्य आपः “मा मां दीर्घतमसं “गरन् न गिरेयुः निमग्नं मा कुर्युः ॥ ‘ गॄ निगरणे '। लेटि व्यत्ययेन शप् ॥ गिरणप्राप्तिं दर्शयति । “यत् यस्मात् “दासाः अस्मदुपक्षपयितारो मदीयगर्भदासाः “ईम् एनं दीर्घतमसं मां “सुसमुब्धं सुष्ठु संकुचितसर्वाङ्गम् ॥ ‘स्वती पूजायाम्' (पा. म. २. २. १८. ४) इति प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ “अवाधुः अवाङ्मुखमपातयन् । किंच "अस्य मम “शिरः सः “त्रैतनः एतन्नामकः “दासः अत्यन्तनिर्घृणः सन् “यत् यस्मात् “वितक्षत् विविधं तष्टवान् तस्मात् स दासः “स्वयं स्वकीयमेव शिरस्तक्षतु । न केवलं शिर एव अपि तु मदीयम् “उरः वक्षःस्थलम्' “अंसौ च “ग्ध हतवान् विदारितवानित्यर्थः ॥ हन्तेर्लुङि छान्दसमेतद्रूपम् ॥ ततः

स्वकीयमुरः अंसावपि स्वशस्त्रेणैव तथा कृतवान् । तद्युवयोर्माहात्म्यमिति भावः ॥

दी॒र्घत॑मा मामते॒यो जु॑जु॒र्वान्द॑श॒मे यु॒गे ।

अ॒पामर्थं॑ य॒तीनां॑ ब्र॒ह्मा भ॑वति॒ सार॑थिः ॥६

दी॒र्घऽत॑माः । मा॒म॒ते॒यः । जु॒जु॒र्वान् । द॒श॒मे । यु॒गे ।

अ॒पाम् । अर्थ॑म् । य॒तीना॑म् । ब्र॒ह्मा । भ॒व॒ति॒ । सार॑थिः ॥ ६

दीर्घऽतमाः । मामतेयः । जुजुर्वान् । दशमे । युगे ।

अपाम् । अर्थम् । यतीनाम् । ब्रह्मा । भवति । सारथिः ॥ ६

“दीर्घतमाः एतन्नामा महर्षिः स च “मामतेयः ममतायाः पुत्रः “दशमे “युगे दशयुगपर्यन्तं महानुभावयोरश्विनोः प्रभावात् पूर्वोक्ताद्दुःखाद्विमुक्तोऽत्यन्तसुखी स्वपुत्रभार्यादिभिः सहितो जीवितवान्। दशमे युगे अतीते सति जुजुर्वान् जीर्णः वलीपलितगात्रो बभूव । एवंभूतः सन् “अर्थं पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकं “यतीनां प्राप्नुवतीनाम् “अपाम् अप्कार्याणां प्रजानाम् । यद्वा । अपाम् अपसां कर्मणाम् अर्थं प्रयोजनं यतीनां तासां प्रजानाम् । “ब्रह्मा ब्रह्मसदृशः परिवृढः “भवति । किंच "सारथिः तद्वन्निर्वाहको भवति देवो भवतीत्यर्थः । एवमस्य वृत्तान्तं मन्त्रोऽनुवदति। स्वयं वा स्वात्मानं पारोक्ष्येण अश्विनोर्महानुभावत्वं प्रकटयितुं ब्रवीति ॥ ॥ १ ॥

# ऋग्वेदः सूक्तं १.१५९

← सूक्तं १.१५८

ऋग्वेदः - मण्डल १

सूक्तं १.१५९

दीर्घतमा औचथ्यः

सूक्तं १.१६० →

## दे. द्यावापृथिवी। जगती।

प्र द्यावा यज्ञैः पृथिवी ऋतावृधा मही स्तुषे विदथेषु प्रचेतसा ।

देवेभिर्ये देवपुत्रे सुदंससेत्था धिया वार्याणि प्रभूषतः ॥१॥

उत मन्ये पितुरद्रुहो मनो मातुर्महि स्वतवस्तद्धवीमभिः ।

सुरेतसा पितरा भूम चक्रतुरुरु प्रजाया अमृतं वरीमभिः ॥२॥

ते सूनवः स्वपसः सुदंससो मही जज्ञुर्मातरा पूर्वचित्तये ।

स्थातुश्च सत्यं जगतश्च धर्मणि पुत्रस्य पाथः पदमद्वयाविनः ॥३॥

ते मायिनो ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा ।

नव्यंनव्यं तन्तुमा तन्वते दिवि समुद्रे अन्तः कवयः सुदीतयः ॥४॥

तद्राधो अद्य सवितुर्वरेण्यं वयं देवस्य प्रसवे मनामहे ।

अस्मभ्यं द्यावापृथिवी सुचेतुना रयिं धत्तं वसुमन्तं शतग्विनम् ॥५॥

## सायणभाष्यम्

‘प्र द्यावा' इति पञ्चर्चं तृतीयं सूक्तं दैर्घतमसं जागतं द्यावापृथिव्यम् । अनुक्रान्तं च - ‘ प्र द्यावा पञ्च द्यावापृथिव्यं तु जागतं तु' इति ॥ अग्निष्टोमे पृष्ठ्यस्य षष्ठेऽहनि च द्यावापृथिव्यनिविद्धानमेतत् सूक्तम् । तथा च सूत्रं - प्र द्यावेति दैर्घतमसम्' (आश्व. श्रौ. ५. १८) इति ॥

आद्या द्यावापृथिव्ये पशौ हविषो याज्या । तथा च सूत्रितं - प्र द्यावा यज्ञैः पृथिवी ऋतावृधा मृळा नो रुद्रोत नो मयस्कृधीति द्वे' ( आश्व. श्रौ. ३. ८) इति ।

प्र द्यावा॑ य॒ज्ञैः पृ॑थि॒वी ऋ॑ता॒वृधा॑ म॒ही स्तु॑षे वि॒दथे॑षु॒ प्रचे॑तसा ।

दे॒वेभि॒र्ये दे॒वपु॑त्रे सु॒दंस॑से॒त्था धि॒या वार्या॑णि प्र॒भूष॑तः ॥१

प्र । द्यावा॑ । य॒ज्ञैः । पृ॒थि॒वी इति॑ । ऋ॒त॒ऽवृधा॑ । म॒ही इति॑ । स्तु॒षे॒ । वि॒दथे॑षु । प्रऽचे॑तसा ।

दे॒वेभिः॑ । ये इति॑ । दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे । सु॒ऽदंस॑सा । इ॒त्था । धि॒या । वार्या॑णि । प्र॒ऽभूष॑तः ॥१

प्र । द्यावा । यज्ञैः । पृथिवी इति । ऋतऽवृधा । मही इति । स्तुषे । विदथेषु । प्रऽचेतसा ।

देवेभिः । ये इति । देवपुत्रे इति देवऽपुत्रे । सुऽदंससा । इत्था । धिया । वार्याणि । प्रऽभूषतः ॥१

“द्यावा “पृथिवी द्यावापृथिव्यौ ॥ ‘ दिवो द्यावा' इति द्यावादेश आद्युदात्तः । पृथिवीशब्दो ङीषन्तोऽन्तोदात्तः । ‘ देवताद्वन्द्वे च ' इति उभयपदप्रकृतिस्वरत्वम् । समासमध्ये पदान्तरपाठश्छान्दसः ॥ अहं यजमानः “यज्ञैः यागैस्तत्प्रदानैः निमित्तभूतैः हविष्प्रदानार्थं "प्र “स्तुषे प्रकर्षेण स्तौमि ।। पुरुषव्यत्ययः । कीदृश्यौ ते। “ऋतावृधा यज्ञस्य वर्धयित्र्यौ “मही महत्यौ "विदथेषु यागेषु “प्रचेतसा प्रकर्षेण अस्मांश्चेतयित्र्यौ अस्माभिश्चेतयितव्ये वा । ईदृश्यौ स्तुषे । अनयोः कोऽतिशय इति उच्यते । "ये द्यावापृथिव्यौ “देवेभिः यजमानैः “देवपुत्रे देवा यजमानाः पुत्रस्थानीयाः शुश्रूषका ययोस्ते तादृश्यौ । यद्वा । देवेभिर्विशिष्टे । “सुदंससा । दंस इति कर्मनाम । शोभनकर्मोपेते । “इत्था सत्यम् । इत्थेति

सत्यनाम, सत्रा इत्था ' (नि. ३. १०. ५) इति तन्नामसु पाठात् । सत्यं “धिया अस्मदनुग्रहबुद्ध्या “वार्याणि वरणीयानि धनानि अस्मभ्यं “प्रभूषतः अलंकुरुतः दत्त इत्यर्थः । यद्वा । वार्याणि हवींषि धिया कर्मणा निमित्तेन कर्मसमाप्त्यर्थं प्रभूषतः प्रकर्षेण स्वीकुरुतः ॥

उ॒त मं॑न्ये पि॒तुर॒द्रुहो॒ मनों मा॒तुर्महि॒ स्वतं॑व॒स्तद्धवीं॑मभिः ।

सु॒रेतं॑सा पि॒तरा॒ भूम॑ चक्रतुरु॒रु प्र॒जायां॑ अ॒मृतं॒ वरीं॑मभिः ॥ २

उ॒त । म॒न्ये॒ । पि॒तुः । अ॒द्रुहः॑ । मनः॑ । मा॒तुः । महिं॑ । स्वऽतं॑वः । तत् । हवीं॑मऽभिः ।

सु॒ऽरेतं॑सा । पि॒तरा॑ । भूम॑ । च॒क्र॒तुः॒ । उ॒रु । प्र॒ऽजायाः॑ । अ॒मृतं॑म् । वरीं॑मऽभिः ॥२

उत । मन्ये । पितुः । अद्रुहः । मनः । मातुः । महि ।
स्वऽतवः । तत् । हवीमऽभिः ।

सुऽरेतसा । पितरा । भूम । चक्रतुः । उरु । प्रऽजायाः ।
अमृतम् । वरीमऽभिः ॥२

"उत अपि च “पितुः पितृस्थानीयायाः पात्र्याः "अद्रुहः
अद्रोग्धुः । न हि कदाचित् पिता स्वपुत्रादये द्रुह्यति।
तादृश्याः पृथिव्याः “स्वतवः स्वायत्तं बलं
स्वयमेवास्मदनुग्रहाय त्वरमाणम् अत एव “महि महत्
“तत् तादृशमनुग्रहयुक्तं “मनः चित्तं “हवीमभिः
हवनैराह्वानैः “मन्ये जानामि प्रसादयामीत्यर्थः। यद्वा ।
तत्तादृशमुक्तलक्षणं मनो हवीमभिर्हवनैर्महि मन्ये
अतिमहत् प्रवृद्धं मन्ये। तथा “मातुः
सर्वस्योत्पादयितुरन्तरिक्षस्य द्युलोकस्य । 'मातान्तरिक्षं
निर्मीयन्तेऽस्मिन्भूतानि' ( निरु. २. ८) इति निरुक्तम् ।

यद्वा । पितुर्द्युलोकस्य मातुर्भूम्याः। द्यौर्वः पिता पृथिवी माता' ( ऋ. सं. १. १९१. ६) इति श्रुतेः।
तत्तादृशमुक्तलक्षणं मनो मन्ये।
द्यावापृथिव्योर्मनोऽस्मदाह्वानैः प्रीणयामीत्यर्थः। किंच "पितरा माता च पिता च पितरौ द्यावापृथिव्यौ "सुरेतसा शोभनसामर्थ्येन "प्रजायाः यजमानादिरूपायाः "वरीमभिः वरिष्ठैः रक्षणविशेषैः "भूम बहुतरम् "उरु विस्तीर्णम् "अमृतम् अमरणभूतम् अभिलषितं "चक्रतुः कुरुतः ॥

ते सू॒नव॒ः स्वप॑सः सु॒दंसं॑सो म॒ही जं॑ज्ञुर्मा॒तरां॑ पू॒र्वचिं॑त्तये ।

स्था॒तुश्चं॑ स॒त्यं जगं॑तश्च॒ धर्मं॑णि पु॒त्रस्यं॑ पाथः प॒दमद्वं॑याविनः ॥३

ते । सू॒नवः॑ । सु॒ऽअपं॑सः । सु॒ऽदंसं॑सः । म॒ही इतिं॑ । ज॒ज्ञु॒ः । मा॒तरां॑ । पू॒र्वऽचिं॑त्तये ।

स्था॒तुः । च॒ । स॒त्यम् । जगं॑तः । च॒ । धर्मं॑णि । पु॒त्रस्यं॑ । पा॒थः॒ । प॒दम् । अद्वं॑याविनः ॥३

ते । सूनवः । सुऽअपसः । सुऽदंससः । मही इति । जज्ञुः । मातरा । पूर्वऽचित्तये ।

स्थातुः । च । सत्यम् । जगतः । च । धर्मणि । पुत्रस्य । पाथः । पदम् । अद्वयाविनः ॥३

“ते प्रसिद्धाः “सूनवः युवाभ्यामुत्पन्नाः पुत्रस्थानीयाः प्रजाः “स्वपसः शोभनकर्माणः “सुदंससः शोभनदर्शनाः युवां 'मही महत्यौ “माता मातृवद्धितकारिण्यौ “जज्ञुः जानन्ति महानुभावतामवगच्छन्ति । किमर्थम् । “पूर्वचित्तये प्रथमबुद्धये अनुग्रहरूपायै। किंच ते द्यावापृथिव्यौ “स्थातुः स्थावरस्य “जगतः जङ्गमस्य “पुत्रस्य पुत्रस्थानीयस्य उभयविधस्य जगतः “अद्वयाविनः न विद्यते द्वयं यस्य तादृशस्य । स्वजीवनाय

युष्मद्व्यतिरिक्तमजानतः इत्यर्थः । ईदृशस्य “धर्मणि धारणे रक्षणे निमित्तभूते सति “पदं स्थानं "सत्यम् अबाध्यं “पाथः रक्षथः दत्थ इत्यर्थः । यद्वा। ते प्रसिद्धाः सूनवः उत्पाद्यमानाः स्वपसः शोभनप्रकाशादिकर्माणः सुदंससः शोभनदर्शनाः सुष्ठु उपक्षयन्तः वा आत्मानं स्वव्यापाराय ईदृशा रश्मयो मही महत्यौ द्यावापृथिव्यौ पूर्वचित्तये प्राणिनां पूर्वज्ञानाय जज्ञुः जातवन्तः द्यावापृथिव्योरन्तराले व्याप्ता इत्यर्थः। किंच स्थातुर्जगतश्च धर्मणि धारणे तदर्थम् अद्वयाविनो मार्गद्वयरहितस्य ॥ ‘बहुलं छन्दसि ' इति द्वयशब्दात् मत्वर्थीयो विनिः । ‘ अन्येषामपि दृश्यते' इति दीर्घः ॥ पुत्रस्य युष्मत्पुत्रस्थानीयस्यादित्यस्य पदं मार्गं सत्यं पाथः अवश्यं रक्षथः ।।

ते मा॒यिनो॑ ममिरे सु॒प्रचे॑तसो जा॒मी सयो॑नी मिथु॒ना

स॒मोक॑सा ।

नव्यं॑नव्यं॒ तन्तु॒मा तं॑न्वते दि॒वि सं॑मु॒द्रे अ॒न्तः क॒वयं॑ः सुदी॒तयं॑ः ॥४

ते । मा॒यिनः॑ । म॒मि॒रे॒ । सु॒ऽप्रचे॑तसः । जा॒मी इति॑ । सयो॑नी॒ इति॒ सऽयो॑नी । मि॒थु॒ना । सम्ऽओ॑कसा ।

नव्यं॑म्ऽनव्यम् । तन्तुं॑म् । आ । त॒न्व॒ते॒ । दि॒वि । स॒मु॒द्रे । अ॒न्तरिति॑ । क॒वयः॑ । सु॒ऽदी॒तयः॑ ॥४

ते । मायिनः । ममिरे । सुऽप्रचेतसः । जामी इति । सयोनी इति सऽयोनी । मिथुना । सम्ऽओकसा ।

नव्यम्ऽनव्यम् । तन्तुम् । आ । तन्वते । दिवि । समुद्रे । अन्तरिति । कवयः । सुऽदीतयः ॥४

“ते प्रसिद्धे द्यावापृथिव्यौ “मायिनः । माया प्रज्ञा। स्वविषयप्रज्ञावन्तः प्रज्ञोपलक्षितकर्मवन्तो वा "सुप्रचेतसः सुष्ठु प्रकर्षेण चेतितुं शक्ताः रश्मयः “ममिरे मिमते प्रमाणेन परिच्छिन्दन्ति । कीदृश्यौ ते । “जामी परस्परं भगिनी। एतत्कुतः इति चेत् उच्यते । “सयोनी समानोत्पत्तिस्थाने “मिथुना प्राण्युत्पत्तये मिथुनभूते परस्परमवियुक्ते इत्यर्थः । “समोकसा समानस्थाने । द्युपृथिव्योः एकस्मिन्नेव अवकाशरूपे आकाशेऽवस्थानात् । समीचीनस्थाने वा। किंच “कवयः मेधाविनः स्वव्यापारविषयज्ञानवन्तः "सुदीतयः सुष्ठुद्योतना रश्मयः “दिवि द्योतमाने "समुद्रे अन्तरिक्षे "अन्तः मध्ये। समुद्रशब्दः अन्तरिक्षनामसु पाठात् तद्वचनः । स चैवं यास्केन निरुक्तः - समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः संमोदन्तेऽस्मिन्भूतानि समुदको भवति समुनत्तीति वा । (निरु. २. १०) इति । "नव्यंनव्यं “तन्तुं तननीयं

विस्तारणीयम् । जात्येकवचनम् । रश्मीन् “आ “तन्वते समन्ताद्विस्तारयन्ति ॥

तद्राधों अ॒द्य सं॑वि॒तुर्वरें॑ण्यं व॒यं दे॒वस्यं प्रस॒वे मंनामहे ।

अ॒स्मभ्यं द्यावापृथिवी सुचे॒तुनां र॒यिं धं॑त्त॒ं वसुं॑मन्तं शत॒ग्विनंम् ॥५

तत् । राधः॑ । अ॒द्य । स॒वि॒तुः । वरें॑ण्यम् । व॒यम् । दे॒वस्यं । प्र॒ऽस॒वे । म॒ना॒म॒हे॒ ।

अ॒स्मभ्यंम् । द्या॒वा॒पृ॒थि॒वी॒ इतिं । सु॒ऽचे॒तुनां । र॒यिम् । धत्त॒म् । वसुं॑ऽमन्तम् । श॒त॒ऽग्विनंम् ॥५

तत् । राधः । अद्य । सवितुः । वरेण्यम् । वयम् । देवस्य । प्रऽसवे । मनामहे ।

अस्मभ्यम् । द्यावापृथिवी इति । सुऽचेतुना । रयिम् । धत्तम् । वसुऽमन्तम् । शतऽग्विनम् ॥५

"वयं यजमानाः “सवितुः सर्वस्य प्रसवितुः "देवस्य आदिस्यस्य अन्तर्यामिरूपिणः “प्रसवे अनुज्ञायां सत्यां “तत् तादृशं “वरेण्यं वरणीयं “राधः पुरुषार्थसाधनसमर्थं गवादि धनं “मनामहे याचामहे ॥ मन्यतिर्याच्ञाकर्मा । छान्दसः शप् । यद्वा । पुनःपुनरभ्यस्यामः । लप्सीमहीति यावत् ॥ ‘ म्ना अभ्यासे' । व्यत्ययेनात्मनेपदम् । शपि पाघ्रादिना मनादेशः ।। किंच “अस्मभ्यं “द्यावापृथिवी द्यावापृथिव्यौ "सुचेतुना शोभनचेतनेन अस्मदनुग्रहबुद्ध्या “रयिं धनं “धत्तं दत्तम् । कीदृशम्। “वसुमन्तं निवासयोग्यगृहादिविशिष्टं “शतग्विनं शतसंख्याकगवादिविशिष्टम् ॥ ॥ २ ॥

# ऋग्वेदः सूक्तं १.१६०



सूक्तं १.१६०

दीर्घतमा औचथ्यः

## दे. द्यावापृथिवी। जगती

ते हि द्यावापृथिवी विश्वशम्भुव ऋतावरी रजसो धारयत्कवी ।

सुजन्मनी धिषणे अन्तरीयते देवो देवी धर्मणा सूर्यः शुचिः ॥१॥

उरुव्यचसा महिनी असश्चता पिता माता च भुवनानि रक्षतः ।

सुधृष्टमे वपुष्ये न रोदसी पिता यत्सीमभि रूपैरवासयत् ॥२॥

स वह्निः पुत्रः पित्रोः पवित्रवान्पुनाति धीरो भुवनानि मायया ।

धेनुं च पृश्निं वृषभं सुरेतसं विश्वाहा शुक्रं पयो अस्य दुक्षत ॥३॥

अयं देवानामपसामपस्तमो यो जजान रोदसी विश्वशम्भुवा ।

वि यो ममे रजसी सुक्रतूययाजरेभि स्कम्भनेभिः समानृचे ॥४॥

ते नो गृणाने महिनी महि श्रवः क्षत्रं द्यावापृथिवी धासथो बृहत् ।

येनाभि कृष्टीस्ततनाम विश्वहा पनाय्यमोजो अस्मे समिन्वतम् ॥५॥

## सायणभाष्यम्

‘ ते हि ' इति पञ्चर्चं चतुर्थं सूक्तं दैर्घतमसं जागतं द्यावापृथिव्यम् । ‘ते हि ' इत्यनुक्रान्तम् ॥ चतुर्विंशेऽहनि वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानमेतत्सूक्तं - ‘ते हि द्यावापृथिवी यज्ञस्य वो रथ्यमिति वैश्वदेवम् ' ( आश्व. श्रौ. ७. ४ ) इति सूत्रितत्वात् । तथा पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि वैश्वदेवे द्यावापृथिव्यं

निविद्धानीयं, चातुर्विंशिकं तृतीयसवनम् ( आश्व. श्रौ. ७. ६) इति आभिप्लविके द्वितीयेऽहनि अतिदिष्टत्वात्। आभिप्लविकात् द्वितीयादह्नः पृष्ठ्यस्य द्वितीयेऽहनि एतत्सूक्तमतिदेशतः प्राप्तं, 'पृष्ठ्यस्याभिप्लवेनोक्ते अहनी आद्ये आद्याभ्याम् ' ( आश्व. श्रौ. ७. १०) इति सूत्रितत्वात् । प्रथमा आश्विनशस्त्रे विनियुक्ता । ' संस्थितेष्वाश्विनाय' इत्यत्र सूत्रितं - ते हि द्यावापृथिवी विश्वशंभुवा विश्वस्य देवीमृचयस्य ' ( आश्व. श्रौ. ६. ५) इति ।

ते हि द्यावांपृथि॒वी वि॒श्वशं॑म्भुव ऋ॒तावं॑री॒ रजंसो धार॒यत्कंवी ।

सु॒जन्मंनी धि॒षणें अ॒न्तरीं॑यते दे॒वो दे॒वी धर्मं॑णा॒ सूर्य॒ः शुचिं॑ः ॥१

ते इति॑ । हि । द्यावा॑पृथि॒वी इति॑ । वि॒श्वऽश॑म्भुवा ।
ऋ॒तव॑री॒ इत्यृ॒तऽव॑री । रज॑सः । धा॒र॒यत्क॑वी॒ इति॑
धा॒र॒यत्ऽक॑वी ।

सु॒जन्म॑नी॒ इति॑ सु॒ऽजन्म॑नी । धि॒षणे॒ इति॑ । अ॒न्तः । ई॒य॒ते॒
। दे॒वः । दे॒वी इति॑ । धर्म॑णा । सूर्यः॑ । शुचिः॑ ॥१

ते इति । हि । द्यावापृथिवी इति । विश्वऽशम्भुवा ।
ऋतवरी इत्यृतऽवरी । रजसः । धारयत्कवी इति
धारयत्ऽकवी ।

सुजन्मनी इति सुऽजन्मनी । धिषणे इति । अन्तः । ईयते
। देवः । देवी इति । धर्मणा । सूर्यः । शुचिः ॥१

“ते “हि ते खलु प्रसिद्धे “द्यावापृथिवी "अन्तः तयोरन्तराले
“शुचिः शुद्धो विश्वस्य शोचयिता वा “देवः दीप्यमानः
“सूर्यः “धर्मणा प्रकाशोदकदानादिधारणेन युक्तः सन्

“ईयते सर्वदा गच्छति ॥ ‘ ईङ् गतौ'। दैवादिकः ॥ तादृशं कर्म युवयोरनुग्रहादिति स्तुतिः । कीदृश्यौ ते। “विश्वशंभुवा । विश्वं सुखभावयितृ ययोः ते विश्वशंभुवा । विश्वस्य सुखयित्र्यावित्यर्थः । “ऋतावरी ऋतवत्यौ ॥ ऋतशब्दात् छन्दसीवनिपौ' इति वनिप् । वनो र च' इति ङीब्रेफौ ॥ “रजसः उदकस्य उदकोत्पत्तौ । ‘ उदकं रज उच्यते ' ( निरु. ४. १९) इति निरुक्तम् । “धारयत्कवी अकृच्छ्रेण धारकं कवि ययोस्ते तादृश्यौ । उदकोत्पादनाय अप्रयत्नवत्यौ इत्यर्थः । यद्वा । धारयस्कविर्मनीषी आदित्यो ययोस्ते तादृश्यौ । वृष्ट्युदकधारयत्सूर्योपेते इत्यर्थः। "सुजन्मनी शोभनजन्मवत्यौ “धिषणे धर्षणोपेते स्वव्यापारेषु प्रगल्भे इत्यर्थः। “देवी द्योतमाने । अत्र यद्यपि धिषणे इत्येतत् ‘धिषणे रोदसी' (नि. ३. ३०. ३ ) इति तन्नामसु उक्तत्वात् द्यावापृथिवीनाम, तथापि द्यावापृथिवी इत्यस्य विद्यमानत्वात् यौगिकं द्रष्टव्यम् ।

उ॒रु॒व्यच॑सा म॒हिनी॑ अस॒श्चता॑ पि॒ता मा॒ता च॒ भुव॑नानि रक्षतः ।

सु॒धृष्ट॑मे वपु॒ष्ये॒३॒ न रोद॑सी पि॒ता यत्सी॑म॒भि रू॒पैरवा॑सयत् ॥२

उ॒रु॒ऽव्यच॑सा । म॒हिनी॒ इति॑ । अ॒स॒श्चता॑ । पि॒ता । मा॒ता । च॒ । भुव॑नानि । र॒क्ष॒तः॒ ।

सु॒धृष्ट॑मे॒ इति॑ सु॒ऽधृष्ट॑मे । व॒पु॒ष्ये॒ः॒३॒ इति॑ । न । रोद॑सी॒ इति॑ । पि॒ता । यत् । सी॒म् । अ॒भि । रू॒पैः । अवा॑सयत् ॥२

उरुऽव्यचसा । महिनी इति । असश्चता । पिता । माता । च । भुवनानि । रक्षतः ।

सुधृष्टमे इति सुऽधृष्टमे । वपुष्येः इति । न । रोदसी इति । पिता । यत् । सीम् । अभि । रूपैः । अवासयत् ॥२

“उरुव्यचसा प्रभूतव्यचनवत्यौ अतिविस्तीर्णे “महिनी अत एव महत्यौ “असश्चता असज्जमाने परस्परवियुक्ते इत्यर्थः। "पिता पालयित्री द्यौः “माता निर्मात्री पृथिवी “च इत्युभे "भुवनानि भूतजातानि "रक्षतः पालयतः । ‘ द्यौष्पितः पृथिवि मातः' (ऋ. सं. ६. ५१. ५) इत्यादिश्रुतेर्मातापितृरूपत्वम् । किंच "सुधृष्टमे अतिशयेन धृष्टे ॥ छान्दसस्तकारलोपः ॥ प्रगल्भे “रोदसी द्यावापृथिव्यौ "वपुष्ये "न वपुषो हिते इव । प्राणिनां पितराविव शरीररक्षके इत्यर्थः । तदेवोपपादयति । “यत् यस्मात् “सीं सर्वतः “पिता पितृस्थानीयो द्यौः “रूपैः निरूपणसाधनैः प्रशस्तैः प्रकाशैः निरूप्यमाणैर्वृष्ट्यादिभिर्वा “अभि “अवासयत् अभिवासयति अधितिष्ठति तस्मात् पिता माता च भुवनानि रक्षतः ॥

स वह्निः॑ पु॒त्रः पि॒त्रोः प॒वित्र॑वान्पु॒नाति॒ धीरो॒ भुव॑नानि
मा॒यया॑ ।

धे॒नुं च॒ पृश्निं॑ वृष॒भं सु॒रेत॑सं वि॒श्वाहा॑ शु॒क्रं पयो॑ अस्य दुक्षत
॥३

सः । वह्निः॑ । पु॒त्रः । पि॒त्रोः । प॒वित्र॑ऽवान् । पु॒नाति॑ । धीरः॑
। भुव॑नानि । मा॒यया॑ ।

धे॒नुम् । च॒ । पृश्नि॑म् । वृ॒ष॒भम् । सु॒ऽरेत॑सम् । वि॒श्वाहा॑ ।
शु॒क्रम् । पयः॑ । अ॒स्य॒ । धु॒क्ष॒त॒ ॥३

सः । वह्निः । पुत्रः । पित्रोः । पवित्रऽवान् । पुनाति । धीरः
। भुवनानि । मायया ।

धेनुम् । च । पृश्निम् । वृषभम् । सुऽरेतसम् । विश्वाहा ।
शुक्रम् । पयः । अस्य । धुक्षत ॥३

“पित्रोः मातापित्रोर्द्यावापृथिव्योः ।। पिता मात्रा ' इति पिता शिष्यते । ‘ उदात्तयणः । इति पितुर्विभक्तिरुदात्ता ।। “पुत्रः पुरुत्राता पुत्रस्थानीयः आदित्यः पवित्रवान् 'पावनरश्मियुक्तः “धीरः धीमान् "सः “वह्निः फलस्य वोढा धारकः सन् 'मायया प्रज्ञया स्वकीयया “भुवनानि भूतजातानि “पुनाति पावयति प्रकाशयतीत्यर्थः । किंच स एव पुत्रः “पृश्निं शुक्लवर्णां “धेनुं प्रीणयित्रीं भूमिं “सुरेतसं शोभनसामर्थ्यं शोभनोदकं वा “वृषभं सेक्तारं द्युलोकं “च मायया पुनाति प्रकाशयतीत्यर्थः । कदा । "विश्वाहा सर्वाण्यप्यहानि सर्वकालमित्यर्थः । किंच “अस्य द्युलोकस्य । यद्वा ॥ कर्मणि षष्ठी । इमं द्युलोकम् । “शुक्रं “पयः दीप्तं पयःसदृशमुदकं “धुक्षत दोग्धि ॥ दुहेश्छान्दसे लुङि ‘ शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशः ।। ईदृशो महानुभावः आदित्यस्तयोः पुत्रः इति द्यावापृथिव्योः स्तुतिः ॥

अ॒यं दे॒वाना॑म॒पसा॑म॒पस्त॑मो॒ यो ज॒जान॒ रोद॑सी वि॒श्वश॑म्भुवा ।

वि यो म॒मे रज॑सी सुक्र॒तूयया॒जरे॑भि॒ः स्कम्भ॑नेभि॒ः समा॑नृचे ॥४

अ॒यम् । दे॒वाना॑म् । अ॒पसा॑म् । अ॒पःऽत॑मः । यः । ज॒जान॑ । रोद॑सी॒ इति॑ । वि॒श्वऽश॑म्भुवा ।

वि । यः । म॒मे । रज॑सी॒ इति॑ । सु॒क्र॒तु॒ऽयया॑ । अ॒जरे॑भिः । स्कम्भ॑नेभिः । सम् । आ॒नृ॒चे॒ ॥४

अयम् । देवानाम् । अपसाम् । अपःऽतमः । यः । जजान । रोदसी इति । विश्वऽशम्भुवा ।

वि । यः । ममे । रजसी इति । सुक्रतुऽयया । अजरेभिः । स्कम्भनेभिः । सम् । आनृचे ॥४

पूर्वं पुत्रमाहात्म्येनैते प्रशस्य इदानीं स्वोत्पादकस्तुत्या प्रशंसति । “अयं “देवानां मध्ये देवतमः “अपसामपस्तमः । अप इति कर्मनाम । तेन तद्वान् लक्ष्यते । कर्मवतां मध्ये प्रकृष्टकर्मा । अयमित्युक्तं क इत्याह। “यः देवः “विश्वशंभुवा सर्वप्रकारेण भूतानां सुखस्य भावयित्र्यौ “रोदसी द्यावापृथिव्यौ महानुभावे "जजान उत्पादितवान् । न केवलमुत्पादनमात्रं अपि तु “यः देवः "रजसी रञ्जनात्मिके द्यावापृथिव्यौ । रजसी इति द्यावापृथिव्योर्नाम, ‘रजसी सदसी' (नि. ३. ३०.८) इति तन्नामसु पाठात् । उक्तरूपे “वि “ममे विशेषेण परिच्छिनत्ति । किं स्वोपभोगाय नेत्याह। “सुक्रतूयया शोभनकर्मेच्छया । येन कर्मणा प्राणिनां सुखं संभवति तादृक्कर्मेच्छया । अथवा एतदुत्तरत्र संबध्यते । सुक्रतूयया उक्तेन निमित्तेन इमे द्यावापृथिव्यौ "अजरेभिः अजीर्णैर्दृढतरैः "स्कम्भनेभिः गतिप्रतिबन्धसाधनैः शङ्कुभिः “समानृचे सम्यक् सर्वतः पूजितवान्

स्थापितवानित्यर्थः ॥ ऋच स्तुतौ'। लिटि रेफसामान्यात्
द्विहल्त्वमस्तीति तस्मान्नुड्द्विहलः' इत्यभ्यासस्य नुट् ।
यस्मादेवं तस्माद्ध्यमेव देवः अयमेव अपस्तमः
इत्येवंमहानुभावेन परमेश्वरेणोत्पन्ने इति स्तुतिः ॥

ते नों गृणा॒ने मंहिनी॒ महि॒ श्रवंः क्ष॒त्रं द्यांवापृथिवी धासथो
बृ॒हत् ।

येना॒भि कृ॒ष्टीस्त॒तनांम वि॒श्वहां पु॒नाय्य॒मोजों अ॒स्मे
समिंन्वतम् ॥५

ते । न॒ः । गृ॒णा॒ने इतिं । म॒हि॒नी॒ इतिं । महिं । श्रवः । क्ष॒त्रम्
। द्या॒वा॒पृ॒थि॒वी॒ इतिं । धा॒स॒थ॒ः । बृ॒हत् ।

येनं । अ॒भि । कृ॒ष्टीः । त॒तनांम । वि॒श्वहां । पु॒नाय्यंम् ।
ओजः । अ॒स्मे इतिं । सम् । इ॒न्व॒त॒म् ॥५

ते । नः । गृणाने इति । महिनी इति । महि । श्रवः । क्षत्रम् । द्यावापृथिवी इति । धासथः । बृहत् ।

येन । अभि । कृष्टीः । ततनाम । विश्वहा । पनाय्यम् । ओजः । अस्मे इति । सम् । इन्वतम् ॥५

“ते प्रसिद्धे हे “द्यावाथिवी द्यावापृथिव्यौ “गृणाने अस्माभिः स्तूयमाने सत्यौ ॥ कर्मणि कर्तृप्रत्ययः ॥ “महि महदतिप्रभूतं “श्रवः सर्वत्र प्रसिद्धमन्नं सर्वत्र श्रूयमाणां कीर्तिं वा “नः अस्मभ्यं “धासथः धत्तम् ।। दधातेर्लेट्यडागमः । ‘ सिब्बहुलम्' इति सिप् । तथा “बृहत् अतिप्रभूतं “क्षत्रं बलं धासथः । तदेव विशेष्यते । “येन अन्नबलेन “विश्वहा सर्वेष्वपि अहःसु “कृष्टीः पुत्रादिरूपाः प्रजाः "अभि “ततनाम अभितो विस्तारयाम॥ तनोतेर्लोटि छान्दसो विकरणस्य श्लुः। ‘आडुत्तमस्य इति आडागमः । तस्य ‘ छन्दस्युभयथा '

इति आर्धधातुकत्वात् अभ्यस्ताद्युदात्तत्वाभावे धातुस्वरः ॥ कृष्टय इति मनुष्यनाम, कृष्टयः चर्षणयः ' ( नि. २. ३. ७) इति तन्नामसु पाठात् । किंच “पनाय्यं स्तुत्यम् “ओजः शरीरबलम् “अस्मे अस्मासु सम्यक् “इन्वतं व्याप्नुतं प्रवर्धयतमित्यर्थः । इन्वतिर्व्याप्तिवचनः, ‘इन्वति ननक्ष' ( नि. २. १८. १ ) इति तन्नामसु पाठात् ॥ ॥ ३ ॥

# ऋग्वेदः सूक्तं १.१६१

← सूक्तं १.१६०

ऋग्वेदः - मण्डल १

सूक्तं १.१६१

दीर्घतमा औचथ्यः

सूक्तं १.१६२ →

दे. ऋभवः। जगती, १४ त्रिष्टुप् ।

---

किमु श्रेष्ठः किं यविष्ठो न आजगन्किमीयते दूत्यं कद्यदूचिम ।

न निन्दिम चमसं यो महाकुलोऽग्ने भ्रातर्द्रुण इद्भूतिमूदिम ॥१॥

एकं चमसं चतुरः कृणोतन तद्वो देवा अब्रुवन्तद्व आगमम् ।

सौधन्वना यद्येवा करिष्यथ साकं देवैर्यज्ञियासो भविष्यथ ॥२॥

अग्निं दूतं प्रति यदब्रवीतनाश्वः कर्त्वो रथ उतेह कर्त्वः ।

धेनुः कर्त्वा युवशा कर्त्वा द्वा तानि भ्रातरनु वः कृत्व्येमसि ॥३॥

चकृवांस ऋभवस्तदपृच्छत क्वेदभूद्यः स्य दूतो न आजगन् ।

यदावाख्यच्चमसाञ्चतुरः कृतानादित्त्वष्टा ग्नास्वन्तर्न्यानजे ॥४॥

हनामैनाँ इति त्वष्टा यदब्रवीच्चमसं ये देवपानमनिन्दिषुः ।

अन्या नामानि कृण्वते सुते सचाँ अन्यैरेनान्कन्या नामभि स्परत् ॥५॥

इन्द्रो हरी युयुजे अश्विना रथं बृहस्पतिर्विश्वरूपामुपाजत ।

ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन ॥६॥

निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन ।

सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवाँ अयातन ॥७॥

इदमुदकं पिबतेत्यब्रवीतनेदं वा घा पिबता मुञ्जनेजनम् ।

सौधन्वना यदि तन्नेव हर्यथ तृतीये घा सवने मादयाध्वै ॥८॥

आपो भूयिष्ठा इत्येको अब्रवीदग्निर्भूयिष्ठ इत्यन्यो अब्रवीत् ।

वधर्यन्तीं बहुभ्यः प्रैको अब्रवीदृता वदन्तश्चमसाँ अपिंशत ॥९॥

श्रोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनयाभृतम् ।

आ निम्रुचः शकृदेको अपाभरत्किं स्वित्पुत्रेभ्यः पितरा उपावतुः ॥१०॥

उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः ।

अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ॥११॥

सम्मील्य यद्भुवना पर्यसर्पत क्व स्वित्तात्या पितरा व आसतुः ।

अशपत यः करस्नं व आददे यः प्राब्रवीत्प्रो तस्मा अब्रवीतन ॥१२॥

सुषुप्वांस ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत् ।

श्वानं बस्तो बोधयितारमब्रवीत्संवत्सर इदमद्या व्यख्यत ॥१३॥

दिवा यान्ति मरुतो भूम्याग्निरयं वातो अन्तरिक्षेण याति ।

अद्भिर्याति वरुणः समुद्रैर्युष्माँ इच्छन्तः शवसो नपातः ॥१४॥

## सायणभाष्यम्

' किमु श्रेष्ठः' इति चतुर्दशर्चं पञ्चमं सूक्तं दैर्घतमसमार्भवम् । अन्त्या त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । अनुक्रान्तं च - किमु

श्रेष्ठः षळूनार्भवं त्रिष्टुबन्तम्' इति । व्यूळ्हे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्रे आर्भवं निविद्धानं द्वि प्रतीकम् । तत्र 'किमु श्रेष्ठः' इत्येतदन्त्यवर्जं प्रतीकम् । ‘ व्यूळ्हश्चेत्' इति खण्डे सूत्रितं - किमु श्रेष्ठ उप नो वाजा इति त्रयोदशार्भवं चतस्रश्च' (आश्व. श्रौ. ८. ८) इति ॥

किमु॒ श्रेष्ठ॒ः किं यवि॑ष्ठो न॒ आज॑ग॒न्किमी॑यते दू॒त्यं१॒॑ कद्यदू॑चि॒म ।

न नि॑न्दिम चम॒सं यो म॑हाकु॒लोऽग्ने॑ भ्रात॒र्द्रुण॒ इद्भू॒तिमू॑दिम ॥१

किम् । उ॒ इति॑ । श्रेष्ठः॑ । किम् । यवि॑ष्ठः । न॒ः । आ । अ॒ज॒ग॒न् । किम् । ई॒य॒ते॒ । दू॒त्य॑म् । कत् । यत् । ऊ॒चि॒म ।

न । नि॒न्दि॒म॒ । च॒म॒सम् । यः । म॒हा॒ऽकु॒लः । अ॒ग्ने॒ । भ्रा॒तः॒ । द्रुणः॑ । इत् । भू॒तिम् । ऊ॒दि॒म॒ ॥१

किम् । ऊं इति । श्रेष्ठः । किम् । यविष्ठः । नः । आ । अजगन् । किम् । ईयते । दूत्यम् । कत् । यत् । ऊचिम ।

न । निन्दिम । चमसम् । यः । महाऽकुलः । अग्ने । भ्रातः । द्रुणः । इत् । भूतिम् । ऊदिम ॥१

ऋभवो नाम सुधन्वनस्त्रयः पुत्रा ऋभुर्विभ्वा वाज इति । ते च मनुष्याः सन्तः सुकर्मणा देवत्वं प्राप्य कदाचित् कर्मकाले सोमपानाय प्रवृत्ताः । तान् प्रति देवैः प्रेरितोऽग्निः परस्परसमानरूपान् दृष्ट्वा स्वयमपि तदाकारं धृत्वा तेषु मध्ये स्वयं चतुर्थः सन् पातुं प्रवृत्तः । ते च ऋभवः आगतं तं समानरूपमवलोक्य विवेक्तुमसमर्थाः पदस्परमेवं संदिहते । अयं “किमु “श्रेष्ठः किं नु खलु अस्मत्तोऽयं प्रशस्यतमो वयसा श्रेष्ठः सोऽस्मान् “आजगन्

आगमत् प्राप्तः ॥ गमेर्लङि छान्दसः शपः श्लुः ।
हल्ङ्यादिलोपे ' मो नो धातोः' इति नत्वम् । अजगन्निति
गतिकर्मा, अगन् अजगन्' (नि. २. १४.११२) इति
तन्नामसु पाठात् ।। "किं "यविष्ठः किं वा अस्माकं
युवतमोऽस्मत्तः कनीयान् आजगन् प्राप्तः । "किं वा "दूत्यं
दूतकर्म देवसंबन्धि "ईयते गच्छति । देवैः प्रेरितः
दूतोऽस्मानागतो वा ॥ ' दूतस्य भागकर्मणी ' इति यत् ॥
"यदूचिम यदेतत् ब्रूमः तत् "कत् । कथं निश्चेतव्यमित्यर्थः
। वयं तावत् त्रय एव इदानीं चत्वारः समानरूपा वर्तामहे
तस्मादयमधिकः किमु श्रेष्ठ इति विचिकित्सा । एवं
संदिह्य कथंचित् स्वतोऽन्यं निश्चित्य तं प्रति आपरोक्ष्येण
ब्रुवते । हे "अग्ने "भ्रातः भ्रातृवद्भागार्ह । भ्राता यथा
बलात् स्वकीयभागं स्वीकरोति तद्वत् समानरूपमाश्रित्य
बलात् चमसपानाय प्रवृत्त इति भ्रातरित्युक्तम् । हे
तादृशाग्ने "चमसं "न "निन्दिम । अधिकः समागत इति
पानमकृत्वा चमसं न दूषयामः ॥ ' णिदि कुत्सायाम् ।

'छन्दसि वेति वक्तव्यम्' इति द्विर्वचनाभावः ॥ अदूष्यत्वे कारणमाह । “यः चमसः महाकुलः महाकुलोत्पन्नः त्वष्ट्रा निर्मितत्वात् । वक्ष्यति च त्वष्टा ग्नास्वन्तर्न्यानजे ' ( ऋ. सं १. १६१. ४ ) इति । अतः कारणात् “द्रुणः । विकारे प्रकृतिशब्दः । ततश्च तत्स्थे तच्छब्दः । इच्छब्दोऽवधारणे । दारुविकारचमसस्य "भूतिं प्राप्तिम् "ऊदिम ब्रूमः ॥ विदेश्छान्दसे लिटि वचिस्वपि ' इति संप्रसारणम् । क्रादिनियमात् इट् ।

एकं चम॒सं च॒तुरः॑ कृणोतन॒ तद्वो॑ दे॒वा अ॑ब्रुव॒न्तद्व॒ आग॑मम् ।

सौध॑न्वना॒ यद्ये॒वा क॑रि॒ष्यथ॑ सा॒कं दे॒वैर्य॒ज्ञिया॑सो भविष्यथ ॥२

एकंम् । च॒म॒सम् । च॒तुरः॑ । कृ॒णो॒त॒न॒ । तत् । व॒ः । दे॒वाः ।
अ॒ब्रु॒व॒न् । तत् । व॒ः । आ । अ॒ग॒म॒म् ।

सौधंन्वनाः । यदिं । ए॒व । क॒रि॒ष्यथं । सा॒कम् । दे॒वैः ।
य॒ज्ञियांसः । भ॒वि॒ष्य॒थ॒ ॥२

एकम् । चमसम् । चतुरः । कृणोतन । तत् । वः । देवाः ।
अब्रुवन् । तत् । वः । आ । अगमम् ।

सौधन्वनाः । यदि । एव । करिष्यथ । साकम् । देवैः ।
यज्ञियासः । भविष्यथ ॥२

एवं पृष्टोऽग्निस्तान् प्रत्युवाच । हे "सौधन्वनाः सुधन्वनः पुत्राः यूयम् “एकं "चमसं त्वष्ट्रा संपादितं पूर्वमेकमेव सन्तं चमसं “चतुरः “कृणोतन चतुःसंख्याकान् कुरुत । चतुरः शसि' (पा. सू. ६. १. १६७ ) इत्यन्तोदात्तत्वम् । पूर्ववत् तनप् ।। यथा उपरितने ' ज्येष्ठ आह चमसा द्वा करेति ।

इत्युपक्रम्य ‘ कनिष्ठ आह चतुरस्करेति' ( ऋ. सं. ४. ३३. ५) इति चतुष्कं निर्धारितम् । न केवलमहमेव ब्रवीमि किंतु “वः युष्मान प्रति “तत् उक्तं चतुर्धाकरणरूपं कर्म उत्तरत्र वक्ष्यमाणम् अश्वरथादिकरणरूपं च कर्म “देवाः इन्द्रादयः “अब्रुवन् । देवत्वप्राप्त्युपायत्वेन “तत् तादृशं कर्म “वः युष्माकं वक्तुम् अहम् “आगमम् प्राप्तोऽस्मि । यस्मादेवं तस्माद्यूयं “यद्येवा “करिष्यथ यद्येवं मदुक्तप्रकारेण कर्तुं शक्नुथ तथा चेत् “देवैः “साकं सह “यज्ञियासो “भविष्यथ । इति तैरुक्तमित्यर्थः ।।

अ॒ग्निं दू॒तं प्रति॒ यदब्र॑वीत॒नाश्व॒ः कर्त्वो॒ रथं उ॒तेह कर्त्व॒ः ।

धे॒नुः कर्त्वा॑ युव॒शा कर्त्वा॒ द्वा तानिं भ्रात॒रनुं वः कृ॒त्व्येमंसि ॥३

अ॒ग्निम् । दू॒तम् । प्रति॑ । यत् । अब्र॑वीतन । अश्वः॑ । कर्त्वः॑ । रथः॑ । उ॒त । इ॒ह । कर्त्वः॑ ।

धे॒नुः । कर्त्वा॑ । यु॒व॒शा । कर्त्वा॑ । द्वा । तानि॑ । भ्रा॒त॒ः । अनु॑ । व॒ः । कृ॒त्वी । आ । इ॒म॒सि॒ ॥३

अग्निम् । दूतम् । प्रति । यत् । अब्रवीतन । अश्वः । कर्त्वः । रथः । उत । इह । कर्त्वः ।

धेनुः । कर्त्वा । युवशा । कर्त्वा । द्वा । तानि । भ्रातः । अनु । वः । कृत्वी । आ । इमसि ॥३

हे आगत देव "अग्निम् अङ्गनादिगुणविशिष्टं “दूतं दूतकर्म प्राप्तवन्तं त्वां “प्रति “यत् यत्कार्यम् "अब्रवीतन अब्रुवन् । व्यत्ययेन मध्यमः । पूर्ववत् तनप् ॥ किमिति “अश्वः "कर्त्वः । एकस्मादश्वादश्वान्तरं कर्तव्यमित्यर्थः । अश्वादश्वमतक्षत ' ( ऋ.सं. १. १६१. ७) इति

वक्ष्यमाणत्वात् ॥ ‘ कृत्यार्थे तवैकेन्' इति त्वन्प्रत्ययः ॥ "उत अपि च “रथः कर्त्वः कर्तव्यः । “धेनुः कर्त्वा । चर्मरहिता मृता गौः नित्यदोग्ध्री पुनर्नूतना कार्या । तदुत्तरत्र ‘ निश्चर्मणो गामरिणीत धीतिभिः ' ( ऋ.सं. १. १६१. ७ ) इति वक्ष्यमाणत्वात् । तथा “द्वा द्वौ पितरौ जीर्णौ सन्तो पुनः “युवशा युवानौ शयानौ प्रकृष्टयौवनोपेतौ “कर्त्वा कर्तव्यौ । हे “भ्रातः अग्ने युष्माकं देवानां तैरुक्तानि कर्माणि कृत्वा “अनु पश्चात् “कृत्वी कृत्व्या कर्मणा “एमसि एमः आभिमुख्येन प्राप्नुमः ।। ‘ इण् गतौ । इदन्तो मसिः॥ यद्वा । ऋषेरिदं वाक्यम् । हे ऋभवः यूयमागतमग्निं दूतं प्रति यदब्रवीतन यत्कार्यं वक्ष्यमाणरूपं कर्तव्यत्वेन वदथ अङ्गीकुरुथ तानि सर्वाणि संपाद्य हे भ्रातरग्ने कृत्व्या कर्मणैमसीति ब्रूथेत्यृषिराह ॥

च॒कृ॒वांसं ऋभव॒स्तदंपृच्छत॒ क्वेदंभू॒द्यः स्य दू॒तो न॒

आजंगन् ।

य॒दावा॑ख्यंच्चम॒सा॑ञ्च॒तुरं॑ः कृ॒तानादित्त्वष्टा॒

ग्नास्व॒न्तर्न्या॑नजे ॥४

च॒कृ॒ऽवांसः॑ । ऋ॒भ॒वः॒ । तत् । अ॒पृ॒च्छ॒त॒ । क्वं । इत् ।

अ॒भू॒त् । यः । स्यः । दू॒तः । न॒ः । आ । अजंगन् ।

य॒दा । अ॒व॒ऽअख्यंत् । च॒म॒सान् । च॒तुरः॑ । कृ॒तान् । आत् ।

इत् । त्वष्टां । ग्नासुं । अ॒न्तः । नि । आ॒न॒जे॒ ॥४

चकृऽवांसः । ऋभवः । तत् । अपृच्छत । क्व । इत् ।

अभूत् । यः । स्यः । दूतः । नः । आ । अजगन् ।

यदा । अवऽअख्यत् । चमसान् । चतुरः । कृतान् । आत् ।

इत् । त्वष्टा । ग्नासु । अन्तः । नि । आनजे ॥४

हे “ऋभवः “तत् कार्यं यथा 'चकृवांसः कृतवन्तो यूयम् "अपृच्छत प्रश्नं कुरुत ॥ करोतेर्लिटः क्वसुः । अत्र यद्यपि ऋभुरिति त्रयाणां मध्ये एकस्य नाम तथापि तस्य प्राथम्यात् ‘छत्रिणो गच्छन्ति ' इतिवत् सर्वेऽपि ऋभवः' उच्यन्ते । किमिति । “स्यः सः “दूतः क्वेदभूत् कुत्र गतः । स इत्युक्तं क इत्याह । “यः यो दूतः “नः अस्मान् “आजगन् आगमत् प्राप्तः । एवंभूते सति “यदा अयं त्वष्टा "चतुरः “कृतान् “चमसान् “अवाख्यत् अभिपश्यति ।। ख्यातेर्लुङि • अस्यतिवक्तिख्याति° इति च्लेः अङादेशः ॥ “आदित् अनन्तरमेव “त्वष्टा तस्य चमसस्योत्पादकः एतन्नामको देवः “ग्नासु स्त्रीषु । मेना ग्ना इति स्त्रीणाम्' ( निरु. ३. २१) इति निरुक्तम् । “अन्तः मध्ये “न्यानजे न्यक्तोऽभूत् । स्त्रियम् आत्मानम् अमन्यत इत्यर्थः ॥ अञ्जेर्लिटि तस्मान्नुड्द्विहलः' इति नुट् । छान्दसोऽनुनासिकलोपः ॥

हना॑मैना॒ँ इति॒ त्वष्टा॒ यदब्र॑वीच्चम॒सं ये दे॑व॒पान॒मनि॑न्दिषुः ।

अ॒न्या नामा॑नि कृण्वते सु॒ते सचाँ॑ अ॒न्यैरे॑नान्क॒न्या॒३॒॑
नाम॑भिः स्परत् ॥५

हना॑म । ए॒ना॒न् । इति॑ । त्वष्टा॑ । यत् । अब्र॑वीत् । च॒म॒सम्
। ये । दे॒व॒ऽपान॑म् । अनि॑न्दिषुः ।

अ॒न्या । नामा॑नि । कृ॒ण्व॒ते॒ । सु॒ते । सचा॑ । अ॒न्यैः । ए॒ना॒न्
। क॒न्या॑ । नाम॑ऽभिः । स्प॒र॒त् ॥५

हनाम । एनान् । इति । त्वष्टा । यत् । अब्रवीत् । चमसम्
। ये । देवऽपानम् । अनिन्दिषुः ।

अन्या । नामानि । कृण्वते । सुते । सचा । अन्यैः । एनान्
। कन्या । नामऽभिः । स्परत् ॥५

“एनान् वक्ष्यमाणान् “हनाम “इति “यत् यदा “अब्रवीत् “त्वष्टा । पूजार्थं बहुवचनम् । एतच्छब्दस्य प्रकृतपरामर्शकत्वात् ऋभूणां प्रकृतत्वात् तेषां हननप्रसक्तिं दर्शयति। “ये "देवपानं देवैः पातव्यं 'चमसं ये ऋभवः “अनिन्दिषुः निन्दामकुर्वन्। देवयोग्यं त्वाष्ट्रचमसं मनुष्याः ऋभवः स्वीकृत्य चतुर्धा व्यभजन तान् हनामेति यदा अब्रवीदित्यर्थः । तदाप्रभृति मनुष्याः “सुते अभिषुते सोमे पानाय प्रस्तुते सति "सचा सह परस्परम् “अन्या “नामानि अन्यानि होत्रध्वर्यूद्गात्रादीनि “कृण्वते कुर्वन्ति । पूर्वनाम प्रच्छाद्य उपहवकाले ‘अध्वर्य उपह्वयस्व होतरुपह्वयस्व' इत्येवम् अन्यैरेव नामभिः आत्मानं त्वष्टृवधभीत्या प्रख्यापयन्तीत्यर्थः । पूर्वम् अन्यानि कथं प्रसक्तानीत्यत आह । “एनान् नरान् “कन्या स्वोत्पादयित्री माता “अन्यैः एव “नामभिः “स्परत् प्रीणयति ॥ ‘ स्पृ प्रीतिबलयोः '। लेट्यडागमः ॥ ॥ ४ ॥

इन्द्रो॒ हरी॑ युयु॒जे अ॒श्विना॒ रथं॒ बृह॒स्पति॑र्वि॒श्वरू॑पा॒मुपा॑जत ।

ऋ॒भुर्वि॑भ्वा॒ वाजो॑ दे॒वाँ अ॑गच्छत॒ स्वप॑सो य॒ज्ञियं॑
भा॒गमै॑तन ॥६

इन्द्रः॑ । हरी॒ इति॑ । यु॒यु॒जे । अ॒श्विना॑ । रथ॑म् । बृह॒स्पतिः॑ ।
वि॒श्वऽरू॑पाम् । उप॑ । आ॒ज॒त॒ ।

ऋ॒भुः । विऽभ्वा॑ । वाजः॑ । दे॒वान् । अ॒ग॒च्छ॒त॒ । सु॒ऽअप॑सः
। य॒ज्ञिय॑म् । भा॒गम् । ऐ॒त॒न॒ ॥६

इन्द्रः । हरी इति । युयुजे । अश्विना । रथम् । बृहस्पतिः ।
विश्वऽरूपाम् । उप । आजत ।

ऋभुः । विऽभ्वा । वाजः । देवान् । अगच्छत । सुऽअपसः
। यज्ञियम् । भागम् । ऐतन ॥६

पूर्वं सृष्टानां क्रमेण विनियोगमाह । “इन्द्रो “हरी "युयुजे । एतन्नामानावश्वौ रथे योजितवान् । तथा “अश्विना अश्विनौ “रथं योजितवन्तौ । तथा "बृहस्पतिः बृहतो मन्त्रस्य पालयिता एतन्नामको देवः “विश्वरूपां नानारूपोपेतां गाम् “उपाजत उपागमत् स्वीकृतवानित्यर्थः । यद्यप्यत्र गौरिति विशेषो न श्रुतः तथापि पूर्वं धेनुः कर्त्वेत्युक्तत्वात् पुरस्ताच्च ‘ये धेनुं विश्वजुवं विश्वरूपाम् ' (ऋ.सं. ४. ३३. ८) इति वक्ष्यमाणत्वाच्च विश्वरूपा गौरित्येवाध्यवसीयते । अत एव विश्वरूपाम् इत्यस्याश्वपङ्क्तिरिति केचन व्याचक्षते तदसत्। युष्मत्संपादितानि रथादीनि इन्द्रादयः स्वभागत्वेनाकल्पयन् । तस्मात् "ऋभुर्विभ्वा "वाजः च यूयं "देवान् इन्द्रादीन् “अगच्छत । गत्वा च हे “स्वपसः शोभनाश्वरथादिकर्मवन्तो यूयं “यज्ञियं यज्ञार्हं यज्ञसंबन्धिनं "भागं सोमरूपं देवत्वं प्राप्तैः सेवनीयम् “ऐतन प्राप्नुत । कर्मसामर्थ्येन हविर्भुजो भवतेत्यर्थः । इत्येवमृषिराह ॥

निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन ।

सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवाँ अयातन ॥७

निः । चर्मणः । गाम् । अरिणीत । धीतिऽभिः । या । जरन्ता । युवशा । ता । अकृणोतन ।

सौधन्वनाः । अश्वात् । अश्वम् । अतक्षत । युक्त्वा । रथम् । उप । देवान् । अयातन ॥७

निः । चर्मणः । गाम् । अरिणीत । धीतिऽभिः । या । जरन्ता । युवशा । ता । अकृणोतन ।

सौधन्वनाः । अश्वात् । अश्वम् । अतक्षत । युक्त्वा । रथम् । उप । देवान् । अयातन ॥७

हे “सौधन्वनाः यूयं “निश्चर्मणः मृतायाः गोः सकाशात् उत्कृत्ताच्चमर्णः “गां नूतनां निः “अरिणीत निरगमयत उत्पादितवन्त इत्यर्थः । तेनैव चर्मणा संवीतां तत्सदृशीमन्यां धेनुं कृतवन्त इत्यर्थः । यद्यपि पूर्वमेव अश्वादीनां विनियोगः उक्तः तथापि तेषामत्यन्तदुःखसंपादत्वज्ञापनाय पुनराह । न केवलं गोकरणमेव अपि च “या “जरन्ता यौ जीर्णौ पितरौ “ता तौ “युवशा युवानौ “अकृणोतन अकुरुत । किंच “अश्वादश्वम् एकेन विद्यमानेनाश्वेन अश्वान्तरम् “अतक्षत प्रयत्नेन संपादितवन्तः । यस्मादेवं कृतवन्तस्तस्मात् “रथं युष्मदीयं “युक्त्वा अश्वैर्योजयित्वा "देवान् इन्द्रादीन् “उप “अयातन देवसमीपं प्राप्नुत ॥ इदमुंदकं पिबतेत्यब्रवीतनेदं वा वा पिबता मुञ्जनेजनम् । सौधन्वना यदि तन्नेव हर्यथ तृतीये घा सवने मादयाध्यै ॥ ८ ॥

इ॒दमु॑द॒कं पिब॒तेत्य॑ब्रवीतने॒दं वा॑ घा पिबता मुञ्ज॒नेज॑नम् ।

सौध॑न्वना॒ यदि॒ तन्नेव॒ हर्य॑थ तृ॒तीये॑ घा॒ सव॑ने मादयाध्वै ॥८

इ॒दम् । उ॒द॒कम् । पि॒ब॒त॒ । इति॑ । अ॒ब्र॒वी॒त॒न॒ । इ॒दम् । वा॒ । घ॒ । पि॒ब॒त॒ । मु॒ञ्ज॒ऽनेज॑नम् ।

सौध॑न्वनाः । यदि॑ । तत् । नऽइ॑व । हर्य॑थ । तृ॒तीये॑ । घ॒ । सव॑ने । मा॒द॒या॒ध्वै॒ ॥८

इदम् । उदकम् । पिबत । इति । अब्रवीतन । इदम् । वा । घ । पिबत । मुञ्जऽनेजनम् ।

सौधन्वनाः । यदि । तत् । नऽइव । हर्यथ । तृतीये । घ । सवने । मादयाध्वै ॥८

इदानीमृषिः देवैरुक्तमर्थं तान् संबोध्य यूयम् ऋभून् एवमुक्तवन्तः स्थ इति अनुवाचयति। हे “सौधन्वनाः सुधन्वनः पुत्राः यूयम् “इदमुदकं सोमलक्षणं “पिबतेत्यब्रवीतन इत्युक्तवन्तः ॥ ब्रवीतेर्लङि मध्यमबहुवचनस्य तस्य तनबादेशे पित्त्वात् 'ब्रुव ईट्' (पा. सू. ७. ३. ९३ ) ॥ एतत् प्रातःसवनिकाभिप्रायम् । “वा अथवा । “घ इत्यनर्थकः प्रसिद्ध्यर्थो वा । “इदं “मुञ्जनेजनम् । मुञ्जवान्नाम पर्वतः सोमोत्पत्तिस्थानम् । तत आहृतत्वात् तेन मुञ्जतृणेन शोधितं अपगततृणमित्यर्थः । इदं सोमरसरूपमुदकं “पिबत इत्यब्रवीतन । एतत् माध्यंदिनसवनाभिप्रायम् । हे ऋभवः यूयं “तत् उभयसवनसंबन्धि सोमपानकार्यं “नेव हर्यथ नैव कामयथ । हर्यतिः कान्तिकर्मा, ' हर्यति उशिक्' (नि. २. ६. १० ) इति तत्कर्मसु पाठात् । “तृतीये “सवने तु "मादयाध्वै अत्यर्थं तृप्ताः भवथ । ' ऋभवो देवाः सोमस्य मत्सन्' इति तृतीयसवने तेषां सोमपानसद्भावात् । एवं

यूयमृभूनुक्तवन्तः । अथवा ऋभून्प्रति तस्यैव इदं वाक्यम् । हे सौधन्वनाः यूयं देवत्वं प्राप्य देवयजनं प्रति सोमपानाय रथेनागत्य श्रान्तानश्वान् प्रातःसवने इदमुदकं सोमलक्षणं पिबतेत्यब्रवीतन । तत्र यदि नेच्छथ इदं वा मुञ्जनेजनं मुञ्जेन दूषितं वाजिनं पिबतेत्यब्रवीतन पश्चात् तत् द्वयं यदि नेव हर्यथ हे अश्वा यूयं तृतीये सवने मादयध्वै । तत्रापि वाजिनप्रचारात् ॥

आपो॒ भूयि॑ष्ठा॒ इत्येको॑ अब्रवीद॒ग्निर्भूयि॑ष्ठ॒ इत्य॒न्यो अ॑ब्रवीत् ।

व॒ध॒र्यन्ती॑ ब॒हुभ्य॒ः प्रैको॑ अब्रवीदृ॒ता वद॑न्तश्चम॒साँ अ॑पिंशत ॥९

आप॑ः । भूयि॑ष्ठाः । इति॑ । एक॑ः । अ॒ब्र॒वी॒त् । अ॒ग्निः । भूयि॑ष्ठः । इति॑ । अ॒न्यः । अ॒ब्र॒वी॒त् ।

व॒ध॒ःऽयन्तीं॑म् । ब॒हुऽभ्यः॑ । प्र । एकः॑ । अ॒ब्र॒वी॒त् । ऋ॒ता ।
वदं॑न्तः । च॒म॒सान् । अ॒पिं॒श॒त॒ ॥९

आपः । भूयिष्ठाः । इति । एकः । अब्रवीत् । अग्निः ।
भूयिष्ठः । इति । अन्यः । अब्रवीत् ।

वधःऽयन्तीम् । बहुऽभ्यः । प्र । एकः । अब्रवीत् । ऋता ।
वदन्तः । चमसान् । अपिंशत ॥९

चमचतुर्धाकरणकाले किमिति सत्यं वदन्तो व्यभजन्निति
तदाह । “एकः त्रयाणामन्यतमः “आपो “भूयिष्ठाः “इति
“अब्रवीत नहि उदकात् प्रशस्तं लोकोपकारकं
तत्त्वान्तरमस्ति । आपो भूयिष्ठाः इति ऋतम् अवादीत् ।
अपामेव श्रेष्ठत्वम् अप एव ससर्जादौ ' (मनु. १.८)
इत्यादिशास्त्रात्। तथा “अन्यः “अग्निर्भूयिष्ठ “इति
“अब्रवीत् । आन्तरं बाह्यं च
दाहपाकभुक्तजरणादिव्यापारेण अग्नेरेव

जगन्निर्वाहकत्वादग्नेरेव भूयिष्ठत्वम् इत्येव मन्यते । तथा “वधर्यन्तीम् । वधरिति रेफान्तः अपि वज्रनाम, ‘वधः अर्कः ' (नि. २. २०, ७) इति तन्नामसु पाठात् । तदिच्छति वृष्ट्युदकायेति वधर्यन्ती मेघपङ्क्तिरुच्यते । यद्यपीयं स्ववधार्थं वज्रं स्वयमेव नापेक्षते तथापि वृष्ट्यर्थम् इन्द्रवज्रेण हन्यमानत्वात् तदिच्छतीत्युपचर्यते । यद्वा । बहुभ्यः तेषामर्थाय वधर्यन्तीं वधमात्मन इच्छन्ती भूमिम् ॥ छान्दसो रेफोपजनः । तामेव “एकः “बहुभ्यः संवादिभ्यः श्रेष्ठतमाम् “अब्रवीत् । उदकस्यापि मेघकारणत्वात् । एवम् “ऋता ऋतानि उक्तरूपाणि यथार्थानि वाक्यानि “वदन्तः परस्परं ब्रुवन्तः “चमसान् “अपिंशत अवयविनोऽकुरुत चतुर्धा व्यभजत इत्यर्थः॥ ‘पिश अवयवे'। ‘शे मुचादीनाम ' इति नुम् । इदमेव ऋतवदनम् अपेक्ष्य ऋभुशब्दं व्याचक्षाणो यास्कः - ‘ ‘ऋभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति वा' (निरु. ११, १५) इत्युक्तत्वात् ।।

श्रो॒णामेक॑ उ॒द॒कं गामवा॑जति मा॒ंसमेक॑ः पिंशति
सू॒नयाभृ॑तम् ।

आ नि॒म्रुच॒ः शकृ॒देको॒ अपा॑भर॒त्किं स्वि॑त्पु॒त्रेभ्य॑ः पि॒तरा॒
उपा॑वतुः ॥१०

श्रो॒णाम् । एकः॑ । उ॒द॒कम् । गाम् । अव॑ । अ॒ज॒ति॒ ।
मा॒ंसम् । एकः॑ । पि॒ंश॒ति॒ । सू॒नया॑ । आऽभृ॑तम् ।

आ । नि॒ऽम्रुचः॑ । शकृ॑त् । एकः॑ । अप॑ । अ॒भ॒र॒त् । किम् ।
स्वि॒त् । पु॒त्रेभ्यः॑ । पि॒तरौ॑ । उप॑ । आ॒व॒तु॒ः ॥१०

श्रोणाम् । एकः । उदकम् । गाम् । अव । अजति ।
मांसम् । एकः । पिंशति । सूनया । आऽभृतम् ।

आ । निऽम्रुचः । शकृत् । एकः । अप । अभरत् । किम् ।
स्वित् । पुत्रेभ्यः । पितरौ । उप । आवतुः ॥१०

अत्र ऋभव एव ऋत्विग्रूपेण स्थित्वा सर्वत्र यज्ञं निर्वहन्तीत्याह। "श्रोणां शोणम् ॥ ‘ वा छन्दसि ' इति पररूपाभावः ।। शोणवर्णम् “उदकं रुधिरम् “एकः ऋभुषु मध्ये ऋत्विक् “गाम् “अवाजति बाह्यभूमिं प्रति गमयति रक्षोभागत्वेन स्थापयति । तथा “एकः "मांसं "सूनया छेदनसाधनेन स्वधितिना “आभृतं संपादितं “पिंशति हृदयजिह्वावक्षआद्याकारेण आहृतं संपादितं मांसं पिंशति अवयवीकरोति स्वधितिना तत्तद्वयवान् विभजतीत्यर्थः । अथ “एकः “निम्रुचः निःशेषेण छिन्नात् मांसात् “शकृत् कुक्षिस्थं जरत्तृणम् ऊबध्यनामकम् “अपाभरत् अपाहरन्निरसनाय । एवमृत्विग्रूपेण स्थितेभ्यः “पुत्रेभ्यः पुरुत्रातृभ्यः पुत्रस्थानीयेभ्य ऋभुभ्यः सर्वेष्वनुष्ठितेषु “पितरा यज्ञस्य पालयितारौ जायापती “किं “स्वित् "उपावतुः किं नु खलु प्राप्नुतः ॥ अवतेः प्राप्त्यर्थाच्छान्दसो लिट् ॥ सर्वं तैरेवानुष्ठितमिति तयोर्न किंचित्कृत्यमस्तीत्यर्थः । अथवायमर्थः ।

एकस्तेषामन्यतमः श्रोणां पङ्गुकां गामुदकं प्रत्यवगमयति । अपरः सूनया मांसविक्रयिण्या आभृतं संपादितं मांसं पिंशति । अपर आ निम्रुचः अस्तमयादर्वागेव शकृत् गोपुरीषं हरति । एवम् ऋभुभिरनुष्ठिते सति किं स्विदेतस्मात् परिचरणात् अन्यत् पुत्रेभ्यः सकाशात् उपावतुः उपगच्छेतामिति ॥ ॥ ५ ॥

उ॒द्वत्स्व॑स्मा अकृणोतना॒ तृणं॑ नि॒वत्स्व॒पः स्व॑प॒स्यया॑ नरः ।

अगो॑ह्यस्य॒ यदस॑स्तना गृ॒हे तद॒द्येदमृ॑भवो॒ नानु॑ गच्छथ ॥ ११

उ॒द्वत्ऽसु॑ । अ॒स्मै॒ । अ॒कृ॒णो॒त॒न॒ । तृण॑म् । नि॒वत्ऽसु॑ । अ॒पः । सु॒ऽअ॒प॒स्यया॑ । न॒रः॒ ।

अगोह्यस्य । यत् । असंस्तन । गृहे । तत् । अद्य । इदम् । ऋभवः । न । अनुं । गच्छथ ॥११

उद्वत्ऽसु । अस्मै । अकृणोतन । तृणम् । निवत्ऽसु । अपः । सुऽअपस्यया । नरः ।

अगोह्यस्य । यत् । असस्तन । गृहे । तत् । अद्य । इदम् । ऋभवः । न । अनु । गच्छथ ॥११

पुराणप्रसिद्धान् सुधन्वनः पुत्रान् कर्मणा देवत्वं प्राप्तवतः ऋभून् स्तुत्वा वेदप्रसिद्धया सूर्यरश्मिरूपान् ऋभून् इदानीं स्तौति । तथा च यास्को निरुक्ते पुराणप्रक्रिया सिद्धानृभून् बहुधा निरुच्य तदुदाहरणत्वेन ' विष्ट्वी शमी ' इत्येतामुदाहृत्य • आदित्यरश्मयोऽप्यृभव उच्यन्ते' ( निरु. ११. १६) इत्युक्त्वा तस्मिन्नर्थे एतामृचमुदाजहार । हे "ऋभवः उरु प्रभूतं भासमानाः ऋतेन आदित्येन भासमाना वा ऋतेनोदकेन उदकार्थमुत्पन्ना वा ।

रश्मीनामुरुभासमानत्वं प्रसिद्धम् । तथा आदित्यादुत्पत्तिरपि । उदकार्थं भवनमपि रश्मीनां घर्मकाले भूमिगतं सारमादाय पुनः वर्षकाले प्रवर्षन्तीति प्रसिद्धम् ।' आदित्याज्जायते वृष्टिः' (मनु. ३.७६ ) इति शास्त्रात् । तथाविधाः "नरः प्रकाशवृष्ट्युकादेर्नेतारः यूयम् "उद्वत्सु उन्नतेषु प्रदेशेषु मेर्वादिषु "तृणं व्रीहियवादिरूपम् "अस्मै प्राणिजाताय तदुपकारार्थम् "अकृणोतन कृतवन्तः स्थ ॥ 'उपसर्गाच्छन्दसि धात्वर्थे ' इति वतिः ।। तथा "निवत्सु प्रवणदेशेषु अस्मै एव "अपः उदकानि अकृणोतन अकुरुत । किं स्वभोगार्थं नेत्याह । "स्वपस्यया शोभनकर्मेच्छया । शोभनं कर्म एभिः कृतमिति यथा यजमानाः स्तुवन्ति तदिच्छयेत्यर्थः। किंच यूयम् "अगोह्यस्य अग्राह्यस्यादित्यस्य "गृहे मण्डले "यत् यावत्कालम् "असस्तन सुप्तवन्तः स्थ रात्रौ निर्व्यापारास्तिष्ठथ ॥ ' षस स्वप्ने '। अस्माल्लङि पूर्ववत्तस्य तनबादेशः । अदादित्वात् शपो लुक् । "तत्

तावन्तं कालम् “अद्य अहनि “इदम् इदानीं “नानु “गच्छथ अनुसृत्य न गच्छथ ।। यावन्तं कालं रात्रौ सूर्ये निगूढा वर्तध्वे तावन्तमेव कालम् अहन्यपि नानुगच्छथेत्यर्थः । यद्वा । अगोपनीयस्य तस्य गृहे अन्तरिक्षे यत् यावन्तं कालम् असस्तन वृष्टिम् अदत्त्वा स्वापमकुरुत तत्तावन्तं कालम् अद्येदानीं वर्षसमये इदं सस्याभिवर्धनवृष्टिप्रवाहरूपं कर्म नानु गच्छथ अनुसृत्य न प्राप्नुथ । यावन्तं कालं विवर्षथ तावन्तमेव कालं प्रवर्षथेत्यर्थः ॥

स॒म्मील्य॒ यद्भुव॑ना प॒र्यस॑र्पत॒ क्व॑ स्वित्ता॒त्या पि॒तरा॑ व आसतुः ।

अश॑पत॒ यः क॒रस्नं॑ व आद॒दे यः प्राब्र॑वी॒त्प्रो तस्मा॑ अब्रवीतन ॥१२

स॒म्ऽमील्यं । यत् । भुवंना । प॒रि॒ऽअसंर्पत । क्वं । स्वि॒त् । ता॒त्या । पि॒तरां । व॒ः । आ॒स॒तु॒ः ।

अशंपत । यः । क॒रस्नंम् । व॒ः । आ॒ऽद॒दे । यः । प्र । अब्रंवीत् । प्रो इतिं । तस्मैं । अ॒ब्र॒वी॒त॒न॒ ॥१२

सम्ऽमील्य । यत् । भुवना । परिऽअसर्पत । क्व । स्वित् । तात्या । पितरा । वः । आसतुः ।

अशपत । यः । करस्नम् । वः । आऽददे । यः । प्र । अब्रवीत् । प्रो इति । तस्मै । अब्रवीतन ॥१२

हे ऋभवः रश्मयः यूयं “यत् यदा “भुवना भूतजातानि “संमील्य संमीलनं कृत्वा जलधरपटलैराच्छाद्य “पर्यसर्पत परितः सर्पणं कुरुथ वर्षथेत्यर्थः । “तात्या तातौ तायमाने वृष्ट्युदके । यद्वा । तात्या तासु वर्षासु ॥ छान्दसस्त्यप्रत्ययो दकारस्यात्वं च ॥ अथवा

पितृविशेषणम् । तात्या तत्कालीनौ “पितरा जगतः पालकौ सूर्यचन्द्रमसौ “क्व “स्वित् "आसतुः कुत्र खलु तिष्ठतः ॥ अस्तेर्लिटि व्यत्ययेन भूभावाभावः । यद्वा । असतेर्गत्यर्थस्य लिटि एतद्रूपम् ॥ अहोरात्रविभागेन प्रवर्षयथेत्यर्थः । किंच ईदृशान् “वः युष्मान् “यः कोऽपि वृष्टिप्रतिबन्धकारी राक्षसादिः “करस्नम् । बाहुनामैतत् , ‘करस्नौ बाहू ' (नि. २. ४. ७ ) इत्युक्तत्वात् । अत्र तु अकारान्तम् । युष्मदीयं हस्तम् “आददे गृह्णाति प्रतिरोधं करोति तम् “अशपत नाशयथ । “यः च “प्राब्रवीत् प्रकर्षेण वाचा निरुन्द्धे “तस्मै “प्रो प्रैव “अब्रवीतन प्रकर्षेण भर्त्सनादिशब्दं कुरुथ । यद्वा । यो नूनं स्तौति तं प्रकर्षेण स्तुतेत्यर्थः ॥

सु॒षु॒प्वांसं॑ ऋभव॒स्तद॑पृच्छ॒तागो॑ह्य॒ क इ॒दं नो॑ अबूबुधत् ।

श्वानं ब॒स्तो बोधयि॒तारं॑मब्रवीत्संवत्स॒र इ॒दम॒द्या व्यं॑ख्यत ॥ १३

सु॒सु॒प्वांसः॑ । ऋ॒भ॒व॒ः । तत् । अ॒पृ॒च्छ॒त॒ । अगो॑ह्य । कः । इ॒दम् । न॒ः । अ॒बू॒बु॒ध॒त् ।

श्वान॑म् । ब॒स्तः । बो॒ध॒यि॒तार॑म् । अ॒ब्र॒वी॒त् । सं॒व॒त्स॒रे । इ॒दम् । अ॒द्य । वि । अ॒ख्य॒त॒ ॥१३

सुसुप्वांसः । ऋभवः । तत् । अपृच्छत । अगोह्य । कः । इदम् । नः । अबूबुधत् ।

श्वानम् । बस्तः । बोधयितारम् । अब्रवीत् । संवत्सरे । इदम् । अद्य । वि । अख्यत ॥१३

हे “ऋभवः रश्म्यात्मका: यूयं "सुषुप्वांसः आदित्यमण्डले स्वपन्तो वर्षणाय ॥ स्वपेर्लिटः क्वसुः ॥ तमादित्यं “तत् वाक्यम् “अपृच्छत प्रश्नं कुरुथ । किं तदिति चेत् उच्यते ।

हे “अगोह्य केनचिदगोपनीयादित्य स्वामिन् “नः अस्मदीयम् “इदं कर्म वर्षणरूपं “कः "अबूबुधत् बोधयति प्रेरयति साहाय्यं करोति । बुधेर्ण्यन्तात् लुङि चङि रूपम् ॥ “बस्तः सर्वस्य वासयिता आदित्यः । वसेरौणादिकस्तप्रत्ययः । बवयोरभेदात् बत्वम् ॥ "बोधयितारं प्रेरयितारं “श्वानम् "अब्रवीत् अन्तरिक्षे श्वसन्तं वायुं प्रावादीत् । असौ युष्मान् प्रेरयतीति । अथ वायुसहायेन वर्षन्तो यूयं “संवत्सरे पूर्णे “अद्य इदानीम् “इदं जगत् “व्यख्यत विविधं प्रकाशितवन्तः । पूर्वं सूर्याचन्द्रमसौ यथा न दृश्येते तथा वर्षित्वा इदानीं वर्षकालेऽतीते विश्वं जगत् व्यक्तं कुरुथेत्यर्थः ॥ ख्यातेर्लुङि ‘अस्यतिवक्तिख्याति' इति अङ् ॥

दि॒वा यां॑न्ति म॒रुतो॒ भूम्या॒ग्निर॒यं वातो॑ अ॒न्तरि॑क्षेण याति ।

अ॒द्भिर्या॑ति॒ वरु॑णः समु॒द्रैर्यु॒ष्माँ इ॒च्छन्त॑ः शवसो नपातः ॥
१४

दि॒वा । या॒न्ति॒ । म॒रुत॑ः । भूम्या॑ । अ॒ग्निः । अ॒यम् । वात॑ः
। अ॒न्तरि॑क्षेण । या॒ति॒ ।

अ॒त्ऽभिः । या॒ति॒ । वरु॑णः । स॒मु॒द्रैः । यु॒ष्मान् । इ॒च्छन्त॑ः ।
श॒व॒स॒ः । न॒पा॒त॒ः ॥१४

दिवा । यान्ति । मरुतः । भूम्या । अग्निः । अयम् । वातः
। अन्तरिक्षेण । याति ।

अत्ऽभिः । याति । वरुणः । समुद्रैः । युष्मान् । इच्छन्तः ।
शवसः । नपातः ॥१४

हे “शवसः वृष्टिकार्यस्य बलस्य "नपातः नपातयितारः
ऋभवः “युष्मान् “इच्छन्तः वृष्ट्यनुकूलचिकीर्षया
युष्मानेवेच्छन्तः सर्वे देवा आयान्ति । कस्मादिति तदुच्यते

। “मरुतः वृष्ट्यनुकूलाः देवाः "दिवा द्युलोकात् “यान्ति आगच्छन्ति ।। ‘सावेकाचः०' इति तृतीयाविभक्तेरुदात्तत्वम् ।। “भूम्या भूमेः सकाशात् “अग्निः याति आगच्छति । “अयं “वातः सर्वदा संचारी वायुः “अन्तरिक्षेण “याति अन्तरिक्षादायाति । तथा “वरुणः आवरको जलाभिमानी देवः समुद्रैः समुन्दनस्वभावैः “अद्भिः ताभ्य आयाति । यद्वा पूर्वं वृष्टिसाहाय्याय आगता एते देवाः कृतकार्याः सन्तः पुनर्युष्मान् कामयमानाः स्वस्वदेशं प्रति यान्तीत्यर्थः ॥ ॥ ६ ॥

# ऋग्वेदः सूक्तं १.१६२

← सूक्तं १.१६१

**ऋग्वेदः - मण्डल १**

सूक्तं १.१६२

दीर्घतमा औचथ्यः।

सूक्तं १.१६३ →

दे. अश्वः । त्रिष्टुप्, ३, ६ जगती।

---



*कुमारगुप्तस्य अश्वमेधः*

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् ।

यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥१॥

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति ।

सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ॥२॥

एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।

अभिप्रियं यत्पुरोळाशमर्वता त्वष्टेदेनं सौश्रवसाय जिन्वति ॥३॥

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति ।

अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥४॥

होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शंस्ता सुविप्रः ।

तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वम् ॥५॥

यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति ।

ये चार्वते पचनं सम्भरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥६॥

उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।

अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥७॥

यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।

यद्वा घास्य प्रभृतमास्ये तृणं सर्वा ता ते अपि देवेष्वस्तु ॥८॥

यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति ।

यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥९॥

यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति ।

सुकृता तच्छमितारः कृण्वन्तूत मेधं शृतपाकं पचन्तु ॥१०॥

यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति ।

मा तद्भूम्यामा श्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥११॥

ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति ।

ये चार्वतो मांसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥१२॥

यन्नीक्षणं माँस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।

ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ॥१३॥

निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः ।

यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥१४॥

मा त्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः ।

इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् ॥१५॥

यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै ।

संदानमर्वन्तं पड्बीशं प्रिया देवेष्वा यामयन्ति ॥१६॥

यत्ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद ।

स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ॥१७॥

चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति ।

अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या वि शस्त ॥१८॥

एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथ ऋतुः ।

या ते गात्राणामृतुथा कृणोमि ताता पिण्डानां प्र जुहोम्यग्नौ ॥१९॥

मा त्वा तपत्प्रिय आत्मापियन्तं मा स्वधितिस्तन्व आ तिष्ठिपत्ते ।

मा ते गृध्नुरविशस्तातिहाय छिद्रा गात्राण्यसिना मिथू कः ॥२०॥

न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः ।

हरी ते युञ्जा पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य ॥२१॥

सुगव्यं नो वाजी स्वश्व्यं पुंसः पुत्राँ उत विश्वापुषं रयिम् ।

अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनतां हविष्मान् ॥२२॥

**सायणभाष्यम्**

‘मा नो मित्रः' इति द्वाविंशत्यृचं षष्ठं सूक्तं दैर्घतमसम् । तृतीयाषष्ठ्यौ जगत्यौ । शिष्टास्त्रिटुभः । अश्वस्य स्तूयमानत्वात् ' या तेनोच्यते सा देवता' इति न्यायेन अश्वो देवता । अत्रानुक्रमणिका- मानो द्व्यधिकाश्वस्तुतिस्तु तृतीयाषष्ठ्यो जगत्यौ ' इति । अश्वमेधस्य मध्यमेऽहनि अध्रिगुप्रैषे “ अधिगो शमीध्वम्' इति शिष्ट्वा ‘षड्विंशतिरस्य वङ्क्रयः' इत्यस्मात्पुरस्तात् वा एतत्सूक्तमावपेत् ।' त्रीणि सुत्यानि भवन्ति' इति खण्डे सूत्रितम्-‘ अध्रिगो शमीध्वमिति शिष्ट्वा षड्विंशतिरस्य वङ्क्रय इति वा मा नो मित्र इत्यावपेत ' ( आश्व. श्रौ. १०. ८) इति ।। मा नों मि॒त्रो वरुं॑णो अर्य॒मायुरिंद्रं॑ ऋभु॒क्षा म॒रुत॒ः परिं ख्यन् ।

यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि ॥
१

मा । न॒ः । मि॒त्रः । वरु॑णः । अ॒र्य॒मा । आ॒युः । इन्द्रः॑ ।
ऋ॒भु॒क्षाः । म॒रुतः॑ । परि॑ । ख्य॒न् ।

यत् । वा॒जिनः॑ । दे॒वऽजा॑तस्य । सप्तेः॑ । प्र॒ऽव॒क्ष्यामः॑ ।
वि॒दथे॑ । वी॒र्या॑णि ॥१

मा । नः । मित्रः । वरुणः । अर्यमा । आयुः । इन्द्रः ।
ऋभुक्षाः । मरुतः । परि । ख्यन् ।

यत् । वाजिनः । देवऽजातस्य । सप्तेः । प्रऽवक्ष्यामः ।
विदथे । वीर्याणि ॥१

“नः अस्मान् अश्वं स्तोतुं प्रवृत्तान् मित्रादयो देवाः “मा परि
“ख्यन् परिख्यानं मा कुर्वन्तु । परिख्यानं नाम निन्दा ।

महानुभावं देवजातम् अश्वं तुच्छा नराः स्तुवन्तीति मा कुर्वन्तु ।। ख्यातेर्माङि लुङि 'अस्यतिवक्ति' इत्यादिना च्लेः अङ् ॥ अहरभिमानी देवः "मित्रः रात्र्यभिमानी "वरुणः । "अर्यमा तयोः अन्तरालाभिमानी आदित्यः । "आयुः सततगन्ता वायुः ॥ वकारलोपो वा ॥ "इन्द्रः प्रसिद्धः। "ऋभुक्षाः देवानां निवासभूतः प्रजापतिः। यद्वा । एतन्महन्नाम' इन्द्रविशेषणं 'ऋभुक्षाः उक्षा ' (नि. ३. ३. १० ) इति तन्नामसु पाठात् । निन्दायाः प्रसक्तिं दर्शयति । "यत् यस्मात् "वाजिनः वेजनवतो बह्वन्नवतो वा "देवजातस्य बहुदेवतास्वरूपेणोत्पन्नस्य । उषआदीनाम् अस्य शिरआद्यवयववत्वादिति भावः । 'उषा वा अश्वस्य मेध्यस्थ शिरः' (बृ. उ. १. १. १) इत्यादिश्रुतेः । यद्वा । देवेभ्यो जातस्य गन्धर्वकुले उत्पन्नत्वात् । "सप्तेः सर्पणशीलस्य । अश्वनामैतत् । एवंविधस्याश्वस्य महानुभावस्य "वीर्याणि वीरकमणि सामर्थ्यानि "विदथे

वेदनसाधने यज्ञे "प्रवक्ष्यामः प्रकर्षेण ब्रूमः । अतो मा परिख्यन् प्रत्युत अनुगृह्णन्त्वित्यर्थः ॥

यन्निर्णिजा रेक्णंसा प्रावृंतस्य रातिं गृंभीतां मुंखतो नयंति ।

सुप्रांङजो मेम्यंद्विश्वरूंप इंद्रापूष्णोः प्रियमप्येंति पाथः ॥२

यत् । निःऽनिजां । रेक्णंसा । प्रावृंतस्य । रातिम् । गृभीताम् । मुखतः । नयंन्ति ।

सुऽप्रांङ् । अजः । मेम्यंत् । विश्वऽरूंपः । इन्द्रापूष्णोः । प्रियम् । अपिं । एति । पाथः ॥२

यत् । निःऽनिजा । रेक्णसा । प्रावृतस्य । रातिम् । गृभीताम् । मुखतः । नयन्ति ।

सुऽप्राङ् । अजः । मेम्यत् । विश्वऽरूपः । इन्द्रापूष्णोः । प्रियम् । अपि । एति । पाथः ॥२

“यत् यस्मात् “निर्णिजा । निर्णिगिति रूपनाम । “रेक्णसा। रेक्ण इति धननाम ।' निर्णिक वव्रिः' (नि. ३. ७. १) इति, ‘रेक्णः रिक्थम् ' (नि. २. १०, २) इति च तन्नामसूक्तत्वात् ॥ उभयत्र मत्वर्थो लुप्यते ॥ रूपवता हिरण्यवताभरणेन “प्रावृतस्य सर्वतो वेष्टितस्य अश्वस्य "मुखतः पुरस्तात् “गृभीतां गृहीतां “रातिं दातव्यां दातव्यत्वेन गृहीताम् अजां नयन्ति ऋत्विजः। स तादृशः “अजः "सुप्राङ् सुष्ठु प्रशस्यागमनः “मेम्यत् हन्यमानः ॥' मीञ् हिंसायाम्' । अस्मात् यङ्लुगन्तात् कर्मणि व्यत्ययेन शतृ ॥ यद्वा । तस्य शब्दानुकरणं मेमेशब्दं कुर्वन् । “विश्वरूपः बहुवर्णोपेतः कृष्णग्रीवः कृष्णललामो वा नैकवर्णः इत्यर्थः । एवंरूपः अयम् “इन्द्रापूष्णोः । इन्द्रः प्रसिद्धः। पूषा पोषको देवोऽग्निः । तयोः "प्रियम् ।'

आग्नेयः कृष्णग्रीवः' (तै, सं. ५. ५, २२ ) इत्युक्तत्वादग्नेः प्रियत्वम् । सर्वेऽपीन्द्रस्येतीन्द्रप्रियत्वम् । एवंरूपं “पाथः अन्नम् “अप्येति प्राप्नोतु ॥

ए॒ष छागः॑ पु॒रो अश्वे॑न वा॒जिना॑ पू॒ष्णो भा॒गो नी॑यते वि॒श्वदे॑व्यः ।

अ॒भि॒प्रियं॒ यत्पु॑रो॒ळाश॒मर्व॑ता॒ त्वष्टेदे॑नं सौश्रव॒साय॑ जिन्वति ॥३

ए॒षः । छागः॑ । पु॒रः । अश्वे॑न । वा॒जिना॑ । पू॒ष्णः । भ॒गः । नी॒य॒ते॒ । वि॒श्वऽदे॑व्यः ।

अ॒भि॒ऽप्रियं॑म् । यत् । पु॒रो॒ळाशं॑म् । अर्व॑ता । त्वष्टा॑ । इत् । ए॒न॒म् । सौ॒श्र॒व॒साय॑ । जि॒न्व॒ति॒ ॥३

एषः । छागः । पुरः । अश्वेन । वाजिना । पूष्णः । भगः । नीयते । विश्वऽदेव्यः ।

अभिऽप्रियम् । यत् । पुरोळाशम् । अर्वता । त्वष्टा । इत् । एनम् । सौश्रवसाय । जिन्वति ॥३

“एषः “छागः शृङ्गरहितोऽजः “अश्वेन “वाजिना शीघ्रव्यापकेनाश्वेन सह “पूष्णः पोषकस्याग्नेः “भागः भजनीयः “विश्वदेव्यः सर्वदेवार्हः । अग्नेः सर्वदेवात्मकत्वात् तदर्हत्वेन सर्वदेवप्रियत्वम् । एवंविधः अजः “पुरः पुरस्तात् “नीयते प्राप्यते । “यत् यस्मात् एवं क्रियते तस्मात् "प्रियं प्रीणयितारं पुरोडाशं पुरस्ताद्दातव्यम् “एनम् अजं “त्वष्टा सर्वस्योत्पादको देवः। ‘त्वष्टा रूपाणि विकरोति' ( तै. सं. १. ५. ९.२) इति श्रुतेः । तूर्णव्यापकोऽग्निर्वा। ‘उभे त्वष्टुर्बिभ्यतुः ' (ऋ. सं. १. ९५.५) इत्युक्तत्वात् ' अहोरात्रे इति वारणी इति वा ' (

निरु. ८. १५) इति यास्केन अरणी बिभ्यतुरित्युक्तत्वात् अरणिसंबन्धः अग्नेरेवेति गम्यते । “अर्वता अरणवता अश्वेन सह “सौश्रवसाय देवानां शोभनान्ननिमित्तम् "अभि "जिन्वति प्रीतिहेतुकं करोति ॥

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयंति ।

अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥४

यत् । हविष्यम् । ऋतुऽशः । देवऽयानम् । त्रिः । मानुषाः । परि । अश्वम् । नयन्ति ।

अत्र । पूष्णः । प्रथमः । भागः । एति । यज्ञम् । देवेभ्यः । प्रतिऽवेदयन् । अजः ॥४

यत् । हविष्यम् । ऋतुऽशः । देवऽयानम् । त्रिः । मानुषाः । परि । अश्वम् । नयन्ति ।

अत्र । पूष्णः । प्रथमः । भागः । एति । यज्ञम् । देवेभ्यः । प्रतिऽवेदयन् । अजः ॥४

“हविष्यं हविर्योग्यं “देवयानं देवानां प्रापणीयम् “अश्वं “यत् यदा “मानुषाः ऋत्विजः “ऋतुशः ऋतौ ऋतौ काले काले “त्रिः “परि "नयन्ति पर्यग्निकुर्वन्तीत्यर्थः । “अत्र अस्मिन् समये ॥ ‘ऋचि तुनुघ' इति दीर्घः ॥ "पूष्णः पोषकस्याग्नेः “भागः "अजः "प्रथमः “एति पुरोगामी सन् गच्छति । किं कुर्वन् । “यज्ञं "देवेभ्यः “प्रतिवेदयन् प्रख्यापयन् ॥

होतां॑ध्व॒र्युरावं॑या अ॑ग्निमि॒ं॑धो ग्रा॑ंवग्रा॒भ उ॒त शंस्ता॒ सुवि॑ंप्रः ।

तेनं य॒ज्ञेन॒ स्वंरंकृतेन॒ स्विंष्टेन व॒क्षणा॒ आ पृंणध्वं ॥५

होतां । अ॒ध्व॒र्युः । आऽवंयाः । अ॒ग्नि॒म्ऽइ॒न्धः ।
ग्रा॒व॒ऽग्रा॒भः । उ॒त । शंस्तां । सुऽविंप्रः ।

तेनं । य॒ज्ञेनं । सुऽअंरङ्कृतेन । सुऽइंष्टेन । व॒क्षणाः॑ । आ
। पृ॒ण॒ध्व॒म् ॥५

होता । अध्वर्युः । आऽवयाः । अग्निम्ऽइन्धः ।
ग्रावऽग्राभः । उत । शंस्ता । सुऽविप्रः ।

तेन । यज्ञेन । सुऽअरङ्कृतेन । सुऽइष्टेन । वक्षणाः । आ
। पृणध्वम् ॥५

“होता देवानामाह्वाता एतन्नामकः ऋत्विक् “अध्वर्युः
अध्वरयुः अध्वरस्य नेता सोऽपि आवयाः आभिमुख्येन
हविषां गमयिता । अध्वर्योर्विशेषणमेतत् ॥ आङ्पूर्वात्
वेतेः असुन पूर्वपदप्रकृतिस्वरत्वं च ॥ यद्वा ।

आभिमुख्येन अवयष्टा प्रतिप्रस्थाता उच्यते ॥ • अवे यजः
' (पा. सू. ३. २. ७२) इति ण्विन् ।' अवाप्योरुपसर्गयोः'
इति अल्लोपः ॥ अग्निमिन्धः अग्नीत् ॥ ‘भ्राष्टाग्न्योरिन्धे'
( पा. सू. ६. ३. ७०. ६) इति मुम् ॥ "ग्रावग्राभः । ग्राव्णः
स्तुत्या गृह्णातीति ग्रावस्तुत् ।। कर्मण्यण् ॥ "उत अपि च
"शंस्ता प्रशास्ता। “सुविप्रः इति मेधाविनाम ।
शोभनमेधोपेतो ब्रह्मोच्यते। ‘ब्रह्मा त्वो वदति जातविद्याम्'
(ऋ. सं. १०. ७१. ११) इत्यत्र ‘ब्रह्मैको जातेजाते विद्यां
वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति' ( निरु. १. ८)
इत्युक्तत्वात् ब्रह्मा एव सुविप्रशब्देनाभिधेयः । स
चानुक्तर्त्विगुपलक्षकः । एते सर्वे "तेन प्रसिद्धेन
“स्वरंकृतेन सुष्ठ्वरणीयं कृतेन स्वलंकृतेन वा
उच्चारसौष्ठवादिना सुष्ठु संपादितेन “स्विष्टेन सुष्ठु इष्टेन
“यज्ञेन “वक्षणाः अभितो घृतकुल्यादीन्' प्रवहणस्वभावाः
प्रसिद्धा नदीर्वा “आ "पृणध्वं सर्वतः पूरयत यज्ञं
सम्यग्निर्वर्त्यै फलं साधयतेत्यर्थः ॥ ॥ ७ ॥

यू॒प॒व्र॒स्का उ॒त ये यू॑पवा॒हाश्च॒षालं॒ ये अ॑श्वयू॒पाय॒ तक्ष॑ति ।

ये चार्व॑ते॒ पच॑नं स॒म्भर॑न्त्यु॒तो तेषा॑म॒भिगू॑र्तिर्न इन्वतु ॥६

यू॒प॒ऽव्र॒स्काः । उ॒त । ये । यू॒प॒ऽवा॒हाः । च॒षाल॑म् । ये ।
अ॒श्व॒ऽयू॒पाय॑ । तक्ष॑ति ।

ये । च॒ । अर्व॑ते । पच॑नम् । स॒म्ऽभर॑न्ति । उ॒तो इति॑ ।
तेषा॑म् । अ॒भिऽगू॑र्तिः । नः॒ । इ॒न्व॒तु॒ ॥६

यूपऽव्रस्काः । उत । ये । यूपऽवाहाः । चषालम् । ये ।
अश्वऽयूपाय । तक्षति ।

ये । च । अर्वते । पचनम् । सम्ऽभरन्ति । उतो इति ।
तेषाम् । अभिऽगूर्तिः । नः । इन्वतु ॥६

"यूपव्रस्काः यूपार्हवृक्षस्य व्रश्चनकर्ताश्छेत्तारः । "उत "ये च "यूपवाहाः छिन्नस्य वोढारः । “ये च “चषालम् । यूपस्योपरिस्थाप्यं यूपाग्रभागं चषालमाहुः । तत् ये “अश्वयूपाय अश्वबन्धनयूपाय “तक्षति ॥ तक्षतीति वचनव्यत्ययः ॥ साधु संपादयन्ति । “ये “च "अर्वते अरणवते अश्वाय "पचनं पाकसाधनं काष्ठभाण्डादिकं “संभरन्ति । "उतो अपि च “नः अस्मत्संबन्धिनां “तेषाम् ऋत्विजाम् “अभिगूर्तिः संकल्पः सर्वथा करणीयमिति बुद्धिः "इन्वतु व्याप्नोतु ॥ इन्वतिर्व्याप्तिवचनः ‘इन्वति ननक्ष' इति तद्वचनेषु पाठात् ॥ यद्वा । तेषामभिगूर्तिः नः अस्मानिन्वतु । यागं साधुपारं प्रापय्य फलेन योजयत्वित्यर्थः ।

उप॒ प्रागा॑त्सु॒मन्मे॑ऽधायि॒ मन्म॑ दे॒वाना॒माशा॒ उप॑ वी॒तपृ॑ष्ठः ।

अन्वेंनं विप्रा ऋषंयो मदंति देवानां पुष्टे चंकृमा सुबंधुं ॥७

उपं । प्र । अगात् । सुऽमत् । मे । अधायि । मन्मं । देवानांम् । आशाः । उपं । वीतऽपृंष्ठः ।

अनुं । एनम् । विप्राः । ऋषंयः । मदन्ति । देवानांम् । पुष्टे । चकृम । सुऽबन्धुंम् ॥७

उप । प्र । अगात् । सुऽमत् । मे । अधायि । मन्म । देवानाम् । आशाः । उप । वीतऽपृष्ठः ।

अनु । एनम् । विप्राः । ऋषयः । मदन्ति । देवानाम् । पुष्टे । चकृम । सुऽबन्धुम् ॥७

“मन्म मननीयं फलं "सुमत् "उप “प्रागात् उपप्रैतु । ‘सुमत्स्वयमित्यर्थः' ( निरु. ६.२२ ) इति यास्कः । यद्वा । स्वयमेव मादयितृतमे मयि “अधायि धीयते । फलभूतः अश्वः आगतः स च मया धृतः इत्यर्थः । किमर्थम् ।

“वीतपृष्ठः साधुपोषणेन प्राप्तपश्चाद्भागः कान्तपृष्ठो वा ।
अत्यन्तं दृप्तः इत्यर्थः। तादृशोऽयं “देवानामाशाः पूरयितुम्
“उप गच्छतु । यागार्थमागतम् “एनं “सुबन्धुं
शोभनबन्धनमश्वं “देवानाम् आशास्यमानानां “पुष्टे
पोषणाय “चकृम कुर्मः । तं च “विप्राः मेधाविन ऋत्विजः
"ऋषयः अतीन्द्रियद्रष्टारोऽन्ये वा विप्रा ऋषयश्च “अनु
“मदन्ति अनुमोदन्ताम् । सम्यक् कृतमिति परितुष्यन्तु ॥

यद्वा॒जिनो॒ दाम॑ सं॒दान॒मर्व॑तो॒ या शी॑र्ष॒ण्या॑ रश॒ना रज्जु॑रस्य
।

यद्वा॑ घास्य॒ प्रभृ॑तमा॒स्ये॒३॒ तृणं॒ सर्वा॒ ता ते॒ अपि॑ दे॒वेष्व॑स्तु
॥८

यत् । वा॒जिनः॑ । दाम॑ । स॒म्ऽदान॑म् । अर्व॑तः । या ।
शी॒र्ष॒ण्या॑ । र॒श॒ना । रज्जुः॑ । अ॒स्य॒ ।

यत् । वा॒ । घ॒ । अ॒स्य॒ । प्रऽभृं॑तम् । आ॒स्ये॑ । तृणं॑म् । सर्वा॑ । ता । ते॒ । अपिं॑ । दे॒वेषुं॑ । अ॒स्तु॒ ॥८

यत् । वाजिनः । दाम । सम्ऽदानम् । अर्वतः । या । शीर्षण्या । रशना । रज्जुः । अस्य ।

यत् । वा । घ । अस्य । प्रऽभृतम् । आस्ये । तृणम् । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥८

"वाजिनः गमनवतोऽश्वस्य “यत् "दाम ग्रीवाबद्धा रज्जुः । यच्च “संदानं सम्यगवच्छेदकं बन्धकं पादबन्धनं दाम अस्ति । "या च "अस्य “शीर्षण्या शिरसि बद्धा खलीनरज्जुः अस्ति ॥ शिरःशब्दात् ‘भवे छन्दसि' इति यत् । “ ये च तद्धिते' (पा. सू. ६. १. ६१ ) इति शीर्षन्भावः। तित्स्वरितः ॥ "यद्वा “घ “अस्य अश्वस्य "आस्ये मुखे “प्रभृतं प्रहृतं प्रक्षिप्तं “तृणम् अस्ति । घशब्दो हार्थे स च प्रसिद्ध्यर्थः । “सर्वा सर्वाणि “ता तानि

सर्वाणि “अपि हे अश्व "ते तव संबन्धीनि “देवेष्वस्तु सन्तु देवेषु मध्ये भवन्तु । देवत्वं प्राप्नुवन्तु वा ॥ वचनव्यत्ययः । अत्रोपयुक्तानां सर्वेषां देवत्वं किल अश्वस्य तत्प्राप्तिः न आशासनीया ।।

यदश्वं॑स्य क्र॒विषो॒ मक्षि॒काश॒ यद्वा॒ स्वरौ॒ स्वधि॑तौ रि॒प्तमस्ति॑ ।

यद्धस्त॑योः शमि॒तुर्यन्न॒खेषु॒ सर्वा॒ ता ते॒ अपि॑ दे॒वेष्वं॑स्तु ॥९

यत् । अश्वं॑स्य । क्र॒विषः॑ । मक्षि॑का । आशं॑ । यत् । वा॒ । स्वरौं॑ । स्वऽधि॑तौ । रि॒प्तम् । अस्ति॑ ।

यत् । हस्त॑योः । श॒मि॒तुः । यत् । न॒खेषुं॑ । सर्वा॑ । ता । ते॒ । अपि॑ । दे॒वेषुं॑ । अ॒स्तु ॥९

यत् । अश्वस्य । क्रविषः । मक्षिका । आश । यत् । वा । स्वरौ । स्वऽधितौ । रिप्तम् । अस्ति ।

यत् । हस्तयोः । शमितुः । यत् । नखेषु । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥९

“अश्वस्य तदवयवभूतस्य “क्रविषः आममांसस्य “यत् यदङ्गं “मक्षिका “आश अभक्षयत् ॥ ‘अश भोजने '। यद्वा । कर्मणि षष्ठी ॥ अश्वस्य यन्मांसं भक्षयति। "वा अथवा "स्वरौ पश्वञ्जनकाले “यत् "रिप्तं लिप्तम् “अस्ति ।' स्वरुणा पशुमनक्ति' इति श्रुतेः । अथवा “स्वधितौ छेदनकाले व अवदानकाले यत् रिप्तमस्ति “शमितुः “हस्तयोः लिप्तमस्ति । विशसनकाले “यत् च "नखेषु लिप्तम् “ता “सर्वा तानि सर्वाणि हे अश्व “ते तव संबन्धीनि “देवेष्वस्तु देवेषु संतोषार्थाय भवन्तु ॥

यदूव॑ध्यमु॒दर॑स्याप॒वाति॒ य आ॒मस्य॑ क्र॒विषो॑ ग॒न्धो अस्ति॑ ।

सु॒कृ॒ता तच्छ॑मि॒तार॑ः कृण्व॑न्तू॒त मेध॑ं शृत॒पाक॑ं पच॑न्तु ॥१०

यत् । ऊव॑ध्यम् । उ॒दर॑स्य । अ॒प॒ऽवाति॑ । यः । आ॒मस्य॑ । क्र॒विष॑ः । ग॒न्धः । अस्ति॑ ।

सु॒ऽकृ॒ता । तत् । श॒मि॒तार॑ः । कृ॒ण्व॒न्तु॒ । उ॒त । मेध॑म् । शृ॒त॒ऽपाक॑म् । प॒च॒न्तु॒ ॥१०

यत् । ऊवध्यम् । उदरस्य । अपऽवाति । यः । आमस्य । क्रविषः । गन्धः । अस्ति ।

सुऽकृता । तत् । शमितारः । कृण्वन्तु । उत । मेधम् । शृतऽपाकम् । पचन्तु ॥१०

"उदरस्य संबन्धि “यत् "ऊवध्यम् ईषज्जीर्णं तृणं पुरीषम् "अपवाति अपगच्छति । “यः च “आमस्य अपक्वस्य “क्रविषः मांसस्य “गन्धः अस्ति लेशोऽस्ति । पाकस्य समये यत्किंचिदूवध्यमपक्वस्य च लेशोऽस्ति आमगन्धोऽस्ति । “तत् सर्वं “शमितारः विशसनकर्तारः “सुकृता “कृण्वन्तु सुकृतम्' उक्तदोषरहितं कुर्वन्तु । "उत अपि च "मेधं मेध्यं यज्ञार्हं पश्ववयवं “शृतपाकं देवयोग्यपाकोपेतं यथा भवति तथा “पचन्तु पितृमनुष्यादियोग्यम् अतिपक्वम् ईषत्पक्वं च मा कुर्वन्त्वित्यर्थः ॥ ॥ ८ ॥

यत्ते॒ गात्रा॑द॒ग्निना॑ प॒च्यमा॑नाद॒भि शूल॒ं निह॑तस्याव॒धाव॑ति ।

मा तद्भूम्या॒मा श्रि॑ष॒न्मा तृणे॑षु दे॒वेभ्य॒स्तदु॒शद्भ्यो॑ रा॒तम॑स्तु ॥११

यत् । ते॒ । गात्रा॑त् । अ॒ग्निना॑ । प॒च्यमा॑नात् । अ॒भि ।
शूल॑म् । निऽह॑तस्य । अ॒व॒ऽधाव॑ति ।

मा । तत् । भूम्या॑म् । आ । श्रि॒ष॒त् । मा । तृणे॑षु । दे॒वेभ्यः॑
। तत् । उ॒शत्ऽभ्यः॑ । रा॒तम् । अ॒स्तु॒ ॥११

यत् । ते । गात्रात् । अग्निना । पच्यमानात् । अभि ।
शूलम् । निऽहतस्य । अवऽधावति ।

मा । तत् । भूम्याम् । आ । श्रिषत् । मा । तृणेषु । देवेभ्यः
। तत् । उशत्ऽभ्यः । रातम् । अस्तु ॥११

हे अश्व "ते तव "अग्निना “पच्यमानात् गात्रात् “यत्
ऊष्मरूपं रसो वा यत्किंचित् “अवधावति । तथा
“निहतस्य निःशेषेण हतस्य तव यदङ्गं रसरूपं "शूलम्
अभिलक्ष्य अवधावति निर्गच्छति। “तत् तदङ्गं "भूम्यां “मा
“आ “श्रिषत् आश्लिष्टं मा भूत् ॥ श्रिषेः पुषादित्वात्

अङ्॥ पाकसमये तथा “मा “तृणेषु विशसनसमये दर्भेषु मा अपगच्छतु । तर्हि तत्पतितं कुत्र गच्छत्विति चेत् उच्यते। “तत् तादृशम् "उशद्भ्यः कृत्स्नं हविः कामयमानेभ्यः "देवेभ्यः “रातं दत्तम् “अस्तु ।।

ये वा॒जिनं॑ परि॒पश्यं॑ति प॒क्वं य ईं॑मा॒हुः सु॑र॒भिर्निर्हृ॒रेति॑ ।

ये चार्वं॑तो मांसभि॒क्षामु॒पासं॑त उ॒तो तेषां॑म॒भिगू॑र्तिर्न इन्वतु ॥१२

ये । वा॒जिन॑म् । प॒रि॒ऽपश्यं॑न्ति । प॒क्वम् । ये । ई॒म् । आ॒हुः । सु॒र॒भिः । निः । ह॒र॒ । इति॑ ।

ये । च॒ । अर्वं॑तः । मा॒ंस॒ऽभि॒क्षाम् । उ॒प॒ऽआसं॑ते । उ॒तो इति॑ । तेषां॑म् । अ॒भिऽगू॑र्तिः । न॒ः । इ॒न्व॒तु॒ ॥१२

ये । वाजिनम् । परिऽपश्यन्ति । पक्वम् । ये । ईम् । आहुः । सुरभिः । निः । हर । इति ।

ये । च । अर्वतः । मांसऽभिक्षाम् । उपऽआसते । उतो इति । तेषाम् । अभिऽगूर्तिः । नः । इन्वतु ॥१२

“ये "पक्वं “वाजिनम् अश्वम् अश्वावयवं “परिपश्यन्ति परितः पावनबुद्ध्या ईक्षन्ते । “य “ईं ये चैनं “सुरभिः शोभनगन्धः अतः “निर्हर किंचिदप्यस्मभ्यं देहि "इति "आहुः । यद्वा । निःशेषेण देवेभ्यो हरेत्याहुः । यतः सुरभिः अतो देवयोग्यमिति । किंच "ये “चार्वतो "मांसभिक्षामुपासते ये नराः अस्य अर्वतः अश्वस्य हुतशिष्टमांसयाचनामुपासते कांक्षन्ते । “उतो अपि च “तेषाम् उक्तविधानाम् "अभिगूर्तिः अभितः उद्यमनं "नः अस्मान् “इन्वतु व्याप्नोतु । यथा अस्माभिः अश्वे उपालब्धे एवं स्पृहयन्ति तथा यज्ञो निर्वाहयतु इत्यर्थः । यद्वा ।

मन्त्रः देवपरो व्याख्येयः । ये देवाः वाजिनं पक्वं परिपश्यन्ति कदा होष्यतीति विलम्बं दृष्ट्वा ये च सुरभिरीमेनं निर्हर निःशेषेणास्मभ्यं देहीत्याहुः ये चार्वतोऽश्वस्य मांसभिक्षामुपासते तेषामभिगूर्तिर्न इन्वतु तेषाम् उद्यमः सफलो भवत्वित्यर्थः ॥

यन्नीक्षं॑णं माँ॒स्पचं॑न्या उ॒खाया॒ या पात्रा॑णि यू॒ष्ण आ॒सेचं॑नानि ।

ऊ॒ष्म॒ण्या॑पि॒धाना॑ च॒रू॒णाम॒ङ्काः सू॒नाः परि॑ भूष॒न्त्यश्व॑॑ ॥१३

यत् । नि॒ऽईक्षं॑णम् । मा॒ंस्पचं॑न्याः । उ॒खाया॑ः । या । पात्रा॑णि । यू॒ष्णः । आ॒ऽसेचं॑नानि ।

ऊ॒ष्म॒ण्या॑ । अ॒पि॒ऽधाना॑ । च॒रू॒णाम् । अ॒ङ्काः । सू॒नाः । परि॑ । भू॒ष॒न्ति॒ । अश्व॑म् ॥१३

यत् । निऽईक्षणम् । मांस्पचन्याः । उखायाः । या ।
पात्राणि । यूष्णः । आऽसेचनानि ।

ऊष्मण्या । अपिऽधाना । चरूणाम् । अङ्काः । सूनाः ।
परि । भूषन्ति । अश्वम् ॥१३

“मांस्पचन्याः मांसपचन्याः ॥ पचतेः अधिकरणे ल्युट् ।
मांसस्य पचि युड्घञोः ' (का. ६. १. १४४ ) इत्यन्तलोपः
॥ "उखायाः स्थाल्याः “नीक्षणं पाकपरीक्षासाधनं काष्ठं
तथा “या यानि “पात्राणि "यूष्णः रसस्य क्वथितस्य
“आसेचनानि असेचनसाधनानि तथा “ऊष्मण्या
ऊष्मनिवारणार्हाणि पात्राणि तथा “चरूणां पात्राणां
मांसपूर्णानाम् “अपिधाना अपिधानानि तत्साधनानि तथा
“अङ्काः हृदयाद्यवयवाङ्कनसाधनाः वेतसशाखाः
“सूनाः अवदानसाधनाः स्वधित्यादयः एतम् “अश्वम्
अश्वावयवं “परि “भूषन्ति परितो भूषयन्ति

स्वस्वव्यापारेण साधयन्तीत्यर्थः ॥ ‘भूष अलंकारे'। भौवादिकः ।।

नि॒क्रम॑णं नि॒षद॑नं वि॒वर्त॑नं॒ यच्च॒ पड्बी॑श॒मर्व॑तः ।

यच्च॑ प॒पौ यच्च॑ घा॒सिं ज॒घास॒ सर्वा॒ ता ते॒ अपि॑ दे॒वेष्व॑स्तु ॥१४

नि॒ऽक्रम॑णम् । नि॒ऽसद॑नम् । वि॒ऽवर्त॑नम् । यत् । च॒ । पड्बी॑शम् । अर्व॑तः ।

यत् । च॒ । प॒पौ । यत् । च॒ । घा॒सिम् । ज॒घास॑ । सर्वा॑ । ता । ते॒ । अपि॑ । दे॒वेषु॑ । अ॒स्तु॒ ॥१४

निऽक्रमणम् । निऽसदनम् । विऽवर्तनम् । यत् । च । पड्बीशम् । अर्वतः ।

यत् । च । पपौ । यत् । च । घासिम् । जघास । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥१४

यत् “निक्रमणम् । नितरां क्रमते यत्र तन्निक्रमणं स्थानम् । नितरां सीदत्यत्रेति “निषदनम् । “विवर्तनं विविधवर्तनम् इतस्ततो लुण्ठनं यत्र तत् ॥ सर्वत्राधिकरणे ल्युट् ॥ “यच्च “अर्वतः “अश्वस्य “पडबीशं पदबन्धनम् । यद्वा । बन्धनं पट् तद्वान् प्रदेशः। अत्र सर्वत्र देवार्थस्याश्वस्य रोमादीनामपि निरर्थकत्वाभावाय तत्स्थानमपि स्वीक्रियते । यद्वा । क्रियापरावगन्तव्या । आलम्भसमये निग्रहेण या निक्रमणादयश्चेष्टाः सन्ति ता इत्यर्थः । “यच्च “पपौ यदुदकमपिबत् । “यच्च “घासिम् अदनीयं तृणादिकं “जघास अभक्षयत् । हे अश्व "ते तव “ता तानि सर्वाणि निक्रमणादीनि "देवेष्वस्तु सन्तु देवेषु व्याप्नोतु तान्यपि निरर्थकानि मा भूवन्नित्यर्थः ॥

मा त्वा॒ग्निर्ध्व॑नयीद्धू॒मग॑न्धि॒र्मोखा भ्राज॑न्त्य॒भि वि॑क्त॒ जघ्रि॑ः
।

इ॒ष्टं वी॒तम॒भिगू॑र्तं॒ वष॑ट्कृत॒ं तं दे॒वास॒ः प्रति॑ गृभ्ण॒न्त्यश्व॑ं ॥
१५

मा । त्वा॒ । अ॒ग्निः । ध्व॒न॒यी॒त् । धू॒मऽग॑न्धिः । मा । उ॒खा
। भ्राज॑न्ती । अ॒भि । वि॒क्त॒ । जघ्रि॑ः ।

इ॒ष्टम् । वी॒तम् । अ॒भिऽगू॑र्तम् । वष॑ट्ऽकृतम् । तम् ।
दे॒वास॑ः । प्रति॑ । गृ॒भ्ण॒न्ति॒ । अश्व॑म् ॥१५

मा । त्वा । अग्निः । ध्वनयीत् । धूमऽगन्धिः । मा । उखा
। भ्राजन्ती । अभि । विक्त । जघ्रिः ।

इष्टम् । वीतम् । अभिऽगूर्तम् । वषट्ऽकृतम् । तम् ।
देवासः । प्रति । गृभ्णन्ति । अश्वम् ॥१५

हे अश्व “त्वा त्वां “धूमगन्धिः धूमेन व्याप्तः “अग्निः “मा “ध्वनयीत् मा ध्वनयत् । धूमं दृष्ट्वा शब्दं मा कुर्वित्यर्थः । अश्वस्य शब्दने प्रायश्चित्तविधानात् । यद्वा । हे पच्यमानाश्ववयव त्वा त्वां धूमगन्धिरग्निर्मा ध्वनयीत् । ध्वना सति भाण्डभङ्गः स्यात् । ‘नोनयति । (पा. सू. ३. १. ५१ ) इत्यादिना चङ्प्रतिषेधः । ‘ह्म्यन्तक्षण' इति वृद्ध्यभावः ॥ किंच “भ्राजन्ती अत्यन्ताग्निसंयोगेन दीप्ता “उखा स्थाली “मा “अभि "विक्त अभितो मा चीचलत्तापातिशयेन मा नीनशदित्यर्थः ॥ ‘ओविजी भयचलनयोः' । छान्दसो विकरणस्य लुक् । लुङि वा ‘झलो झलि' इति सलोपः ॥ स्थाली विशेष्यते । जघ्रिः जिघ्रन्ती तापेन ।' घ्रा गन्धोपादाने'। ‘आदृगमहन ' इति किन्प्रत्ययः ॥ तं तादृशम् “अश्वम् “इष्टं होतुमिषितं "वीतं होमाय आनीतम् "अभिगूर्तम् आभिमुख्येन प्रदानाय उद्यतम् । यद्वा । इष्टं प्रयाजैराप्रीतं वीतं पर्यग्निकृतमभिगूर्तं ये यजामहे ' इत्यागूर्युक्तम् ।

“वषट्कृतं वषट्कारेण देवसंस्कृतम्" एवंभूतं तं “देवासः देवाः “प्रति “गृभ्णान्ति प्रतिगृह्णन्ति ॥ ॥ ९ ॥

यदश्वा॑य॒ वास॑ उपस्तृ॒णंत्य॑धीवा॒सं या हिर॑ण्यान्यस्मै ।

सं॒दान॒मर्व॑न्तं॒ पड्बी॑शं प्रि॒या दे॒वेष्वा यां॑मयंति ॥१६

यत् । अश्वा॑य । वासः॑ । उ॒प॒ऽस्तृ॒णन्ति॑ । अ॒धी॒वा॒सम् । या । हिर॑ण्यानि । अ॒स्मै॒ ।

स॒म्ऽदान॑म् । अर्व॑न्तम् । पड्बी॑शम् । प्रि॒या । दे॒वेषु॑ । आ । य॒म॒य॒न्ति॒ ॥१६

यत् । अश्वाय । वासः । उपऽस्तृणन्ति । अधीवासम् । या । हिरण्यानि । अस्मै ।

सम्ऽदानम् । अर्वन्तम् । पड्बीशम् । प्रिया । देवेषु । आ । यमयन्ति ॥१६

"अश्वाय संज्ञप्यमानाय "अधीवासम् उपर्याच्छादनयोग्यं यत् "वासः "उपस्तृणन्ति सर्वतः आच्छादयन्ति ।। ' स्तृञ् आच्छादने' । क्रैयादिकः ॥ तथा “अस्मै अश्वाय “या यानि “हिरण्यानि सौवर्णराजतकांस्यानि कल्पयन्ति । तथा “अर्वन्तम् ॥ षष्ठ्यर्थे द्वितीया ॥ अर्वतोऽश्वस्य “संदानं शिरोबन्धनं पड्बीशं पादेषु प्रविष्टं पदबन्धनम् । एतानि "प्रिया देवानां प्रियतराणि चात्वाले बद्ध्वा स्थापितानि “देवेषु “आ "यामयन्ति प्रापयन्ति ।।

यत्तें सा॒दे महं॑सा॒ शूकृं॑तस्य॒ पार्ष्ण्यां॑ वा॒ कशं॑या वा तु॒तोदं॑ ।

स्रु॒चेव॒ ता ह॒विषों॑ अध्व॒रेषु॒ सर्वा॒ ता ते॒ ब्रह्मं॑णा सूदयामि ॥ १७

यत् । ते॒ । सा॒दे । महं॑सा । शूकृं॑तस्य । पार्ष्ण्या॑ । वा॒ ।
कशं॑या । वा॒ । तु॒तोदं॑ ।

स्रु॒चाऽइं॑व । ता । ह॒विषः॑ । अ॒ध्व॒रेषुं॑ । सर्वा॑ । ता । ते॒ ।
ब्रह्मं॑णा । सू॒द॒या॒मि॒ ॥१७

यत् । ते । सादे । महसा । शूकृतस्य । पार्ष्ण्या । वा ।
कशया । वा । तुतोद ।

स्रुचाऽइव । ता । हविषः । अध्वरेषु । सर्वा । ता । ते ।
ब्रह्मणा । सूदयामि ॥१७

"महसा बलेन “शूकृतस्य । शब्दानुकरणमेतत् । शूत्कारं कुर्वतः "ते तव “सादे सदने अगमने निमित्तभूते सति ।। सदेर्भावे घञ्। 'कर्षात्वतः' इत्यन्तोदात्तत्वम् ॥ अर्थतो गमनं कुर्वन् शूत्कारं कुर्वतः ते त्वां पार्ष्ण्या “वा “कशया “वा “तुतोद व्यथयति “यत् यस्मात् तस्मात् “ते तव “ता

तानि "सर्वा सर्वाणि “अध्वरेषु यागेषु "ब्रह्मणा मन्त्रेण सूदयामि क्षरामि आहुतित्वेन कल्पयामीत्यर्थः । तत्र दृष्टान्तः । अध्वरेषु यागेषु “हविषः हविः आज्यादिकं "स्रुचेव स्रुचा यथा सूदयन्ति तद्वत् ॥

चतुंस्त्रिंशद्वाजिनों देवबंधोर्वंक्रीरश्वंस्य स्वधिंतिः समेंति ।

अच्छिंद्रा गात्रां वयुनां कृणोत परुंष्परुरनुघुष्या वि शंस्त ॥ १८

चतुःऽत्रिंशत् । वाजिनः । देवऽबंन्धोः । वङ्क्रीः । अश्वंस्य । स्वऽधिंतिः । सम् । एति ।

अच्छिंद्रा । गात्रां । वयुनां । कृणोत । परुःऽपरुः । अनुऽघुष्यं । वि । शस्त ॥१८

चतुःऽत्रिंशत् । वाजिनः । देवऽबन्धोः । वङ्क्रीः । अश्वस्य । स्वऽधितिः । सम् । एति ।

अच्छिद्रा । गात्रा । वयुना । कृणोत । परुःऽपरुः । अनुऽघुष्य । वि । शस्त ॥१८

“वाजिनः “अश्वस्य "देवबन्धोः देवानां प्रियस्य चतुस्त्रिंशत् "वङ्क्रीः एतत्संख्यानि उभयपार्श्वास्थीनि “स्वधितिः छेदनसाधनोऽसिः "समेति सम्यग्गच्छति छेदनाय। इतरेषामजादीनां षड्विंशतिरेव, ‘ षड्विंशतिरस्य वङ्क्रयः' (ऐ. ब्रा. २. ६ ) इति प्रैषात् । हे विशसनस्य कर्तारः अस्याश्वस्य गात्राणि शरीरावयवान् “अच्छिद्रा अच्छिद्राणि यथा भवन्ति तथा “वयुना वयुनानि प्रज्ञानानि । वयुनमिति प्रज्ञानाम, ‘वयुनम् अभिख्या ' ( नि. ३. ९. १०) इति तन्नामसूक्तत्वात् । “कृणोत कुरुत ॥ तप्तनप्तनथनाश्च' इति तबादेशः ।।

हृदयजिह्वावक्षःप्रभृतीनि प्रज्ञाथ मध्ये छिन्नानि मा कुरुतेत्यर्थः । तदर्थं “परुःपरुः प्रतिपर्व प्रतिहृदयाद्यवयवम् “अनुघुष्य इदमवद्यमिति संशब्द्यैव “वि “शस्त विशसनं कुरुत ॥ ‘शस् हिंसायाम् ' । छान्दसः शपो लुक् ॥ ' गात्रंगात्रमस्यानूनं कृणुतात्' (ऐ. ब्रा. २.६ ) इति प्रैषात् ॥

एक॒स्त्वष्टु॒रश्वं॑स्या विश॒स्ता द्वा य॒ं॑तारां॑ भवत॒स्तथं॑ ऋ॒तुः ।

या ते॒ गात्रां॑णामृतु॒था कृ॒णोमि॒ ताता॒ पिंडां॑ना॒ं प्र जुं॑होम्य॒ग्नौ ॥१९

एक॑ः । त्वष्टु॑ः । अश्वं॑स्य । वि॒ऽश॒स्ता । द्वा । य॒न्तारां॑ । भ॒व॒त॒ः । तथां॑ । ऋ॒तुः ।

या । ते॒ । गात्रा॑णाम् । ऋ॒तु॒ऽथा । कृ॒णोमि॑ । ताऽता॑ ।
पिण्डा॑नाम् । प्र । जु॒हो॒मि॒ । अ॒ग्नौ ॥१९

एकः । त्वष्टुः । अश्वस्य । विऽशस्ता । द्वा । यन्तारा ।
भवतः । तथा । ऋतुः ।

या । ते । गात्राणाम् । ऋतुऽथा । कृणोमि । ताऽता ।
पिण्डानाम् । प्र । जुहोमि । अग्नौ ॥१९

“त्वष्टुः अस्य दीप्तस्य “अश्वस्य “विशस्ता विशसनस्य
कर्ता “एकः । एक एव । स कः। “ऋतुः एतदुपलक्षितः
कालात्मा तस्यैव सर्वेषामपि पर्यवसितृत्वात् । यद्वा ।
ऋतुः निःशङ्कविशसनाय गन्ता शमिता । “तथा “द्वा
“यन्तारा नियमयितारौ अहोरात्रे देवौ द्यावापृथिव्यौ वा
ऋत्विक्षु “भवतः ॥ तथ ऋतुः इत्यत्र ‘ऋत्यकः' इति
प्रकृतिभावो ह्रस्वत्वं च ॥ हे अश्व “ते तव “गात्राणां मध्ये
“या यानि हृदयाद्यवयवानि “ऋतुथा काले “कृणोमि

छिनद्मि संपादयामि “पिण्डानां मध्ये “ताता तानि तानि प्रज्ञानानुरोधेन “अग्नौ "प्र “जुहोमि प्रकर्षेण हुतं करोमि ॥

मा त्वां तपत्प्रि॒य आ॒त्माऽपि॒यन्तं॒ मा स्वधिंतिस्त॒न्व१॒ आ तिं॑ष्ठिपत्ते ।

मा तें गृ॒ध्नुरंविश॒स्ताति॒हायं च्छि॒द्रा गात्रां॑ण्य॒सिना॒ मिथूं॒ कः ॥२०

मा । त्वा॒ । त॒प॒त् । प्रि॒यः । आ॒त्मा । अ॒पि॒ऽयन्तंम् । मा । स्वऽधिंतिः । त॒न्वः॑ । आ । ति॒स्थि॒प॒त् । ते॒ ।

मा । ते॒ । गृ॒ध्नुः । अ॒वि॒ऽश॒स्ता । अ॒ति॒ऽहायं । छि॒द्रा । गात्रां॑णि । अ॒सिनां । मिथुं । क॒रिरितिं कः ॥२०

मा । त्वा । तपत् । प्रियः । आत्मा । अपिऽयन्तम् । मा । स्वऽधितिः । तन्वः । आ । तिस्थिपत् । ते ।

मा । ते । गृध्नुः । अविऽशस्ता । अतिऽहाय । छिद्रा । गात्राणि । असिना । मिथु । करिति कः ॥२०

हे अश्व “त्वा त्वाम् “अपियन्तं देवान् प्रति गच्छन्तं “प्रियः "आत्मा भोगायतनत्वात् तव प्रियतरो देहः “मा “तपत् तप्तं मा कार्षीत् वियोगजनिता व्यथा मा भूदित्यर्थः । “स्वधितिः शस्त्रं “ते तव “तन्वः तनूः अङ्गानि “मा “आ “तिष्ठिपत् त्वयि चिरमास्थितानि मा कार्षीत् ॥ स्थापयतेर्लुङि ‘तिष्ठतेरित् '(पा. सू. ७. ४. ५) इति इत्वम् ॥ तथा “ते तव “गात्राणि "गृध्नुः केवलमांसग्रहणेप्सुः "अविशस्ता विशसने अकुशलः शमिता "अतिहाय न्यूनातिरेकभावेन तत्तदङ्गमतिक्रम्य मध्ये “मिथु मिथ्या व्यर्थम् “असिना “छिद्रा छिद्राणि तिर्यक्छिन्नानि “मा “कः मा कार्षीत् ॥ करोतेर्लुङि। ‘मन्त्रे घस' इति च्लेर्लुक् । गुणः । “हल्यङ्याब्भ्यः' इति तलोपः ॥

न वा उं ए॒तन्म्रिंयसे॒ न रिंष्यसि दे॒वाँ इदेंषि प॒थिभिः॑ सु॒गेभिः॑ ।

हरीं ते॒ युंजा॒ पृषंती अभूता॒मुपांस्थाद्वा॒जी धु॒रि रासंभस्य ॥ २१

न । वै । उ॒ं इतिं । ए॒तत् । म्रि॒य॒से॒ । न । रि॒ष्य॒सि॒ । दे॒वान् । इत् । ए॒षि॒ । प॒थिऽभिः॑ । सु॒ऽगेभिः॑ ।

हरी॒ इतिं । ते॒ । युञ्जां । पृषंती॒ इतिं । अ॒भू॒ता॒म् । उपं । अ॒स्था॒त् । वा॒जी । धु॒रि । रासंभस्य ॥२१

न । वै । ऊं इति । एतत् । म्रियसे । न । रिष्यसि । देवान् । इत् । एषि । पथिऽभिः । सुऽगेभिः ।

हरी इति । ते । युञ्जा । पृषती इति । अभूताम् । उप । अस्थात् । वाजी । धुरि । रासभस्य ॥२१

“न “वा “उ नैव खलु “एतन्म्रियसे । वैशब्दः एवकारार्थः । उ इत्यवधारणे । नैव इदानीम् इतराश्ववत् मृतो भवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात्। अत एव “न “रिष्यसि न हिंस्यसे । व्यर्थहिंसायाः अभावात् । ननु प्रत्यक्ष्यतो मृतिः अवयवनाशश्च दृश्यते कथमेवमुच्यते इति । उच्यते। “सुगेभिः “पथिभिः शोभनगमनसाधनैर्मार्गैः देवयानलक्षणैः "देवान “इत् “एषि देवानेव प्राप्नोषि। अतो युक्तैषोक्तिः। कैः साधनैरिति तत्राह। “ते त्वां वोढुं “हरी एतन्नामानौ इन्द्रस्याश्वौ ते तव “युञ्जा रथे युक्तौ "अभूतां भविष्यतः । आशंसारूपत्वात् भूतार्थनिर्देशः । ‘हरी इन्द्रस्य' (नि. १. १५. १) इति निरुक्तम् । तथा “पृषती पृषत्यौ मरुतां वाहनभूतौ युञ्जा' अभूतां युक्तौ भविष्यतः । ‘पृषत्यो मरुताम् ' (नि. १. १५. ६) इति च निरुक्तम् ॥ युजेः ‘ऋत्विक् ' इत्यादिना क्विन् । 'युजेरसमासे' (पा. सू. ७. १. ७१ ) इति नुम् । ‘सुपां सुलुक्' इति आकारः॥ तथा “रासभस्य अश्विवाहनस्य एतन्नामकस्याश्वस्य “धुरि स्थाने

वर्तमानः कश्चित् “वाजी “उपास्थात् उपस्थास्यति वहतीत्यर्थः। यद्वा । रासभस्य भानोः धुरि वर्त्मनि युक्तो वाजी अश्वः उपस्थास्यति देवस्वं गच्छतस्तव गमनाय इन्द्रादयः स्वस्ववाहनानि प्रेषयन्तीत्यर्थः । यद्वा । तत्तद्देवभावमापन्नं त्वां तानि तानि वाहनानि वहन्ति ।।

उपाकरणकाले अवघ्राणावर्तने यद्यश्वो न कुर्यात् तदैषा नैमित्तिकी यजमानवाचनार्था भवति । तथा च सूत्रितं- सुगव्यं नो वाजी स्वश्व्यमिति यजमानं वाचयेत्' (आश्व. श्रौ. १०. ८) इति ।

सु॒गव्यं नो वा॒जी स्वश्व्यं पुं॒सः पु॒त्राँ उ॒त विंश्वा॒पुषं र॒यिं ।

अ॒ना॒गा॒स्त्वं नो॒ अदिंतिः कृणोतु क्ष॒त्रं नो॒ अश्वों वनतां ह॒विष्मांन् ॥२२

सु॒ऽगव्यं॑म् । न॒ः । वा॒जी । सु॒ऽअश्व्यं॑म् । पुं॒सः । पु॒त्रान् ।
उ॒त । वि॒श्व॒ऽपुषं॑म् । र॒यिम् ।

अ॒ना॒गा॒ःऽत्वम् । न॒ः । अदि॑तिः । कृ॒णो॒तु॒ । क्ष॒त्रम् । न॒ः ।
अश्वः॑ । व॒न॒ता॒म् । ह॒विष्मा॑न् ॥२२

सुऽगव्यम् । नः । वाजी । सुऽअश्व्यम् । पुंसः । पुत्रान् ।
उत । विश्वऽपुषम् । रयिम् ।

अनागाःऽत्वम् । नः । अदितिः । कृणोतु । क्षत्रम् । नः ।
अश्वः । वनताम् । हविष्मान् ॥२२

"वाजी अश्वः आलभ्यमानः “नः अस्माकं "सुगव्यं शोभनेन गोसमूहेन युक्तं "विश्वापुषं “रयिं विश्वस्य पोषकं धनं “कृणोतु करोतु ।। ‘खलगोरथात्' (पा. सू. ४. २. ५०) इति समूहार्थे यत् । छान्दसमुत्तरपदाद्युदात्तत्वम् । यद्वा । सामूहिकस्याणः प्रसङ्गे ‘सर्वत्र गोरजादिप्रत्ययप्रसङ्गे'

(का. ४. ३. १६०) इति यत् । तदन्तस्य ' आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ।। तथा स्वश्व्यं शोभनाश्वसमूहयुक्तम् । तथा “पुंसः “पुत्रान् । पुत्रशब्दः स्त्रीपुमपत्यसाधारणः । अतः पुमपत्यानीत्यर्थः । यद्वा। पुंसो वध्वादीन् पुत्रान् पुरुरक्षकान् आत्मजान्। स्त्र्यपत्यानि" पुमपत्यानि च इत्यर्थः । "उत अपि च विश्वापुषं रयिं विश्वपोषणसमर्थं धनम्। किंच “नः अस्मान् "अदितिः अदीनः अश्वः "अनागास्त्वं कृणोतु सर्वतो निष्पापत्वं करोतु । उक्तानां फलानां न्यूनातिरेकजनितपापक्षयाभावे असंभवात् अपापत्वं प्रार्थ्यते । किंच 'हविष्मान् हविर्भूतावयवोपेतः “अश्वः नः अस्माकं “क्षत्रं बलं क्षात्रं तेजः “वनतां संभजतां कुरुताम् ॥ ॥ १० ॥

**टिप्पणी**

१.१६२.११ यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति इति

शूलोपरि टिप्पणी

अश्वोपरि पौराणिकसंदर्भाः

अश्वोपरि टिप्पणी

अश्वोपरि शोधप्रबन्धः

| | | | | | |
|---|---|---|---|---|---|
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२१ | १.५१ | १.८१ | १.१११ | १.१४१ | १.१७१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२२ | १.५२ | १.८२ | १.११२ | १.१४२ | १.१७२ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२३ | १.५३ | १.८३ | १.११३ | १.१४३ | १.१७३ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२४ | १.५४ | १.८४ | १.११४ | १.१४४ | १.१७४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२५ | १.५५ | १.८५ | १.११५ | १.१४५ | १.१७५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२६ | १.५६ | १.८६ | १.११६ | १.१४६ | १.१७६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२७ | १.५७ | १.८७ | १.११७ | १.१४७ | १.१७७ |

# ऋग्वेदः सूक्तं १.१६३

← सूक्तं १.१६२

ऋग्वेदः - मण्डल १

सूक्तं १.१६३

दीर्घतमा औचथ्यः

सूक्तं १.१६४ →

## दे. अश्वः । त्रिष्टुप् ।

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।

श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥१॥

यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् ।

गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥२॥

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।

असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥३॥

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।

उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम् ॥४॥

इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना ।

अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥५॥

आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतंगम् ।

शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि ॥६॥

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।

यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः ॥७॥

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् ।

अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥८॥

हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् ।

देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥९॥

ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः ।

हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥१०॥

तव शरीरं पतयिष्ण्वर्वन्तव चित्तं वात इव ध्रजीमान् ।

तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति ॥११॥

उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः ।

अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः ॥१२॥

उप प्रागात्परमं यत्सधस्थमर्वाँ अच्छा पितरं मातरं च ।

अद्या देवाञ्जुष्टतमो हि गम्या अथा शास्ते दाशुषे वार्याणि ॥१३॥

## सायणभाष्यम्

‘यदक्रन्दः' इति त्रयोदशर्चं सप्तमं सूक्तं दैर्घतमसं त्रैष्टुभम् । अश्वस्य स्तूयमानत्वात्तद्देवत्यम् । ‘यदक्रन्दः सप्तोना' इत्यनुक्रमणिका । आश्वमेधिके मध्यमेऽहनि उपाकरणाय अवस्थितम् अश्वम् आद्याभिरेकादशभिः स्तौति । तथा च त्रीणि सुत्यानि' इति खण्डे सूत्रितं - तमवस्थितमुपाकरणाय यदक्रन्द इत्येकादशभिः स्तौत्यप्रणुवन्' (आश्व. श्रौ. १०. ८) इति ॥

यदक्रं॑न्दः प्रथ॒मं जाय॑मान उ॒द्यन्त्स॑मु॒द्रादु॒त वा॒ पुरी॑षात् ।

श्ये॒नस्य॑ प॒क्षा ह॑रि॒णस्य॑ बा॒हू उ॑प॒स्तुत्यं॒ महि॑ जा॒तं ते॑ अर्वन्
॥१

यत् । अक्र॑न्दः । प्र॒थ॒मम् । जाय॑मानः । उ॒त्ऽयन् ।
स॒मु॒द्रात् । उ॒त । वा॒ । पुरी॑षात् ।

श्ये॒नस्य॑ । प॒क्षा । ह॒रि॒णस्य॑ । बा॒हू इति॑ । उ॒प॒ऽस्तुत्य॑म् ।
महि॑ । जा॒तम् । ते॒ । अ॒र्व॒न् ॥१

यत् । अक्रन्दः । प्रथमम् । जायमानः । उत्ऽयन् ।
समुद्रात् । उत । वा । पुरीषात् ।

श्येनस्य । पक्षा । हरिणस्य । बाहू इति । उपऽस्तुत्यम् ।
महि । जातम् । ते । अर्वन् ॥१

हे "अर्वन् अरणकुशलाश्व "ते तव “जातं जन्म जननम् “उपस्तुत्यम् उपेत्य सर्वैः स्तोतव्यम् ॥ स्तौतेः ‘एतिस्तुशास्वृ°' इति क्यप् । ततः तुक् ।। कथं स्तुत्यत्वमिति उच्यते । “यत् यस्मात् “समुद्रात् । अन्तरिक्षनामैतत् । उदकसमुन्दनापादानात् यक्षगन्धर्वादिसंमोदनाधिकरणात् वा अन्तरिक्षात् "प्रथमं पूर्वं “जायमानः उत्पन्नः । यद्वा । समुद्रः आदित्यः समुन्दगात् वृष्ट्या । तस्माद्वा जायमानः । ‘सूरादश्वं वसवो निरतष्ट' (ऋ. सं. १. १६३. २) इति वक्ष्यमाणत्वात् । “उत “वा अथवा “पुरीषात् सर्वकामानां पूरकात् उदकात् प्रथमम् “उद्यन् जायमानः । स तादृशस्त्वं यत् यस्मात् "अक्रन्दः महाशब्दमकरोः यजमानमनुग्रहीतुम् । किंच ते "पक्षा पतनसाधनौ पक्षौ “श्येनस्य पक्षाविव । तौ यथा शीघ्रपतनसाधनौ तादृशावित्यर्थः । तव “बाहू "हरिणस्य बाहू इव । तौ यथा वेगवन्तौ तादृशावित्यर्थः । यस्मादेवं तस्मात्ते जन्म स्तुत्यमित्यर्थः ॥

य॒मेन॑ द॒त्तं त्रि॒त ए॑नमायुन॒गिन्द्र॑ एणं प्रथ॒मो अध्य॑तिष्ठत् ।

ग॒न्ध॒र्वो॑ अ॑स्य रश॒नाम॑गृभ्णा॒त्सूरा॒दश्वं॑ वसवो॒ निर॑तष्ट ॥२

य॒मेन॑ । द॒त्तम् । त्रि॒तः । ए॒न॒म् । अ॒यु॒न॒क् । इन्द्रः᳚ । ए॒न॒म् ।
प्र॒थ॒मः । अधि॑ । अ॒ति॒ष्ठ॒त् ।

ग॒न्ध॒र्वः । अ॒स्य॒ । र॒श॒नाम् । अ॒गृ॒भ्णा॒त् । सूरा॑त् । अश्व॑म् ।
व॒स॒वः॒ । निः । अ॒त॒ष्ट॒ ॥२

यमेन । दत्तम् । त्रितः । एनम् । अयुनक् । इन्द्रः । एनम् ।
प्रथमः । अधि । अतिष्ठत् ।

गन्धर्वः । अस्य । रशनाम् । अगृभ्णात् । सूरात् । अश्वम् ।
वसवः । निः । अतष्ट ॥२

“यमेन नियामकेनाग्निना "दत्तम् “एनम् अश्वं “त्रितः पृथिव्यादिषु त्रिषु स्थानेषु वर्तमानः स्तीर्णतमो वा वायुः "अयुनक् रथे योजितवान् । किंच “एनम् अश्वम् “इन्द्रः “प्रथमः प्रतमः प्रकृष्टतमः । प्रथम इति मुख्यनाम । अध्यतिष्ठत् अधिष्ठितवान् । “अस्य “गन्धर्वः सोमः। ‘सोमेन समया विपृक्तः ' ( ऋ. सं. १. १६३. ३) इति वक्ष्यमाणत्वात् । स च अस्य अश्वस्य “रशनां नियमनरज्जुम् “अगृभ्णात् अग्रहीत् । ईदृशोऽश्वः कुतः समुत्पन्नः इति चेत् उच्यते । हे “वसवः रश्मयः यूयं "सूरात् आदित्यात् “अश्वम् एवंमहानुभावं “निरतष्ट निःशेषेण साधु संपादितवन्तः । यद्वा ।। वसुशब्देनोक्ता एव यमादयः परामृश्यन्ते । हे वसवः स्वस्वव्यापारेण सर्वस्याच्छादयितारः यूयं सूरादादित्यात् अश्वम् एनं निरतष्ट अतक्षत । निरित्येष समित्येतस्य स्थाने । तक्षतिः करोतिकर्मा । स च क्रियासमान्यवचनः । अत्रौचित्यात्

धारणे वर्तते । सम्यग्धारितवन्त इत्यर्थः ॥ तक्षेर्लङि छान्दसः शपो लुक्। ‘स्कोः संयोगाद्योः०' इति कलोपः ॥

असि॑ य॒मो अस्या॑दि॒त्यो अ॑र्व॒न्नसि॑ त्रि॒तो गुह्ये॑न व्र॒तेन॑ ।

असि॒ सोमे॑न स॒मया॒ विपृ॑क्त आ॒हुस्ते॒ त्रीणि॑ दि॒वि बन्ध॑नानि ॥३

असि॑ । य॒मः । असि॑ । आ॒दि॒त्यः । अ॒र्व॒न् । असि॑ । त्रि॒तः । गुह्ये॑न । व्र॒तेन॑ ।

असि॑ । सोमे॑न । स॒मया॑ । विऽपृ॑क्तः । आ॒हुः । ते॒ । त्रीणि॑ । दि॒वि । बन्ध॑नानि ॥३

असि । यमः । असि । आदित्यः । अर्वन् । असि । त्रितः । गुह्येन । व्रतेन ।

असि । सोमेन । समया । विऽपृक्तः । आहुः । ते । त्रीणि । दिवि । बन्धनानि ॥३

हे "अर्वन् त्वं “यमः असि नियमिता अग्निरसि । तेन दत्तत्वात् तच्छब्दव्यपदेशः । तथा “आदित्यः “असि । ‘सूरान्निरतष्ट' इत्युक्तत्वात् । तथा “गुह्येन “व्रतेन गोपनीयेन दुर्निरूपेण वा कर्मणा । सर्वत्र व्याप्तिरूपेणेत्यर्थः । तेन “त्रितः त्रिषु स्थानेषु तायमानो वायुः “असि । “त्रित एनमायुनक्' इत्युक्तत्वात्तद्रूपत्वम् । अथवा गुह्येन व्रतेन गोपनीयेन कर्मणा योगादिसाधनरूपेण त्रितः एतन्नामकः ऋषिरसि। किंच हे अश्व त्वं “सोमेन “समया सह विपृक्तः। वि इत्येष समित्येतस्मिन्नर्थे । संपृक्तः “असि तेन गृहीतत्वात्। हे अश्व एवंरूप “ते तव “दिवि द्युलोके आदित्ये वा वर्तमानस्य “त्रीणि “बन्धनानि उत्पत्तिकारणानि “आहुः पुराविदः । वसवः आदित्यो द्युस्थानं चेति त्रीणि ।।

त्रीणिं त आहुर्दि॒वि बन्धंनानि॒ त्रीण्य॒प्सु त्रीण्य॒न्तः सं॒मु॒द्रे ।

उ॒तेवं मे॒ वरुंणश्छन्त्स्यर्व॒न्यत्रां त अ॒ाहुः पंर॒मं ज॒नित्रंम् ॥४

त्रीणिं । ते॒ । आ॒हुः॒ । दि॒वि । बन्धंनानि । त्रीणिं । अ॒प्ऽसु । त्रीणिं । अ॒न्तरितिं । स॒मु॒द्रे ।

उ॒तऽइंव । मे॒ । वरुंणः । छ॒न्त्सि॒ । अ॒र्व॒न् । यत्रं । ते॒ । आ॒हुः । प॒र॒मम् । ज॒नित्रंम् ॥४

त्रीणि । ते । आहुः । दिवि । बन्धनानि । त्रीणि । अप्ऽसु । त्रीणि । अन्तरिति । समुद्रे ।

उतऽइव । मे । वरुणः । छन्त्सि । अर्वन् । यत्र । ते । आहुः । परमम् । जनित्रम् ॥४

पूर्वं दिवि त्रीणि बन्धनानि इत्युक्तम् । इदानीं स्थानत्रयेष्वपि त्रीणि बन्धनानि इत्याह । हे अर्वन् "ते तव "दिवि “बन्धनानि "त्रीणि 'आहुः तानि पूर्वमुक्तानि । "अप्सु । अबुपजीवितत्वात् भूलोकोऽपि अपशब्देनाभिधीयते । पृथिव्यां “त्रीणि बन्धनान्याहुः । अन्नं स्थानं बीजमिति त्रीणि । तथा "समुद्रे "अन्तः समुद्रमध्ये । समुद्द्रवणादपादानात् समुद्रमन्तरिक्षम् । तस्मिन् “त्रीणि वृष्ट्युत्पत्तिनिमित्तानि मेघो विद्युत् स्तनितमिति । "उतेव । इवशब्दश्चार्थे । अपि च हे "अर्वन् अश्व “वरुणः पापस्य वारकः फलस्यावर्जयिता वा त्वं “मे मह्यं “छन्त्सि कथयसि । किं कथयसीति चेत् उच्यते । "ते तव "परमं “जनित्रं निरतिशयं जन्म ॥ जनेरौणादिकः इत्रप्रत्ययः ॥ “यत्र येषु त्रिषूक्तेषु स्थानेषु “आहुः कथयन्ति । यद्वा । यत्र यस्मिन् आदित्ये परमं जनित्रमाहुः । ‘सूरादश्वं वसवो निरतष्ट 'इत्युक्तत्वात् । तादृशं प्रशस्यं जन्म यज्ञसाधनभावेन कथयसीत्यर्थः ॥

इ॒मा तें वाजिन्नव॒मार्जंनानी॒मा श॒फानां सनि॒तुर्नि॒धानां ।

अत्रां ते भ॒द्रा रंश॒ना अंपश्यमृ॒तस्य॒ या अंभि॒रक्षंन्ति गो॒पाः ॥५

इ॒मा । ते॒ । वा॒जि॒न् । अ॒व॒ऽमार्जंनानि । इ॒मा । श॒फानांम् । स॒नि॒तुः । नि॒ऽधानां ।

अत्रं । ते॒ । भ॒द्राः । र॒श॒नाः । अ॒प॒श्य॒म् । ऋ॒तस्यं । याः । अ॒भि॒ऽरक्षंन्ति । गो॒पाः ॥५

इमा । ते । वाजिन् । अवऽमार्जनानि । इमा । शफानाम् । सनितुः । निऽधाना ।

अत्र । ते । भद्राः । रशनाः । अपश्यम् । ऋतस्य । याः । अभिऽरक्षन्ति । गोपाः ॥५

हे "वाजिन् अश्व "ते संबन्धीनि "अवमार्जनानि अङ्गसंशोधकानि स्थानानि "इमा इमान्युक्तानि द्युलोकादीनि किंच “सनितुः यागसंभक्तुः तव "इमा इमानि “शफानां निधानानि स्थानानि संचारप्रदेशा इत्यर्थः । किंच “अत्र एव “ते तव “भद्राः भन्दनीयाः कल्याणाः “रशनाः ग्रीवादिषु संयुक्ताः रज्जूः अत्र “अपश्यम् एषूक्तेषु स्थानेषु अपश्यम् । रशनाः विशेष्यन्ते । “याः “गोपाः गोपयित्र्यः रशनाः “ऋतस्य सत्यभूतस्य यज्ञसाधनस्य वाश्वस्य ॥ कर्मणि षष्ठी ॥ ऋतम् "अभिरक्षन्ति अभितः पालयन्ति ताः अपश्यं दृष्टवानस्मि । यद्वा । इमा ते तव अवमार्जनानि अङ्गप्रक्षालनसाधनान्युदकानि । इमानि सनितुः तव शफानां निधानानि देवयजनभूमयः संचारप्रदेशा वा । अत्रास्मिन् देवयजनस्थाने या रशनाः गोपाः तव पालयितारो राजपुरुषाः ऋत्विजो वा ऋतस्य संबन्धिन्योऽभिरक्षन्ति ता अपश्यम् ॥ ॥ ११ ॥

आ॒त्मानं॑ ते॒ मन॑सा॒राद॑जानाम॒वो दि॒वा प॒तय॑न्तं पत॒ंगम् ।

शिरो॑ अपश्यं प॒थिभिः॑ सु॒गेभि॑ररे॒णुभि॒र्जेह॑मानं पत॒त्रि ॥६

आ॒त्मान॑म् । ते॒ । मन॑सा । आ॒रात् । अ॒जा॒ना॒म् । अ॒वः । दि॒वा । प॒तय॑न्तम् । प॒त॒ङ्गम् ।

शिरः॑ । अ॒प॒श्य॒म् । प॒थिऽभिः॑ । सु॒ऽगेभिः॑ । अ॒रे॒णुऽभिः॑ । जेह॑मानम् । प॒त॒त्रि ॥६

आत्मानम् । ते । मनसा । आरात् । अजानाम् । अवः । दिवा । पतयन्तम् । पतङ्गम् ।

शिरः । अपश्यम् । पथिऽभिः । सुऽगेभिः । अरेणुऽभिः । जेहमानम् । पतत्रि ॥६

हे अश्व "ते तव "आत्मानं शरीरं “मनसा अस्मदीयेन प्रकृष्टगमनवता चेतसा “आरात् अतिदूरे स्थितम् "अजानां जानामि अतिव्याप्तं भावयामीत्यर्थः । कथम् । “अवः अवस्तात् सामर्थ्यात् भूमेः । भूमिमारभ्य "दिवा अन्तरिक्षेण मार्गेण “पतङ्गम् आदित्यं “पतयन्तं गच्छन्तं व्याप्नुवन्तम् । यद्वा । यतो दिवा अन्तरिक्षेण मार्गेण दिवि वा पतयन्तं गच्छन्तं पतङ्गमादित्यम् अवः आवः व्याप्नोषि अतो व्याप्तं जानामि । किंच "शिरः “अपश्यम् । तव शिरः एवं पश्यामि । कथम् । “सुगेभिः शोभनगमनसाधनैः “अरेणुभिः अपापैः “पथिभिः मार्गैः । आदित्यमण्डलादपि उपरिभूतैः सत्यलोकमार्गैरित्यर्थः । तत्र प्रतिबन्धाभावात् मार्गाणामुक्तरूपत्वम् । तथाविधैस्तैः "जेहमानम् उपर्युपरि व्याप्नुवत् “पतत्रि पतनवच्छिरोऽपश्यं भावयामि । एवं लोकत्रयव्याप्तं भावयामीत्यर्थः । यद्वा । ते आत्मानम् एवं भावयामि मनसा दिवा द्योतनात्मकेन अन्तरिक्षमार्गेण दिवः सकाशाद्वा अवः अवस्तादवाङ्मुखं पतयन्तं यागदेशं

“शकमयं शकृन्मयं शुष्कगोमयसंभूतं “धूमम् "आरात् नातिदूरे “अपश्यम् दृष्टवानस्मि । दिवा धूमस्य दूरे दृश्यमानत्वात् स एव दर्शनविषयतया उक्तः । “विषुवता व्याप्तिमता “एना अनेन “अवरेण निकृष्टेन धूमेन "परः परस्तात् तत्कारणभूतमग्निमपश्यम् । अहं यजमान इत्यर्थः । किंच “उक्षाणं फलस्य सेक्तारं "पृश्निं शुक्लवर्णम् । प्राश्नुते तेन फलमिति स्वयं प्राश्नुत इति वा पृश्निर्वल्लीरूपः सोमः । तं “वीराः विविधैरणकुशला ऋत्विजः "अपचन्त । अत्र धात्वर्थानादरेण तिङ्प्रत्ययः करोत्यर्थः । स च क्रियासामान्यवचनः अत्र औचित्यात अभिषवेण संपादितवन्त इत्यर्थः । "तानि तत्साधनानि “धर्माणि अनुष्ठानानि “प्रथमानि प्रतमानि प्रकृष्टानि फलपर्यवसायीनि “आसन् संपादितान्यभवन् । यद्वा । सोम उक्षाभवत् पूर्वं तं देवाः शकृतापचन् । यज्ञार्थे तद्भवो धूमो मेघं आसीत् तदुच्यते । तत्परत्वेन वा मन्त्रो व्याख्येयो विचक्षणैः ॥

त्रयं॑ः के॒शिनं॑ ऋतु॒था वि चं॑क्षते संवत्स॒रे वं॑पत॒ एकं॑ एषाम् ।

विश्व॒मेको॑ अ॒भि चं॑ष्टे॒ शची॑भि॒र्ध्राजि॒रेकं॑स्य ददृशे॒ न रू॒पम् ॥४४

त्रय॑ः । के॒शिन॑ः । ऋ॒तु॒ऽथा । वि । च॒क्ष॒ते॒ । सं॒व॒त्स॒रे ।
व॒प॒ते॒ । एक॑ः । ए॒षा॒म् ।

विश्व॑म् । एक॑ः । अ॒भि । च॒ष्टे॒ । शची॑भिः । ध्राजि॑ः ।
एक॑स्य । द॒दृ॒शे॒ । न । रू॒पम् ॥४४

त्रयः । केशिनः । ऋतुऽथा । वि । चक्षते । संवत्सरे ।
वपते । एकः । एषाम् ।

विश्वम् । एकः । अभि । चष्टे । शचीभिः । ध्राजिः ।
एकस्य । ददृशे । न । रूपम् ॥४४

केशस्थानीयप्रकृष्टरश्मियुक्ता: “त्रयः अग्न्यादित्यवायवः । ते च “ऋतुथा कालेकाले “वि “चक्षते विविधलक्षणां भूमिं पश्यन्ति । तेषां पृथक्पृथक्कार्यमाह । “एषां मध्ये “एकः अग्निः “संवत्सरे अतीते सति संवत्सरं "वपते दाहेन केशस्थानीयौषधिवनस्पत्यादिके छेदनं नापितकार्यं करोति । “एकः अन्यः आदित्यः “विश्वं सर्वं जगत् "शचीभिः स्वकीयैः प्रकाशवृष्ट्यादिकर्मभिः “अभि “चष्टे सर्वतः पश्यति। “एकस्य वायोः “ध्राजिः गतिः “ददृशे दृश्यते सर्वैः “न “रूपम् अप्रत्यक्षत्वात् । स्पर्शशब्दधृतिकम्पलिङ्गैः गम्यते' इति हि न्यायविदो वदन्ति । अयमपि मन्त्रो यास्केन एवं व्याख्यातः - त्रयः केशिन ऋतुथा विचक्षते काले कालेऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिविपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य ' (निरु. १२. २७) इति ॥

वाग्देवत्ये पशौ ‘चत्वारि वाक्' इति हविषोऽनुवाक्या।
‘चत्वारि वाक्परिमिता पदानि यज्ञेन वाचः पदवीयमायन'
( आश्व. श्री. ३. ८) इति सूत्रितत्वात् ॥

च॒त्वारि॒ वाक्परिं॑मिता प॒दानि॒ तानिं॑ विदुर्ब्रा॑ह्म॒णा ये
मं॑नी॒षिणं॑ः ।

गुहा॒ त्रीणि॒ निहिं॑ता॒ नेङ्गं॑यन्ति तु॒रीयं॑ वा॒चो मं॑नु॒ष्यां॑ वदन्ति
॥४५

च॒त्वारिं॑ । वाक् । परिं॑ऽमिता । प॒दानिं॑ । तानिं॑ । वि॒दु॒ः ।
ब्रा॒ह्म॒णाः । ये । म॒नी॒षिणः॑ ।

गुहां॑ । त्रीणिं॑ । निऽहिं॑ता । न । इ॒ङ्ग॒य॒न्ति॒ । तु॒रीयं॑म् । वा॒चः
। म॒नु॒ष्याः॑ । व॒द॒न्ति॒ ॥४५

चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः । ब्राह्मणाः । ये । मनीषिणः ।

गुहा । त्रीणि । निऽहिता । न । इङ्गयन्ति । तुरीयम् । वाचः । मनुष्याः । वदन्ति ॥४५

“वाक् वाचः कृत्स्नायाः "पदानि “चत्वारि “परिमिता परिमितानि । लोके या वागस्ति सा चतुर्विधा विभक्तेत्यर्थः। “तानि पदानि “ब्राह्मणाः वेदविदः “मनीषिणः मनस ईषिणो मेधाविनः “विदुः जानन्ति । तेषां मध्ये “त्रीणि “गुहा गुहायां “निहिता स्थापितानि “नेङ्गयन्ति न चेष्टन्ते न प्रकाशन्ते इत्यर्थः । “वाचः “तुरीयं पदं “मनुष्याः अज्ञास्तज्ज्ञाश्च “वदन्ति व्यक्तमुच्चारयन्ति व्यवहरन्ति । कानि तानि चत्वारि इत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति । सर्ववैदिकवाग्जालस्य संग्रहरूपाः भूरादयस्तिस्रो

व्याहृतयः प्रणव एक इति वेदत्रयसारत्वात् तासां व्याहृतीनामेव सारसंग्रहभूतत्वात् अकाराद्यात्मकस्य प्रणवस्येति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन वेदवादिनो वदन्ति । अपरे व्याकरणमतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन । क्रियाप्रधानमाख्यातम् । द्रव्यप्रधानं नाम । प्रागुपसृज्यते आख्यातपदस्येत्युपसर्गः प्रादिः । उच्चावचेष्वर्थेषु निपतनान्निपातः अपि तु च इत्यादिः । एतेष्वेव सर्वा वाक् परिमितेत्यखण्डायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात् । ‘ वाग्वै पराच्यव्याकृतावदत् तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते' (तै. सं. ६. ४. ७. ३) इति श्रुतेः । अन्ये तु याज्ञिकाः मन्त्राः कल्पो ब्राह्मणं चतुर्थी लौकिकीति । याज्ञिकैः समाख्यातोऽनुष्ठेयार्थप्रकाशको वेदभागो मन्त्राः । मन्त्रांविधानप्रतिपादको वेदभागः इति मन्त्राः कल्पोऽत ऊर्ध्वम् '(तै. आ. १. ३१. २) इत्यादिनोक्तः कल्पः ।

मन्त्रतात्पर्यार्थप्रकाशको वेदभागो ब्राह्मणम्। भोगविषया गामानय इत्यादिरूपा व्यावहारिकी । एष्वेव सर्वा वाक् नियमितेति याज्ञिकाः । ऋग्यजुःसामानि चतुर्थी व्यावहारिकीति नैरुक्ताः । सपणा वाग्वयां क्षुद्रसरीसृपस्य च चतुर्थी व्यावहारिकीत्यैतिहासिकाः । पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मवादिनः। अपरे मातृकाः प्रकारान्तरेण प्रतिपादयन्ति । परा पश्यन्ती मध्यमा वैखरीति चत्वारीति। एकैव नादात्मिका वाक् मूलाधारादुदिता सती परेत्युच्यते । नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्तीत्युच्यते योगिभिर्द्रष्टुं शक्यत्वात् । सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते । मध्ये हृदयाख्ये उदीयमानत्वात् मध्यमायाः । अथ यदा सैव वक्त्रे स्थित ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते । एवं चत्वारि वाचः पदानि परिमितानि । मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणाः स्वाख्यस्य

शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विदुः जानन्ति । तेषु मध्ये त्रीणि परादीनि गुहा निहितानि हृदयान्तर्वर्तित्वात्। तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति । व्याकरणप्रसिद्धनामाख्याताादिपक्षे मनीषिणो ब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञा वाग्योगविदस्तानि पदामि जानन्ति । अवाग्योगविदः पामरा वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदन्ति व्यवहरन्ति अर्थप्रकाशनाय प्रयुञ्जते । अयं मन्त्रो निरुक्ते व्याख्यातः सोऽत्राप्यनुसंधेयः- ‘ अथापि ब्राह्मणं भवति । सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयम् । या पृथिव्यां साग्नौ सा रथंतरे । यान्तरिक्षे सा वायौ सा वामदेव्ये । या दिवि सादित्ये सा बृहति सा स्तनयित्नावथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः । तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम् ' ( निरु. १३. ९) इति ।

इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमा॑हु॒रथो॑ दि॒व्यः स सु॑प॒र्णो॑ ग॒रुत्मा॑न् ।

एक॒ं सद्विप्रा॑ बहु॒धा व॑दन्त्य॒ग्निं य॒मं मा॑त॒रिश्वा॑नमाहुः ॥४६

इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । अ॒ग्निम् । आ॒हु॒ः । अथो॒ इति॑ ।
दि॒व्यः । सः । सु॒ऽप॒र्णः । ग॒रुत्मा॑न् ।

एक॑म् । सत् । विप्राः᳚ । ब॒हु॒धा । व॒द॒न्ति॒ । अ॒ग्निम् । य॒मम्
। मा॒त॒रिश्वा॑नम् । आ॒हु॒ः ॥४६

इन्द्रम् । मित्रम् । वरुणम् । अग्निम् । आहुः । अथो इति ।
दिव्यः । सः । सुऽपर्णः । गरुत्मान् ।

एकम् । सत् । विप्राः । बहुधा । वदन्ति । अग्निम् । यमम्
। मातरिश्वानम् । आहुः ॥४६

अमुमादित्यम् ऐश्वर्यविशिष्टम् “इन्द्रम् “आहुः । तथा “मित्रं प्रमीतेर्मरणात् त्रातारमहरभिमानिनमेतन्नामकं देवं तमाहुः । “वरुणं पापस्य निवारकं राज्यभिमानिनं देवमाहुः । तथा “अग्निम् अङ्गनादिगुणविशिष्टम् एतन्नामकमाहुः । “अथो अपि च अयमेव “दिव्यः दिवि भवः “सुपर्णः सुपतनः “गरुत्मान् गरणवान् पक्षवान्वा । एतन्नामको यः पक्ष्यस्ति सः अप्ययमेव । कथमेकस्य नानात्वमिति । उच्यते । अमुमेवादित्यम् “एकम् एव वस्तुतः सन्तं “विप्राः मेधाविनो देवतातत्वविदः “बहुधा “वदन्ति । तत्तत्कार्यकारणेन इन्द्राद्यात्मानं वदन्ति । एकैव वा महानात्मा देवता स सूर्य इत्याचक्षते' इत्युक्तत्वात् ।'किंच तमेव वृष्ट्यादिकारणं वैद्युताग्निं “यमं नियन्तारं “मातरिश्वानम् अन्तरिक्षे श्वसन्तं वायुम् “आहुः । सूर्यस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति। अत्र ये केचित् अग्निः सर्वा देवताः' ( ऐ. ब्रा. २. ३) इत्यादिश्रुतितोऽयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वा

अग्नेरेव सार्वात्म्यप्रतिपादकोऽयं मन्त्र इति वदन्ति । तत्पक्षे प्रथमोऽग्निशब्दः उद्देश्यः । तमग्निमुद्दिश्य इन्द्राद्यात्मकत्वकथनम्। अयं मन्त्रो निरुक्ते एवं व्याख्यातः - ‘ इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्ति इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम् । दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा ' ( निरु. ७. १८) इति ॥ ॥ २२ ॥

वर्षकामेष्ट्यां तिस्रः पिण्ड्यो होतव्याः । तत्र ‘कृष्णं नियानम्' इति तृतीयस्यानुवाक्या। ‘ कृष्णं नियानं हरयः सुपर्णा नियुत्वन्तो ग्रामजितो यथा नरः ' ( आश्व. श्रौ. २. १३ ) इति ॥

कृ॒ष्णं नि॒या॒नं हरं॑यः सुप॒र्णा अ॒पो वसा॑ना॒ दिव॒मुत्पं॑तन्ति ।

त आवं॑वृत्र॒न्सदं॑नादृ॒तस्यादिद्घृ॒तेनं॑ पृथि॒वी व्युं॑द्यते ॥४७

कृ॒ष्णम् । नि॒ऽयानं॑म् । हरं॑यः । सु॒ऽप॒र्णाः । अ॒पः । वसा॑नाः । दिवं॑म् । उत् । प॒त॒न्ति॒ ।

ते । आ । अ॒व॒वृ॒त्र॒न् । सदं॑नात् । ऋ॒तस्यं॑ । आत् । इत् । घृ॒तेनं॑ । पृ॒थि॒वी । वि । उ॒द्य॒ते॒ ॥४७

कृष्णम् । निऽयानम् । हरयः । सुऽपर्णाः । अपः । वसानाः । दिवम् । उत् । पतन्ति ।

ते । आ । अववृत्रन् । सदनात् । ऋतस्य । आत् । इत् । घृतेन । पृथिवी । वि । उद्यते ॥४७

“कृष्णं कृष्णवर्णं “नियानं नियमेन गच्छन्तं मेघं “हरयः उदकस्य हर्तारः “सुपर्णाः शोभनपतना रश्मयः “अपः “वसानाः उदकानि वासयन्तो मेघेषु। अद्भिर्मेघान्पूरयन्त इत्यर्थः।। अन्तर्भावितण्यर्थत्वात् द्विकर्मकत्वम् ॥ यद्वा । कृष्णं नियानं नियमनं रात्रिः । देवानां हि

रात्रिर्दक्षिणायनम् । तत्प्रति । तस्मिन्वर्षकाले इत्यर्थः । एवं कुर्वन्तः “दिवं द्युलोकं तदाश्रितमादित्यं वा उद्दिश्य “उत्पतन्ति ऊर्ध्वं गच्छन्ति । “ते रश्मयः "ऋतस्य “सदनात् उदकस्य स्थानात् आदित्यमण्डलात् “आववृत्रन् आवर्तन्ते अर्वाञ्च आगच्छन्ति । “आदित् अनन्तरमेव यदा अर्वाग्गच्छन्ति तदानीमेव “घृतेन उदकेन “पृथिवी “व्युद्यते विविधं क्लिद्यते । ‘ कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मयः । (निरु. ७. २४ ) इत्यादि निरुक्तं द्रष्टव्यम् ॥

द्वादंश प्र॒धयंश्च॒क्रमेकं॒ त्रीणि॒ नभ्यांनि॒ क उ॒ तच्चिंकेत ।

तस्मिंन्सा॒कं त्रिंश॒ता न श॒ङ्कवोंऽर्पि॒ताः ष॒ष्टिर्न

चंलाच॒लासं॑ः ॥४८

द्वाद॑श । प्र॒ऽधयः॑ । च॒क्रम् । एक॑म् । त्रीणि॑ । नभ्या॑नि ।
कः । ऊ॒ं इति॑ । तत् । चि॒के॒त॒ ।

तस्मि॑न् । सा॒कम् । त्रि॒ऽश॒ताः । न । श॒ङ्कवः॑ । अ॒र्पि॒ताः ।
ष॒ष्टिः । न । च॒ला॒च॒लासः॑ ॥४८

द्वादश । प्रऽधयः । चक्रम् । एकम् । त्रीणि । नभ्यानि ।
कः । ऊं इति । तत् । चिकेत ।

तस्मिन् । साकम् । त्रिऽशताः । न । शङ्कवः । अर्पिताः ।
षष्टिः । न । चलाचलासः ॥४८

“द्वादश एतत्संख्याकाः “प्रधयः परिधयः प्रहिता वर्तन्ते । तत्स्थानीया द्वादश मासाः “एकम् अद्वितीयं “चक्रं क्रमणस्वभावं संवत्सराख्यं चक्रमाश्रिताः। तथा “त्रीणि त्रिसंख्याकानि “नभ्यानि नाभ्याश्रयाणि फलकानि तत्स्थानीयानि ग्रीष्मवर्षाहेमन्ताख्यान्याश्रितानि । यथा

सूर्यरथचक्रस्य द्वादश परिधयः नाभ्यर्हाणि त्रीणि फलकानि सन्ति तद्वत्कालचक्रस्यापि । "क “उ कोऽपि महान् “तत चक्रं “चिकेत जानाति । “तस्मिन् चक्रे “साकं सह “शङ्कवः “न शङ्कवः इव । अत्र पुरस्तादुपचारोऽपि नशब्दः सामर्थ्यादुपमार्थीयः । तस्मिन्नपि संवत्सरचक्रे “त्रिशताः एतत्संख्याकाः “षष्टिर्न । नशब्दः चार्थे । षष्टिश्च अरा अरस्थानीयान्यहानि “अर्पिताः अर्पितानि । कीदृशानि तानि । “चलाचलासः । एकश्चलशब्दो द्विर्भावप्राप्तः । चलाः । चलनस्वभावानीत्यर्थः ॥ ‘ चरिचलिपतिवदीनामच्याक्चाभ्यासस्य ' ( पा. सू. ६. १. १२, ६ ) इति द्विर्वचनमागागमश्च । ततोऽसुक् ॥ ‘ षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहानि ' (श, ब्रा. ९. १. १. ४३) इति ब्राह्मणम् । द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानात् ' (निरु. ४, २७ ) इत्यादि निरुक्तम् ।।

प्रवर्ग्येऽभिष्टवे' यस्ते स्तनः' इत्येका। सूत्रितं च -- यस्ते स्तनः शशयो यो मयोभूर्गौरमीमेदनु वत्सं मिषन्तम् ( आश्व. श्रौ. ४. ७) इति । एषैव सारस्वते पशौ हविषो याज्या । सूत्रितं च - ‘ यस्ते स्तनः शशयो यो मयोभूस्त्वं सोम प्र चिकितो मनीषेति द्वे' ( आश्व. श्रौ. ३. ७) इति ॥

यस्ते॒ स्तनः॑ शश॒यो यो म॑यो॒भूर्येन॒ विश्वा॒ पुष्य॑सि॒ वार्या॑णि ।

यो र॑त्न॒धा व॑सु॒विद्यः सु॒दत्रः॑ सर॑स्वति॒ तमि॒ह धात॑वे कः ॥ ४९

यः । ते॒ । स्तनः॑ । श॒श॒यः । यः । म॒यः॒ऽभूः । येन॑ । विश्वा॑ । पुष्य॑सि । वार्या॑णि ।

यः । र॒त्न॒ऽधाः । व॒सु॒ऽवित् । यः । सु॒ऽदत्रः॑ । सर॑स्वति ।
तम् । इ॒ह । धात॑वे । क॒रि॒ति॑ कः ॥४९

यः । ते । स्तनः । शशयः । यः । मयःऽभूः । येन । विश्वा ।
पुष्यसि । वार्याणि ।

यः । रत्नऽधाः । वसुऽवित् । यः । सुऽदत्रः । सरस्वति ।
तम् । इह । धातवे । करिति कः ॥४९

हे “सरस्वति “ते तव संबन्धी “यः “स्तनः स्तनवच्छिशुस्थानीयानां प्राणिनामाप्यायनकारी लौकिकवैदिकसुशब्दरूपः स्तनः “शशयः शयान्ः तव देहे वर्तमानः । “यः च स्तनः “मयोभूः रसास्वादिनां सुखस्य भावयिता । “येन स्तनेन “विश्वा सर्वाणि “वार्याणि वरणीयान्यभिमतरूपाणि धनानि “पुष्यसि भोक्तृभ्यः । “यः च स्तनः “रत्नधाः बहुविधरमणीयरसानां धारयिता “वसुवित् वसूनां वासयितॄणां धनानां वेत्ता लब्धा वेदयिता

वा । किंच “यः स्तनः “सुदत्रः। शोभनदानः । ‘सुदत्रः कल्याणदानः ' ( निरु. ६. १४ ) इति निरुक्तम् । अत्र असकृत् यच्छब्दश्रवणं स्तनस्य अतिप्रशस्तत्वज्ञापनार्थम् । हे देवि “तं तादृशं सर्वप्राण्युपकारकं सूक्तमयं स्तनम् “इह अस्मिन्कर्मणि इदानीं वा “धातवे अस्माभिर्धातुं पातुं पानाय “कः कुरु ॥

अग्निमन्थने ‘ यज्ञेन यज्ञम् ' इत्येषा परिधानीया। यज्ञेन यज्ञमयजन्त देवा इति परिदध्यात् (आश्व. श्रौ. २. १६ ) इति सूत्रितत्वात् ॥

य॒ज्ञेनं य॒ज्ञमंयजन्त दे॒वास्तानि॒ धर्मा॑णि प्रथ॒मान्यां॑सन् ।

ते ह॒ नाकं॑ महि॒मानं॑ः सचन्त॒ यत्र॒ पूर्वे॑ सा॒ध्याः सन्ति॑ दे॒वाः ॥५०

य॒ज्ञेन॑ । य॒ज्ञम् । अ॒य॒ज॒न्त॒ । दे॒वाः । तानि॑ । धर्मा॑णि । प्र॒थ॒मानि॑ । आ॒स॒न् ।

ते । ह॒ । नाक॑म् । म॒हि॒मानः॑ । स॒च॒न्त॒ । यत्र॑ । पूर्वे॑ । सा॒ध्याः । सन्ति॑ । दे॒वाः ॥५०

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ।

ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥५०

“देवाः व्यवहर्तारो यजमानाः “यज्ञेन निर्मथ्याग्निना “यज्ञं होमसाधनमाहवनीयम् “अयजन्त पूजितवन्तः अनुष्ठानाय संयोजितवन्त इत्यर्थः । ‘अग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते । (तै. सं. ६. २. १.७ ) इति हि तैत्तिरीयकम् । “तानि “धर्माणि अग्निसाधनानि

कर्माणि "प्रथमानि। प्रथम इति मुख्यनाम । प्रतमानि प्रकृष्टतमानि "आसन् फलप्रसवसमर्थान्यभवन्नित्यर्थः। "ते "ह ते च यजमानाः "नाकम् । नास्मिन्नकमस्तीति नाकः स्वर्गः। ते "महिमानः माहात्म्ययुक्ताः "सचन्त संगताः । कीदृशं नाकम् । "यत्र यस्मिन्नाके "पूर्वे पूर्वतनाः "साध्याः साधनाः यज्ञादिसाधनवन्तः । कर्मदेवा इत्यर्थः । ते 'सन्ति निवसन्ति तं सचन्त । तस्मादिदानीमपि मनुष्यैः एवं कर्तव्यमित्यर्थः । यद्वा। देवा इदानीं देवभागमापन्नाः पूर्वं यज्ञेनाग्निना पशुभूतेन यज्ञं यष्टव्यमग्निमयजन्त पूजितवन्तः । अग्नेरेव मूर्तिभेदेन देवत्वं च पशुत्वं च द्रष्टव्यम् । अग्निः पशुरासीत्तमालभन्त तेनायजन्त' इति श्रुतेः । शिष्टं पूर्ववत् । यत्र यस्मिन् स्वर्गे निमित्तभूते सति पूर्वे पूर्वतनाः साध्या देवाः साधनाश्छन्दोऽभिमानिनः। आदित्या अङ्गिरसश्च साध्या देवा उच्यन्ते। 'छन्दांसि वै साध्या देवास्तेऽग्रेऽग्निनाग्निमयजन्त ते स्वर्ग लोकमायन्नादित्याश्चैवेहासन्नङ्गिरसश्च

तेऽग्रेऽग्निनाग्निमयजन्त ते स्वर्गं लोकमायन्'(ऐ. ब्रा. १. १६) इति ब्राह्मणम् । एते देवाः स्वर्गे सन्ति भवन्ति स्वर्गप्राप्ताः इत्यर्थः । यद्वा। यज्ञेन ज्ञानादियज्ञेन यज्ञं विष्णुमयजन्त पूजयन्ति । ते नाकं विष्णुलोकं महानुभावाः सचन्त संगच्छन्ते । यत्र पूर्वे साध्यादयो देवाः सन्ति तत्स्थानम्। 'अग्निनाग्निमयजन्त देवाः' (निरु. १२. ४१) इत्यादि निरुक्तमनुसंधेयम् ॥

स॒मा॒नमे॒तदु॑द॒कमुच्चैत्यव॒ चाह॑भिः ।

भूमिं॑ प॒र्जन्या॒ जिन्व॑न्ति॒ दिवं॑ जिन्वन्त्य॒ग्नय॑ः ॥५१

स॒मा॒नम् । ए॒तत् । उ॒द॒कम् । उत् । च॒ । एति॑ । अव॑ । च॒ । अह॑ऽभिः ।

भूमिंम् । पुर्जन्याः । जिन्वंन्ति । दिवंम् । जिन्वन्ति । अग्नयः ॥५१

समानम् । एतत् । उदकम् । उत् । च । एति । अव । च । अहऽभिः ।

भूमिम् । पर्जन्याः । जिन्वन्ति । दिवम् । जिन्वन्ति । अग्नयः ॥५१

“एतत् प्रसिद्धम् "उदकं “समानम् एकरूपमित्यर्थः । “अहभिः कैश्चिदहोभिः ग्रीष्मकालीनैः “उच्चैति उर्ध्वं गच्छति । तथा अहभिः “वर्षकालीनैरेव तदुदकम् “अव “च एति अवाङ्मुखं च गच्छति ॥ ‘चवायोगे प्रथमा ' इति प्रथमा विभक्तिर्न निहन्यते ॥ रश्मिनाड्यैव भूमिं प्राप्नोति । तदेवोच्यते । “पर्जन्याः प्रीणयितारो मेघाः “भूमिं “जिन्वन्ति उदकसंस्त्यायेन सस्याद्युत्पादनद्वारा भूमिष्ठान्

प्रीणयन्ति । तथा “अग्नयः आहवनीयाद्याः स्वे हुते आहुत्या “दिवं द्युलोकस्थान् देवान् "जिन्वन्ति प्रीणयन्ति ।

सरस्वदेवताके पशौ ‘ दिव्यं सुपर्णम्' इति वपायाज्या। दिव्यं सुपर्णं वायसं बृहन्तं स वावृधे नर्यो योषणासु ' ( आश्व. श्रौ. ३. ८) इति सूत्रितत्वात् । अन्वारम्भणीयायां सरस्वद्यागे एषैव याज्या । सूत्रितं च -- दिव्यं सुपर्णं वायसं बृहन्तमा सवं सवितुर्यथा' ( आश्व. श्रौ २.८) इति ॥

दि॒व्यं सु॑प॒र्णं वा॑य॒सं बृ॒हन्त॑म॒पां गर्भं॑ दर्श॒तमोष॑धीनाम् ।

अ॒भी॒प॒तो वृ॒ष्टिभि॑स्त॒र्पय॑न्त॒ं सर॑स्वन्त॒मव॑से जोहवीमि ॥ ५२

दि॒व्यम् । सु॒ऽप॒र्णम् । वा॒य॒सम् । बृ॒हन्त॑म् । अ॒पाम् । गर्भ॑म् । द॒र्श॒तम् । ओष॑धीनाम् ।

अ॒भी॒प॒तः । वृ॒ष्टिऽभिः॑ । त॒र्पयं॑न्तम् । सरं॑स्वन्तम् । अवं॑से । जो॒ह॒वी॒मि॒ ॥५२

दिव्यम् । सुऽपर्णम् । वायसम् । बृहन्तम् । अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् ।

अभीपतः । वृष्टिऽभिः । तर्पयन्तम् । सरस्वन्तम् । अवसे । जोहवीमि ॥५२

“दिव्यं दिवि भवं “सुपर्णं शोभनगमनं "वायसं गमनशीलं “बृहन्तं महान्तम् “अपां “गर्भं वृष्ट्युदकानां गर्भवदुत्पादकम् । “ओषधीनाम् ओषधीः “दर्शतं दर्शनाय । दर्शयन्तमित्यर्थः। यद्वा । ओषधीनां गर्भं दर्शतमिति पृथग्विशेषणम् । किंच “अभीपतः आनुकूल्येन “वृष्टिभिस्तर्पयन्तं जगत्प्रीणयन्तम् । यद्वा । अभीपतोऽभिगमनवतः सलिलाधारांस्तटाकादींस्तर्पयन्तम् अथवा अभिगन्ताहम्

। “सरस्वन्तम् उदकवन्तम् । सर इत्युदनाम । देवं सूर्यं वा “अवसे रक्षणाय “जोहवीमि पुनः पुनः आह्वयामि ॥ ॥ २३ ॥ ॥ २२ ॥

**टिप्पणी**

१.१६४.७

इह ब्रवीत्वनुयोगः संलाप ॠगुपोप मे ।
प्रतिषेधोपदेशौ तु अक्षैर्मेत्यक्षसंस्तुतौ ।।बृहद्देवता १.५२ ।।

१.१६४.३४-३५

आशीस्तु वात आ वातु दण्डेति परिदेवना । प्रश्नश्च
प्रतिवाक्यं च पृच्छामि त्वेत्यृचौ पृथक् ।।बृहद्देवता १.५० ।।

१.१६४.३७

प्रमादस्त्वेष हन्ताहं न स स्व इत्यपह्नवः ।
इन्द्राकुत्सेत्युपप्रैषो न विजानामि संज्वरः ।।
बृहद्देवता १.५६ ।।

१.१६४.४१ सूर्यामेव सतीमेतां गौरीं वाचं सरस्वतीम् । पश्यामो वैश्वदेवेषु निपातेनैव केवलाः ।।बृहद्देवता २.८१ ।।

१.१६४.४४

अर्चिभिः केश्ययं त्वग्निर् विद्युद्भिश्चैव मध्यमः ।
असौ तु रश्मिभिः केशी तेनैनानाह कैशिनः ।। ९४ ।।

एतेषां तु पृथक्त्वेन त्रयाणां केशिनामिह ।
संलक्ष्यन्ते प्रक्रियासु त्रयः केशिन इत्यृचि ।। ९५ ।।

केश उपरि टिप्पणी

केशी उपरि टिप्पणी

१.१६४.४५ चत्वारि वाक् परिमिता इति

द्र. माश ४.१.३.१७

# मण्डल

## १

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |

# ऋग्वेदः सूक्तं १.१६५

{

| | ऋग्वेदः - मण्डल १ | |
|---|---|---|
| ← सूक्तं १.१६४ | सूक्तं १.१६५<br>१,२,४,६,८,१०-१२ इन्द्रः, ३,५,७,९ मरुतः, १३-१५ अगस्त्यो मैत्रावरुणिः। | सूक्तं १.१६६ → |

दे. मरुत्वानिन्द्रः। त्रिष्टुप्।



## *जावाप्रान्ते धर्मप्रचारकः अगस्त्यऋषिः*

कया शुभा सवयसः सनीळाः समान्या मरुतः सं मिमिक्षुः ।

कया मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया ॥१॥

कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मरुत आ ववर्त ।

श्येनाँ इव ध्रजतो अन्तरिक्षे केन महा मनसा रीरमाम ॥२॥

कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था ।

सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ॥३॥

ब्रह्माणि मे मतयः शं सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः ।

आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ ॥४॥

अतो वयमन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः ।

महोभिरेताँ उप युज्महे न्विन्द्र स्वधामनु हि नो बभूथ ॥५॥

क्व स्या वो मरुतः स्वधासीद्यन्मामेकं समधत्ताहिहत्ये ।

अहं ह्युग्रस्तविषस्तुविष्मान्विश्वस्य शत्रोरनमं वधस्नैः ॥६॥

भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः ।

भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥७॥

वधीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् ।

अहमेता मनवे विश्वश्चन्द्राः सुगा अपश्चकर वज्रबाहुः ॥८॥

अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।

न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥९॥

एकस्य चिन्मे विभ्वस्त्वोजो या नु दधृष्वान्कृणवै मनीषा ।

अहं ह्युग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥१०॥

अमन्दन्मा मरुत स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र ।

इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ॥११॥

एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः ।

संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् ॥१२॥

को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः ।

मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् ॥१३॥

आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा ।

ओ षु वर्त्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥१४॥

एष व स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।

एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥१५॥

## सायणभाष्यम्

त्रयोविंशेऽनुवाके पञ्चदश सूक्तानि । तत्र ‘कया शुभा ' इति पञ्चदशर्चं प्रथमं सूक्तं त्रैष्टुभम् । अत्रानुक्रमणिका-

कया पञ्चोना संवादस्तृतीयाद्ययुजो मरुतां वाक्यमन्त्यस्तृचोऽगस्त्यस्य शिष्टा इन्द्रस्यैकादशी च मरुत्वांस्त्विन्द्रो देवता ' इति । अत्र इन्द्रागस्त्यमरुतां संवादः प्रतिपाद्यते । तत्र तृतीयापञ्चमीसप्तमीनवमीनां मरुद्वाक्यरूपत्वात् ते एव ऋषयः। 'यस्य वाक्यं स ऋषिः' (अनु. २.४) इति न्यायात् ।
अन्त्यतृचस्यागस्त्यवाक्यत्वात् स एव ऋषिः । शिष्टा युज आद्या च एकादशी च इन्द्रस्य वाक्यम् । अतः स एव ऋषिः । अत्र 'या तेनोच्यते सा देवता' (अनु. २.५) इति सामान्यापवादेन कृत्स्नस्य मरुत्वद्गुणक इन्द्रो देवता ।
संसवचातुर्विंशकयोर्मरुत्वतीयशस्त्रे निविद्धानीयापूर्वमेतत्सूक्तम्। 'यदि पर्यायान्', 'मरुत्वतीये' इति खण्डयोः सूत्रितं-'कया शुभेति च मरुत्वतीये पुरस्तात्सूक्तस्य शंसेत् ' ( आश्व. श्रौ. ६. ६; ७. ३ ) इति ।
आभिप्लविके पञ्चमेऽहनि मरुत्वतीये एतदेव सूक्तम् । 'पञ्चमस्य कया शुभा यस्तिग्मशृङ्ग इति मध्यदिनः'

(आश्व. श्रौ.. ७.७ ) इति सूत्रितत्वात् । महाव्रते मरुत्वतीयशस्त्र एतत्सूक्तम् । पञ्चमारण्यके- कया शुभा सवयसः सनीळा मरुत्वाँ इन्द्र वृषभो रणाय ' ( ऐ. आ. ५.१.१ ) इत्युक्तत्वात् । विषुवति मरुत्वतीये एतदेव निविद्धानीयम् । 'त्यं सु मे कया शुभेति च मरुत्वतीयम् ' ( आश्व. श्रौ.. ८.६ ) इति सूत्रितत्वात् । अस्य विनियोगं शौनक आह----'ज्ञातिपुत्रसुहृन्मित्रैर्यश्च राज्यं चिकीर्षति । नित्यं स नियतो भूत्वा सूक्तं तु मनसा जपेत् । कया शुभेति पैशुन्यं कृत्वाचार्यनृपद्विजैः । श्रुत्वा पररहस्यं तु गुरोरप्याह शौनकः ' ( ऋग्वि. १. १४५-१४६ ) इति ॥

कयां शु॒भा सवंयस॒ः सनींळाः समा॒न्या म॒रुत॒ः सं मिंमिक्षुः ।

कयां म॒ती कुत॒ एतांस ए॒तेऽर्चंन्ति॒ शुष्म॑ं वृषंणो वसू॒या ॥१

कयां । शु॒भा । स॒ऽवंयसः । स॒ऽनीं॑ळाः । स॒मा॒न्या । म॒रुतः॑ । सम् । मि॒मि॒क्षुः॒ ।

कयां । म॒ती । कुतः॑ । आऽइंतासः । ए॒ते । अर्चं॑न्ति । शुष्मं॑म् । वृषं॑णः । व॒सु॒ऽया ॥१

कया। शुभा । सऽवयसः । सऽनीळाः । समान्या । मरुतः । सम् । मिमिक्षुः ।

कया। मती। कुतः । आऽइतासः । एते । अर्चन्ति । शुष्मम् । वृषणः । वसुऽया ॥ १ ॥

इन्द्रवाक्यम् । "सवयसः समानवयस्काः "सनीळाः समानस्थानाः एते "मरुतः "कया “शुभा कैरपि दुर्ज्ञेयया शोभया “समान्या सर्वेषामेकरूपया महत्या युक्ताः । यद्वा । शुबित्युदकनाम । उक्तरूपया शुभा उदकेन । “सं "मिमिक्षुः लोकं सम्यक् सिञ्चन्ति। मिहिसमानार्थः

मिमिक्षतिधातुः ॥ यद्वा । मां युद्धादिषु प्रवर्तमानं सं मिमिक्षुः । तदर्थम् एते मरुतः “कया अनिश्चेयया "मती मत्या “कुतः देशात् "एतासः आगताः । आगत्य च "एते "वृषणः वर्षितारः "वसूया वसूयया ॥ ‘सुपां सुलक्° ' इति पूर्वसवर्णदीर्घः ।। धनेच्छया। यद्वा । वसवो वासयितारो वा ॥ तेनैव जसो याजादेशः ।। “शुष्मं बलं वृष्टिप्रदानजनितं लोके “अर्चन्ति पूजयन्ति जगति कुर्वन्ति। यद्वा । मम बलं वर्धयन्तीत्यर्थः। ‘मरुतो हैनं नाजहुः ' ( ऐ. ब्रा. ३.२० ) इति श्रुतेः । अत्र इन्द्रमरुत्संवादरूपे सर्वत्र प्राणजीवात्मपरतयापि योजनीयम् । अत्रापि इन्द्रो ब्रूते ।।

कस्य॒ ब्रह्मा॑णि जुजुषु॒र्युवा॑न॒ः को अ॑ध्व॒रे म॒रुत॒ आ व॑वर्त ।

श्ये॒नाँ इं॑व॒ ध्रजं॑तो अ॒न्तरिं॑क्षे॒ केनं॑ म॒हा मनं॑सा रीरमाम ॥२

कस्यं । ब्रह्मा॑णि । जु॒जु॒षु॒ः । युवा॑नः । कः । अ॒ध्व॒रे ।
म॒रुतः॑ । आ । व॒व॒र्त॒ ।

श्ये॒नान्ऽइं॑व । ध्रजं॑तः । अ॒न्तरिं॑क्षे । केनं॑ । म॒हा । मनं॑सा ।
री॒र॒मा॒म॒ ॥२

कस्य । ब्रह्माणि । जुजुषुः । युवानः । कः । अध्वरे ।
मरुतः । आ । ववर्त।

श्येनान्ऽइव । ध्रजतः । अन्तरिक्षे । केन । महा। मनसा ।
रीरमाम ॥ २ ॥

"युवानः नित्यतरुणाः महानुभावाः मरुतः कस्य
महाभागस्य “ब्रह्माणि परिवृढानि हवींषि “जुजुषुः सेवन्ते
। "कः च महान् "अध्वरे स्वकीये यागे “मरुतः एतान् “आ
“ववर्त यागान्तरेभ्यो निवर्तयति । दुर्निग्रहत्वे दृष्टान्तमाह।

"अन्तरिक्षे “ध्जतः गच्छतः “श्येनान् शंसनीयगमनान
एतन्नामकान् पक्षिणः “इव। “केन तत्प्रीतिसाधनेन "महा
महता "मनसा मननवता स्तोत्रेण “रीरमाम रमेमहि ॥

अथ मरुत इन्द्रेणोक्तास्तृतीययानया प्रतिब्रुवते ॥

कुत॒स्त्वमिं॑न्द्र॒ माहिं॑न॒ः सन्नेकों यासि सत्पत॒े किं तं इ॒त्था
।

सं पृं॑च्छसे समर॒ाणः शुं॑भ॒ानैर्वो॒चेस्तन्नों हरिवो॒ यत्तें अ॒स्मे ॥
३

कुतः॑ । त्वम् । इ॒न्द्र॒ । माहिं॑नः । सन् । एकः॑ । या॒सि॒ ।
स॒त्ऽप॒ते॒ । किम् । ते॒ । इ॒त्था ।

सम् । पृ॒च्छ॒से॒ । स॒म्ऽअ॒रा॒णः । शु॒भा॒नैः । वो॒चेः । तत् ।
न॒ः । ह॒रि॒ऽव॒ः । यत् । ते॒ । अ॒स्मे इतिं ॥३

कुतः । त्वम् । इन्द्र । माहिनः । सन् । एकः । यासि ।
सत्पते । किम् । ते । इत्था ।

सम् । पृच्छसे । सम्ऽअराणः। शुभानैः। वोचेः । तत् । नः
। हरिऽवः । यत् । ते । अस्मे इति ॥३॥

हे "इन्द्र "सत्पते सतां पालक “त्वं "माहिनः महनीयः
पूजनीयः अनुचरैरनुगन्तव्य इत्यर्थः । तथाभूतः "सन् अपि
“एकः असहायः सन् “कुतः "यासि कुतः कारणाद्यासि ।
यद्वा । कुत्र यासि । “ते तव “इत्था इत्थं "किम् । किं
त्वमेवमेव किं न कोऽप्यनुचरोऽस्ति । किंच त्वं "समराणः
अस्माभिः संगच्छमानः "सं “पृच्छसे समीचीनं पृच्छसि ।
हे "हरिवः हरिभ्यां तद्वन्निन्द्र “ते तव "अस्मे अस्मासु "यत्
वक्तुमिष्टतममस्ति "तत् "नः अस्मभ्यं “शुभानैः
शोभमानैर्वचनैः "वोचेः ब्रूहि ॥

ब्रह्मा॑णि मे म॒तय॒ः शं सु॒तास॒ः शुष्म॑ इयर्ति॒ प्रभृ॑तो मे॒ अद्रि॑ः ।

आ शा॑सते॒ प्रति॑ हर्यन्त्यु॒क्थेमा हरी॑ वहत॒स्ता नो॒ अच्छ॑ ॥४

ब्रह्मा॑णि । मे॒ । म॒तयः॑ । शम् । सु॒तासः॑ । शुष्मः॑ । इ॒य॒र्ति॒ । प्रऽभृ॑तः । मे॒ । अद्रिः॑ ।

आ । शा॒स॒ते॒ । प्रति॑ । ह॒र्य॒न्ति॒ । उ॒क्था । इ॒मा । हरी॒ इति॑ । व॒ह॒त॒ः । ता । न॒ः । अच्छ॑ ॥४

ब्रह्माणि । मे। मतयः । शम् । सुतासः । शुष्मः । इयर्ति । प्रऽभृतः । मे। अद्रिः ।

आ। शासते । प्रति। हर्यन्ति । उक्था । इमा । हरी इति। वहतः। ता । नः। अच्छ॥४॥

अथैवं तैः पृष्टोऽनया चतुर्थ्या इन्द्रः प्रत्याह । हे मरुतः "ब्रह्माणि सर्वाणि कर्माणि हवींषि वा “मे मम स्वभूतानि । तथा “मतयः चे मननयुक्ताः स्तुतयश्च मे मम “शं सुखकार्याः। यद्वा । मे मतयो बुद्धयः तेष्वेव वर्तन्ते इति शेषः । तथा “सुतासः अभिषुताः सोमाः मे मदीया मदर्था एव । अतो यज्ञं प्रति गन्तव्यमित्यर्थः। किंच मध्ये राक्षसादिबाधपरिहाराय “शुष्मः । बलनामैतत् । बलवान् "मे मदीयः अद्रिः शत्रूणां भक्षको वज्रः “प्रभृतः सन् “इयर्ति गच्छत्येव लक्ष्यं प्रति न च निवर्तते। न केवलं हविरादीनां मदीयत्वमेव अपि तु यजमानाः “आ “शासते मामेव प्रार्थयन्ते । किंच “उक्था उक्थानि शस्त्राणि मां "प्रति "हर्यन्ति कामयन्ते मामेव शंसन्तीत्यर्थः । किंच "नः अस्मदीयौ “इमा “हरी इमौ अश्वौ “ता तानि गन्तव्यानि हविरादीनि अच्छ अभिप्राप्तुं मां “वहतः अभिमतदेशं प्रापयतः । अत एव शीघ्रं गच्छामि । युष्माभिरपि तत्प्राप्तुं गन्तव्यमित्यर्थः । अतोऽसहाय इति मन्तव्यमिति भावः ।।

अतो॑ व॒यम॑न्त॒मेभि॑र्युजा॒नाः स्वक्ष॑त्रेभिस्त॒न्व१॒॑ः
शुम्भ॑मानाः ।

महो॑भि॒रेताँ॒ उप॑ युज्महे॒ न्विन्द्र॑ स्व॒धामनु॒ हि नो॑ ब॒भूथ॑ ॥५

अतः॑ । व॒यम् । अ॒न्त॒मेभिः॑ । यु॒जा॒नाः । स्वऽक्ष॑त्रेभिः ।
त॒न्वः॑ । शुम्भ॑मानाः ।

महः॑ऽभिः । एता॑न् । उप॑ । यु॒ज्म॒हे॒ । नु । इन्द्र॑ । स्व॒धाम् ।
अनु॑ । हि । नः॒ । ब॒भूथ॑ ॥५

अतः । वयम् । अन्तमेभिः । युजानाः । स्वऽक्षत्रेभिः ।
तन्वः । शुम्भमानाः ।

महःऽभिः । एतान् । उप । युज्महे । नु । इन्द्र । स्वधाम् ।
अनु। हि। नः । बभूथ ॥ ५ ॥

एवमुक्ता मरुतः तमेवं ब्रुवते । हे इन्द्र त्वं यस्मात् एवं करोषि “अतः कारणात् “वयम् अपि “अन्तमेभिः अन्तिकतमैः अश्वैः "युजानाः युक्ताः सन्तः । कीदृशैः । स्वक्षत्रेभिः स्वायत्तबलैः। किंच “महोभिः तेजोभिः "तन्वः आत्मशरीराणि “शुम्भमानाः दीपयन्तः हर्षं प्राप्नुवाना इत्यर्थः । यद्वा । महोभिः स्वमहत्त्वेन युक्ता वयम् “एतान् गन्तून् नु क्षिप्रम् "उप "युज्महे तव साकं हविरादि स्वीकुर्महे इत्यर्थः। हे “इन्द्र त्वमपि “नः अस्मत्संबन्धि “स्वधाम् उदकं बलं वा “अनु "बभूथ “हि अस्मत्सृष्टोदकजन्यं हविः अनुभवसि खलु । हिशब्दः परस्परोपकार्योपकारिभावप्रसिद्धिद्योतनार्थः ॥ ॥ २४ ।।

क्व१॒ स्या वो॑ मरुतः स्व॒धासी॒द्यन्मामेकं॑ स॒मध॑त्ताहि॒हत्ये॑ ।

अ॒हं ह्यु१॒ग्रस्त॑वि॒षस्तुवि॑ष्मा॒न्विश्व॑स्य॒ शत्रो॒रन॑मं वध॒स्नैः ॥६

क्व॑ । स्या । वः॒ । म॒रु॒तः॒ । स्व॒धा । आ॒सी॒त् । यत् । माम् । एक॑म् । स॒म्ऽअध॑त्त । अ॒हि॒ऽहत्ये॑ ।

अ॒हम् । हि । उ॒ग्रः । त॒वि॒षः । तुवि॑ष्मान् । विश्व॑स्य । शत्रोः॑ । अन॑मम् । व॒ध॒ऽस्नैः ॥६

क्व। स्या। वः। मरुतः । स्वधा । आसीत्। यत्। माम् । एकम् । सम्ऽअधत्त । अहिऽहत्ये।

अहम् । हि । उग्रः । तविषः । तुविष्मान् । विश्वस्य । शत्रोः । अनमम् । वधऽस्नैः ॥ ६ ॥

"स्या सा "स्वधा तदुदकं बलं वा “वः युष्माकं संबन्धि "क्व आसीत् नैवासीदित्यर्थः । अस्माकमुदकं त्वमनुभवसीति ब्रूथ। "यत् या स्वधा “एकम् असहायं माम् "अहिहत्ये वृष्टयर्थं मेघहननकर्मणि वृत्रवधे वा “समधत्त सहितमभूत् । समासीदिति संबन्धः । असहायस्य कथमिति मतं

सेत्स्यतीति अतः आह । "अहं “हि अहं खलु “उग्रः उद्गूर्णबलः “तविषः बलवान् “तुविष्मान् महत्त्वोपेतोऽस्मि । यस्मात् अतिबलोऽहं तस्मात् "विश्वस्य कृत्स्नस्य “शत्रोः मेघस्य । शत्रुरेवायम् ॥ कर्मणि षष्ठी ॥ सर्वं शत्रुसंघं वधस्नैः वधरूपैः शोधनैः वधकौशलैरित्यर्थः । यद्वा । वध इति वज्रनाम । वधस्नैर्वज्रस्यासनैः क्षेपणप्रकारैः । अनमम् अनमयम् । अन्तर्भावितण्यर्थोयम् ॥ वशीकरोमीत्यर्थः ॥

भूरिं चकर्थ॒ युज्येंभिर॒स्मे सं॑मा॒नेभिंर्वृषभ॒ पौंस्येंभिः ।

भूरींणि॒ हि कृ॒णवांमा शवि॒ष्ठेन्द्र॒ क्रत्वां मरुतो॒ यद्वशांम ॥७

भूरिं । च॒क॒र्थ॒ । युज्येंभिः । अ॒स्मे इतिं । स॒मा॒नेभिः॑ । वृ॒ष॒भ॒ । पौंस्येंभिः ।

भूरी॑णि । हि । कृ॒णवा॑म । श॒वि॒ष्ठ॒ । इन्द्रं॑ । क्रत्वा॑ । म॒रु॒तः॒ । यत् । वशा॑म ॥७

भूरि । चकर्थ । युज्येभिः । अस्मे इति । समानेभिः । वृषभ । पौंस्येभिः ।

भूरीणि । हि । कृणवाम । शविष्ठ । इन्द्र । क्रत्वा । मरुतः । यत् । वशाम ॥ ७ ॥

अथैवमुक्ताः इन्द्रं पुनराहुः । हे इन्द्र "वृषभ वर्षितः त्वं भूरि “चकर्थ प्रभूतं कृतवानसि सत्यमेव । तथापि "अस्मे अस्माकं "समानेभिः समानैः "युज्येभिः अस्माभिर्युक्तैः "पौंस्येभिः पुंसः कर्मभिः सामर्थ्यैरेव चकर्थ । न तु एक एवेत्यर्थः । हे "शविष्ठ । शव इति बलनाम। हे इन्द्र बलवत्तम वयं "भूरीणि "हि त्वत्कृतादपि प्रभूतानि कर्माणि कृणवाम कृतवन्तः स्म । हे “इन्द्र “क्रत्वा क्रतुना कर्मणा "यत् यद्वृष्ट्यादिकं “वशाम कामयामहे । तानि

त्वत्तोऽप्यधिकानीत्यर्थः । यतो वयं "मरुतः ॥
छान्दसमनुदात्तत्वम् ॥ एतेन स्वमहत्त्वं स्थापितं भवति ।
स्वरो व्यस्तः । अथवा इन्द्रस्येदं वाक्यम् । हे मरुतः यत्
यस्यैव तत् तस्यैव भवतु । तर्हि अहं च यूयं च सहैव
क्रत्वा कर्मणा यद्वशाम यत् वृष्टिकर्मं कामयामहे
तस्मादुदकं समानमेवेत्यर्थः । एवं मरुत इति
निघातस्वरस्य व्याख्यानम् ॥

वधीं॑ वृ॒त्रं मं॑रुत इन्द्रि॒येण॒ स्वेन॒ भामें॑न तवि॒षो बं॑भू॒वान् ।

अ॒हमे॒ता मनं॑वे वि॒श्वश्चं॑न्द्राः सु॒गा अ॒पश्चं॑कर॒ वज्रं॑बाहुः ॥८

वधीं॑म् । वृ॒त्रम् । म॒रु॒त॒ः । इ॒न्द्रि॒येणं॑ । स्वेनं॑ । भामें॑न ।
त॒वि॒षः । ब॒भू॒वान् ।

अ॒हम् । ए॒ताः । मनं॑वे । वि॒श्वऽचं॑न्द्राः । सु॒ऽगाः । अ॒पः । च॒क॒र॒ । वज्रं॑ऽबाहुः ॥८

वधीम् । वृत्रम् । मरुतः । इन्द्रियेण । स्वेन । भामेन । तविषः । बभूवान् ।

अहम् । एताः । मनवे । विश्वऽचन्द्राः । सुऽगाः । अपः । चकर । वज्रऽबाहुः ॥ ८ ॥

इदानीम् इन्द्रः आह । हे "मरुतः "अहम् इन्द्रः "इन्द्रियेण "स्वेन “भामेन कोपेन “तविषः बलवान् "बभूवान् भूतः संपन्नः । कस्मै कमिति तदुच्यते । "मनवे मनोरर्थाय “एताः "विश्वश्चन्द्राः सर्वाह्लादकाः "सुगाः सुगमनाः सर्वत्र नद्यादिषु गमनशीलाः "अपः वृष्ट्युदकानि “चकर चकार कृतवानस्मि । यतोऽहं "वज्रबाहुः । अनेन सहायनैरपेक्ष्यमुक्तं भवति ॥

अनुं॑त्त॒मा तें॑ मघव॒न्नकि॒र्नु न त्वावाँ॑ अस्ति दे॒वता॒ विदा॑नः ।

न जाय॑माना॒े नश॑ते॒ न जा॒तो यानि॑ करि॒ष्या कृ॑णु॒हि प्र॑वृद्ध ॥९

अनु॑त्तम् । आ । ते॒ । म॒घ॒ऽव॒न् । नकिः॑ । नु । न । त्वाऽवा॑न् । अ॒स्ति॒ । दे॒वता॑ । विदा॑नः ।

न । जाय॑मानः । नश॑ते । न । जा॒तः । यानि॑ । क॒रि॒ष्या । कृ॒णु॒हि । प्र॒ऽवृ॒द्ध॒ ॥९

अनुत्तम् । आ । ते । मघऽवन् । नकिः । नु । न । त्वाऽवान् । अस्ति । देवता । विदानः ।

न। जायमानः । नशते । न । जातः । यानि । करिष्या । कृणुहि । प्रऽवृद्ध ॥ ९ ॥

इदानीं ते मरुतो हर्षेण प्रत्याहुः । ॥ "आ इति स्मरणे । स्मृतवन्तो वयम् इदानीं हे "मघवन् "ते त्वया “अनुत्तम् अप्रेरितं "नकिर्नु नैवास्ति । नु निश्चये । त्वया यदुक्तं तत्सत्यमित्यर्थः । हे देव “त्वावान् त्वत्सदृशः “विदानः विद्वान् ॥ व्यत्ययेन शानच् ॥ जयोपायवेदिता “देवता देवः “न "अस्ति । किंच हे "प्रवृद्ध अतिबल "जायमानः "जातः वा कश्चिद्देवो मर्त्यो वा त्वं "यानि वृत्रवधादीनि "करिष्या कर्तव्यानि “कृणुहि कुरुषे तानि "न "नशते न व्याप्नोति । नशतिर्व्याप्तिकर्मा । नान्यः त्वच्चेष्टितानुकार्येवेत्यर्थः ।।

एकं॑स्य चिन्मे वि॒भ्व१॒स्त्वोजो॒ या नु दं॑धृ॒ष्वान्कृ॒णवैं॑ मनी॒षा ।

अ॒हं ह्यु॑१॒ग्रो म॑रुतो॒ विदा॑नो॒ यानि॒ च्यव॒मिन्द्र॒ इदीश एषाम्
॥१०

एक॑स्य । चि॒त् । मे॒ । वि॒ऽभु । अ॒स्तु॒ । ओज॑ः । या । नु ।
द॒धृ॒ष्वान् । कृ॒णवै॑ । म॒नी॒षा ।

अ॒हम् । हि । उ॒ग्रः । म॒रु॒त॒ः । विदा॑नः । यानि॑ । च्यव॑म् ।
इन्द्र॑ः । इत् । ई॒शे॒ । ए॒षा॒म् ॥१०

एकस्य । चित् । मे। विऽभु । अस्तु । ओजः । या । नु ।
दधृष्वान् । कृणवै । मनीषा ।

अहम् । हि। उग्रः । मरुतः। विदानः । यानि । च्यवम्।
इन्द्रः । इत्। ईशे। एषाम् ॥१०॥

इदानीम् इन्द्र आह। “मे मम “एकस्य चित् एकस्यैव "विभु सर्वत्रगमनशीलम् “ओजः बलम् “अस्तु । यद्वा । बलम् एकस्यैवास्तु किमर्थमिति चेत् उच्यते । "या यानि कर्माणि

"मनीषा मनीषया मनसः ईषया "दधृष्वान् धर्षितवानहं नु क्षिप्रं "कृणवै कर्तुं शक्नुवानि । हे "मरुतः अहं “हि अहं खलु “उग्रः उद्गूर्णबलः "विदानः वेदनावान् । "यानि यानि वसूनि "च्यवं अवगच्छामि “एषाम् अहमेव “इन्द्र “इत् ईश्वर एव सन् "ईशे ईश्वरो भवामि । अथवा विदानोऽहं यानि च्यवं यान्युद्दिश्य गच्छेयं एषामीशे । यतोऽहमिन्द्रः अतः शक्त इत्यर्थः ॥ ॥ २५ ॥

अमंन्दन्मा मरुत॒ः स्तोमो॒ अत्र॒ यन्में नर॒ः श्रुत्यं॒ ब्रह्मं च॒क्र ।

इन्द्रांय॒ वृष्णे॒ सुमंखाय॒ मह्यं॒ सख्ये॒ सखांयस्त॒न्वें त॒नूभिं॑ः ॥११

अमंन्दत् । मा॒ । म॒रु॒त॒ः । स्तोमः॑ । अत्रं । यत् । मे॒ । न॒र॒ः । श्रुत्यंम् । ब्रह्मं । च॒क्र ।

इन्द्रा॑य । वृष्णे॑ । सुऽमं॑खाय । मह्य॑म् । सख्ये॑ । सखा॑यः । त॒न्वे॑ । त॒नूभिः॑ ॥११

अमन्दत् । मा । मरुतः । स्तोमः । अत्र । यत् । मे । नरः । श्रुत्यम् । ब्रह्म । चक्र ।

इन्द्राय । वृष्णे । सुऽर्मखाय । मह्यम् । सख्ये । सखायः । तन्वे । तनूभिः ॥ ११ ॥

इदमपि इन्द्रवाक्यम् । हे "मरुतः "मा माम् "अत्र अस्मिन् उदकोत्पादनविषये "स्तोमः स्तोत्रम् "अमन्दत् मादयति मोदयते वा । हे "नरः "सखायः यूयं "मे मम "यत् “श्रुत्यं सर्वैः श्रोतव्यं "ब्रह्म परिवृढमेघधारणादिरूपं "चक्र कृतवन्तः। ‘स्वप्रभूतं स्तोत्रं वानुत्तमा ते' इत्यादिकम् । “इन्द्राय परमैश्वर्यगुणकाय “वृष्णे अभिसतवर्षित्रे "सुमखाय शोभनयागाय “सख्ये युष्माभिः समानख्यानाय “तनूभिः अनेकशरीरैरुपेताय "मह्यं मम “तन्वे

मदीयशरीरपोषाय भवतु । यद्वा ।
तनूभिरस्मच्छरीरभूतैर्युष्माभिः कृतं मह्यमेवास्त्वित्यर्थः ॥

ए॒वेदे॒ते प्रतिं मा॒ रोचंमाना॒ अनेंद्य॒ः श्रव॒ एषो॒ दधांनाः ।

सं॒चक्ष्यां मरुतश्च॒न्द्रवंर्णा॒ अच्छांन्त मे छ॒दयांथा च नू॒नम् ॥ १२

ए॒व । इत् । ए॒ते । प्रतिं । मा॒ । रोचंमानाः । अनेंद्यः । श्रवः॑ । आ । इषः॑ । दधांनाः ।

स॒म्ऽचक्ष्यं । म॒रु॒तः॒ । च॒न्द्रऽवंर्णाः । अच्छांन्त । मे॒ । छ॒दयांथ । च॒ । नू॒नम् ॥१२

एव । इत् । एते । प्रतिं । मा । रोचमानाः । अनेद्यः । श्रवः । आ । इषः । दधानाः ।

सम्ऽचक्ष्य । मरुतः । चन्द्रऽवर्णाः । अच्छान्त । मे।
छदयाथ । च । नूनम् ॥ १२ ॥

हे मरुतः “एवेत् एवमेव “एते यूयं "मा मां "प्रति "रोचमानाः मद्विषये संप्रीयमाणा मां ख्यापयन्तो वा “अनेद्यः अनन्तिकस्थं “श्रवः कीर्तिम् "इषः च दधानाः । "आ इति चार्थे । यद्वा । अनेद्य इति प्रशस्यनाम । प्रशस्यं यशोऽस्मत्तो दधाना अस्माभिर्वा धारयमाणाः । "चन्द्रवर्णाः ।। चन्द्रमिति हिरण्यनाम । सुवर्णवर्णा यूयं "मे मां "संचक्ष्य सम्यक्प्रकाश्य "नूनं निश्चयम् "अच्छान्त यशोभिराच्छादितवन्तः “छदयाथ आच्छादयथ “च । मां प्रति सर्वदा रोचमाना मय्येव कीर्तिमन्नं च दधाना मत्कृतैः कर्मभिर्मामेव स्तुतेत्यर्थः ॥

को न्वत्रं मरुतो मामहे व॒ः प्र यांतन॒ सखीँ॒रच्छां सखायः

।

मन्मा॑नि चित्रा अपिवा॒तयं॑न्त ए॒षां भू॑त॒ नवे॑दा म ऋ॒ताना॑म्
॥१३

कः । नु । अत्र॑ । म॒रु॒तः॒ । म॒म॒हे॒ । व॒ः । प्र । या॒त॒न॒ ।
सखी॑न् । अच्छ॑ । स॒खा॒य॒ः ।

मन्मा॑नि । चि॒त्रा॒ः । अ॒पि॒ऽवा॒तयं॑न्तः । ए॒षाम् । भू॒त॒ ।
नवे॑दाः । मे॒ । ऋ॒ताना॑म् ॥१३

कः । नु । अत्र । मरुतः । ममहे । वः । प्र। यातन ।
सखीन् । अच्छ । सखायः ।

मन्मानि । चित्राः । अपिऽवातयन्तः । एषाम् । भूत ।
नवेदाः । मे । ऋतानाम् ॥ १३ ॥

हे मरुतः युष्मान् अत्र लोके “को "नु खलु मर्त्यः "ममहे पूजयति । हे "सखायः सर्वस्य सखिवत्प्रियकारिणः सन्तः "सखीन् हविष्प्रदानेन सखिभूतान् यजमानान् "अच्छ आभिमुख्येन प्राप्तुं “प्र “यातन गच्छत । हे "चित्राः चायनीयाः यूयं "मन्मानि मननीयानि धनानि "अपिवातयन्तः संपूर्णं प्रापयन्तः "भूत भवत । किंच "मे मदीयानाम् "एषाम् “ऋतानाम् अवितथानां “नवेदाः भूत ज्ञातारो भवत ।।

आ यद्दुव॒स्याद्दु॒वसे॒ न का॒रु॒रस्माञ्च॒क्रे मा॒न्यस्यं मे॒धा ।

ओ षु वंर्त्त मरुत॒ो विप्र॒मच्छे॒मा ब्रह्मांणि जरि॒ता वों अर्चत्

॥१४

आ । यत् । दु॒व॒स्यात् । दु॒वसें । न । का॒रुः । अ॒स्मान् । च॒क्रे । मा॒न्यस्यं । मे॒धा ।

ओ इति॑ । सु । व॒र्त्त॒ । म॒रु॒तः॒ । विप्र॑म् । अच्छ॑ । इ॒मा । ब्रह्मा॑णि । ज॒रि॒ता । वः॒ । अ॒र्च॒त् ॥१४

आ। यत् । दुवस्यात् । दुवसे । न । कारुः । अस्मान् । चक्रे । मान्यस्य । मेधा ।

ओ इति । सु। वर्त्त। मरुतः। विप्रम्। अच्छ। इमा। ब्रह्माणि । जरिता । वः । अर्चत् ॥१४॥

हे मरुतः "दुवस्यात् युष्मत्परिचरणार्हात् स्तोत्रात् तेन स्तोत्रेण "दुवसे परिचरणाय पर्याप्ता "कारुः कर्त्री स्तुतिकुशला "मान्यस्य माननीयस्य विदुषः “मेधा बुद्धिः “अस्मान् । “न इति संप्रत्यर्थे । इदानींतनान् “आ “चक्रे आभिमुख्येन करोति प्राप्नोतीत्यर्थः । यद्वा । षष्ठीबहुवचने' इदं रूपम् । दुवस्यानां परिचरणार्हाणां दुवसे परिचरणायेत्यर्थः । अतो हे "मरुतः यूयं विप्रं मेधाविनं यजमानं माम् अगस्त्यम् "अच्छ आभिमुख्येन

प्राप्तुं "सु सुष्टु “ओ “वर्त्त । ओ इति निपातद्वयसमुदायरूपः एको निपातः । आङित्याभिमुख्येन। उकारोऽवधारणे । आवर्तध्वमेव । किमर्थमेवमिति उच्यते । “इमा “ब्रह्माणि इमानि परिवृढानि कर्माण्युद्दिश्य "जरिता स्तोता “वः युष्मान् "अर्चत् अर्चति । यस्मादेवं तस्मादावर्तध्वमित्यर्थः । ।

ए॒ष व॒ः स्तोमों मरुत इ॒यं गीर्मा॑न्दा॒र्यस्यं मा॒न्यस्यं का॒रोः ।

एषा यांसीष्ट त॒न्वें व॒यां वि॒द्यामे॒षं वृ॒जनं जी॒रदांनुम् ॥१५

ए॒षः । व॒ः । स्तोम॑ः । म॒रु॒त॒ः । इ॒यम् । गीः । मा॒न्दा॒र्यस्यं । मा॒न्यस्यं । का॒रोः ।

आ । इ॒षा । या॒सी॒ष्ट । त॒न्वें । व॒याम् । वि॒द्याम॑ । इ॒षम् । वृ॒जनंम् । जी॒रऽदांनुम् ॥१५

एषः। वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः ।।

आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् !! १५ ॥

हे "मरुतः “एषः "स्तोमः इदानींक्रियमाणप्रकारं स्तोत्रं वः युष्मदर्थं युष्मत्प्रीणनाय भवत्वित्यर्थः । तथा “इयं "गीः स्तुतिरूपा वागपि वो युष्मदर्थाय । यस्मात् एवं तस्मात् "मान्दार्यस्य स्तुतिविशेषैर्मन्दयितुः स्तुतिभिर्मदस्य प्रेरयितुर्वा "मान्यस्य वरप्रदानादिना माननीयस्य "कारोः स्तोतुः “इषा इच्छया “आ “यासीष्ट आगच्छत । किमर्थम् । “तन्वे शरीराय तत्पोषायेत्यर्थः। “वयां वयमपि “इषम् अन्नं "वृजनं बलं "जीरदानुं जयशीलदानम् एतत्सर्वं विद्याम । युष्मास्वागतेषु यज्ञसंपूर्त्येष्ट्यादिद्वारा लभेमहि ॥ ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थाश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके तृतीयोऽध्यायः समाप्तः ।।

## टिप्पणी

<u>अगस्त्योपरि पौराणिकाः संदर्भाः</u>

# मण्डल

## १

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |



## *अगस्त्यऋषिः*

तन्नु वोचाम रभसाय जन्मने पूर्वं महित्वं वृषभस्य केतवे ।

ऐधेव यामन्मरुतस्तुविष्वणो युधेव शक्रास्तविषाणि कर्तन ॥१॥

नित्यं न सूनुं मधु बिभ्रत उप क्रीळन्ति क्रीळा विदथेषु घृष्वयः ।

नक्षन्ति रुद्रा अवसा नमस्विनं न मर्धन्ति स्वतवसो हविष्कृतम् ॥२॥

यस्मा ऊमासो अमृता अरासत रायस्पोषं च हविषा ददाशुषे ।

उक्षन्त्यस्मै मरुतो हिता इव पुरू रजांसि पयसा मयोभुवः ॥३॥

आ ये रजांसि तविषीभिरव्यत प्र व एवासः स्वयतासो अध्रजन् ।

भयन्ते विश्वा भुवनानि हर्म्या चित्रो वो यामः प्रयतास्वृष्टिषु ॥४॥

यत्त्वेषयामा नदयन्त पर्वतान्दिवो वा पृष्ठं नर्या अचुच्यवुः ।

विश्वो वो अज्मन्भयते वनस्पती रथीयन्तीव प्र जिहीत ओषधिः ॥५॥

यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन ।

यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा ॥६॥

प्र स्कम्भदेष्णा अनवभ्रराधसोऽलातृणासो विदथेषु सुष्टुताः ।

अर्चन्त्यर्कं मदिरस्य पीतये विदुर्वीरस्य प्रथमानि पौंस्या ॥७॥

शतभुजिभिस्तमभिह्रुतेरघात्पूर्भी रक्षता मरुतो यमावत ।

जनं यमुग्रास्तवसो विरप्शिनः पाथना शंसात्तनयस्य पुष्टिषु ॥८॥

विश्वानि भद्रा मरुतो रथेषु वो मिथस्पृध्येव तविषाण्याहिता ।

अंसेष्वा वः प्रपथेषु खादयोऽक्षो वश्चक्रा समया वि वावृते ॥९॥

भूरीणि भद्रा नर्येषु बाहुषु वक्षस्सु रुक्मा रभसासो अञ्जयः ।

अंसेष्वेताः पविषु क्षुरा अधि वयो न पक्षान्व्यनु श्रियो धिरे ॥१०॥

महान्तो मह्ना विभ्वो विभूतयो दूरेदृशो ये दिव्या इव स्तृभिः ।

मन्द्राः सुजिह्वाः स्वरितार आसभिः सम्मिश्ला इन्द्रे मरुतः परिष्टुभः ॥११॥

तद्वः सुजाता मरुतो महित्वनं दीर्घं वो दात्रमदितेरिव व्रतम् ।

इन्द्रश्चन त्यजसा वि ह्रुणाति तज्जनाय यस्मै सुकृते अराध्वम् ॥१२॥

तद्वो जामित्वं मरुतः परे युगे पुरू यच्छंसममृतास आवत ।

अया धिया मनवे श्रुष्टिमाव्या साकं नरो दंसनैरा चिकित्रिरे ॥१३॥

येन दीर्घं मरुतः शूशवाम युष्माकेन परीणसा तुरासः ।

आ यत्ततनन्वृजने जनास एभिर्यज्ञेभिस्तदभीष्टिमश्याम् ॥१४॥

एष व स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।

एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥१५॥

## सायणभाष्यम्

# ॥ श्रीगणेशाय नमः ।।

# यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।

इत्थं द्वितीयाष्टकगस्तृतीयोऽध्याय आदरात् ।

व्याख्यातः सायणार्येण पुरुषार्थप्रदर्शकः ॥

अथ चतुर्थोऽध्याय आरभ्यते। ‘कया शुभा' इत्यस्मिंस्त्रयोविंशेऽनुवाके पञ्चदश सूक्तानि । तत्र ‘ तन्नु' इत्येतत् द्वितीयं सूक्तं पञ्चदशर्चम् । अत्रानुक्रमणिका- ‘तन्न्वगस्त्यो मारुतं हि द्वित्रिष्टुबन्तं मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वासतीवरे कुम्भे रेतोऽपतत्ततोऽगस्त्यवसिष्ठावजायेताम्' इति । ‘सूक्तसंख्यानुवर्तत आन्यस्याः सूक्तसंख्यायाः ' ( अनु. १२. १ ) इति परिभाषितत्वात् पञ्चदशर्चम् । उक्तलक्षणेनागस्त्येन दृष्टत्वात्तस्यार्षम् । “ मारुतं हि ' इत्युक्तत्वात् तुह्यादिपरिभाषया इदमादिसूक्तत्रयं मरुद्देवताकम् । अन्त्ये द्वे त्रिष्टुभौ

शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । विनियोगो लैङ्गिकः ॥

तन्नु वोंचाम रभ॒साय॒ जन्मं॑ने॒ पूर्वं॑ महि॒त्वं वृं॑ष॒भस्यं के॒तवें ।

ऐ॒धेव॒ यामं॑न्मरुतस्तुविष्वणो यु॒धेवं शक्रास्तवि॒षाणिं कर्तन ॥१

तत् । नु । वो॒चा॒म॒ । र॒भ॒सायं । जन्मं॑ने । पूर्वंम् । म॒हि॒ऽत्वम् । वृ॒ष॒भस्यं । के॒तवें ।

ऐ॒धाऽइंव । यामं॑न् । म॒रु॒तः॒ । तु॒वि॒ऽस्व॒नः॒ । यु॒धाऽइंव । श॒क्रा॒ः । त॒वि॒षाणिं । क॒र्त॒न॒ ॥१

तत् । नु । वोचाम । रभसाय । जन्मने । पूर्वम् । महिऽत्वम् । वृषभस्य । केतवे ।

ऐधाऽइव । यामन् । मरुतः । तुविऽस्वनः । युधाऽइव । शक्राः । तविषाणि । कर्तन ॥ १ ॥

हे "मरुतः वयं युष्मदीयं "तत् तादृशं प्रसिद्धं "पूर्वं पूरकं पूर्वतनं वा "महित्वं माहात्म्यं "नु "क्षिप्रं “वोचाम ब्रूमः । किमर्थम् । "रभसाय राभस्ययुक्ताय "जन्मने वेद्यां प्रादुर्भावाय वेद्यां संनिधानाय इत्यर्थः । तदपि किमर्थमित्यत आह । "वृषभस्य फलस्य वर्षितुर्यज्ञस्य "केतवे प्रज्ञानाय । वायुप्रेरणेन मेघागमनं प्रसिद्धम् । हे “तुविष्वणः गमनसंरम्भेण प्रभूतध्वनियुक्ता हे "शक्राः सर्वमपि कर्तुं शक्ताः यूयं "यामन् यामनि यागगमने प्रस्तुते सति "ऐधेव ऐधानि एधःसंबन्धीनि तेजांसीव प्राप्येण महत्त्वेन “तविषाणि बलानि सामर्थ्यानि कर्तन कुरुत तत्स्तुम इत्यर्थः । तत्र दृष्टान्तः । "युधेव युद्धेन तत्तद्युद्धनिमित्तं यथा तविषाणि कुरुथ तद्वत् ॥

नित्यं न सूनुं मधु बिभ्रंत उप क्रीळंन्ति क्रीळा विदथेंषु घृष्वंयः ।

नक्षंन्ति रुद्रा अवंसा नमस्विनं न मंर्धन्ति स्वतंवसो हविष्कृतंम् ॥२

नित्यंम् । न । सूनुम् । मधुं । बिभ्रंतः । उपं । क्रीळंन्ति । क्रीळाः । विदथेंषु । घृष्वंयः ।

नक्षंन्ति । रुद्राः । अवंसा । नमस्विनंम् । न । मर्धन्ति । स्वऽतंवसः । हविःऽकृतंम् ॥२

नित्यम् । न । सूनुम् । मधु । बिभ्रतः । उप । क्रीळन्ति । क्रीळाः । विदथेषु । घृष्वयः ।

नक्षन्ति । रुद्राः । अवंसा । नमस्विनम् । न । मर्धन्ति । स्वऽतवसः । हविःऽकृतम् ॥२॥

“नित्यं "न "सूनुम् औरसं प्रियं पुत्रमिव "मधु मधुरं हविः "बिभ्रतः धारयन्तो मरुतः “विदथेषु यागेषु “घृष्वयः रक्षःप्रभृतीनां घर्षकाः सन्तः क्रीळाः क्रीडनशीलाः “उप उपेत्य "क्रीळन्ति विहरन्ति । किंच "रुद्राः । रुद्रपुत्रा मरुतोऽपि रुद्रा उच्यन्ते जन्यजनकयोरभेदात् । मरुतां रुद्रपुत्रस्वं पुराणेषु तपसा तुष्टौ पार्वतीपरमेश्वरौ मरुतः पुत्रत्वेन स्वीचक्रतुरिति प्रसिद्धम् । "नमस्विनं नमस्कारोपलक्षितस्तोत्रोपेतं "हविष्कृतं हविषः कर्तारं प्रदातारं यजमानम् “अवसा रक्षणेन तर्पणेन वा निमित्तभूतेन "नक्षन्ति व्याप्नुवन्ति । किंच "स्वतवसः स्वायत्तबला मरुतो यजमानं न “मर्धन्ति न संग्रामयन्ति न क्लेशयन्तीत्यर्थः ॥

यस्मा॒ ऊमा॑सो अ॒मृता॒ अरा॑सत रा॒यस्पोषं॑ च ह॒विषा॑ ददा॒शुषे॑ ।

उ॒क्षन्त्यं॑स्मै म॒रुतो॑ हि॒ता इं॑व पु॒रू रजां॑सि॒ पयं॑सा मयो॒भुवं॑ः ॥३

यस्मैं । ऊमां॑सः । अ॒मृता॑ः । अरां॑सत । रा॒यः । पोषं॑म् । च॒ । ह॒विषां॑ । द॒दा॒शुषें॑ ।

उ॒क्षन्तिं॑ । अ॒स्मै॒ । म॒रुत॑ः । हि॒ताःऽइं॑व । पु॒रु । रजां॑सि । पयं॑सा । म॒य॒ःऽभुव॑ः ॥३

यस्मै । ऊमासः । अमृताः । अरासत । रायः । पोषम् । च । हविषा । ददाशुषे ।

उक्षन्ति । अस्मै । मरुतः । हिताःऽइव । पुरु । रजांसि । पर्यसा । मयःऽभुवः ॥ ३ ॥

"यस्मै यजमानाय "हविषा "ददाशुषे सोमादिहविर्दत्तवते हविषा प्रीताः “ऊमासः अवितारः “अमृताः अमरणधर्माणो मरुतः "रायस्पोषं धनस्य पुष्टिम् ।

चशब्दात् पश्वादिपुष्टिम् । "अरासत प्रायच्छन् । रासतिर्दानार्थः । "अस्मै यजमानाय “हिताइव हिताचरणाः सखाय इव सन्तः "मयोभुवः सुखस्य भावयितारः "मरुतः "रजांसि लोकान् "पुरु प्रभूतं यथा भवति तथा “पयसा उदकेन सस्याद्युत्पत्त्यर्थम् "उक्षन्ति सिञ्चन्ति ।।।

आ ये रजां॑सि॒ तवि॑षीभि॒रव्यं॑त॒ प्र व॒ एवा॑स॒ः स्वयं॑तासो अध्रजन् ।

भयं॑न्ते॒ विश्वा॒ भुव॑नानि ह॒र्म्या चि॒त्रो वो॒ याम॒ः प्रयं॑तास्वृ॒ष्टिषु॑ ॥४

आ । ये । रजां॑सि । तवि॑षीभिः । अव्यं॑त । प्र । व॒ः । एवा॑सः । स्वऽयं॑तासः । अ॒ध्र॒ज॒न् ।

भयंन्ते । विश्वां । भुवंनानि । हृर्म्या । चि॒त्रः । व॒ः । यामः॑ । प्रऽयंतासु । ऋ॒ष्टिषुं ॥४

आ। ये । रजांसि । तविषीभिः । अव्यत । प्र । वः । एवासः । स्वऽयतासः । अध्रजन् ।

भयन्ते । विश्वा । भुवनानि । हर्म्या । चित्रः । वः । यामः । प्रऽयतासु । ऋष्टिषु ॥ ४ ॥

हे मरुतः युष्मत्संबन्धिनः "ये “एवासः एवाः अश्वविशेषाः “तविषीभिः स्वकीयैर्बलैर्वृष्टिप्रदानादिरूपैः "रजांसि लोकान् “आ “अव्यत सर्वत आवृण्वन्ति ते “वः युष्माकम् एवासः अश्वाः “स्वयतासः स्वयमेव सारथिना विनैव युक्ताः “प्र “अध्रजन् प्रकर्षेण गच्छन्ति व्याप्नुवन्ति । किंच युष्मदागमनात् "विश्वा "भुवनानि सर्वाणि भूतजातानि विश्वा “हर्म्या सर्वाणि हर्म्याणि च “भयन्ते बिभ्यति पतनात् । यस्मादेवं तस्मात् “वो “यामः “चित्रः चायनीयः ।

आश्चर्यभूत इत्यर्थः । भीतेः कारणमाह । “ऋष्टिषु युद्धस्थासु हेतिषु “प्रयतासु प्रकर्षेणोद्यतासु सतीषु । अथवा भीतौ दृष्टान्तः । ऋष्टिषु प्रयतासु सतीषु । लुप्तोपमेयम् । आयुधेषूद्यतेषु यथा जना बिभ्यति तद्वद्युष्मदागमनात् बिभ्यतीत्यर्थः ॥

यत्त्वे॒षया॑मा न॒दय॑न्त॒ पर्व॑तान्दि॒वो वा॑ पृ॒ष्ठं नर्या॒ अचु॑च्यवुः ।

विश्वो॑ वो॒ अज्म॑न्भयते॒ वन॒स्पती॑ रथी॒यन्ती॑व॒ प्र जि॑हीत॒ ओष॑धिः ॥५

यत् । त्वे॒षऽया॑माः । न॒दय॑न्त । पर्व॑तान् । दि॒वः । वा॒ । पृ॒ष्ठम् । नर्याः॑ । अचु॑च्यवुः ।

विश्वाः॑ । व॒ः । अज्म॑न् । भ॒य॒ते॒ । वन॒स्पतिः॑ । र॒थि॒यन्ती॑ऽइव । प्र । जि॒ही॒ते॒ । ओष॑धिः ॥५

यत् । त्वेषऽयामाः । नदयन्त । पर्वतान् । दिवः । वा । पृष्ठम् । नर्याः । अचुच्यवुः ।

विश्वः । वः । अज्मन्। भयते । वनस्पतिः। रथियन्तीऽइव । प्र। जिहीते। ओषधिः ॥ ५ ॥

मरुतः “त्वेषयामाः प्रदीप्तगमनाः "यत् यदा "पर्वतान् पर्ववतो गिरेर्गह्वराणि पूरकान् मेघान् वा "नदयन्त नादयन्ति "वा अथवा "दिवः विद्योतनात्मकस्यान्तरिक्षस्य "पृष्ठम् उपरिभागं "नर्याः नरेभ्यो हिताः “अचुच्यवुः गच्छन्ति तदा “वः युष्मत्संबन्धिनि "अज्मन् गमने निमित्तभूते सति “विश्वः “वनस्पतिः वनस्य पालयिता वृक्षसमूहः "भयते बिभेति । तथा “ओषधिः प्रियङ्गुव्रीह्यादिः “प्र “जिहीते प्रकर्षेण गच्छति स्वस्थानात् इतस्ततश्चलतीत्यर्थः । तत्र दृष्टान्तः। “रथीयन्तीव

रथमात्मन इच्छन्ती स्त्री । रथारूढेत्यर्थः । तादृशी स्त्रीव । सा यथा चलति तद्वत् ॥ ॥ १ ॥

यू॒यं नं उग्रा मरुतः सुचे॒तुनारिंष्टग्रामाः सुम॒तिं पिंपर्तन ।

यत्रां वो दि॒द्युद्रदंति॒ क्रिविंर्दती रि॒णातिं प॒श्वः सुधिंतेव ब॒र्हणां ॥६

यू॒यम् । न॒ः । उ॒ग्रा॒ः । म॒रु॒त॒ः । सु॒ऽचे॒तुनां । अरिंष्टऽग्रामाः । सु॒ऽम॒तिम् । पि॒प॒र्त॒न॒ ।

यत्रं । व॒ः । दि॒द्युत् । रदंति । क्रिविंःऽदती । रि॒णातिं । प॒श्वः । सुधिंताऽइव । ब॒र्हणां ॥६

यूयम् । नः । उग्राः । मरुतः । सुऽचेतुना । अरिष्टऽग्रामाः । सुऽमतिम् । पिपर्तन ।

यत्र । वः । दिद्युत् । रदति । क्रिविःऽदती । रिणाति । पश्वः । सुधिताऽइव । बर्हणा ॥६॥

हे “उग्राः उद्गूर्णबलाः "मरुतः "यूयं "सुचेतुना शोभनचेतसा "अरिष्टग्रामाः अहिंसितसंघाः सन्तः “नः अस्माकं "सुमतिं शोभनबुद्धिं "पिपर्तन पूरयत । कस्मिन्काले इति तदुच्यते । "यत्र यस्मिन् काले “वः युष्मत्संबन्धिनी “क्रिविर्दती विक्षेपणशीलदन्ती “दिद्युत् हेतिः "रदति विलिखति मेघसंस्त्यायं “पश्वः पशूंश्च "रिणाति रेषति हिनस्ति । वायौ वाति सति पशवः शीर्यन्ते इति प्रसिद्धम् । हिंसायां दृष्टान्तः । "सुधिता सुहिता सुष्ठु प्रेरिता “बर्हणा हतिः तत्साधना हेतिर्वा यथा रिणाति तद्वत् ॥

प्र स्कुम्भदेष्णा अनवभ्रराधसोऽलातृणासो विदथेषु सुष्टुताः ।

तद्वत् त्वां वशीकुर्म इत्यर्थः। किंच “वायोः धौतयुवक्षेपिष्ठस्य शीघ्रवरप्रदस्य “ते ॥ कर्मणि षष्ठी । वायुं त्वां “स्तुतः येऽस्मदीयाः स्तोतारः “चकनन्त कामयन्ते अस्तवन् । “याः स्तुतयः त्वामेव अकामयन्तेति वा योजना ॥ कनतेर्ण्यन्तात् लुङि चङि रूपम् । ‘चङ्यन्यतरस्याम् ' इति चङः पूर्वमक्षरमुदात्तम् ॥ त्वां होत्रादयः “वाजैः हविर्लक्षणैरन्नैः "पीपयन्त आप्याययन्ति । तत्र दृष्टान्तः । "मध्वः मधुरस्य स्तन्यस्य लाभाय वाजैः सारवद्भिरन्नविशेषैः "स्तनं “न । तं यथा आप्याययन्ति तद्वद्वयं त्वां बहुकृतप्रदानाय स्तुत्या हविषा आप्याययामः । एवं तु दातव्यत्वेन प्रसिद्धं धनं सर्वदा देहीत्यर्थः । ।

त्वे रायं इन्द्र तो॒शतंमाः प्रणे॒तार॒ः कस्यं चिदृता॒योः ।

ते षु णों म॒रुतों मृळयन्तु ये स्मां पु॒रा गांतू॒यन्तींव दे॒वाः ॥५

त्वे इतिं । रायः॑ । इ॒न्द्र॒ । तो॒शऽतं॑माः । प्र॒ऽने॒तारः॑ । कस्यं । चि॒त् । ऋ॒त॒ऽयोः ।

ते । सु । नः॒ । म॒रुतः॑ । मृ॒ळ॒य॒न्तु॒ । ये । स्म॒ । पु॒रा । गा॒तु॒यन्तिं॑ऽइव । दे॒वाः ॥५

त्वे इति । रायः । इन्द्र । तोशऽतमाः । प्रऽनेतारः । कस्य । चित् । ऋतऽयोः ।

ते। सु । नः । मरुतः । मृळयन्तु । ये । स्म । पुरा । गातुयन्तिऽइव । देवाः ॥ ५ ॥

हे “इन्द्र “त्वे तव "रायः धनविशेषाः “तोशतमाः अतिशयेन प्रीणयितारः ॥ तुष्यतेस्तोषः । छान्दसं शत्वम् ॥ यद्वा । ते रायो रातयो बन्धवो बन्धुभूताः सखिभूता मरुतः तोशतमाः । तोशतिर्वधकर्मा, नितोशयति निबर्हयति' ( नि. २. १९. २९) इति तन्नामसु पाठात् । तोशतमा

हिंसितृतमा अवर्षकाणां मेघानाम् । "कस्य चिदृतायोः । ऋतमिति यज्ञनाम। कस्यापि यज्ञेच्छोर्यजमानस्य "प्रणेतारः प्रकर्षेण निर्वोढारः। "ते "मरुतः "नः अस्मान् सुष्टु "मृळयन्तु । के ते। "ये “स्म ये खलु "देवाः द्योतनशीला मरुतः "पुरा पूर्वं "गातुयन्तीव यज्ञगमनमिच्छन्तीव ते आगत्य मृळयन्तु ॥ ॥ ८ ॥

प्रति॒ प्र या॑हीन्द्र मी॒ळ्हुषो॒ नॄन्म॒हः पार्थि॑वे॒ सद॑ने यतस्व ।

अध॒ यदे॑षां पृथुबु॒ध्नास॒ एता॑स्ती॒र्थे नार्यः पौंस्या॑नि त॒स्थुः ॥ ६

प्रति॑ । प्र । या॒हि॒ । इ॒न्द्र॒ । मी॒ळ्हुषः॑ । नॄन् । म॒हः । पार्थि॑वे । सद॑ने । य॒त॒स्व॒ ।

अध॑ । यत् । ए॒षा॒म् । पृ॒थु॒ऽबु॒ध्नासः॑ । एताः॑ । ती॒र्थे । न ।
अ॒र्यः । पौंस्या॑नि । त॒स्थुः ॥६

प्रति । प्र । याहि । इन्द्र । मीळ्हुषः । नॄन् । महः । पार्थिवे
। सदने । यतस्व ।

अध । यत् । एषाम् । पृथुऽबुध्नासः । एताः । तीर्थे । न ।
अर्यः । पौंस्यानि । तस्थुः ॥ ६ ॥

हे "इन्द्र त्वं "मीळ्हुषः उदकसेक्तॄन् "नॄन् जगन्नेतॄन्
नराकारान् वा "महः महतः मेघान् “प्रति “प्र याहि
अभिगच्छ । मेघानां वृत्ररूपेण नराकारत्वं युक्तम् । गत्वा
च "पार्थिवे "सदने । पृथिवीत्यन्तरिक्षनाम । तत्संबन्धिनि
स्थाने "यतस्व प्रयत्नं कुरु । तैः सह युध्यस्वेत्यर्थः । यद्वा
। हविष्प्रदातॄन् कर्मनिर्वाहकान् महतो यजमानान् प्रति
गच्छ। गत्वा च पार्थिवे सदने देवयजने यतस्व । यत्नं कुरु
हविर्भोजनाय । अध अपि "यत् यदा “एषां

त्वत्साहाय्यकारिणां मरुतां संबन्धिनः “पृथुबुध्नासः विस्तीर्णमूलाः “एताः पृषद्वर्णा गन्तारो वा अश्वाः "अर्यः अरेः शत्रोः "पौंस्यानि "तीर्थे “न युद्धमार्गं इव “तस्थुः तिष्ठन्ति मेघानाक्रमन्ते । यद्वा । एषां मरुतां पृथुबुध्नासो बृहन्मूला एताः कृष्णवर्णा मेघास्तिष्ठन्ति । तत्र दृष्टान्तः । अर्यः अरणीयस्य स्वामिनः पौंस्यानि बलानि तीर्थं न राजवीथ्यां यथा तिष्ठन्ति तद्वत् ॥

प्रतिं घो॒राणा॒मेतांनाम॒यासां म॒रुतां शृण्व आयु॒तामुंप॒ब्दिः ।

ये मर्त्यं पृतना॒यन्त॒मूमैंरृणा॒वानं॒ न प॒तयंन्त॒ सर्गैः ॥७

प्रतिं । घो॒राणांम् । एतांनाम् । अ॒यासांम् । म॒रुतांम् । शृ॒ण्वे॒ । आ॒ऽयु॒ताम् । उ॒प॒ब्दिः ।

ये । मर्त्यं॑म् । पृ॒त॒ना॒ऽयन्तं॑म् । ऊमैः॑ । ऋ॒ण॒ऽवानं॑म् । न । प॒तयं॑न्त । सर्गैः॑ ॥७

प्रति । घोराणाम् । एतानाम् । अयासम् । मरुताम् । शृण्वे । आऽयताम् । उपब्दिः ।

ये । मर्त्यम् । पृतनाऽयन्तम् । ऊमैः । ऋणऽवानम् । न । पतयन्त । सर्गैः ॥ ७ ॥

हे इन्द्र ते संबन्धिनां “घोराणां भयानकानां शब्दाभिमानानां वा “एतानाम् एतवर्णानाम् “अयासाम् अयमानानां गमनशीलानां "मरुताम् “आयताम् आगन्तॄणां मरुताम् “उपब्दिः उप गुर्वादिसमीपे गम्यते ज्ञायते उपपद्यते इति वा उपब्दिर्वाक्। “शृण्वे श्रूयते ।। कर्मणि कर्तृप्रत्ययः । ते एव विशिष्यन्ते। "ये मरुतः "मर्त्यं मरणधर्माणम् "ऊमैः स्वरक्षणैरुदकनिगमनसाधनैर्वा "पृतनायन्तं पृतनामात्मन इच्छन्तं वैरिणं मेघं वा सर्गैः

सृष्टैः स्वकीयप्रहारविशेषैः "पतयन्त पातयन्ति तेषामेव ध्वनिः श्रूयते इत्यर्थः । पातने दृष्टान्तः । “सर्गैः “ऋणवानं “न ॥ ‘छन्दसीवनिपौ° ' इति वनिप् ॥ ऋणवन्तम् अधम वैरिणमिव। तं यथा पीडयित्वा तदीयं धनमपहरन्ति तद्वत् । एवंमहानुभावा मरुतस्तवानुगा इतीन्द्रस्य स्तुतिः ॥

त्वं मानेंभ्य इन्द्र वि॒श्वजंन्या॒ रदां म॒रुद्भिंः शु॒रुधो॒ गोअंग्राः ।

स्तवांनेभिः स्तवसे देव दे॒वैर्वि॒द्यामे॒षं वृ॒जनं जी॒रदांनुम् ॥८

त्वम् । मानेंभ्यः । इ॒न्द्र॒ । वि॒श्वऽजंन्या । रदं । म॒रुत्ऽभिः । शु॒रुधः । गोऽअंग्राः ।

स्तवांनेभिः । स्त॒व॒से॒ । दे॒व॒ । दे॒वैः । वि॒द्यामं । इ॒षम् । वृ॒जनंम् । जी॒रऽदांनुम् ॥८

त्वम् । मानेभ्यः । इन्द्र । विश्वऽजन्या । रद । मरुत्ऽभिः । शुरुधः। गोऽअग्राः ।

स्तवानेभिः । स्तवसे । देव । देवैः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥

हे "इन्द्र "त्वं "मानेभ्यः मानार्थम् । चित्तेनेत्यर्थः ॥ तादर्थ्ये चतुर्थी । "विश्वजन्या विश्वजन्यः । सोः आंकारः ।। विश्वे प्राणिनः उत्पादनीया यस्य तादृशस्त्वं सर्वजनहितशक्त्या वा "मरुद्भिः सह "शुरुधः शोकस्य रोधयित्रीः शोषिकाः "गोअग्राः गर्जितमुदकं वा अग्रे पुरतो यासां ता मेघपङ्क्तीः "रद विलिख विदारय । हे "देव द्योतमान त्वं "स्तवानेभिः स्तूयमानैः "देवैः अन्यैर्मरुदादिभिर्ऋत्विग्भिर्वा "स्तवसे स्तूयसे । उभयत्र कर्मणि कर्तृप्रत्ययः ।। विद्यामेत्ययं व्याख्यातः । ॥ ९ ॥

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|---|
| १.७ | १.३७ | १.६७ | १.९७ | १.१२७ | १.१५७ | १.१८७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.८ | १.३८ | १.६८ | १.९८ | १.१२८ | १.१५८ | १.१८८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.९ | १.३९ | १.६९ | १.९९ | १.१२९ | १.१५९ | १.१८९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१० | १.४० | १.७० | १.१०० | १.१३० | १.१६० | १.१९० |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.११ | १.४१ | १.७१ | १.१०१ | १.१३१ | १.१६१ | १.१९१ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१२ | १.४२ | १.७२ | १.१०२ | १.१३२ | १.१६२ | |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | |
| १.१३ | १.४३ | १.७३ | १.१०३ | १.१३३ | १.१६३ | |

# ऋग्वेदः सूक्तं १.१७०



## दे. इन्द्रः। बृहती, २-४ अनुष्टुप्, ५ त्रिष्टुप्

न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।

अन्यस्य चित्तमभि संचरेण्यमुताधीतं वि नश्यति ॥१॥

किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव ।

तेभिः कल्पस्व साधुया मा नः समरणे वधीः ॥२॥

किं नो भ्रातरगस्त्य सखा सन्नति मन्यसे ।

विद्मा हि ते यथा मनोऽस्मभ्यमिन्न दित्ससि ॥३॥

अरं कृण्वन्तु वेदिं समग्निमिन्धतां पुरः ।

तत्रामृतस्य चेतनं यज्ञं ते तनवावहै ॥४॥

त्वमीशिषे वसुपते वसूनां त्वं मित्राणां मित्रपते धेष्ठः ।

इन्द्र त्वं मरुद्भिः सं वदस्वाध प्राशान ऋतुथा हवींषि ॥५॥

## सायणभाष्यम्

'न नूनमस्ति' इति पञ्चर्चं षष्ठं सूक्तमागस्त्यमैन्द्रम् । अत्रानुक्रमणिका-न नूनं पञ्चागस्त्येनैन्द्रे हविषि मरुतामुद्यत इन्द्रागस्त्ययोः संवादः ऐन्द्रस्तत्राद्या तृतीया चेन्द्रवाक्यं चतुर्थी चादौ बृहती तिस्रोऽनुष्टुभः' इति । सूक्तस्येन्द्रागस्त्यसंवादरूपत्वादाद्या तृतीया चतुर्थी

चेन्द्रवाक्यम् । अतस्तासां यस्यवाक्यन्यायेन स ऋषिः । शिष्टे अगस्त्यवाक्ये। अतस्तयोः स एवर्षिः। आद्या च बृहती ततस्तिस्रोऽनुष्टुभः । अन्त्या अविशेषात् त्रिष्टुप् ॥ विशेषविनियोगो लैङ्गिकः। अत्र यास्कः-'अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः संप्रदित्सांचकार स इन्द्र एत्य परिदेवयांचक्रे' (निरु. १.५ ) इति ॥

न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।

अन्यस्य चित्तमभि संचरेण्यमुताधीतं वि नश्यति ॥१

न । नूनम् । अस्ति । नो इति । श्वः । कः । तत् । वेद । यत् । अद्भुतम् ।

अन्यस्य । चित्तम् । अभि । सम्ऽचरेण्यम् । उत । आऽधीतम् । वि । नश्यति ॥१

न । नूनम् । अस्ति । नो इति । श्वः । कः । तत् । वेद । यत् । अद्भुतम् ।

अन्यस्य । चित्तम् । अभि । सम्ऽचरेण्यम् । उत।
आऽधीतम् । वि। नश्यति ॥ १ ॥

परिदेवनप्रकारः प्रतिपाद्यते । इन्द्र आह । अद्यतनं यदस्ति तत् "नूनम् अद्य न अस्ति । नूनमत्र विचिकित्सार्थे । अत्र अद्य इति यद्यपि नास्ति तथापि उत्तरवाक्ये श्वः इति दर्शनादत्र अद्येति गम्यते । तथा “श्वः अपि नूनं "नो। उशब्दः अवधारणे। श्वस्तनमपि नैव नास्ति । अद्य यथा अस्मदर्थनिरुप्तम् अस्मभ्यं नास्ति किल श्वः कथं लप्स्यते इति भावः। "यदद्भुतम् अन्यस्मै निरुप्य अन्यस्मै दत्तमति यदस्ति वैपरीत्यं “तत् "कः "वेद । यद्वा । यदद्भुतं भावि कार्यं यदस्ति तत्को वेद । अद्य श्वो वा लभ्यते इत्याशा न कार्येत्युक्तं भवति । तदेवाह । “अभि “संचरेण्यं सर्वतः

संचारि "अन्यस्य “चित्तं मानसं जानतीति शेषः । “उत अपि च “आधीतम् आध्यातं चिन्तितमपि न दृश्यं किमु सकृत्स्मृतं “वि “नश्यति इति ॥

किं न॑ इन्द्र जिघांससि॒ भ्रात॑रो म॒रुत॒स्तव॑ ।

तेभि॑ः कल्पस्व साधु॒या मा न॑ः स॒मर॑णे वधीः ॥२

किम् । न॒ः । इ॒न्द्र॒ । जि॒घां॒स॒सि॒ । भ्रात॑रः । म॒रुत॑ः । तव॑ ।

तेभि॑ः । क॒ल्प॒स्व॒ । सा॒धु॒ऽया । मा । न॒ः । स॒म्ऽअर॑णे । व॒धी॒ः ॥२

किम् । नः । इन्द्र । जिघांससि । भ्रातरः । मरुतः । तव ।

तेभिः । कल्पस्व । साधुऽया। मा। नः । सम्ऽअरणे। वधीः ॥ २ ॥

इदमगस्त्यवाक्यम् । हे “इन्द्र "नः अस्मान् अनपराधिनः "किं "जिघांससि हन्तुमिच्छसि । कथमवध्यत्वमिति अत आह । "मरुतः “तव "भ्रातरः । त्वया भोगप्रदानेन भरणीया इत्यर्थः । अतो वयमवध्या इत्युक्तं भवति । मरुतामिन्द्रभ्रातृत्वम् एकस्मिन्नेवादितिगर्भे उत्पन्नत्वात् । सा चोत्पत्तिः पुराणेषु प्रसिद्धा । सन्तु भ्रातरस्ततश्च किमिति अत आह । "तेभिः तैर्मरुद्भिः सह "साधुया साधुत्वं “कल्पस्व कल्पय हविर्भागं तैः सह युद्धं वा । "नः अस्मान् "समरणे संग्रामे “मा “वधीः मा हिंसीः । यद्वा । लुप्तो दृष्टान्तः । संग्रामे यथा विरोधिनं हंसि न तथास्मानिति ॥

किं नों भ्रातरगस्त्य॒ सखा॒ सन्नतिं मन्यसे ।

वि॒द्मा हि ते॒ यथा॒ मनो॒ऽस्मभ्य॒मिन्न दित्ससि ॥३

कि॒म् । नः॒ । भ्रा॒तः॒ । अ॒ग॒स्त्य॒ । सखा॑ । सन् । अति॑ । म॒न्य॒से॒ ।

वि॒द्म । हि । ते॒ । यथा॑ । मनः॑ । अ॒स्मभ्य॑म् । इत् । न । दि॒त्स॒सि॒ ॥३

किम् । नः । भ्रातः। अगस्त्य । सखा । सन् । अति । मन्यसे ।

विद्म । हि। ते। यथा । मनः । अस्मभ्यम् । इत् । न । दित्ससि ॥ ३ ॥

इदमिन्द्रवाक्यम् । हे “भ्रातः हे "अगस्त्य । हविष्प्रदानवरप्रदानाभ्यां परस्परोपकारत्वात् भ्रातृत्वम् । तादृशस्त्वं "सखा सन् अस्मद्धितकार्यपि सन् “नः अस्मान् "किम् "अति "मन्यसे । कस्मादपराधादतिक्रम्य मनुषे । अपलपसि । नायमपलापः किंतु तथ्यमेवेति चेत् उच्यते ।

गन्तव्यं “ते तव “मनः मानसं "यथा यथावस्तु "विद्म जानीमः । कथं जानीथेति उच्यते । "अस्मभ्यमिन्न “दित्ससि । अस्मदर्थं निरुप्तमस्मभ्यं दातुं नेच्छस्येव । इत् एवार्थे ।

अरं॑ कृण्वन्तु॒ वेदिं॒ सम॒ग्निमिं॑न्धतां पु॒रः ।

तत्रा॒मृतं॑स्य॒ चेतं॑नं य॒ज्ञं तें तनवावहै ॥४

अरं॑म् । कृ॒ण्व॒न्तु॒ । वेदिं॑म् । सम् । अ॒ग्निम् । इ॒न्ध॒ता॒म् । पु॒रः ।

तत्रं॑ । अ॒मृतं॑स्य । चेतं॑नम् । य॒ज्ञम् । ते॒ । त॒न॒वा॒व॒है॒ ॥४

अरम् । कृण्वन्तु । वेदिम् । सम् । अग्निम् । इन्धताम् । पुरः ।

तत्र । अमृतस्य । चेतनम् । य॒ज्ञम् । ते । तनवावहै ॥ ४ ॥

इदमिन्द्रवाक्यम् । अपरे अगस्त्यवाक्यमाहुः । हे ऋत्विजो यूयं अगस्त्योऽङ्गीकृतवान् तस्मात् "वेदिम् “अरं "कृण्वन्तु । संमार्जनपर्युक्षणादिना परिचरन्तु । तथा "पुरः पुरस्तात् "अग्निम् आहवनीयादिकं “सम् "इन्धताम् इध्मप्रक्षेपेण प्रज्वालयन्तु । "तत्र अग्नौ "अमृतस्य अमरणलक्षणस्य वेदत्वस्य “चेतन प्रज्ञापकं "यज्ञं हे अगस्त्य “ते त्वदीयं त्वं चाहं च “तनवावहै । अगस्त्यवाक्यपक्षे शिष्टमविशिष्टम् । तत्र वेद्याममृतस्य तत्साधनस्य हविषो वा चेतनं प्रज्ञापनमासादनं कुरुत । आवां पत्नीयजमानौ अध्वर्युयजमानौ वा हे इन्द्र ते त्वदर्थं यज्ञं तनवावहै ॥

त्वमीॆशिषे वसुपत॒े वसूॆन॒ां त्वं म॒ित्राणाॆं मित्रपत॒े धेष्ठॆः ।

इन्द्र॒ त्वं म॒रुद्भि॒ः सं वॆद॒स्वाध॒ प्राशाॆन ऋत॒ुथा ह॒वीॆंषि ॥५

त्वम् । ई॒शि॒षे॒ । व॒सु॒ऽप॒ते॒ । वसू॑नाम् । त्वम् । मि॒त्राणा॑म् ।
मि॒त्र॒ऽप॒ते॒ । धेष्ठः॑ ।

इन्द्र॑ । त्वम् । म॒रुत्ऽभिः॑ । सम् । व॒द॒स्व॒ । अध॑ । प्र ।
अ॒शा॒न॒ । ऋ॒तु॒ऽथा । ह॒वींषि॑ ॥५

त्वम् । ईशिषे । वसुऽपते । वसूनाम् । त्वम् । मित्राणाम् ।
मित्रऽपते । धेष्ठः ।

इन्द्र । त्वम् । मरुत्ऽभिः । सम् । वदस्व । अध । प्र ।
अशान । ऋतुऽथा। हवींषि ॥५॥

इदमगस्त्यवाक्यम् । हे "वसूनां “वसुपते अतिप्रभूतानां
पुरोडाशाज्यादिधनानां स्वामिन् हे इन्द्र “त्वमीशिषे ईश्वरो
भवसि सर्वस्य। वृत्त्यवृत्तिभ्यां बहुत्वं नित्यं संबन्धश्च
प्रतिपद्यते । यद्वा । हे वसुपते वसूनामीशिषे इति योजना
। द्वितीयो वसुशब्दोऽनुवादो वा । तथा हे "मित्राणां

"मित्रपते अस्मदादिमित्रस्य नित्यं पालकेन्द्र “त्वं “धेष्ठः सर्वस्यातिशयेन धारकोऽसि । हे “इन्द्र “त्वम् उत्तमहिमस्त्वं “मरुद्भिः "सं “वदस्व तैः साकं सम्यक्कृतमिति वदस्व । "अध अपि च त्वम् “ऋतुथा ऋतावृतौ । उपलक्षणमेतत्कालस्य । तत्तद्योगकाले “हवींषि आज्यचर्वादीनि “प्राशान प्रकर्षेण भुङ्क्ष्व ॥ ॥ १० ॥

## मण्डल

### १

| | | | | | | |
|---|---|---|---|---|---|---|
| सूक्तं १.१ | सूक्तं १.३१ | सूक्तं १.६१ | सूक्तं १.९१ | सूक्तं १.१२१ | सूक्तं १.१५१ | सूक्तं १.१८१ |
| सूक्तं १.२ | सूक्तं १.३२ | सूक्तं १.६२ | सूक्तं १.९२ | सूक्तं १.१२२ | सूक्तं १.१५२ | सूक्तं १.१८२ |
| सूक्तं १.३ | सूक्तं १.३३ | सूक्तं १.६३ | सूक्तं १.९३ | सूक्तं १.१२३ | सूक्तं १.१५३ | सूक्तं १.१८३ |
| सूक्तं १.४ | सूक्तं १.३४ | सूक्तं १.६४ | सूक्तं १.९४ | सूक्तं १.१२४ | सूक्तं १.१५४ | सूक्तं १.१८४ |
| सूक्तं १.५ | सूक्तं १.३५ | सूक्तं १.६५ | सूक्तं १.९५ | सूक्तं १.१२५ | सूक्तं १.१५५ | सूक्तं १.१८५ |
| सूक्तं १.६ | सूक्तं १.३६ | सूक्तं १.६६ | सूक्तं १.९६ | सूक्तं १.१२६ | सूक्तं १.१५६ | सूक्तं १.१८६ |

# ऋग्वेदः सूक्तं १.१७१

← सूक्तं १.१७०

ऋग्वेदः - मण्डल १

सूक्तं १.१७१

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१७२ →

## दे. मरुतः, ३-६ मरुत्वानिन्द्रः। त्रिष्टुप्।

---

प्रति व एना नमसाहमेमि सूक्तेन भिक्षे सुमतिं तुराणाम् ।

रराणता मरुतो वेद्याभिर्नि हेळो धत्त वि मुचध्वमश्वान् ॥१॥

एष व स्तोमो मरुतो नमस्वान्हृदा तष्टो मनसा धायि देवाः ।

उपेमा यात मनसा जुषाणा यूयं हि ष्ठा नमस इद्वृधासः ॥२॥

स्तुतासो नो मरुतो मृळयन्तूत स्तुतो मघवा शम्भविष्ठः ।

ऊर्ध्वा नः सन्तु कोम्या वनान्यहानि विश्वा मरुतो जिगीषा ॥३॥

अस्मादहं तविषादीषमाण इन्द्राद्भिया मरुतो रेजमानः ।

युष्मभ्यं हव्या निशितान्यासन्तान्यारे चकृमा मृळता नः ॥४॥

येन मानासश्चितयन्त उस्रा व्युष्टिषु शवसा शश्वतीनाम् ।

स नो मरुद्भिर्वृषभ श्रवो धा उग्र उग्रेभि स्थविरः सहोदाः ॥५॥

त्वं पाहीन्द्र सहीयसो नॄन्भवा मरुद्भिरवयातहेळाः ।

सुप्रकेतेभिः सासहिर्दधानो विद्यामेषं वृजनं जीरदानुम् ॥६॥

## सायणभाष्यम्

‘प्रति वः' इति षड्ृचं सप्तमं सूक्तमागस्त्यं त्रैष्टुभं मारुतम् । आद्ये द्वे केवलमारुते । शिष्टाश्चतस्रो मरुत्वदिन्द्रदेवताकाः

। प्रति वः षण्मारुतं तु चतस्रोऽन्त्या मरुत्वतीयाः'
इत्यनुक्रमणिका । विशेषविनियोगो लैङ्गिकः ॥

प्रतिं व एना नमंसाहमेंमि सूक्तेनं भिक्षे सुमतिं तुराणांम् ।

रराणतां मरुतो वेद्याभिर्नि हेळों धत्त वि मुंचध्वमश्वांन् ॥१

प्रतिं । वः । एना । नमंसा । अहम् । एमि । सुऽउक्तेनं ।
भिक्षे । सुऽमतिम् । तुराणांम् ।

रराणतां । मरुतः । वेद्याभिः । नि । हेळः । धत्त । वि ।
मुचध्वम् । अश्वांन् ॥१

प्रति । वः । एना । नमसा। अहम् । एमि । सुऽउक्तेन ।
भिक्षे । सुऽमतिम् । तुराणाम् ।

रराणता । मरुतः । वेद्याभिः । नि । हेळ: । धत्त । वि ।
मुचध्वम् । अश्वान् ॥ १ ॥

.हे मरुतः “वः युष्मान् “अहं “प्रति “एमि अभिगच्छामि ।
केन साधनेन । "नमसा नमस्कारेण हविषा वा । नम
इत्यन्ननाम । तथा “सूक्तेन शोभनवचनेन स्तुतिरूपेण ।
“तुराणां त्वरमाणानां शत्रूणां हिंसकानां वा युष्माकं
“सुमतिं शोभनमतिम् अनुग्रहबुद्धिं “भिक्षे याचे । इन्द्रस्यैव
पुनर्हविष्प्रदानादिदं याच्यते । किंच हे “मरुतः यूयं
“वेद्याभिः वेदितव्याभिः स्तुतिभिः “रराणता रममाणेन
मनसा इत्थंभूताः सन्तः “हेळ: । क्रोधनामैतत् । क्रोधं
युष्मदभिक्रमजनितं “नि “धत्त निकृष्टं धारयत
त्यजतेत्यर्थः । तथा “अश्वान् “वि “मुचध्वम् रथेभ्यो
वियोजयत । क्रोधात् पुनर्गमनं मा कुरुतेत्यर्थः ॥

ए॒ष व॒ः स्तोमो॑ मरुतो॒ नम॑स्वान्हृ॒दा त॒ष्टो मन॑सा धायि देवाः ।

उपे॒मा यां॑त॒ मन॑सा जुषा॒णा यू॒यं हि ष्ठा नम॑स॒ इद्वृ॒धास॑ः ॥२

ए॒षः । व॒ः । स्तोम॑ः । म॒रु॒त॒ः । नम॑स्वान् । हृ॒दा । त॒ष्टः । मन॑सा । धा॒यि॒ । दे॒वा॒ः ।

उप॑ । ई॒म् । आ । या॒त॒ । मन॑सा । जु॒षा॒णाः । यू॒यम् । हि । स्थ । नम॑सः । इत् । वृ॒धास॑ः ॥२

एषः । वः । स्तोमः। मरुतः । नमस्वान् । हृदा । तष्टः । मनसा । धायि । देवाः ।।

उप । ईम् । आ। यात । मनसा। जुषाणाः । यूयम्। हि। स्थ। नमसः । इत् । वृधासः ॥२॥

हे “मरुतः “एष “वः स्तोमः इदानींक्रियमाणप्रकारो वो युष्माकम् । युष्मदर्थं इत्यर्थः । कीदृशोऽयम् । “नमस्वान् । नम इत्यन्ननाम । हविर्लक्षणान्नवान् । न केवलं स्तुतिमात्रं भक्षणाय हविरपि युष्माकमित्यर्थः । किंच 'हृदा “तष्टः युष्मन्निवेदनबुद्ध्या संपादितः । तादृशः स्तोमो हे “देवाः देवनशीलाः “मनसा अस्मदनुग्रहवता चित्तेन “धायि धार्यताम् । तदर्थं “मनसा आदरया बुद्ध्या "जुषाणाः “ईम् एनां स्तुतिं तद्धविश्च सेवमानाः “उप “आ “यात उपागच्छतैव । मा विलम्बं कुरुत । "यूयं “नमसः अन्नस्य हवीरूपस्य “वृधासः “स्थ "हि वर्धयितारो भवथ खलु । अतो गन्तव्यमेव । “इत् पूरणः ॥

स्तुतासों नो मरुतों मृळयन्तूत स्तुतो मघवा शम्भंविष्ठः ।

ऊ॒र्ध्वा नं॑ः सन्तु को॒म्या वना॒न्यहा॑नि॒ विश्वा॑ मरुतो जिगी॒षा ॥३

स्तु॒तास॑ः । न॒ः । म॒रुत॑ः । मृ॒ळ॒य॒न्तु॒ । उ॒त । स्तु॒तः । म॒घऽवा॑ । शम्ऽभ॑विष्ठः ।

ऊ॒र्ध्वा । न॒ः । स॒न्तु॒ । को॒म्या । वना॑नि । अहा॑नि । विश्वा॑ । म॒रु॒त॒ः । जि॒गी॒षा ॥३

स्तुतासः । नः । मरुतः । मृळयन्तु । उत। स्तुतः । मघऽवा । शम्ऽभविष्ठः ।

ऊर्ध्वा । नः । सन्तु। कोम्या । वनानि । अहानि । विश्वा । मरुतः । जिगीषा ॥ ३ ॥

ते “मरुतः “स्तुतासः स्तुताः सन्तः “नः अस्मान् “मृळयन्तु सुखयन्तु । “उत अपि च “मघवा । मघमिति धननाम । अस्मद्दातव्यबहुधनेन तद्वानिन्द्रः “स्तुतः “शंभविष्ठः

सुखस्य भावयितृतमः सन् अस्मान् मृळयतु । किंच हे “मरुतः “नः अस्माकं “जिगीषा ॥ जिगातेर्गतिकर्मणो जिगीषा ॥ जिगीषितव्यानि प्राप्तव्यानि उत्तरत्रानुभूयमानानि “विश्वा सर्वाणि "अहानि दिवसानि “ऊर्ध्वा उन्नतान्युपर्युपरि श्रिया यशसा वा उत्कृष्टानि “कोम्या काम्यानि स्पृहणीयानि “वनानि सर्वैः संभजनीयानि “सन्तु । जिगीषा जेतुमिष्टानि जेतव्यानि च सन्त्विति वा योज्यम् । एवं कृत्वा मरुत इन्द्रश्च सुखयन्त्वित्यर्थः ।।

अ॒स्माद॒हं तंवि॒षादीषंमाण॒ इन्द्रांद्भि॒या मंरुतो॒ रेजंमानः ।

यु॒ष्मभ्यं ह॒व्या निशिंतान्यास॒न्तान्या॒रे चंकृमा मृ॒ळतां नः ॥ ४

अ॒स्मात् । अ॒हम् । त॒वि॒षात् । ईषं॑माणः । इन्द्रा॑त् । भि॒या । म॒रु॒तः॒ । रेजं॑मानः ।

यु॒ष्मभ्यं॑म् । ह॒व्या । निऽशिं॑तानि । आ॒स॒न् । तानिं॑ । आ॒रे । च॒कृ॒म॒ । मृ॒ळतं॑ । नः॒ ॥४

अस्मात् । अहम् । तविषात् । ईषमाणः । इन्द्रात् । भिया । मरुतः । रेजमानः ।

युष्मभ्यम् । हव्या । निऽशितानि । आसन् । तानि । आरे । चकृम। मृळतं । नः ॥ ४ ॥

हे "मरुतः शृणुत । “अहम् “अस्मात् प्रसिद्धात् “तविषात् बलवतः “इन्द्रात् तत्सकाशात् “भिया भीत्या “ईषमाणः पलायमानः पुरतः स्थातुमशक्तः तथा “रेजमानः वेपमानश्चाभवम् । ततश्च किमायातमिति अत आह । यानि “युष्मभ्यं “हव्या हवींषि “निशितानि संस्कृतानि

“आसन् “तानि तान्येव “आरे “चकृम । दूरे कृतवन्तो वयमिन्द्रभयात् । अतः “नः अस्मान् अनपराधिनः “मृळत मृळयत सुखयत ।।

येन॒ मानां॑सश्चि॒तयं॑न्त उ॒स्रा व्यु॑ष्टिषु॒ शवं॑सा॒ शश्वं॑तीनाम् ।

स नो॑ म॒रुद्भि॑र्वृषभ॒ श्रवो॑ धा उ॒ग्र उ॒ग्रेभि॒ः स्थवि॑रः सहो॒दाः ॥५

येनं । मानां॑सः । चि॒तयं॑न्ते । उ॒स्राः । वि॒ऽउं॑ष्टिषु । शवं॑सा । शश्वं॑तीनाम् ।

सः । न॒ः । म॒रुत्ऽभिः॑ । वृ॒ष॒भ॒ । श्रवः॑ । धा॒ः । उ॒ग्रः । उ॒ग्रेभिः॑ । स्थवि॑रः । स॒ह॒ःऽदाः ॥५

येन । मानासः । चितयन्ते । उस्राः । विऽउष्टिषु । शवसा । शश्वतीनाम् ।।

सः । नः । मुरुत्ऽभिः । वृषभ । श्रवः । धाः । उग्रः।
उग्रेभिः । स्थविरः । सहःऽदाः ॥५॥

हे इन्द्र "येन “शवसा बलभूतेन त्वयानुगृहीताः “मानासः मान्यास्त्वयाभिमानिताः वा “उस्राः रश्मयः “शश्वतीनां नित्यानां बह्वीनामुषसां “व्युष्टिषु सतीषु प्रकाशेषु सत्सु “चितयन्ते चेतयन्ते प्राणिनां स्वस्वव्यवहाराय प्रज्ञापयन्ति । ऐन्द्र्यां दिशि तेनैवानुगृहीता उषसो रश्मय उद्गच्छन्तीति प्रसिद्धम् । हे “वृषभ वर्षितरिन्द्र “सः तादृशस्त्वं “मरुद्भिः सहितः “श्रवो “धाः सर्वत्र श्रूयमाणमन्नं धेहि स्थापय देहीत्यर्थः । कीदृशस्त्वम् । “उग्रः उद्गूर्णबलः “सहोदाः । पराभिभवसामर्थ्यं बलं सहः । तस्य दाता “स्थविरः पुरातनः । कीदृशैर्मरुद्भिः। “उग्रेभिः क्रूरबलैः । एवंमहानुभावः अन्नं देहि ॥

त्वं पा॑हीन्द्र॒ सही॑यसो॒ नॄन्भवा॑ म॒रुद्भि॒रव॑यातहेळाः ।

सु॒प्र॒के॒तेभि॑ः सास॒हिर्दधा॑नो वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥ ६

त्वम् । पा॒हि॒ । इ॒न्द्र॒ । सही॑यसः । नॄन् । भव॑ । म॒रुत्ऽभिः॑ । अव॑यातऽहेळाः ।

सु॒ऽप्र॒के॒तेभिः॑ । स॒स॒हिः । दधा॑नः । वि॒द्याम॑ । इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥६

त्वम् । पाहि । इन्द्र । सहीयसः । नॄन् । भव । मरुत्ऽभिः । अवयातऽहेळाः ।

सुऽप्रकेतेभिः । ससहिः । दधानः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ६ ॥

हे “इन्द्र “त्वं “पाहि रक्ष । कान् । “सहीयसो “नॄन् सहस्वितमान् त्वदनुग्रहेण अतिप्रवृद्धबलान् नेतॄन् मनुष्यानस्मान् मरुतो वा । किंच “मरुद्भिः साकम् अस्मासु “अवयातहेळ: “भव । अपगतमन्युर्भव । मरुत्सु वा तथा भव । किंच “सुप्रकेतेभिः शोभनप्रज्ञानैर्मरुद्भिः सह “सासहिः शत्रूणामभिभविता सन् “दधानः अस्मदभिमतस्य धारयिता भवेति शेषः । शिष्टो व्याख्यातः । ॥११॥

# ऋग्वेदः सूक्तं १.१७२



## दे. मरुतः। गायत्री।

---

चित्रो वोऽस्तु यामश्चित्र ऊती सुदानवः ।

मरुतो अहिभानवः ॥१॥

आरे सा वः सुदानवो मरुत ऋञ्जती शरुः ।

आरे अश्मा यमस्यथ ॥२॥

तृणस्कन्दस्य नु विशः परि वृङ्क्त सुदानवः ।

ऊर्ध्वान्नः कर्त जीवसे ॥३॥

## सायणभाष्यम्

‘चित्रो वः' इति तृचात्मकमष्टमं सूक्तमागस्त्यं मारुतं गायत्रम् । ‘चित्रस्तृचं गायत्रम्' इत्यनुक्रमणिका । लैङ्गिको विशेषविनियोगः ॥

चि॒त्रो वों॑ऽस्तु॒ याम॑श्चि॒त्र ऊ॒ती सु॑दानवः ।

मरु॑तो॒ अहि॑भानवः ॥१

चि॒त्रः । व॒ः । अ॒स्तु॒ । याम॑ः । चि॒त्रः । ऊ॒ती । सु॒ऽदा॒न॒व॒ः ।

मरु॑तः । अहि॑ऽभानवः ॥१

चित्रः। वः। अस्तु । यामः । चित्रः । ऊती । सुऽदानवः ।

मरुतः । अहिऽभानवः ॥१॥

हे “मरुतः “वः युष्माकं "यामः अस्मद्यज्ञागमः "चित्रः चायनीयः पूज्यः आश्चर्यभूतो वा “अस्तु भवतु । न केवलमागमनमेव चित्रं किंतु हे “सुदानवः शोभनदानाः हे “अहिभानवः अहीयमानप्रकाशाः युष्माकं संबन्धी “चित्रः स आगमः “ऊती ऊत्यै रक्षणाय इष्टतर्पणाय वा युक्तश्च भवतु । तदागमनं शीघ्रमस्तु अभिमतप्रदं चास्त्वित्यर्थः ॥

आ॒रे सा वः॑ सुदानवो॒ मरुत ऋञ्ज॒ती शरुः॑ ।

आ॒रे अश्मा॒ यमस्यंथ ॥२

आ॒रे । सा । व॒ः । सु॒ऽदा॒न॒व॒ः । मरुतः । ऋ॒ञ्ज॒ती । शरुः॑ ।

आ॒रे । अश्मां । यम् । अस्यंथ ॥२

आरे। सा। वः । सुऽदानवः। मरुतः । ऋञ्जती। शरुः ।

आरे। अश्मा। यम् । अस्यथ ॥२॥

हे “सुदानवः शोभनदानाः “मरुतः वः युष्माकं संबन्धिनी “ऋञ्जती प्रसाधयन्ती स्वतेजसा स्वात्मानमलंकुर्वती प्रसिद्धिं प्राप्नुवाना वा “सा प्रसिद्धा “शरुः हिंसका ऋष्टिः "आरे दूरे भवतु । तथा “यम् “अस्यथ क्षिपथ सः “अश्मा व्यापकः आयुधविशेषः “आरे। दूरनामैतत् । दूरे भवतु मां न प्राप्नोतु । यद्वा । आरेशब्दः आराच्छब्दपर्यायः । स च दूरे समीपे च वर्तते । अत्र समीपवचनः । यम् अस्मत्तोऽन्यम् अस्यथ तं वैरिणमस्माकमुपलोपमः कठिन आयुधविशेषः आरे समीपं प्राप्नोतु ॥

तृ॒ण॒स्क॒न्दस्य॒ नु विश॒ः परिं वृङ्क्त सुदानवः ।

ऊ॒र्ध्वान्नंः कर्त जी॒वसें ॥३

तृ॒ण॒ऽस्क॒न्दस्यं । नु । विशः॑ । परिं । वृ॒ङ्क्त॒ । सु॒ऽदा॒न॒वः॒ ।

ऊ॒र्ध्वान् । न॒ः । क॒र्त॒ । जी॒वसें ॥३

तृणऽस्कन्दस्य। नु। विशः। परि। वृङ्क्त। सुऽदानवः ।

ऊर्ध्वान्। नः। कर्त। जीवसे ॥३॥

हे मरुतः “सुदानवः शोभनदानाः यूयं “तृणस्कन्दस्य तृणवत् चलनस्वभावस्य शुष्यमाणस्य वा मम “विशः पुत्रभृत्यादिरूपाः प्रजाः “नु क्षिप्रं “परि “वृङ्क्त परिवर्जयत बाधापरिहारेण रक्षत । यद्वा । उक्तलक्षणकालस्यासुरविशेषस्य वा प्रजाः परिवर्जयत ।

किंच “नः अस्मान् “ऊर्ध्वान् “कर्त कुरुत “जीवसे चिरजीवनाय ।। ॥ १२ ॥

# ऋग्वेदः सूक्तं १.१७३

← सूक्तं १.१७२

ऋग्वेदः - मण्डल १

सूक्तं १.१७३

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१७४ →

दे. इन्द्रः । त्रिष्टुप्, ४ विराट्स्थाना, विषमपदा वा ।

---

गायत्साम नभन्यं यथा वेरर्चाम तद्वावृधानं स्वर्वत् ।

गावो धेनवो बर्हिष्यदब्धा आ यत्सद्मानं दिव्यं विवासान् ॥१॥

अर्चद्वृषा वृषभिः स्वेदुहव्यैर्मृगो नाश्नो अति यज्जुगुर्यात् ।

प्र मन्दयुर्मनां गूर्त होता भरते मर्यो मिथुना यजत्रः ॥२॥

नक्षद्धोता परि सद्म मिता यन्भरद्गर्भमा शरदः पृथिव्याः ।

क्रन्ददश्वो नयमानो रुवद्गौरन्तर्दूतो न रोदसी चरद्वाक् ॥३॥

ता कर्माषतरास्मै प्र च्यौत्नानि देवयन्तो भरन्ते ।

जुजोषदिन्द्रो दस्मवर्चा नासत्येव सुग्म्यो रथेष्ठाः ॥४॥

तमु ष्टुहीन्द्रं यो ह सत्वा यः शूरो मघवा यो रथेष्ठाः ।

प्रतीचश्चिद्योधीयान्वृषण्वान्ववव्रुषश्चित्तमसो विहन्ता ॥५॥

प्र यदित्था महिना नृभ्यो अस्त्यरं रोदसी कक्ष्ये नास्मै ।

सं विव्य इन्द्रो वृजनं न भूमा भर्ति स्वधावाँ ओपशमिव द्याम् ॥६॥

समत्सु त्वा शूर सतामुराणं प्रपथिन्तमं परितंसयध्यै ।

सजोषस इन्द्रं मदे क्षोणीः सूरिं चिद्ये अनुमदन्ति वाजैः ॥७॥

एवा हि ते शं सवना समुद्र आपो यत्त आसु मदन्ति देवीः ।

विश्वा ते अनु जोष्या भूद्गौः सूरीँश्चिद्यदि धिषा वेषि जनान् ॥८॥

असाम यथा सुषखाय एन स्वभिष्टयो नरां न शंसैः ।

असद्यथा न इन्द्रो वन्दनेष्ठास्तुरो न कर्म नयमान उक्था ॥९॥

विष्पर्धसो नरां न शंसैरस्माकासदिन्द्रो वज्रहस्तः ।

मित्रायुवो न पूर्पतिं सुशिष्टौ मध्यायुव उप शिक्षन्ति यज्ञैः ॥१०॥

यज्ञो हि ष्मेन्द्रं कश्चिदृन्धञ्जुहुराणश्चिन्मनसा परियन् ।

तीर्थे नाच्छा तातृषाणमोको दीर्घो न सिध्रमा कृणोत्यध्वा ॥११॥

मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः ।

महश्चिद्यस्य मीळ्हुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥१२॥

एष स्तोम इन्द्र तुभ्यमस्मे एतेन गातुं हरिवो विदो नः ।

आ नो ववृत्याः सुविताय देव विद्यामेषं वृजनं जीरदानुम् ॥१३॥

## सायणभाष्यम्

‘गायत्साम' इति त्रयोदशर्चं नवमं सूक्तमागस्त्यं त्रैष्टुभमैन्द्रम् । ‘गायत्सप्तोना' इत्यनुक्रान्तम् । समूळ्हे दशरात्रे तृतीये छन्दोमे मरुत्वतीयशस्त्रे एतत्सूक्तम् । विश्वजितोऽग्निं नरः' इति खण्डे सूत्रितं ’तृतीयस्येन्द्रः स्वाहा गायत्साम' (आश्व. श्रौ. ८.७ ) इति ।।

गायत्सामं नभन्यं१ यथा वेरर्चाम तद्वावृधानं स्वर्वत् ।

गावो धेनवो बर्हिष्यदब्धा आ यत्सद्मानं दिव्यं विवासान् ॥
१

गायंत् । सामं । नभन्यंम् । यथां । वेः । अर्चाम । तत् ।
ववृधानम् । स्वःऽवत् ।

गावः । धेनवः । बर्हिषि । अदब्धाः । आ । यत् । सद्मानंम्
। दिव्यम् । विवासान् ॥१

गायत् । साम । नभन्यम् । यथा । वेः । अर्चाम । तत् ।
ववृधानम् । स्वःऽवत् ।।

गावः । धेनवः । बर्हिषि । अदब्धाः । आ । यत् । सद्मानम्
। दिव्यम् । विवासान् ॥ १ ॥

हे इन्द्र “नभन्यं नभस्यं नभसि भवं नभोव्यापिनं हिंसकं वा राक्षसादिकस्य । नभतिर्वधकर्मा, ‘नभति अर्दति ' ( नि. २. १९. १० ) इति वधकर्मसु गणनात् । तादृशं “साम हे इन्द्र “यथा “वेः येन प्रकारेण वेत्सि तथा “गायत् गायत्युद्गाता । “तत् तस्मात् यतः स्तौति ततः कारणात् “ववृधानं वर्धमान “स्वर्वत् फलभूतेन स्वर्गेण तद्वच्छस्त्रं यथा वेः तथा “अर्चाम पूजयाम शंसामेत्यर्थः । स्तुतमनु शंसतीति न्यायात् । यद्वा। तदुक्तलक्षणं साम ववृधानं सर्वत्र यथा भवति तथा अर्चाम। किंच “धेनवः दोग्ध्र्यः “अदब्धाः अहिंसिताः “गावः “यत् “बर्हिषि “सद्मानं सीदन्तं “दिव्यं दिवि भवमिन्द्रं त्वाम् “आ “विवासान् । विवासतिः परिचरणकर्मा । आगत्य परिचरन्ति क्षीरं दुहन्ति तथा अर्चाम॥

अर्च॒द्वृषा॒ वृषं॑भि॒ः स्वेदुं॑हव्यैर्मृ॒गो नाश्नो॒ अति॒ यज्जुं॑गु॒र्यात्

।

प्र मं॑न्द॒युर्म॒नां गूं॒र्त॒ होता॒ भरं॑ते॒ मर्यो॑ मिथु॒ना यजं॑त्रः ॥२

अर्चं॑त् । वृषां॑ । वृषं॑ऽभिः । स्वऽइ॑दुं॑हव्यैः । मृ॒गः । न ।
अश्नः॑ । अतिं॑ । यत् । जु॒गु॒र्यात् ।

प्र । म॒न्द॒युः । म॒नाम् । गू॒र्ता॒ । होतां॑ । भरं॑ते । मर्यः॑ ।
मि॒थु॒ना । यजं॑त्रः ॥२

अर्चत् । वृषा । वृषऽभिः । स्वऽइदुहव्यैः । मृगः । न ।
अश्नः । अति । यत् । जुगुर्यात् ।

प्र। मन्दयुः । मनाम् । गूर्त । होता । भरते। मर्यः । मिथुना
। यजत्रः ॥ २ ॥

“वृषा हविषां वर्षिता अयं यजमानः “स्वेदुहव्यैः
स्वायत्तेद्धहविष्कैः । यद्वा । स्वयंप्राप्तेन्धकं हव्यं येषां

तादृशैः । “वृषभिः वर्षकैर्हविष्प्रदातृभिः अध्वर्य्वादिभिर्विशिष्टः सन् "अर्चत् अर्चयतीन्द्रम् । यद्वा । वृषा फलस्य वर्षितायमिन्द्रः उक्तलक्षणैरध्वर्य्वादिभिरर्च्यते । “यत् यस्मात् "अश्नः व्यापकः पानाद्यर्थं धावन् “मृगो न हरिणादिरिवायमिन्द्रः अश्नोऽशनशीलः सन् "अति "जुगुर्यात् अत्यर्थमुद्युङ्क्ते हविर्भक्षणाय । यथा मृगः क्षुत्पिपासादितः शीघ्रमुद्युङ्क्ते तथायमिन्द्रोऽपि । यस्मादेवं तस्मादर्चति । यद्वा । अयमिन्द्रो यत् यथा अश्नो मृग इव अति जुगुर्यात भक्षयेत् तथा अर्चतीत्यर्थः । किंच हे “गूर्त उद्गूर्णेन्द्र “मनां मननं स्तोत्रमिच्छतां देवानां “मन्दयुः स्तुतियुक्तः “मर्यः “होता मानुषः एतन्नामकः ऋत्विक् “यजत्रः यागनिष्पादकः सन् “मिथुना मिथुनानि युग्मरूपाणि याज्यापुरोनुवाक्यादीनि मिथुनौ वा जायापतिरूपः सन् “प्र “भरते प्रकर्षेण संपादयति तस्मादर्चतीत्यर्थः ।

नक्ष॒द्धोता॒ परि॒ सद्म॑ मि॒ता यन्भर॒द्गर्भ॒मा श॒रद॑ः पृथि॒व्याः ।

क्रन्द॒दश्वो॒ नय॑मानो रु॒वद्गौर॒न्तर्दू॒तो न रोद॑सी चर॒द्वाक् ॥३

नक्ष॑त् । होता॑ । परि॑ । सद्म॑ । मि॒ता । यन् । भर॑त् । गर्भ॑म् । आ । श॒रद॑ः । पृ॒थि॒व्याः ।

क्रन्द॑त् । अश्व॑ः । नय॑मानः । रु॒वत् । गौः । अ॒न्तः । दू॒तः । न । रोद॑सी॒ इति॑ । च॒र॒त् । वाक् ॥३

नक्षत् । होता । परि । सद्म । मिता। यन् । भरत् । गर्भम् । आ । शरदः । पृथिव्याः ।

क्रन्दत्। अश्वः । नयमानः । रुवत् । गौः । अन्तः । दूतः । न । रोदसी इति । चरत्। वाक् ॥३॥

“होता होमनिष्पादकोऽयमग्निः “मिता परिमिता “सद्म सदनानि गार्हपत्यादिस्थानानि “परि “यन् परितो गच्छन् “नक्षत् व्याप्नोति । व्याप्य च “शरदः संवत्सरसंबन्धिनं “पृथिव्याः भूम्याश्च संबन्धिनं “गर्भं गर्भस्थानीयमन्नं हविर्लक्षणम् “आ “भरत् आहरति स्वीकरोति । संभरति वा । संवत्सरपर्यन्तं वर्धितं भूम्यामुत्पन्नमित्यर्थः । यद्वा । संवत्सरसंबन्धिनं वसन्तादिकाले ज्योतिष्टोमादिषु दीयमानं पार्थिवं हविर्भरत् । वसन्ते वसन्ते ज्योतिषा यजेत' इति श्रुतेः । तथा कृत्वा “क्रन्ददश्वः । लुप्तोपममेतत् । अश्व इव क्रन्दति हर्षातिशयात् । किं कुर्वन् । “नयमानः नयन्निन्द्राय हविर्भारम् । किंच "गौः गन्ता उद्धृत्तो वृष इव "रुवत् रौति शब्दायते । किं कुर्वन् । “दूतो “न वार्ताहरो दूत इव “रोदसी रोदस्योर्द्यवापृथिव्योः “अन्तः मध्ये रोदस्योरन्तरा "वाक् स्तूयमानः स्तुवन् वा देवान् “चरत् चरति गच्छति । हविःस्वीकाराय पृथिवीं तत्प्रापणाय द्युलोकं च परिभ्रमतीत्यर्थः ॥ वक्तेः कर्तरि

कर्मणि वा ' क्विब्वचि० ' इत्यादिना क्विब्दीर्घौ संप्रसारणाभावश्च ।।

ता क॒र्माषंतरास्मै॒ प्र च्यौ॒त्नानिं देव॒यन्तों भरन्ते ।

जुजोंष॒दिन्द्रों द॒स्मवंर्चा॒ नासंत्येव॒ सुग्म्यों रथे॒ष्ठाः ॥४

ता । क॒र्म॒ । अषंऽतरा । अ॒स्मै॒ । प्र । च्यौ॒त्नानिं । दे॒व॒ऽयन्तः॑ । भ॒र॒न्ते॒ ।

जुजोंषत् । इन्द्रः॑ । द॒स्मऽवंर्चाः । नासंत्याऽइव । सुग्म्यः॑ । र॒थे॒ऽस्थाः ॥४

ता। कर्म । अषऽतरा । अस्मै । प्र । च्यौत्नानि । देवऽयन्तः । भरन्ते ।

जुजोषत् । इन्द्रः। दस्मऽवर्चाः । नासत्याऽइव । सुग्म्यः । रथेऽस्थाः ॥ ४ ॥

“ता तानि "अषतरा अर्षतराणि व्याप्ततराणि वा हवींषि "अस्मै इन्द्राय तदर्थं "कर्म कुर्मः संपादयामः ॥ कृञ्श्छान्दसे वर्तमानार्थे लुङि ‘मन्त्रे घस ' इति च्लेर्लुक् । छन्दस्युभयथा ' इति अर्धधातुकत्वेन ङित्त्वाभावाद्गुणः ॥ “च्यौत्नानि च्यावयितॄणि दृढानि स्तोत्राणि कर्माणि स्वकीयानि सामर्थ्यानि वा “देवयन्तः देवानात्मन इच्छन्तो यजमानाः “प्र “भरन्ते प्रकर्षेण संपादयन्ति । तद्वद्वयमपि संपादयाम इत्यर्थः । "दस्मवर्चाः दर्शनीयतेजाः शत्रूपक्षयणबलो वा “नासत्येव नासत्याविव अश्विनाविव । तौ हि द्यावापृथिव्यात्मानौ । ताविव "सुग्म्यः सुगम्यः सुखेन गन्तुं शक्यः रथेष्ठाः रथे वर्तमान एवंभूतः सन् "जुजोषत् अस्मत्कृतं स्तोत्रादि कर्म सेवताम् ॥

तमु॑ ष्टु॒हीन्द्रं॒ यो ह॒ सत्वा॒ यः शूरो॑ म॒घवा॒ यो र॑थे॒ष्ठाः ।

प्र॒ती॒चश्चि॒द्योधी॑या॒न्वृष॑ण्वान्ववव्रु॒ष॑श्चि॒त्तम॑सो विह॒न्ता ॥५

तम् । ऊ॒ँ इति॑ । स्तु॒हि॒ । इन्द्र॑म् । यः । ह॒ । सत्वा॑ । यः । शूर॑ः । म॒घवा॑ । यः । र॒थे॒ऽस्थाः ।

प्र॒ती॒चः । चि॒त् । योधी॑यान् । वृष॑ण्ऽवान् । व॒व॒व्रुष॑ः । चि॒त् । तम॑सः । वि॒ऽह॒न्ता ॥५

तम् । ऊँ इति । स्तुहि । इन्द्रम् । यः । ह । सत्वा । यः । शूरः। मघऽवा । यः । रथेऽस्थाः ।।

प्रतीचः । चित् । योधीयान् । वृषण्वान् । ववव्रुषः । चित् । तमसः । विऽहन्ता ॥ ५ ॥

"तमु तमेव "इन्द्रं "स्तुहि हे होतः स्तुतिं कुरु। किमस्याधिक्यमिति उच्यते । "यो “ह यः खलु “सत्वा अतिप्रभूतबलः । यद्वा । सत्वा सादकः शत्रूणाम् । "यः च “शूरः शौर्योपेतः "मघवा बलवानन्नवान् वा । "यः च "रथेष्ठाः रथे वर्तमानः । किंच प्रतीचश्चित् प्रत्यभिमुखं योद्धुरपि “योधीयान् योद्धृतमः ॥ प्रतिपूर्वादञ्चतेः क्विनन्तात् लुप्तमकारात् शसि ‘अचः' इति अकारलोपे चौ ' इति दीर्घः । ‘अञ्चेश्छन्दस्यसर्वनामस्थानम् ' इति विभक्तिरुदात्ता ॥ "वृषण्वान् । वृषाणो वर्षितारो वज्रादयः । तद्वान् । वृषा ते वज्र उत ते वृषा रथः ' (.ऋ सं. २. १६. ६ ) इति हि निगमः । तथा “ववव्रुषश्चित्तमसः आवरकस्यापि तमसो मेघादेः "विहन्ता विशेषेण घातकः । यस्मादेवंमहानुभावः तस्मात् स्तुहि ॥ ॥ १३ ॥

प्र यदि॒त्था मं॑हि॒ना नृभ्यो॒ अस्त्यरं॒ रोद॑सी क॒क्ष्ये॒३॒ नास्मै॑ ।

सं विंव्य इन्द्रों वृजनं न भूमा भर्ति स्वधावाँ ओपशमिंव द्याम् ॥६

प्र । यत् । इत्था । महिना । नृऽभ्यः । अस्ति । अरंम् । रोदंसी इति । कक्ष्ये३ इति । न । अस्मै ।

सम् । विव्ये । इन्द्रः । वृजनंम् । न । भूमं । भर्ति । स्वधाऽवांन् । ओपशम्ऽइंव । द्याम् ॥६

प्र। यत् । इत्था । महिना। नृऽभ्यः। अस्ति । अरम् । रोदसी इति । कक्ष्ये३ इति । न । अस्मै ।

सम् । विव्ये । इन्द्रः। वृजनम्। न। भूम। भर्ति। स्वधाऽवान्। ओपशम्ऽइव । द्याम् ॥६॥

“यत् यः इन्द्रः “महिना महत्त्वेन स्वैश्वर्येण "नृभ्यः नेतृभ्यः कर्मनिर्वाहकेभ्यो यजमानेभ्यः “प्र "अस्ति प्रभवति ईष्टे स्वर्गादिप्रदाने रक्षितुम् "अस्मै रक्षकायेन्द्राय "रोदसी

द्यावापृथिव्यौ "कक्ष्ये कक्ष्ययते सती संचाराय “न "अरं नालं न पर्याप्ते । जगतोऽधीशस्येन्द्रस्य संचारायाल्पत्वात् द्यावापृथिव्यौ म पर्याप्ते इत्यर्थः । सृष्टादपि स्रष्टुर्महिम्नोऽधिकत्वादिति भावः । अयम् "इन्द्रो “वृजनं “न “भूम भूमिं भूतानि वा वृजनं न वृजनमिव । वृजेः कर्तनार्थस्येदं रूपम् ॥ तदिव तद्यथा आवृणोति तथायमपि स्वतेजसा “सं “विव्ये सम्यगावृणोति लोकत्रयम् । किंचायं “स्वधावान् अन्नवान् वृष्टिलक्षणोदकवान् वा "द्यां दिवं "भर्ति बिभर्ति । धारणे दृष्टान्तः । “ओपशमिव । ईषदुपशेते इत्योपशं शृङ्गं तद्वृषभ इव । यद्वा । परस्परं समीपे वर्तमानं क्षित्यन्तरिक्षाख्यं लोकद्वयम् ओपशम् । तदिव द्यां बिभर्ति । लोकत्रयमपि बिभर्तीत्यर्थः ।। भृञो लटि छान्दसः शपो लुक् ॥

स॒मत्सु॑ त्वा शूर स॒तामु॑रा॒णं प्र॑प॒थिन्त॑मं परितंस॒यध्यै॑ ।

स॒जोषं॑स॒ इन्द्रं॒ मदे॑ क्षो॒णीः सू॒रिं चि॒द्ये अ॑नु॒मद॑न्ति॒ वाजै॑ः ॥
७

स॒मत्ऽसु॑ । त्वा॒ । शू॒र॒ । स॒ताम् । उ॒रा॒णम् ।
प्र॒प॒थिन्ऽत॑मम् । प॒रि॒ऽत॒ंस॒यध्यै॑ ।

स॒ऽजोषं॑सः । इन्द्र॑म् । मदे॑ । क्षो॒णीः । सू॒रिम् । चि॒त् । ये ।
अ॒नु॒ऽमद॑न्ति । वाजैः॑ ॥७

समत्ऽसु । त्वा । शूर । सताम् । उराणम् ।
प्रपथिन्ऽतमम् । परिऽतंसयध्यै ।

सुऽजोषसः । इन्द्रम् । मदे । क्षोणीः । सूरिम् । चित् । ये ।
अनुऽमदन्ति । वाजैः ॥ ७॥

हे "शूर शौर्योपेतेन्द्र "समत्सु संग्रामेषु "सतां स्वामेवाश्रित्य वर्तमानानां प्राणिनाम् "उराणम् उरूण्यतिप्रभूतानि बलादीनि कुर्वाणं "प्रपथिन्तमं प्रकृष्टमार्गतमं सुकृतिनामुत्तममार्गभूतम् "इन्द्रं शत्रूणां दारकं “त्वा त्वां "परितंसयध्यै अवतंसीकर्तुं भूषणीकर्तुम् । भूषयितुं वा निमित्तेऽर्थे । "मदे तव मदार्थं च "सजोषसः सह सेवमानाः समानप्रीतयो वा "क्षोणीः क्षोण्यो विशः परिजना मरुतः प्रयतन्ते । कीदृशास्ते । “ये “वाजैः बलैः "अनुमदन्ति अनुकूलं मादयन्ति संग्रामे मरुतस्तमेव स्वामिनं कृत्वा मादयन्ति हर्षयन्तीत्यर्थः । यद्वा । ये यजमाना वाजैहविर्भिर्मादयन्ति ते समानप्रीतियुक्तास्तव मनुष्यभूता ऋत्विजो यजमानभूताः प्रजाः समत्सु सहमादनस्थानेषु यागेषूक्तलक्षणविशिष्टं त्वामेव पूजयितुं तव मादाय च प्रयतन्ते ॥

ए॒वा हि ते॒ शं सव॑ना समु॒द्र आपो॒ यत्त॑ आ॒सु मद॑न्ति दे॒वीः ।

विश्वा॑ ते॒ अनु॒ जोष्या॑ भू॒द्गौः सू॒रीँश्चि॒द्यदि॑ धि॒षा वेषि॒ जना॑न् ॥८

ए॒व । हि । ते॒ । शम् । सव॑ना । स॒मु॒द्रे । आप॑ः । यत् । ते॒ । आ॒सु । मद॑न्ति । दे॒वीः ।

विश्वा॑ । ते॒ । अनु॑ । जोष्या॑ । भू॒त् । गौः । सू॒रीन् । चि॒त् । यदि॑ । धि॒षा । वेषि॑ । जना॑न् ॥८

एव । हि। ते। शम्। सवना। समुद्रे । आपः। यत् । ते। आसु । मदन्ति । देवीः ।

विश्वा । ते। अनु। जोष्या। भूत् । गौः। सूरीन् । चित् । यदि । धिषा । वेषि । जनान् ॥८॥

हे इन्द्र “एवा “हि एवं हि सति “ते तव संबन्धीनि सवनानि । सूयते सोमोऽत्रेति सवनानि सोमयागाः । ते “शं सुखकरा भवन्ति । कथं सति । "यत् यदि “देवीः देव्यः द्योतमानाः “आपः समुद्रे उदकसमुद्रवणापादानभूतेऽन्तरिक्षे "आसु प्रजासु निमित्तभूतासु "ते त्वां "मदन्ति मादयन्ति ॥ अन्तर्भावितण्यर्थोऽयम् ॥ यदा प्राण्युपकारार्थं वर्षणाय त्वां प्रेरयन्ति वृष्ट्युदकानि तदा खलु तव सोमयागाः सुखकरा भवन्ति । यज्ञसाधनवृष्टिप्रदानेन यागान्निर्वर्तयेत्यर्थः । किंच हे इन्द्र “विश्वा “गौः सर्वापि स्तोत्रशस्त्ररूपा वाक् "ते त्वाम् अनुक्रमेण जोष्या जोषणार्हा प्रीणयित्री “भूत् भवति । कदा । "यदि "सूरींश्चित् स्तोत्रादिप्रेरयितॄन् स्तोतृजनानपि “धिषा धिषणया प्रज्ञया वृष्टिप्रदानरूपेण कर्मणा वा “वेषि कामयसे तदा सर्वापि स्तुतिस्त्वदर्था भवति ॥

असा॑म॒ यथा॑ सुष॒खाय॑ एन स्वभि॒ष्टयो॑ न॒रां न शंसैः॑ ।

अस॒द्यथा॑ न॒ इन्द्रो॑ वन्दने॒ष्ठास्तु॒रो न कर्म॒ नय॑मान उ॒क्था ॥ ९

असा॑म । यथा॑ । सु॒ऽस॒खाय॑ः । ए॒न॒ । सु॒ऽअ॒भि॒ष्टय॑ः ।
न॒राम् । न । शंसै॑ः ।

अस॑त् । यथा॑ । नः॒ । इन्द्र॑ः । व॒न्द॒ने॒ऽस्थाः । तु॒रः । न ।
कर्म॑ । नय॑मानः । उ॒क्था ॥९

असाम । यथा । सुऽसखायः । एन । सुऽअभिष्टयः ।
नराम् । न । शंसैः ।

असत् । यथा । नः । इन्द्रः । वन्दनेऽस्थाः । तुरः । न ।
कर्म । नयमानः । उक्था ॥९॥

हे “एन इन ईश्वर इन्द्र "यथा सुसखायः शोभनत्वद्रूपसहायवन्तः "असाम भूयास्म किंच "स्वभिष्टयः शोभनाभ्येषणाः शोभनाभीष्टाश्चासाम । किमिव । "नरां “न “शंसैः । नराणां राजादीनां शंसैः शंसनैरिव । स्तुतिभिर्यथा मनुष्याः शोभनाभीष्टा भवन्ति तद्वत् । इदानीं परोक्षेणाह । “नः अस्मभ्यम् "इन्द्रः “वन्दनेष्ठाः अस्मत्स्तुतौ वर्तमानः सन् “तुरो "न त्वरमाण इव नः अस्माकं "कर्म "उक्था उक्थैः शस्त्रैः “नयमानः फलं प्रापयन् स्तुत्या तुष्टः सन् अस्मदीयेन कर्मणा फलप्रापयिता "यथा "असत् भवेत् । हे ऋत्विजः तथा कुरुतेति शेषः ।।

विष्पंर्धसो न॒रां न शंसैंर॒स्माकां॑स॒दिन्द्रो॒ वज्रं॑हस्तः ।

मि॒त्रा॒युवो॒ न पूर्प॑तिं॒ सुशि॑ष्टौ मध्या॒युव॒ उप॑ शिक्षन्ति य॒ज्ञैः ॥ १०

विऽस्प॑र्धसः । न॒राम् । न । शंसैः॑ । अ॒स्माक॑ । अ॒स॒त् । इन्द्रः॑ । वज्र॑ऽहस्तः ।

मि॒त्र॒ऽयुवः॑ । न । पूः॒ऽप॑तिम् । सुऽशि॑ष्टौ । म॒ध्य॒ऽयुवः॑ । उप॑ । शि॒क्ष॒न्ति॒ । य॒ज्ञैः ॥१०

विऽस्पर्धसः । नराम् । न । शंसैः । अस्माकं । असत् । इन्द्रः । वज्रऽहस्तः ।।

मित्रऽयुवः । न । पूःऽपतिम् । सुऽशिष्टौ । मध्यऽयुवः । उप । शिक्षन्ति । यज्ञैः ॥ १० ॥

"नरां नेतॄणां मध्ये सस्पर्धान् नरान् यथा "विस्पर्धसः कुर्वन्ति सखिभूताः तद्वद्वयमपीन्द्रं “शंसैः स्तुतिभिः सखायो वयं तं तथा कुर्मः । स च "वज्रहस्तः

विरोधिशिक्षणाय सर्वदा वज्रधारी “इन्द्रः अस्माकम् "असत् । विस्पर्धमनुकूलो भवतु । किंच मित्रायुवो न मित्रेच्छवो हितैषिण इव “सुशिष्टौ सुशासने वर्तमानं पूर्पतिं पुरः स्वामिनं यथा अभिमतदानेन पूजयन्ति तथा “मध्यायुवः अस्माकं श्रियां यशसां च मध्येऽवस्थितिं कामयमाना अध्वर्य्वादयः "यज्ञैः यज्ञसाधनै हविःस्तोत्रादिभिः "उप "शिक्षन्ति उपेत्य यजन्ते । शिक्षतिर्दानकर्मा ॥ ॥ १४ ॥

य॒ज्ञो हि ष्मेन्द्रं॒ कश्चिं॑दृ॒न्धञ्जुं॑हुरा॒णश्चि॒न्मनं॑सा परि॒यन् ।

ती॒र्थे नाच्छां तातृषा॒णमोकों दी॒र्घो न सि॒ध्रमा कृं॑णो॒त्यध्वां ॥११

य॒ज्ञः । हि । स्म॒ । इन्द्रं॑म् । कः । चि॒त् । ऋ॒न्धन् । जु॒हु॒रा॒णः । चि॒त् । मनं॑सा । प॒रि॒ऽयन् ।

ती॒र्थे । न । अच्छं । त॒तृ॒षा॒णम् । ओकः॑ । दी॒र्घः । न ।
सि॒ध्रम् । आ । कृ॒णो॒ति॒ । अध्वां ॥११

यज्ञः । हि । स्म । इन्द्रम् । कः । चित् । ऋन्धन् ।
जुहुराणः । चित् । मनसा । परिऽयन् ।

तीर्थे। न । अच्छ। ततृषाणम्। ओकः । दीर्घः। न । सिध्रम्
। आ । कृणोति । अध्वा ॥११॥

“कश्चित् "यज्ञः यज्ञवान् यज्ञानुष्ठायी "ऋन्धन् वर्धयन्
भवति । इन्द्रं यज्ञेन वर्धयतीत्यर्थः । “जुहुराणश्चित्
कुटिलगतिस्तु कश्चित् "मनसा केवलेन "परियन् परितो
गच्छन् लौकिकविषयादिकं ध्यायन् वर्तते । यद्वा । परि
वर्जनार्थः । वर्जयित्वा गच्छन्नेदं प्राप्नोति । तत्र दृष्टान्तः ।
तीर्थे प्रसिद्धे मार्गे "अच्छ आभिमुख्येन समीपे वर्तमानम्
“ओकः पानीयादिकं सदनं "ततृषाणं पिपासायुक्तं यथा
अविलम्बेन प्रीणाति । स यथा तत्सदनमागच्छतीत्यर्थः ।

तद्वत् यज्ञेन कश्चित् पुमानिन्द्रमभिगच्छतीति । कुटिलस्य दृष्टान्तः । "दीर्घो "न वक्रत्वेनातिदूरः "अध्वा मार्ग इव । स यथा “सिध्रं फलं पानीयादिरूपं फलार्थिनं वा पुरुषम् "आ “कृणोति अर्वाक्करोति नीचैः करोति वर्जयतीत्यर्थः । तस्माद्यज्ञमार्गमजानानो वक्रो दूरे परिभ्रमति नेन्द्रं तर्पयति । तद्विलक्षणस्तु वर्जयत्येव ॥

मो षू णं इ॒न्द्रात्रं पृ॒त्सु दे॒वैरस्ति॒ हि ष्मां ते शुष्मिन्नव॒याः ।

म॒हश्चि॒द्यस्यं मी॒ळ्हुषों य॒व्या ह॒विष्मंतो म॒रुतो॒ वन्दं॑ते॒ गीः ॥ १२

मो इतिं । सु । न॒ः । इ॒न्द्र॒ । अत्रं । पृ॒त्ऽसु । दे॒वैः । अस्तिं । हि । स्म॒ । ते॒ । शु॒ष्मि॒न् । अ॒व॒ऽयाः ।

म॒हः । चि॒त् । यस्यं । मी॒ळ्हुषः॑ । य॒व्या । ह॒विष्मंतः ।
म॒रुतः॑ । वन्दंते । गीः ॥१२

मो इति । सु। नः । इन्द्र । अत्र । पृत्ऽसु । देवैः । अस्ति ।
हि । स्म । ते । शुष्मिन् । अवऽयाः ।

महः । चित् । यस्य । मीळ्हुषः । यव्या । हविष्मतः ।
मरुतः । वन्दते । गीः ॥ १२ ॥

हे "इन्द्र "अत्र "पृत्सु एषु उपस्थितेषु संग्रामेषु वृष्ट्यर्थं
मेघजयेषु "देवैः मरुदादिभिः सह "नः अस्मान् “मो “षु मैव
त्याक्षीरिति शेषः । मरुत्सहितो युध्यस्वेत्यर्थः । हे 'शुष्मिन्
बलवन्निन्द्र “अस्ति हि "स्म “ते अस्ति हि स्म तव खलु ।
तव किमस्तीति उच्यते । "अवयाः अवयजनम् अवयुज्य
पृथक्कृत्य यजनं हविर्भागोऽस्ति । मरुद्यः"ळ पृथगप्यस्ति
हविर्भागः । केवलं मरुद्भ्य एव दीयते नास्मभ्यम् अतः
कथं योत्स्यामीति न मन्तव्यमित्यर्थः । यद्वा । अवयाः

शत्रूणां वर्जनाय गन्ता वज्रोऽस्ति ते । किंच "हविष्मतः प्रदेयहवियुक्तस्य "मीळ्हुषः हविष्प्रदातुः । यद्वा । एतत्पदद्वयं मरुतां विशेषणम् । "यस्य मम “यव्या फलेनेन्द्रेण वा सह मिश्रयन्ती "गीः स्तुतिशस्त्रादिरूपा वाक् 'महश्चित् महतोऽपि मीळ्हुषः सेक्तॄन् हविष्मतो दत्तहविषा तद्वतः मरुतो "वन्दते स्तौति ।।

अथ त्रयोदश्या सूक्तादिमारभ्य कृत स्तुतिं निगमय्य फलं प्रार्थयते ॥

ए॒ष स्तोमं॑ इन्द्र॒ तुभ्यं॑म॒स्मे ए॒तेनं॑ गा॒तुं हं॑रिवो विदो नः ।

आ नों॑ ववृत्याः सुवि॒तायं॑ देव वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदां॑नुम् ॥१३

ए॒षः । स्तोम॑ः । इ॒न्द्र॒ । तुभ्य॑म् । अ॒स्मे इति॑ । ए॒तेन॑ ।
गा॒तुम् । ह॒रि॒ऽव॒ः । वि॒द॒ः । न॒ः ।

आ । न॒ः । व॒वृ॒त्या॒ः । सु॒वि॒ताय॑ । दे॒व॒ । वि॒द्याम॑ । इ॒षम् ।
वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥१३

एषः । स्तोमः । इन्द्र । तुभ्यम् । अस्मे इति । एतेन ।
गातुम् । हरिऽवः । विदः । नः ।

आ। नः । ववृत्याः । सुविताये । देव । विद्याम । इषम् ।
वृजनम् । जीरऽदानुम् ॥ १३ ॥

हे "इन्द्र “एष "स्तोमः इदानींकारितप्रकारः स्तोत्रविशेषः "तुभ्यं त्वदर्थम् । हे "हरिवः हरिभ्यां तद्वन्निन्द्र “एतेन स्तोत्रेण गमनेन वा “नः अस्मदीयं गातुं देवयजनमार्गं विदः विदस्व । विदित्वा च हे देव "सुविताय सुहिताय शोभनगमनाय वा नः अस्मान् “आ “ववृत्याः आवर्तस्व

अस्मद्यागं प्रत्यागच्छ । विद्याम इत्यादि व्याख्यातम् ॥ ॥
१५ ॥

# ऋग्वेदः सूक्तं १.१७९


**ऋग्वेदः - मण्डल १**

← सूक्तं १.१७८

सूक्तं १.१७९

१-२ लोपामुद्रा, ३-४ अगस्त्यो मैत्रावरुणिः, ५-६ अगस्त्यशिष्यो ब्रह्मचारी

सूक्तं १.१८० →


दे. रतिः। त्रिष्टुप्, ५ बृहती



## *अगस्त्यः - लोपामुद्रा*

पूर्वीरहं शरदः शश्रमाणा दोषा वस्तोरुषसो जरयन्तीः ।

मिनाति श्रियं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः ॥१॥

ये चिद्धि पूर्व ऋतसाप आसन्साकं देवेभिरवदन्नृतानि ।

ते चिदवासुर्नह्यन्तमापुः समू नु पत्नीर्वृषभिर्जगम्युः ॥२॥

न मृषा श्रान्तं यदवन्ति देवा विश्वा इत्स्पृधो अभ्यश्नवाव ।

जयावेदत्र शतनीथमाजिं यत्सम्यञ्चा मिथुनावभ्यजाव ॥३॥

नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित् ।

लोपामुद्रा वृषणं नी रिणाति धीरमधीरा धयति श्वसन्तम् ॥४॥

इमं नु सोममन्तितो हृत्सु पीतमुप ब्रुवे ।

यत्सीमागश्चकृमा तत्सु मृळतु पुलुकामो हि मर्त्यः ॥५॥

अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः ।

उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥६॥

## सायणभाष्यम्

‘पूर्वीरहम्' इति षडृचं पञ्चदशं सूक्तं त्रैष्टुभम् । उपान्त्या बृहती । अत्र त्रयाणां द्वृचानां लोपामुद्रागस्त्यतच्छिष्यैर्दृष्टत्वात्त एवर्षयः । सूक्तप्रतिपाद्योऽर्थो रतिर्देवता । अत्रानुक्रमणिका- पूर्वीः षड्जायापत्योर्लोपामुद्राया अगस्त्यस्य च द्वृचाभ्यां रत्यर्थं संवादं श्रुत्वान्तेवासी ब्रह्मचार्यन्त्ये बृहत्यादी अपश्यत्' इति । विशेषविनियोगो लैङ्गिकः ॥

पू॒र्वीर॒हं श॒रद॑ः शश्रमा॒णा दो॒षा वस्तो॑रु॒षसो॑ ज॒रय॑न्तीः ।

मि॒नाति॒ श्रियं॑ जरि॒मा त॒नूना॒मप्यू॒ नु पत्नी॒र्वृष॑णो जगम्युः ॥ १

पू॒र्वीः । अ॒हम् । श॒रदः॑ । श॒श्र॒मा॒णा । दो॒षाः । वस्तोः॑ । उ॒षसः॑ । ज॒रयं॑न्तीः ।

मि॒नाति॑ । श्रियं॑म् । ज॒रि॒मा । त॒नूनां॑म् । अपि॑ । ऊ॒ँ इति॑ । नु । पत्नीः॑ । वृषं॑णः । ज॒ग॒म्यु॒ः ॥१

पूर्वीः । अहम् । शरदः । शश्रमाणा । दोषाः । वस्तोः । उषसः । जरयन्तीः ।

मिनाति । श्रियम् । जरिमा । तनूनाम् । अपि । ऊँ इतिं । नु । पत्नीः । वृषणः । जगम्युः ॥१॥

हे अगस्त्य "अहं लोपामुद्रा “पूर्वीः “शरदः पुरातनानसंख्यातान् संवत्सरान् "दोषाः रात्रीः “वस्तोः अहानि तथा देहं "जरयन्तीः “उष सः उषःकालांश्च ॥

सर्वत्र अत्यन्तकालसंयोगे' द्वितीया ॥ अद्यतनकालपर्यन्तं बहुसंवत्सरं कात्स्न्र्येन त्वच्छुश्रूषया “शश्रमाणा श्रान्ताभूवम् । इदानीं तु "जरि मा जरा “तनूनाम् अङ्गानां "श्रियं सौन्दर्यं “मिनाति हिनस्ति । एवमपि नानुगृह्णासीत्यर्थः । "अप्यू “नु । अपिः संभावनायाम् । उ इत्यवधारणे । नु इति वितर्के । इदानीमपि किं संभावनीयम् । लोके हि पत्नीः स्त्रियः "वृषणः सेक्तारः पुरुषाः "जगम्युः गच्छेयुः संभोगं कुर्युः । अतो मां किमित्यवमन्यसे । इदानीमपि वा संभावयेत्यर्थः ॥ सा तमेव आह –

ये चि॒द्धि पूर्व॑ ऋत॒साप॒ आस॑न्त्सा॒कं दे॒वेभि॒रव॑दन्नृ॒तानि॑ ।

ते चि॒दवा॑सुर्न॒ह्यन्त॑मा॒पुः स॑मू॒ नु पत्नी॒र्वृष॑भिर्जगम्युः ॥२

ये । चि॒त् । हि । पूर्वे॑ । ऋ॒त॒ऽसापः॑ । आसं॑न् । सा॒कम् । दे॒वेभिः॑ । अवं॑दन् । ऋ॒तानिं॑ ।

ते । चि॒त् । अवं । अ॒सु॒ः । न॒हि । अन्तं॑म् । आ॒पुः । सम् । ऊ॒ं इतिं॑ । नु । पत्नीः॑ । वृषं॑ऽभिः । ज॒ग॒म्यु॒ः ॥२

ये। चित् । हि । पूर्वे । ऋतऽसापः। आसन् । साकम् । देवेभिः । अवदन् । ऋतानि ।

ते। चित् । अव । असुः। नहि। अन्तम् । आपुः। सम् । ॐ इति । नु । पत्नीः। वृषऽभिः। जगम्युः॥२॥

हे पते अगस्त्य "ये “चिद्धि येऽपि तु "पूर्वे पुरातनाः "ऋतसापः सत्यस्य आपयितारो व्याप्नुवाना महर्षयः "आसन ते “देवेभिः देवैः "साकं सह “ऋतानि सत्यवाक्यानि "अवदन् वदन्ति । ये महत्तपो यज्ञं वा अनुतिष्ठन्ति ये च देववाक्यानि देवस्मृतिरूपाणि वदन्ति

"ते "चित् । चिदप्यर्थे । ते चित् "अवासुः अवक्षिपन्ति रेतः ॥ स्यतिरुपसृष्टो विमोचने वर्तते ॥ ते "नह्यन्तमापुः नहि ब्रह्मचर्यादेरन्तं प्राप्नुवन् । ब्रह्मचर्यमनिषिद्धर्तुकालगमनमपि कुर्वन्तीत्यर्थः । तथा "पत्नीः पत्न्यश्च तपस्यमानाः "वृषभिः भोगवर्षकैः पतिभिः सह "समू "नु जगम्युः । उ नु इति पूरणौ । संगच्छेरन् । अतस्त्वं कथं मां नानुभवसीत्यर्थः ॥

अगस्त्यस्तामाह---

न मृषां श्रान्तं यदवन्ति देवा विश्वा इत्स्पृधो अभ्यंश्नवाव ।

जयावेदत्रं शतनींथमाजिं यत्सम्यञ्चां मिथुनावभ्यजांव ॥ ३

न । मृषां । श्रा॒न्तम् । यत् । अवंन्ति । दे॒वाः । विश्वाः॑ । इत् । स्पृधः॑ । अ॒भि । अ॒श्न॒वा॒व॒ ।

जयांव । इत् । अत्रं । श॒तऽनींथम् । आ॒जिम् । यत् । स॒म्यञ्चां । मि॒थु॒नौ । अ॒भि । अजांव ॥३

न । मृषा । श्रान्तम् । यत् । अवन्ति । देवाः । विश्वाः । इत् । स्पृधः । अभि । अश्नवाव ।

जयाव । इत्। अत्र । शतऽनीथम् । आजिम् । यत् । सम्यञ्चा। मिथुनौ। अभि । अजाव ॥३॥

भोः पत्नि त्वया मया "न "मृषा “श्रान्तम् । व्यर्थं नैव खिन्नमावाभ्याम् । "यत् यस्मात् "देवाः “अवन्ति रक्षन्ति तपोभिः प्रीता देवाः। "विश्वाः सर्वाः "स्पृधः "अभ्यश्नवाव अभितो व्याप्नुयाव । “अत्र अस्मिन् संसारे “शतनीथम् अपरिमितभोगप्राप्तिसाधनम् "आजिं प्राप्तिं परस्परं

"जयाव जयलक्षणं सुरतसंग्रामं वा जयाव। "यत् यस्मात् "सम्यञ्चा सम्यक् परस्परं गच्छन्तौ प्रजयन्तौ वा मिथुना "मिथुनौ स्त्रीपुरुषरूपौ सन्तौ "अभ्यजाव त्वं चाहमपि परस्परमभिजयावेत्येवं तयोक्तं संभोगं संभावयामास ॥

अथ चतुर्थ्यप्यगस्त्य आह --

न॒दस्य॑ मा रुध॒तः काम॒ आग॑न्नि॒त आजा॑तो अ॒मुत॒ः कुत॑श्चित् ।

लोपा॑मुद्रा॒ वृष॑णं॒ नी रि॑णाति॒ धीर॒मधी॑रा धयति श्व॒सन्त॑म् ॥ ४

न॒दस्य॑ । मा॒ । रु॒ध॒तः । काम॑ः । आ । अ॒ग॒न् । इ॒तः । आऽजा॑तः । अ॒मुत॑ः । कुत॑ः । चि॒त् ।

लोपा॑मुद्रा । वृष॑णम् । निः । रि॒णा॒ति॒ । धीर॑म् । अधी॑रा । ध॒य॒ति॒ । श्व॒सन्त॑म् ॥४

नदस्य । मा । रुधतः । कामः । आ । अगन् । इतः । आऽजातः । अमुतः । कुतः । चित् ।

लोपामुद्रा । वृषणम्। निः । रिणाति । धीरम् । अधीरा । धयति । श्वसन्तम् ॥ ४ ॥

हे जाये "नदस्य नदनस्य जपशब्दयितुर्जपाध्ययनकर्तुः “रुधतः रेतोनिरोद्धुर्ब्रह्मचर्यमास्थितस्य॥ उभे कर्मणि षष्ठ्यौ। उक्तलक्षणं मां "कामः "आगन् आगमत् । ‘नदनस्य मा रुधतः काम आगमत्' (निरु. ५.२), इति निरुक्तम् । कस्य हेतोरिति उच्यते। "इतः त्वत्संगमनिमित्तात् तथा "अमुतः वसन्तादिकालात् "कुतश्चित् कारणात् "आजातः सर्वतः उत्पन्नः। यद्वा । इत एतल्लोकजनितादमुतो लोकान्तरजनिताद्वा

कुतश्चिन्निमित्तात् कामात् । कथमिति उच्यते । इयं "लोपामुद्रा "वृषणं रेतसः प्रवर्तकं मां “नी "रिणाति नितरां गच्छतु । किंच “धीरं धीमन्तं नियमादविचालिनं “श्वसन्तं महाप्राणं महाबलम् “अधीरा कातरैषा योषित् “धयति उपभुङ्क्ताम् ॥

अथानयोर्दम्पत्योः संभोगसंलापं श्रुत्वा तत्प्रायश्चित्तं चिकीर्षुरुत्तराभ्यामाह । अनयोर्विनियोगः शौनकेनोक्तः-’ इमं नु सोममित्येते द्वे ऋचौ प्रयतो जपन् । सर्वान् कामानवाप्नोति पापेभ्यश्च प्रमुच्यते' ( ऋग्वि. १. १४७ ) इति --

इ॒मं नु सोम॒मन्तिंतो हृ॒त्सु पी॒तमुपं ब्रुवे ।

यत्सी॒मागंश्चकृ॒मा तत्सु मृंळतु पुलु॒कामो॒ हि मर्त्यः॑ ॥५

इ॒मम् । नु । सोम॑म् । अन्ति॑तः । हृ॒त्ऽसु । पी॒तम् । उप॑ । ब्रु॒वे॒ ।

यत् । सी॒म् । आगः॑ । च॒कृ॒म । तत् । सु । मृ॒ळ॒तु॒ । पु॒लु॒ऽकामः॑ । हि । मर्त्यः॑ ॥५

इमम् । नु । सोमम् । अन्तितः । हृत्ऽसु । पीतम् । उप । ब्रुवे ।

यत् । सीम् । आगः । चकृम । तत् । सु । मृळतु । पुलुऽकामः । हि । मर्त्यः ॥ ५ ॥

"अन्तितः समीपे वर्तमानं "पीतं पीयमानं "हृत्सु हृदयप्रदेशेषु स्थितं "इमं सोमं "सीं सर्वतः "नु क्षिप्रं "उपब्रुवे उपेत्य मनसा प्राप्य प्रार्थयते । किं ब्रवीति उच्यते । "यत् "आगः गुर्वोः कामप्रलापश्रवणविषयं पापं “चकृम कृतवन्तो वयं तत् तस्मादागसः स सोमः "सु सम्यक्

"मृळतु सुखयतु पापजनितदुःखं मा करोत्वित्यर्थः ।
महत्पापमनुभुज्यमानं प्रार्थनया कथं लुप्यते इति अत
आह । "हि यस्मात् मर्त्यः मनुष्यः “पुलुकामः
बहुकामनावान् । अल्पेनैव कर्मणा बहुकामानाकलयति ।
यस्मादेवं तस्मात् परिहरेत्यर्थः। यद्वा ।
अयमपवर्जनीयतया प्राप्यत इवेत्याह । पुरुकामो हि खलु
मर्त्यः कामहतः सन् कामेन निरुद्ध एव वर्तते ।
अतस्तयोरुसेकोऽयुक्तः। तच्छब्दश्रवणदोषोऽपि
प्रामादिकः अस्माकं प्राप्तेन सोमेन परिहर्तव्य इत्यर्थः।
यद्वा । अयं मन्त्रश्चन्द्रपरो व्याख्येयो
मनसोऽभिमानित्वाच्च तस्य पापस्यापि मनस्येव
संभावितत्वात् । अस्मिन् पक्षे हृत्सु पीतं
हृदयस्थितमित्यर्थः । शिष्टं स्पष्टम् ॥

अथ विनियुक्तयोर्मध्ये द्वितीयया सूक्ते षष्ठ्या

अन्तेवास्याह --

अ॒गस्त्य॒ः खन॑मानः ख॒नित्रै॒ः प्र॒जामप॑त्यं॒ बल॑मि॒च्छमा॑नः ।

उ॒भौ वर्णा॒वृषि॑रु॒ग्रः पु॑पोष स॒त्या दे॒वेष्वा॒शिषो॑ जगाम ॥६

अ॒गस्त्य॑ः । खन॑मानः । ख॒नित्रै॑ः । प्र॒ऽजाम् । अप॑त्यम् । बल॑म् । इ॒च्छमा॑नः ।

उ॒भौ । वर्णौ॑ । ऋषि॑ः । उ॒ग्रः । पु॒पो॒ष॒ । स॒त्याः । दे॒वेषु॑ । आ॒ऽशिष॑ः । ज॒गा॒म॒ ॥६

अगस्त्यः । खनमानः । "खनित्रैः । प्रऽजाम् । अपत्यम् । बलम् । इच्छमानः ।

उभौ । वर्णौ । ऋषिः । उग्रः । पुपोष । सत्याः । देवेषु । आऽशिषः । जगाम ॥ ६ ॥

अयम् "अगस्त्यः मद्गुरुः “खनित्रैः फलस्योत्पादनसाधनैर्यज्ञस्तोत्रादिभिः “खनमानः फलमभिमतमुत्पादयन् "प्रजां प्रकर्षेण पुनःपुनर्जायमानम् "अपत्यं कुलस्यापतनसाधनं पुत्रादिकं "बलं च “इच्छमानः सन् । यद्वा । प्रजां भृत्यादिरूपां च इच्छन् । “ऋषिः अतीन्द्रियद्रष्टा महानुभावः "उग्रः उद्गूर्णः संसारे संचरन्नप्यपापः सन् “उभौ “वर्णौ वर्णनीयावाकारौ कामं च तपश्च "पुपोष। "सत्याः आशिषः “देवेषु देवेभ्यः "जगाम प्राप्तवान् । यतोऽयं महानुभावस्तस्मादस्मान् पातीत्यर्थः ॥ ॥ २२ ।। ।। २३ । ।

१.१७९.४

आख्यानं तु हये जाये विलापः स्यान्नदस्य मा ।
अवीरामात्मनः श्लाघा सुदेव इति तु स्पृहा ।।बृहद्देवता
१.५३ ।।

# ऋग्वेदः सूक्तं १.१८०

← सूक्तं १.१७९

ऋग्वेदः - मण्डल १

सूक्तं १.१८०

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१८१ →

## दे. अश्विनौ। त्रिष्टुप्।

युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णांसि दीयत् ।

हिरण्यया वां पवयः प्रुषायन्मध्वः पिबन्ता उषसः सचेथे ॥१॥

युवमत्यस्याव नक्षथो यद्विपत्मनो नर्यस्य प्रयज्योः ।

स्वसा यद्वां विश्वगूर्ती भराति वाजायेट्टे मधुपाविषे च ॥२॥

युवं पय उस्रियायामधत्तं पक्वमामायामव पूर्व्यं गोः ।

अन्तर्यद्वनिनो वामृतप्सू ह्वारो न शुचिर्यजते हविष्मान् ॥३॥

युवं ह घर्मं मधुमन्तमत्रयेऽपो न क्षोदोऽवृणीतमेषे ।

तद्वां नरावश्विना पश्वइष्टी रथ्येव चक्रा प्रति यन्ति मध्वः ॥४॥

आ वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रिः ।

अपः क्षोणी सचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ॥५॥

नि यद्युवेथे नियुतः सुदानू उप स्वधाभिः सृजथः पुरंधिम् ।

प्रेषद्वेषद्वातो न सूरिरा महे ददे सुव्रतो न वाजम् ॥६॥

वयं चिद्धि वां जरितारः सत्या विपन्यामहे वि पणिर्हितावान् ।

अधा चिद्धि ष्माश्विनावनिन्द्या पाथो हि ष्मा वृषणावन्तिदेवम् ॥७॥

युवां चिद्धि ष्माश्विनावनु द्यून्विरुद्रस्य प्रस्रवणस्य सातौ ।

अगस्त्यो नरां नृषु प्रशस्तः काराधुनीव चितयत्सहस्रैः ॥८॥

प्र यद्वहेथे महिना रथस्य प्र स्यन्द्रा याथो मनुषो न होता ।

धत्तं सूरिभ्य उत वा स्वश्व्यं नासत्या रयिषाचः स्याम ॥९॥

तं वां रथं वयमद्या हुवेम स्तोमैरश्विना सुविताय नव्यम् ।

अरिष्टनेमिं परि द्यामियानं विद्यामेषं वृजनं जीरदानुम् ॥१०॥

## सायणभाष्यम्

अथ चतुर्विंशेऽनुवाके द्वादश सूक्तानि । तत्र ' युवो रजांसि ' इति दशर्चं प्रथमं सूक्तमागस्त्यं त्रैष्टुभम् । तुह्यादिपरिभाषया इदमादिसूक्तपञ्चकमाश्विनम् । ' युवोर्दशाश्विनं वै ' इत्यनुक्रमणिका । एतदादीनि तृतीयवर्जितानि पञ्च सूक्तानि प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि विनियुक्तानि । ' अथाश्विनः' इति खण्डे सूत्रितं - युवो रजांसीति पञ्चानां तृतीयमुद्धरेत्' ( आश्व. श्रौ. ४. १५) इति ।।

यु॒वो रजां॑सि सु॒यमा॑सो॒ अश्वा॒ रथो॒ यद्वां॒ पर्यर्णां॑सि॒ दीयं॑त् ।

हि॒र॒ण्यया॑ वां प॒वयः॑ प्रुषाय॒न्मध्व॒ः पिब॑न्ता उ॒षसः॑ सचेथे ॥ ०१

यु॒वोः । रजां॑सि । सु॒ऽयमा॑सः । अश्वाः॑ । रथः॑ । यत् । वा॒म् । परि॑ । अर्णां॑सि । दीय॑त् ।

हि॒र॒ण्ययाः॑ । वा॒म् । प॒वयः॑ । प्रु॒षा॒य॒न् । मध्वः॑ । पिब॑न्तौ । उ॒षसः॑ । स॒चे॒थे॒ इति॑ ॥१

युवोः । रजांसि । सुऽयमासः । अश्वाः । रथः । यत् । वाम् । परि । अर्णांसि । दीयत्।

हिरण्ययाः । वाम् । पवयः । प्रुषायन् । मध्वः । पिबन्तौ । उषसः । सचेथे इति ॥१॥

हे अश्विनौ "युवोः युवयोः 'अश्वाः रथवोढारः 'रजांसि रञ्जकान् लोकान् 'सुयमासः शोभननियमनाः । लोकत्रयसंचारिण इत्यर्थः । कदेति आह । 'यत् यदा “वां

'रथः अर्णांसि अरणीयान् अभिमतदेशान् 'परि “दीयत् परिगच्छेत् परितो गच्छति वा । तदेत्यर्थः । दीयतिर्गतिकर्मा, ‘ दीयति तकति' (नि. २. १४. ६९ ) इति तत्कर्मसु पाठात् । किंच रथागमनकाले “वां युवयोः “पवयः वज्रा रथनेमयो वा 'हिरण्ययाः हिरण्मयाः “प्रुषायन् प्रुष्णन्त्यभिमतम् । यद्वा। हिरण्ययानि पवयो मधुपात्राणि वां युवाभ्यामर्थाय । यस्मादेवं तस्मात् युवां 'मध्वः मधुनो मधुसदृशस्य सोमरसस्य ॥ कर्मणि षष्ठी ॥ सोमरसं पिबन्तौ आस्वादयन्तौ "उषसः उषःसंबन्धिनि काले 'सचेथे यज्ञं संगच्छेथे । अत्र क्रमो न विवक्षितः । उषःकाले एवागत्य मधुरं सोमरसं पिबतमित्यर्थः ।।

यु॒वमत्य॒स्याव॑ नक्षथो॒ यद्विप॑त्मनो॒ नर्य॑स्य॒ प्रयं॑ज्योः ।

स्वसा॒ यद्वां॑ विश्वगूर्ती॒ भरा॑ति॒ वाजा॒येट्टे॑ मधुपावि॒षे च॑ ॥
०२

यु॒वम् । अत्यं॑स्य । अव॑ । न॒क्ष॒थ॒ः । यत् । वि॒ऽपं॑त्मनः ।
नर्यं॑स्य । प्र॒ऽयं॑ज्योः ।

स्वसा॑ । यत् । वा॒म् । वि॒श्व॒गू॒र्ती॒ इति॑ विश्व॒ऽगूर्ती । भरा॑ति ।
वाजा॑य । ईट्टे॑ । म॒धु॒ऽपौ॒ । इ॒षे । च॒ ॥२

युवम् । अत्यस्य । अव । नक्षथः । यत् । विऽपत्मनः ।
नर्यस्य । प्रऽयज्योः ।

स्वसा । यत् । वाम् । विश्वगूर्ती इति विश्वऽगूर्ती । भराति ।
वाजाय । ईट्टे। मधुऽपौ। इषे । च ॥२॥

हे अश्विनौ "युवं युवां "यत् "अत्यस्य अतनशीलस्य
सततसंचारिणः "विपत्मनः विविधगमनस्य
विचित्रगमनस्य वा “नर्यस्य मनुष्याणां हितस्य “प्रयज्योः

प्रकर्षेण पूज्यस्य ॥ एतानि कर्मणि षष्ठ्यन्तानि ॥ उत्तरूपं रथम् "अव अवस्तात् तदुदयात् पूर्वं "नक्षथः व्याप्नुथो देवयजनं गन्तुम् । किंच “यत् यदा हे "विश्वगूर्ती सर्वस्तुत्यौ सर्वदा उद्गूर्णौ वा "वां युवयोः "स्वसा स्वसृस्थानीया स्वयंसारिणी वा उषाः “भराति पोषते त्वदागमनाय प्रभातं करोति । यदा हे "मधुपौ मधुरस्य सोमरसस्य पातारौ युवां यजमानः "वाजाय बलाय गमनाय वा “इषे प्रभूतान्नाय "ईट्टे स्तौति । तदा रथं प्राप्नुथ इत्यर्थः ॥

यु॒वं पय॑ उ॒स्रिया॑यामधत्तं प॒क्वमा॒माया॒मव॒ पूर्व्यं॒ गोः ।

अ॒न्तर्यद्व॒निनो॑ वामृतप्सू ह्वा॒रो न शुचि॒र्यज॑ते ह॒विष्मा॑न् ॥ ०३

यु॒वम् । पयः॑ । उ॒स्रियां॑याम् । अ॒धु॒त्त॒म् । प॒क्वम् ।
आ॒मायां॑म् । अवं॑ । पूर्व्यं॑म् । गोः ।

अ॒न्तः । यत् । व॒निनः॑ । वा॒म् । ऋ॒त॒प्सू॒ इत्यृं॑तऽप्सू । ह्वा॒रः
। न । शुचिः॑ । यजं॑ते । ह॒विष्मां॑न् ॥३

युवम् । पयः । उस्रियायाम् । अधत्तम् । पक्वम् ।
आमायाम् । अव । पूर्व्यम् । गोः ।

अन्तः । यत् । वनिनः । वाम् । ऋतप्सू इत्यृतऽप्सू । ह्वारः
। न । शुचिः । यजते। हविष्मान् ॥३॥

हे अश्विनौ "युवं युवाम् “उस्रियायाम् । गोनामैतत् ।
भोगोत्स्राविण्यां गवि "पयः "अधत्तम् अधारयतं
स्थापितवन्तौ । तथा “आमायाम् अपक्वायां “पक्वं
परिपक्वं भोगयोग्यं गोसंबन्धि दुग्धं “पूर्व्यं पूर्वभवं
तत्रैवोत्पन्नम् "अव अवस्तादधारयतम् । गवि क्षीरमुत्पाद्य

पुनर्भोगाय पृथक्कृतवन्तावित्यर्थः । "यत् यस्मात् हे "ऋतप्सू सत्यस्वरूपौ यज्ञियहविर्भक्षयितारौ वा हे अश्विनौ “वां "वनिनः उदकवतः उदकोपलक्षितहविष्मतो यज्ञस्य "अन्तः मध्ये "हविष्मान् प्रदेयहविषा तद्वान् "शुचिः शुद्धो यजमानः “यजते पूजयति युवां तस्मादेवमकुरुतम् । यद्वा । यदैवं यजमानः करोति तदेत्यर्थः । तत्र दृष्टान्तः । वनिनः वनसंबन्धिवृक्षसमूहस्य अन्तः मध्ये "ह्वारो "न चोर इव । स यथा जागरूको वर्तते तथा यजमानोऽपीत्यर्थः ॥

यु॒वं ह॑ घ॒र्मं मधु॑मन्त॒मत्र॑ये॒ऽपो न क्षोदो॑ऽवृणीतमे॒षे ।

तद्वां॑ नरावश्विना॒ पश्व॑इष्टी॒ रथ्ये॑व च॒क्रा प्रति॑ यन्ति॒ मध्वः॑ ॥
०४

यु॒वम् । ह॒ । घ॒र्मम् । मधु॑ऽमन्तम् । अत्र॑ये । अ॒पः । न । क्षोदः॑ । अ॒वृ॒णी॒त॒म् । ए॒षे ।

तत् । वा॒म् । न॒रौ॒ । अ॒श्वि॒ना॒ । पश्वः॑ऽइष्टिः । रथ्या॑ऽइव ।
च॒क्रा । प्रति॑ । य॒न्ति॒ । मध्वः॑ ॥४

युवम् । ह । घर्मम् । मधुऽमन्तम् । अत्रये । अपः । न ।
क्षोदः । अवृणीतम् । एषे ।

तत् । वाम् । नरौ। अश्विना । पश्वःऽइष्टिः । रथ्याऽइव।
चक्रा । प्रति । यन्ति । मध्वः ॥४॥

अत्रेतिहासमाहुः । प्रवर्ग्येण प्रचरन्तमत्रिं राक्षसास्तप्ते घर्मेऽपातयन् । स च तप्यमानोऽश्विनौ तुष्टाव । तौ च स्तुत्या हृष्टमनसावरक्षतामिति । अपरेऽग्नौ क्षिप्तमपालयतामित्याहुरिति । हे अश्विनौ । “युवं युवां "मधुमन्तं पयोघृतरूपाभ्यां मधुभ्यां तद्वन्तं “घर्मं दीप्तं प्रवर्ग्यम् “एषे सौख्यमिच्छते "अत्रये एतन्नाम्ने महर्षये “क्षोदः क्षोदांसि क्षोद्यमानानि "अपो "न उदकानीव "अवृणीतम् अवारयतम् । औष्ण्यं शैत्यसुखं कृतवन्तौ ।

तप्तघर्मसकाशात् भ(र)क्षितवान् (वन्तौ) इत्यर्थः । यद्वा । अत्रये क्षोदः । उदकनामैतत् । तत्स्थं शैत्यं लक्ष्यते । अपः क्षोदो न । अप इति षष्ठ्यर्थे द्वितीया । उदकानां शैत्यं यथा भवति तद्वत् । पक्षान्तरे तु घर्मं दीप्तमग्निं मधुमन्तं कृत्वा अवृणीतं सुखयतमित्यर्थः । तथा च मन्त्रान्तरं-' तप्तं घर्ममोम्यावन्तमत्रये' (ऋ. सं. १. ११२. ७ ) इति । "तत् तस्मात् यस्मादेवं तस्मात् हे “नरौ नेतारौ नराकारौ वा "अश्विना अश्विनौ “वां युवाभ्यां “पश्वइष्टिः । पशुरित्यग्नेर्नाम । 'अग्निः पशुरासीत् ' (तै. सं. ५. ७. २६ ) इत्यादिश्रुतेः । यद्वा । पशुप्रियत्वात् पशुरित्युच्यते । तस्याग्नेः इष्टिर्भवति । अग्नौ यागः सर्वो युष्मदर्थं प्रवर्तते इत्यर्थः । यद्वा । पशुसाध्यो यागो युवाभ्यां प्रवर्तते इति शेषः । 'आश्विनं धूम्रललाममा लभेत यो दुर्ब्राह्मणः सोमं पिपासेत् '(तै. सं. २. १. १०. १) इत्यादिनाप्यश्विभ्यां पशुर्विहितः । तथा “मध्वः मधुसदृशाः सोमरसा अपि युवाभ्यां “प्रति यन्ति अभिगच्छन्ति । तत्र दृष्टान्तः ।

“रथ्येव "चक्रा रथसंबन्धीनि चक्रा चक्राणीव । तानि यथा प्रवणदेशमभिगच्छन्ति तद्वत् ॥

आ वां द॒नायं ववृतीय दस्र॒ा गोरोहेंण तौ॒ग्र्यो न जिव्रिः॑ ।

अ॒पः क्षो॒णी संचत॒े माहिंना वां जूर्णो वा॒मक्षुरंहंसो यजत्रा ॥ ०५

आ । वा॒म् । द॒नायं । व॒वृ॒ती॒य॒ । द॒स्र॒ा । गोः । ओहेंन । तौ॒ग्र्यः । न । जिव्रिः॑ ।

अ॒पः । क्षो॒णी इतिं । स॒च॒त॒े । माहिंना । वा॒म् । जूर्णः । वा॒म् । अक्षुः॑ । अंहंसः । य॒ज॒त्र॒ा ॥५

आ । वाम् । दानाय । ववृतीय । दस्रा । गोः । ओहेन । तौग्र्यः । न । जिव्रिः ।

अपः । क्षोणी इति। सचते । माहिना । वाम्। जूर्णः । वाम् । अक्षुः । अंहसः । यजत्रा ॥५॥

हे "दस्रा शत्रूणामुपक्षपयितारावश्विनौ "वां युवयोः "दानाय अस्मदभिमताय युवाभ्यां वाहयितुम् "आ “ववृतीय आवर्तयामि यागदेशम् ॥ वृतेरन्तर्भावितण्यर्थस्येदम् ॥ केन साधनेनेति तदुच्यते । "गोः स्तुतिरूपाया वाचः "ओहेन वहनेन साधनेन । यद्वा । आवर्तनकाल उच्यते । गोर्गन्त्र्याः उषसो वहनेन। 'जिव्रिः जीर्णो जयशीलो वा "तौग्र्यो “न तुग्राख्यस्य राज्ञः पुत्रो भुज्युरिव । स यथा शत्रुभिः संताड्य समुद्रे पातितो युवां परितोष्य स्वोद्धाराय स्वसमीपमानयत तद्वदित्यर्थः । इयमाख्यायिका ‘तुग्रो ह' (ऋ. सं. १. ११६. ३), ‘भुज्युमंहसः पिपृथः' (ऋ. सं. १०.६५.१२), ‘ नासत्या भुज्युम्' (ऋ. सं. १. ११६. ४ ) इत्यादिषु प्रसिद्धा च । किमाश्चर्यमहमावर्तयामीति । किंतु “अपः "क्षोणी। अप इत्यन्तरिक्षनाम (नि. १.३.८)।

क्षोणीति पृथिवीनाम (नि. १. १.७)। द्यावापृथिव्यावपि “वां युवयोः "माहिना माहात्म्येन युवयोः प्रसादेन सर्वोपकारिण्याविति ख्यातिं सर्वप्रदेशव्यापित्वं वा "सचते सेवते प्रत्येकम् । यद्वा । वां माहिना यजमानो द्यावापृथिव्यौ सचते । किंच हे "यजत्रा यष्टव्यौ प्रसादादयमृषिः "जूर्णः जरया जीर्णाङ्गः सन् "अंहसः पापात् जरालक्षणात् प्रमुच्य अक्षुः चिरकालव्याप्तो दीर्घजीवी भूयात् । यद्वा । हे यजत्रा वां प्रसादात् जूर्णो जीर्णो यजमानः अंहसो दुरितस्य हन्त्रीरप उक्तलक्षणानि सोमरसरूपाण्युदकानि क्षोणी क्षोण्याम् ॥ सप्तम्यर्थे प्रगृह्यम् ॥ भूम्यां चिरकालमक्षुर्व्याप्तः सन् महिना माहात्म्येन सचते । द्वितीयो वामित्ययमादरार्थः ॥ ॥ २३ ॥

नि यद्यु॒वेथे॑ नि॒युतः॑ सुदानू॒ उप॑ स्व॒धाभिः॑ सृजथ॒ः पुरं॑धिम् ।

प्रेष॒द्वेष॒द्वातो॒ न सू॒रिरा म॒हे द॑दे सुव्र॒तो न वाज॑म् ॥ ०६

नि । यत् । यु॒वेथे॒ इति॑ । नि॒ऽयुतः॑ । सु॒दा॒नू॒ इति॑ सुऽदानू । उप॑ । स्व॒धाभिः॑ । सृ॒ज॒थ॒ः । पुर॑म्ऽधिम् ।

प्रेष॑त् । वेष॑त् । वातः॑ । न । सू॒रिः । आ । म॒हे । द॒दे॒ । सु॒ऽव्र॒तः । न । वाज॑म् ॥६

नि । यत् । युवेथे इति । निऽयुतः । सुदानू इति सुऽदानू । उप । स्वधाभिः। सृजथः । पुरम्ऽधिम्।

प्रेषत् । वेषत् । वातः । न । सूरिः । आ । महे । ददे । सुऽव्रतः । न । वाज॑म् ॥ ६ ॥

हे "सुदानू शोभनदानावश्विनौ "यत् यदा “नियुतः अश्वान् "नि "युवेथे नियुञ्जाथे नियोजयथः ताभिरस्मद्यज्ञगमनाय संयुक्तौ भवथः तदा "स्वधाभिः अन्नैः तत्कारणैरुदकैर्वा “पुरंधिं बहूनां धात्रीं पृथिवीम् "उप "सृजथः। एवं च सति

"सूरिः स्तोता अयं यजमानः “वातो “न वायुरिव तद्वत् क्षिप्रं युवां "प्रेषत् तर्पयतु । "वेषत् व्याप्नोतु । कामयतां वा ॥ प्रीणातेर्वेतेश्च लेटि रूपे ॥ अनन्तरं “सुव्रतो “न अतिप्रशस्तोष्मादिकर्मवानिव "वाजम् अन्नं "महे महत्त्वाय अयं यजमानः “आ “ददे आदत्ते स्वीकरोति ॥ ‘ आङो दोऽनास्यविहरणे' (पा. सू. १. ३. २०) इत्यात्मनेपदम् । ‘लोपस्त आत्मनेपदेषु' इति तलोपः । यद्वा । छान्दसे लिटि रूपम् ॥ स्वीकृत्य स्वमहत्त्वाय युवामेव तर्पयत्वित्यर्थः॥

व॒यं चि॒द्धि वां जरि॒तारः॑ स॒त्या विंप॒न्यामंहे॒ वि प॒णिर्हि॒तावांन् ।

अधां चि॒द्धि ष्मांश्विनावनिन्द्या पा॒थो हि ष्मां वृषणा॒वन्तिंदेवम् ॥ ०७

व॒यम् । चि॒त् । हि । वा॒म् । ज॒रि॒तार॑ः । स॒त्याः ।
वि॒पु॒न्यामं॑हे । वि । प॒णिः । हि॒तऽवा॑न् ।

अध॑ । चि॒त् । हि । स्म॒ । अ॒श्वि॒नौ॒ । अ॒नि॒न्द्या॒ । पा॒थः । हि
। स्म॒ । वृ॒ष॒णौ॒ । अन्ति॑ऽदेवम् ॥७

वयम् । चित् । हि । वाम् । जरितारः । सत्याः ।
विपन्यामहे । वि । पणिः । हितऽवान् ।

अध। चित् । हि। स्म। अश्विनौ। अनिन्द्या । पाथः । हि।
स्म । वृषणौ। अन्तिऽदेवम् ॥७॥

“वयं “चिद्धि वयमपि "जरितारः तव स्तोतारः "सत्याः
सत्यफलाः सन्तः "विपन्यामहे विविधं स्तुमः । "पणिः
पणाधारो द्रोणकलशः "वि “हितवान्
स्थापितरसवानासीत् । यद्वा । पणिर्वणिग्लुब्धकोऽयष्टा
हितवान्नियतधनो धनाढ्योऽप्ययष्टा वि वियुज्यताम् ॥

उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ "अध अपि च "चिद्धि "ष्म । एते त्रयः पूरणाः । हे "अश्विनौ "अनिन्द्या । प्रशस्यनामैतत् । हे प्रशस्यौ "वृषणौ हे कामानां वर्षितारौ युवाम् "अन्तिदेवं देवानामन्तिके "पाथः सोमं पिबथः । यद्वा । अन्तिके वर्तमानं देवान् प्राप्नुवानं सोममिति योज्यम् ॥

युवां चिद्धि ष्मांश्विनावनु द्यून्विरुंद्रस्य प्रस्रवंणस्य सातौ ।

अगस्त्यों नरां नृषु प्रशंस्तः कारांधुनीव चितयत्सहस्रैः ॥ ०८

युवाम् । चित् । हि । स्म । अश्विनौ । अनुं । द्यून् । विऽरुंद्रस्य । प्रऽस्रवंणस्य । सातौ ।

अ॒गस्त्यः॑ । न॒राम् । नृषुं । प्रऽशंस्तः । कारांधुनीऽइव ।
चि॒त॒य॒त् । स॒हस्रैः॑ ॥८

युवाम् । चित् । हि। स्म । अश्विनौ । अनु। द्यून् ।
विऽरुद्रस्य । प्रऽस्रवणस्य । सातौ ।

अगस्त्यः । नराम् । नृषु । प्रऽशस्तः । काराधुनीऽइव ।
चितयत् । सहस्रैः ॥ ८ ॥

हे "अश्विनौ "युवां । "चिद्धि “ष्म इति त्रयः पूरणाः । "अनु “द्यून प्रतिदिनं "विरुद्रस्य विशिष्टोष्णरूपदुःखद्रावणस्य विविधरोरूयमाणद्रवणवतो वा "प्रस्रवणस्य वृष्ट्युदकसंस्त्यायस्य "सातौ लाभे निमित्तभूते सति "अगस्त्यः एतन्नामा महर्षिः "नरां नेतॄणां कर्मनिर्वाहकानां मनुष्याणां "नृषु येषु तादृशाः मनुष्याः सन्ति तेषु "प्रशस्तः प्रशस्यतरोऽयं "सहस्रैः अपरिमितैः स्तोत्रैः "चितयत् चेतयति स्तुत्या प्रबोधयति । तत्र दृष्टान्तः । "काराधुनीव ।

कारा शब्दः । तस्य धूनयितोत्पादयिता शङ्खादिः स इव । यद्वा । एतदप्यगस्त्यविशेषणम् । कारः शब्दयिता होत्रादिः । तस्य धुनिः कम्पयिता प्रेरकः इव । इवेति संप्रत्यर्थे ।' अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः ' ( निरु. ७. ३१ ) इति निरुक्तम् ॥

प्र यद्वहेथे महिना रथस्य प्र स्यन्द्रा याथो मनुषो न होता ।

धत्तं सूरिभ्य उत वा स्वश्व्यं नासत्या रयिषाचः स्याम ॥ ०९

प्र । यत् । वहेथे इति । महिना । रथस्य । प्र । स्यन्द्रा । याथः । मनुषः । न । होता ।

धत्तम् । सूरिऽभ्यः । उत । वा । सुऽअश्व्यम् । नासत्या । रयिऽसाचः । स्याम ॥९

प्र। यत्। वहेथे इति । महिना । रथस्य । प्र। स्यन्द्रा । याथः । मनुषः । न । होता ।

धत्तम् । सूरिऽभ्यः । उत। वा । सुऽअश्व्यम् । नासत्या । रयिऽसाचः । स्याम ॥ ९ ॥

हे अश्विनौ युवां “रथस्य गमनसाधनस्य “महिना महत्त्वेन “यत् यस्मात् “प्र “वहेथे धारयथो यज्ञम् । यद्वा । रथस्य स्वर्गगमनसाधनस्य यागस्य धुरं वहत । तथा हे “स्यन्द्रा स्यन्दनशीलौ युवां “याथः गच्छथः । स्वस्थानं यज्ञारम्भे आगच्छथः यज्ञसमाप्तौ पुनर्गच्छथश्च । तत्र दृष्टान्तः । "मनुषः "होता मनुष्यस्य यजमानस्य होता यथा यज्ञप्रारम्भे आगच्छति कर्मणि निर्वृत्ते पुनरपगच्छति तद्वत् । आगमनसमये “सूरिभ्यः स्तोतृभ्यः “धत्तं धारयतं फलम् । “उत “वा “स्वश्व्यं शोभनाश्वसमूहं धत्तम् । “नासत्या ।

सत्सु भवौ सत्यौ । न असत्यौ नासत्यौ । हे तादृशौ त्वदनुग्रहात् “रयिसाचः धनसमवायिनः “स्याम भवेम ॥

तं वा॒ं रथं॑ व॒यम॒द्या हु॑वेम॒ स्तोमै॑रश्विना सुवि॒ताय॒ नव्यं॑म् ।

अरि॑ष्टनेमि॒ं परि॒ द्यामि॑या॒नं वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥ १०

तम् । वा॒म् । रथ॑म् । व॒यम् । अ॒द्य । हु॒वे॒म॒ । स्तोमै॑ः । अ॒श्वि॒ना॒ । सु॒वि॒ताय॑ । नव्य॑म् ।

अरि॑ष्टऽनेमिम् । परि॑ । द्याम् । इ॒या॒नम् । वि॒द्याम॑ । इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥१०

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । स्तोमैः । अश्विना । सुविताय । नव्यम् ।

अरिष्टनेमिम् । परि । द्याम् । इयानम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥१०॥

हे “अश्विना हे अश्विनौ “वां युवयोः संबन्धिनं शीघ्रगमनेन स्तुत्यं “रथं “वयम् अगस्त्याः “अद्य अस्मिन्सुत्येऽहनि “हुवेम आह्वयेम । केन साधनेनेति उच्यते । “स्तोमैः स्तोत्रैः । किमर्थम् । "सुविताय सुष्ठु प्राप्तये । कीदृशम् । "नव्यं स्तुत्यं नूतनं वा तथा “अरिष्टनेमिम् अहिंसितचक्रवलयं “द्यां “परि “इयानं द्युलोकस्य परितो गच्छन्तम् । विद्याम इत्यादि गतम् ॥ ॥ २४ ॥

# ऋग्वेदः सूक्तं १.१८१

← सूक्तं १.१८०

ऋग्वेदः - मण्डल १

सूक्तं १.१८१

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१८२ →

## दे. अश्विनौ। त्रिष्टुप्।

कदु प्रेष्ठाविषां रयीणामध्वर्यन्ता यदुन्निनीथो अपाम् ।

अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानाम् ॥१॥

आ वामश्वासः शुचयः पयस्पा वातरंहसो दिव्यासो अत्याः ।

मनोजुवो वृषणो वीतपृष्ठा एह स्वराजो अश्विना वहन्तु ॥२॥

आ वां रथोऽवनिर्न प्रवत्वान्सृप्रवन्धुरः सुविताय गम्याः ।

वृष्ण स्थातारा मनसो जवीयानहम्पूर्वो यजतो धिष्ण्या यः ॥३॥

इहेह जाता समवावशीतामरेपसा तन्वा नामभिः स्वैः ।

जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ॥४॥

प्र वां निचेरुः ककुहो वशाँ अनु पिशङ्गरूपः सदनानि गम्याः ।

हरी अन्यस्य पीपयन्त वाजैर्मथ्रा रजांस्यश्विना वि घोषैः ॥५॥

प्र वां शरद्वान्वृषभो न निष्षाट् पूर्वीरिषश्चरति मध्व इष्णन् ।

एवैरन्यस्य पीपयन्त वाजैर्वेषन्तीरूर्ध्वा नद्यो न आगुः ॥६॥

असर्जि वां स्थविरा वेधसा गीर्बाळ्हे अश्विना त्रेधा क्षरन्ती ।

उपस्तुताववतं नाधमानं यामन्नयामञ्छृणुतं हवं मे ॥७॥

उत स्या वां रुशतो वप्ससो गीस्त्रिबर्हिषि सदसि पिन्वते नॄन् ।

वृषा वां मेघो वृषणा पीपाय गोर्न सेके मनुषो दशस्यन् ॥८॥

युवां पूषेवाश्विना पुरंधिरग्निमुषां न जरते हविष्मान् ।

हुवे यद्वां वरिवस्या गृणानो विद्यामेषं वृजनं जीरदानुम् ॥९॥

**सायणभाष्यम्**

‘कदु प्रेष्ठौ ' इति नवर्चं द्वितीयं सूक्तमागस्त्यं त्रैष्टुभमाश्विनम् । ‘कदु नव' इत्यनुक्रान्तम् ॥
प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः पूर्वसूक्ते एव उक्तः ॥

कदु॒ प्रेष्ठावि॒षां र॑यी॒णाम॑ध्व॒र्यन्ता॒ यदु॑न्निनी॒थो अ॒पाम् ।

अ॒यं वां॑ य॒ज्ञो अ॑कृत॒ प्रश॑स्तिं॒ वसु॑धिती॒ अवि॑तारा जनानाम् ॥१

कत् । ऊँ॒ इति॑ । प्रेष्ठौ॑ । इ॒षाम् । र॒यी॒णाम् । अ॒ध्व॒र्यन्ता॑ । यत् । उ॒त्ऽनि॒नी॒थः । अ॒पाम् ।

अ॒यम् । वा॒म् । य॒ज्ञः । अ॒कृ॒त॒ । प्रऽश॑स्तिम् । वसु॑धिती॒ इति॒ वसु॑ऽधिती । अवि॑तारा । ज॒ना॒ना॒म् ॥१

कत् । ऊँ इति । प्रेष्ठौ । इषाम् । रयीणाम् । अध्वर्यन्ता ।
यत् । उत्ऽनिनीथः । अपाम् ।

अयम् । वाम् । यज्ञः। अकृत। प्रशस्तिम्। वसुधिती इति
वसुऽधिती । अवितारा। जनानाम् ॥१॥

हे अश्विनौ "प्रेष्ठौ प्रियतमौ वां युवां “कदु कदा भविष्यति'
“इषाम् इष्यमाणानामन्नानां “रयीणां धनानाम् ॥ कर्मणि
षष्ठ्यौ । अन्नानि धनानि च “उन्निनीथः ऊर्ध्वं प्रापयथः
“अध्वर्यन्ता अध्वरं पारयितुमिच्छन्तौ युवाम् “अपां
वृष्ट्युदकानां वृष्ट्युदकानि च उन्निनीथः उत्कृष्टम् अधः
प्रापयथ इति “यत् तत्कदा । कस्मादेवमुच्यते इति उच्यते
। “अयं “यज्ञः अस्माभिरनुष्ठीयमानः “वां युवयोरेव
“प्रशस्ति प्रशंसां स्तुतिम् “अकृत करोति । यज्ञे
शंसनीयानि शस्त्राणि युवामेव प्रशंसन्तीत्यर्थः । यस्मादेवं
तस्मात् हे "वसुधिती वसुनो धनस्य धातारौ

वस्तव्यकर्माणौ तथा हे “जनानाम् “अवितारौ उक्तलक्षणौ युवा कदा अन्नानां धनानां च दातारौ भवथ इति ॥

आ वा॒मश्वा॑स॒ः शुच॑यः पय॒स्पा वात॑रंहसो दि॒व्यासो॒ अत्या॑ः ।

म॒नो॒जुवो॒ वृष॑णो वी॒तपृ॑ष्ठा॒ एह स्व॒राजो॑ अ॒श्विना॑ वहन्तु ॥२

आ । वा॒म् । अश्वा॑सः । शुच॑यः । प॒य॒ःऽपाः । वात॑ऽरंहसः । दि॒व्यास॑ः । अत्या॑ः ।

म॒न॒ःऽजुव॑ः । वृष॑णः । वी॒तऽपृ॑ष्ठाः । आ । इ॒ह । स्व॒ऽराज॑ः । अ॒श्विना॑ । व॒ह॒न्तु॒ ॥२

आ। वाम् । अश्वासः । शुचयः । पयःऽपाः । वातऽरंहसः । दिव्यासः । अत्याः ।

मनःऽजुवः । वृषणः । वीतऽपृष्ठाः । आ । इह । स्व॒ऽराजः । अश्विना । वहन्तु ॥ २ ॥

अश्विनौ शोभनाश्वयुक्तौ "वां युवाम् “अश्वासः युष्मदीयाः “इह अस्मिन् यज्ञे “आ “वहन्तु प्रापयन्तु । अवशिष्टानि अश्वविशेषणानि । कीदृशास्ते । “शुचयः शुद्धा दीप्ता वा “पयस्पाः वृष्ट्युदकस्य पातारः “वातरंहसः वायुवेगाः दिव्याः दिविभवाः “अत्याः अतनशीलाः “मनोजुवः मनोजवाः “वृषणः वर्षकाः युवान इत्यर्थः । “वीतपृष्ठाः कान्तपृष्ठाः वपुष्मन्त इत्यर्थः । “स्वराजः स्वयमेव राजमानाः। ईदृशा भवन्तु ॥

आ वा॒ं रथो॒ऽवनि॒र्न प्र॒वत्वां॑न्सृ॒प्रवं॑न्धुरः सुवि॒तायं गम्याः ।

वृष्णं॑ः स्थातारा॒ मनं॑सो॒ जवीं॑यानहम्पू॒र्वो यं॑ज॒तो धिं॑ष्ण्या॒ यः ॥३

आ । वा॒म् । रथः॑ । अ॒वनिः॑ । न । प्र॒वत्वा॑न् । सृ॒प्रऽवं॑न्धुरः । सु॒वि॒ताय॑ । ग॒म्या॒ः ।

वृष्णः॑ । स्था॒ता॒रा॒ । मनं॑सः । जवी॑यान् । अ॒ह॒म्ऽपू॒र्वः । य॒ज॒तः । धि॒ष्ण्या॒ । यः ॥३

आ। वाम् । रथः । अवनिः । न । प्रवत्वान् । सृप्रऽवन्धुरः । सुविताय । गम्याः ।

वृष्णः । स्थातारा । मनसः । जवीयान् । अहम्ऽपूर्वः । यजतः । धिष्ण्या । यः ॥ ३ ॥

पूर्वमन्त्रेऽश्वव्याजेन अश्विनोरागमनमुक्तम् । अनेन रथव्याजेनोच्यते । हे “धिष्ण्या उन्नतस्थानार्हौ “स्थातारा स्वरथाधिष्ठानौ "वां युवयोः “यः “रथः अस्ति सः “सुविताय शोभनफलाय “आ “गम्याः अस्मद्यज्ञमागच्छतु ॥ पुरुषव्यत्ययः ॥ कीदृशो रथ इति स विशेष्यते । “अवनिर्न

“प्रवत्वान् भूमिरिवात्यन्तविस्तारवान् "सुप्रवन्धुरः विस्तीर्णपुरोभागः “वृष्णः वर्षकस्याश्वस्य “मनसः अपि “जवीयान् मनोवेगवानित्यर्थः । “अहंपूर्वः अहंकारपूर्वो मनस्वी वा अत्युदारः “यजतः यष्टव्यः । ईदृशो रथ आगच्छतु ।।

इ॒हेहं जा॒ता समंवावशीतामरे॒पसां त॒न्वा॒३॒ नामंभि॒ः स्वैः ।

जि॒ष्णुर्वांमि॒न्यः सुमंखस्य सू॒रिर्दि॒वो अ॒न्यः सु॒भगंः पु॒त्र ऊंहे ॥४

इ॒हऽइंह । जा॒ता । सम् । अ॒वा॒व॒शी॒ता॒म् । अ॒रे॒पसां । त॒न्वां । नामंऽभिः । स्वैः ।

जि॒ष्णुः । वा॒म् । अ॒न्यः । सुऽमंखस्य । सू॒रिः । दि॒वः । अ॒न्यः । सु॒ऽभगः॑ । पु॒त्रः । ऊ॒हे॒ ॥४

इहऽइह । जाता । सम् । अवावशीताम् । अरेपसा । तन्वा । नामऽभिः । स्वैः ।

जिष्णुः । वाम् । अन्यः । सुऽमखस्य । सूरिः । दिवः । अन्यः । सुऽभगः । पुत्रः । ऊहे ॥४॥

हे अश्विनौ युवां "समवावशीताम् । सह सम्यग्वा पुनःपुनः स्तूयेथे कामयेथां वा यज्ञम् ॥ पुरुषव्यत्ययः ॥ कीदृशौ युवाम् । "इहेह "जाता । उभाभ्यामिहशब्दाभ्यां मध्यमोत्तमस्थाने उच्येते । तयोः संभूतौ । चन्द्रसूर्येण इति यावत् । " सूर्याचन्द्रमसावित्येके ' ( निरु. १२. १ ) इति निरुक्तम् । "अरेपसा अपापौ । आथर्वणस्य गुरोः शिरश्छेदनादिना पापलेपरहिताविति भावः । 'आथर्वणायाश्विना दधीचेऽयं शिरः प्रत्यैरयतम् ' ( ऋ. सं. १. ११७. २२ ) इत्यादिमन्त्रवर्णात् । केन हेतुनेति उच्यते । "तन्वा शरीरेण शरीरसौन्दर्येण निमित्तेन "स्वैः "नामभिः

स्वीयैर्माहात्म्यविशिष्टैश्विनौ नासत्यावित्यादिभिरपि ।
रमणीयशरीरवत्त्वान्महिमोपेतनामवत्त्वाच्च हेतोः
संस्तूयेथे इत्यर्थः । यद्वा । अरेपसा तन्वेति योज्यम् ।
उक्तप्रकारेण गुरुशिरश्छेदादप्यपापेन शीर्षेण तादृङ्महत्त्व
ख्यापनेनेति यावत् । किंच “वां युवयोः “अन्यः एको
मध्यमस्यान्तरिक्षस्य पुत्रस्थानीयः सोमः “जिष्णुः
जयशीलः “सुमखस्य शोभनयज्ञस्य “सूरिः प्रेरयिता सन्
“ऊहे वहति विश्वं जगद्धारयति । चन्द्रात्मनस्तस्योदये
सति ह्योषधिवनस्पत्यादयो वर्धन्ते । “अन्यः अपरः
उत्तमस्थानः “दिवः द्युलोकस्य “पुत्रः पुत्रस्थानीय
आदित्यः “सुभगः शोभनरश्मिरूपधनः ऊहे वहति ।
कृत्स्नमेवं पृथग्जगन्निर्वाहकौ महानुभावौ युवां सह
स्तूयेथे । अत्र निरुक्तम्-' इहेह जातौ संस्तूयेथे
पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः
सुमहतो बलस्येरयिता मध्यमो दिवोऽन्यः सुभगः पुत्र
उह्यत आदित्यः ' (निरु. १२. ३ ) इति ॥

प्र वां निचे॒रुः कं॑कु॒हो वशाँ॒ अनुं पि॒शङ्गं॑रूप॒ः सदं॑नानि गम्याः ।

हरीं अ॒न्यस्यं पी॒पयं॑न्त॒ वाजै॑र्म॒थ्रा रजां॑स्यश्विना॒ वि घोषैः॑ ॥५

प्र । वा॒म् । नि॒ऽचे॒रुः । क॒कु॒हः । वशा॑न् । अनुं ।
पि॒शङ्गं॑ऽरूपः । सदं॑नानि । ग॒म्या॒ः ।

हरी॒ इतिं । अ॒न्यस्यं । पी॒पयं॑न्त । वाजैः॑ । म॒थ्ना । रजां॑सि
। अ॒श्वि॒ना॒ । वि । घोषैः॑ ॥५

प्र । वाम् । निऽचेरुः । ककुहः । वशान् । अनु ।
पिशङ्गऽरूपः । सदनानि । गम्याः ।

हरी इति । अन्यस्य । पीपयन्त । वाजैः । मथ्ना । रजांसि
। अश्विना । वि । घोषैः ॥५॥

हे “अश्विना अश्विनौ “वां युवयोर्मध्ये अन्यस्य एकस्य “ककुहः श्रेष्ठः “पिशङ्गरूपः हिरण्यरूपः पीतवर्णो वा बहुभिरक्षाद्यवयवैर्निरूप्यमाणो वा रथः “वशान् अनु कामाननुलक्ष्य यथाकामम् । अस्मद्यज्ञागमनेच्छयेत्यर्थः । यद्वा । वशान्स्वाधीनाः ककुहो दिशो दिगन्तरालानुक्रमेण नीचैरुच्चैश्चरन् स्वस्थानाद्देवयजनमुखं गच्छन् । “सदनानि अस्मद्यागगृहाणि “प्र “गम्याः प्रकर्षेण गच्छतु॥ पुरुषव्यत्ययः ॥ अत्र यद्यप्यन्यस्येति नोक्तं तथाप्युत्तरवाक्ये तथोक्तत्वादत्रापि लभ्यते । “अन्यस्य युवयोरन्यतमस्य “हरी अश्वौ "रजांसि लोकाः । अत्र लोकशब्दो जनवाचकः । ते यजमानरूपा जनाः इत्यर्थः । ते च “मथ्ना प्रमथनेनालोडनेन निष्पादितैः "वाजैः अन्नैरामिक्षादिरूपैः “घोषैः स्तुतिभिश्च आह्वानादिशब्दविशिष्टैर्वा “पीपयन्त आप्याययन्ति ॥ ॥ २५ ॥

प्र वां श॒रद्वां॑न्वृष॒भो न नि॒ष्षाट् पू॒र्वीरिषं॑श्चरति॒ मध्वं॑ इ॒ष्णन् ।

एवै॑र॒न्यस्यं॑ पी॒पयं॑न्त॒ वाजै॒र्वेषं॑न्तीरू॒र्ध्वा न॒द्यो॑ न॒ आगुः॑ ॥ ६

प्र । वा॒म् । श॒रत्ऽवां॑न् । वृ॒ष॒भः । न । नि॒ष्षाट् । पू॒र्वीः । इषः॑ । च॒र॒ति॒ । मध्वः॑ । इ॒ष्णन् ।

एवैः॑ । अ॒न्यस्यं॑ । पी॒पयं॑न्त । वाजैः॑ । वेषं॑न्तीः । ऊ॒र्ध्वाः । न॒द्यः॑ । नः॒ । आ । अ॒गुः॒ ॥६

प्र। वाम् । शरत्ऽवान्। वृषभः । न । निष्षाट्। पूर्वीः । इषः । चरति। मध्वः । इष्णन् ।

एवैः । अन्यस्य । पीपयन्त । वाजैः । वेषन्तीः । ऊर्ध्वाः । नद्यः । नः । आ । अगुः ॥६॥

हे अश्विनौ युवयोरन्यतमो मध्यमस्थानः "शरद्वान् शरणवान् मेघवृक्षपर्णादीनां विशरणवान् । अथवा बहुसंवत्सरः पूर्वतनो नित्य इत्यर्थः । “वृषभो “न वर्षितैवेन्द्रः। स इव शत्रूणां “निष्षाट् निःसारयिता सन् "पूर्वीः बह्वीः पुरातनीर्वा “इषः अन्नानि सस्यादीन्युद्दिश्य “प्र “चरति प्रकर्षेण गच्छति । मध्यमस्थानश्चन्द्रः इति पक्षे शरद्वाञ्छरत्कालवान् । तस्मिन् ऋतौ हि चन्द्रः संनद्धः भवति । तेन च तृणगुल्मौषध्यादीनि वर्धन्ते । स किमर्थमेवं करोतीति उच्यते । “मध्व “इष्णन् मधुनो मधुसदृशस्य हविषः । कर्मणि षष्ठी ॥ हविरिच्छन् । तदर्थमेवं करोति । तथा “अन्यस्य उत्तमादित्यस्य “एवैः कामैर्गमनैर्वा निमित्तभूतैः “पीपयन्त आप्याययन्ति हविर्भिर्यजमानाः । तुष्टेन तेन प्रेरिताः “वेषन्तीः व्यापयन्तीः “ऊर्ध्वाः उन्नताः उत्तीराः “नद्यः न नदनशीला यथा “नः अस्मदर्थम् “आगुः आगच्छन्ति ।।

असंर्जि वा॒ं स्थविंरा वेधसा॒ गीर्बा॒ळ्हे अंश्विना त्रे॒धा क्षरंन्ती
।

उपंस्तुतावव॒तं नाधंमा॒नं याम॒न्नयांमञ्छृणु॒तं हवं मे ॥७

असंर्जि । वा॒म् । स्थविंरा । वे॒ध॒सा॒ । गीः । बा॒ळ्हे ।
अ॒श्वि॒ना॒ । त्रे॒धा । क्षरंन्ती ।

उपंऽस्तुतौ । अ॒व॒त॒म् । नाधंमानम् । यामंन् । अयांमन् ।
शृ॒णु॒त॒म् । हवंम् । मे॒ ॥७

असर्जि । वाम् । स्थविरा । वेधसा । गीः । बाळ्हे ।
अश्विना । त्रेधा । क्षरन्ती ।

उपऽस्तुतौ । अवतम् । नाधमानम् । यामन् । अयामन् ।
शृणुतम् । हवम् । मे ॥ ७ ॥

हे वेधसा विधातारावश्विनौ “वां युवयोः "बाळ्हे दृढे स्थैर्ये निमित्तभूते सति “गीः स्तुतिरूपा वाक् “असर्जि सृज्यते। कीदृशी सा । “स्थविरा अत्यन्त स्थिरा नित्या वेदमयी “त्रेधा मन्त्रादिभेदेन त्रिप्रकारा “क्षरन्ती युवां गच्छन्ती । ईदृशी स्तुतिः कृतेत्यर्थः । तथा “उपस्तुतौ सन्तौ “नाधमानम् अभिमतफलं याचमानम् “अवतं रक्षतं तर्पयतं वा । किंच “यामन् गमने “अयामन् अगमने च “हवम् आह्वानं “शृणुतम् ॥

उ॒त स्या वां॒ रुश॑तो॒ वप्स॑सो॒ गीस्त्रि॑ब॒र्हिषि॒ सद॑सि पिन्वते॒ नॄन् ।

वृषा॑ वां मे॒घो वृ॑षणा पीपाय॒ गोर्न सेके॒ मनु॑षो दश॒स्यन् ॥८

उ॒त । स्या । वा॒म् । रुश॑तः । वप्स॑सः । गीः । त्रि॒ऽब॒र्हिषि॑ । सद॑सि । पि॒न्व॒ते॒ । नॄन् ।

वृषा॑ । वा॒म् । मे॒घः । वृ॒ष॒णा॒ । पी॒पा॒य॒ । गोः । न । सेके॑ । मनु॑षः । द॒श॒स्यन् ॥८

उत । स्या । वाम् । रुशतः । वप्ससः । गीः । त्रिऽबर्हिषि । सदसि । पिन्वते । नॄन् ।

वृषा । वाम् । मेघः । वृषणा । पीपाय । गोः । न । सेके। मनुषः । दशस्यन् ॥ ८ ॥

हे अश्विनौ “वां युवयोः रुशतः दीप्तस्य “वप्ससः रूपस्यैव वपुषो वा ख्यापयित्री “गीः स्तुतिवाक् त्रिबर्हिषि त्रिधात्वास्तीर्णबर्हिष्के “सदसि यागसदने "नॄन् कर्मनेतॄनस्मान् "पिन्वते आप्याययति आप्याययतु वा उचितप्रदानादिना । केन प्रकारेण उच्यते । हे “वृषणा वर्षितारौ कामानां “वां युवयोः स्वभूतः “मेघः सेक्ता जलदः प्रदानविशेषो वा “वृषा वर्षकः सन् 'मनुषः मनुष्यान् प्रति “दशस्यन् प्रयच्छन् “पीपाय आप्याययति ।

आप्यायने दृष्टान्तः । “गोर्न “सेके उदकसेके इव शांतनात् सेके उदकस्येव । तद्यथा आप्याययति तद्वदित्यर्थः । यद्वा । नेति संप्रत्यर्थे । गोः उदकस्य सेके निमित्तभूते सति पीपायेति संबन्धः ॥

यु॒वां पू॒षेवा॑श्विना॒ पुरँ॑धिर॒ग्निमु॒षां न जं॑रते ह॒विष्मा॑न् ।

हु॒वे यद्वां॑ वरि॒व॒स्या गृ॑णा॒नो वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥९

यु॒वाम् । पू॒षाऽइ॑व । अ॒श्वि॒ना॒ । पुर॑म्ऽधिः । अ॒ग्निम् । उ॒षाम् । न । ज॒र॒ते॒ । ह॒विष्मा॑न् ।

हु॒वे । यत् । वा॒म् । व॒रि॒व॒स्या । गृ॒णा॒नः । वि॒द्याम॑ । इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥९

युवाम् । पूषाऽइव । अश्विना । पुरम्ऽधिः । अग्निम् । उषाम् । न । जरते। हविष्मान् ।

हुवे । यत् । वाम् । वरिवस्या । गृणानः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥९॥

हे अश्विनौ "युवां “पुरंधिः बहुप्रज्ञः पूषेव पोषक इव “हविष्मान् हविर्युक्तः "जरते स्तौति । यद्वा । पुरंधिर्बहूनां धारयित्री पूषेव पृथिवीव ॥ द्वितीयार्थे प्रथमा ॥ तां यथा स्तौति तद्वत् । किमिव "अग्निमुषां “न । अग्निमुषसं च यथा तथा युवामपि । प्रातरनुवाकाश्विनशस्त्रयोः आश्विनक्रतुवत् आग्नेयोषस्ययोरपि सद्भावादिति भावः । कदेति आह । “यत् यदा "वरिवस्या वरिवस्यया परिचर्यया युक्तः “गृणानः स्तोता स्तौति तदा यजमानोऽपि जरते इत्यर्थः । विद्यामेत्यादि गतम् ॥ ॥२३॥

# ऋग्वेदः सूक्तं १.१८२

← सूक्तं १.१८१

ऋग्वेदः - मण्डल १

सूक्तं १.१८२

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१८३ →

## दे. अश्विनौ। जगती, ६-८ त्रिष्टुप्।

अभूदिदं वयुनमो षु भूषता रथो वृषण्वान्मदता मनीषिणः ।

धियंजिन्वा धिष्ण्या विश्पलावसू दिवो नपाता सुकृते शुचिव्रता ॥१॥

इन्द्रतमा हि धिष्ण्या मरुत्तमा दस्रा दंसिष्ठा रथ्या रथीतमा ।

पूर्णं रथं वहेथे मध्व आचितं तेन दाश्वांसमुप याथो अश्विना ॥२॥

किमत्र दस्रा कृणुथः किमासाथे जनो यः कश्चिदहविर्महीयते ।

अति क्रमिष्टं जुरतं पणेरसुं ज्योतिर्विप्राय कृणुतं वचस्यवे ॥३॥

जम्भयतमभितो रायतः शुनो हतं मृधो विदथुस्तान्यश्विना ।

वाचंवाचं जरितू रत्निनीं कृतमुभा शंसं नासत्यावतं मम ॥४॥

युवमेतं चक्रथुः सिन्धुषु प्लवमात्मन्वन्तं पक्षिणं तौग्र्याय कम् ।

येन देवत्रा मनसा निरूहथुः सुपप्तनी पेतथुः क्षोदसो महः ॥५॥

अवविद्धं तौग्र्यमप्स्वन्तरनारम्भणे तमसि प्रविद्धम् ।

चतस्रो नावो जठलस्य जुष्टा उदश्विभ्यामिषिताः पारयन्ति ॥६॥

कः स्विद्वृक्षो निष्ठितो मध्ये अर्णसो यं तौग्र्यो नाधितः पर्यषस्वजत् ।

पर्णा मृगस्य पतरोरिवारभ उदश्विना ऊहथुः श्रोमताय कम् ॥७॥

तद्वां नरा नासत्यावनु ष्याद्यद्वां मानास उचथमवोचन् ।

अस्मादद्य सदसः सोम्यादा विद्यामेषं वृजनं जीरदानुम् ॥८॥

# सायणभाष्यम्

‘अभूदिदम्' इत्यष्टर्चं तृतीयं सूक्तम् आश्विनं जागतम् । “अवविद्धम्' इति षष्ठी ‘तद्वां नरा नासत्यौ' इत्यष्टमी च उभे त्रिष्टुभौ । ‘अभूदिदमष्टौ षष्ठ्यन्त्ये त्रिष्टुभौ' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दस्यस्य विनियोगः । तथा च सूत्रितम्- ‘अभूदिदं यो वां परिज्मेति त्रीणि ( आश्व. श्रौ. ४. १५ ) इति ॥ ।

अभू॑दि॒दं व॒युन॒मो षु भू॑षता॒ रथो॒ वृष॑ण्वा॒न्मद॑ता मनीषिणः ।

धि॒यं॑जि॒न्वा धिष्ण्या॑ वि॒श्पला॑वसू दि॒वो नपा॑ता सु॒कृते॒ शुचि॑व्रता ॥१

अभू॑त् । इ॒दम् । व॒युन॑म् । ओ इति॑ । सु । भू॒ष॒त॒ । रथः॑ । वृष॑ण्ऽवान् । मद॑त । म॒नी॒षि॒णः॒ ।

धि॒य॒म्ऽजि॒न्वा । धिष्ण्यां । वि॒श्पलांवसू॒ इतिं । दि॒वः ।
नपांता । सु॒ऽकृतें । शुचिंऽव्रता ॥१

अभूत् । इदम् । वयुनम् । ओ इति । सु । भूषत । रथः ।
वृषण्वान् । मदत । मनीषिणः ।

धियम्ऽजिन्वा । धिष्ण्या । विश्पलावसू इति । दिवः ।
नपाता। सुऽकृते । शुचिऽव्रता ॥१।।

हे “मनीषिणः मनस्विनो मेधाविन ऋत्विजः अस्माकम्
“इदं “वयुनं प्रज्ञानम् “अभूत् उत्पन्नम् । कीदृशं तदिति ।
उच्यते । “वृषण्वान् अभिमतवर्षणवान् “रथः अश्विनोः
संबन्धी गमनसाधनो रथ आगत इति शेषः ।
तत्स्थावश्विनौ “ओ “षु “भूषत । ओ इति
निपातद्वयसमुदायात्मकः एको निपातः । सुष्ठु आभूषत ।
अभिमुखा भवत स्तोतुम् । तादृशौ महानुभावावश्विनौ
“मदत ।। अन्तर्भावितण्यर्थोऽयम् ॥ मदयत संभावयत ।

अश्विनौ विशेष्येते । “सुकृते सुष्टु कृतवते मह्यं “धियंजिन्वा कर्मणो बुद्धेर्वा प्रीणयितारौ “धिष्ण्या धिषणार्हौ स्तुत्यौ “विश्पलावसू विशां प्रजानाम् अस्माकं पालयितृधनौ विश्पलाख्यायाश्छिन्नजङ्घाया हिरण्मयजङ्घाप्रदानेन तथाभूतौ । ‘सद्यो जङ्घामायसीं विश्पलायै ' ( ऋ. सं. १. ११६. १५ ) इत्यादिनिगमः । “दिवः आदित्यस्य “नपाता नप्तारौ नपातयितारौ वा “शुचिव्रता दीप्तकर्माणौ । ईदृशावश्विनौ मदत ॥

इन्द्र॑तमा॒ हि धिष्ण्या॑ म॒रुत्त॑मा द॒स्रा दंसि॑ष्ठा र॒थ्या॑ र॒थीत॑मा ।

पू॒र्णं रथं॑ वहेथे॒ मध्व॒ आचि॑तं॒ तेन॑ दा॒श्वांस॒मुप॑ याथो अश्विना ॥२

इन्द्रऽतमा । हि । धिष्ण्या । मरुत्ऽतमा । दस्रा । दंसिष्ठा ।
रथ्या । रथिऽतमा ।

पूर्णम् । रथम् । वहेथे इति । मध्वः । आऽचितम् । तेन ।
दाश्वांसम् । उप । याथः । अश्विना ॥२

इन्द्रऽतमा । हि । धिष्ण्या । मरुत्ऽतमा । दस्रा । दंसिष्ठा ।
रथ्या । रथिऽतमा ।

पूर्णम् । रथम् । वहेथे इति । मध्वः । आऽचितम् । तेन ।
दाश्वांसम् । उप । याथः । अश्विना ॥२॥

हे अश्विनौ युवाम् “इन्द्रतमा “हि ईश्वरतमौ खलु । एवं
प्रतिविशेषणं हिः संबन्ध्यः । तथा “धिष्ण्या स्तुत्यर्हौ
“मरुत्तमा मरुद्वद्वेगगामिनौ मितरागिणौ मितराविणौ वा
“दस्रा उपक्षपयितारौ शत्रूणां “दंसिष्ठा अतिशयकर्माणौ
“रथ्या रथार्हौ रथवन्तौ “रथितमा । रथिनो नेतारः । तेषां

श्रेष्ठौ । ‘रथीरध्वराणाम् ’ ( ऋ. सं. ८. ११. २) इति नेतृपरतया व्याख्यातत्वात् । ईदृशौ युवां “मध्वः मधुसदृशस्य उदकस्यामृतस्य वा “पूर्णं पूरितम् “आचितं सर्वतः संनद्धं “रथं “वहेथे नयथः । “तेन उक्तगुणविशिष्टेन रथेन हे “अश्विना अश्विनौ उक्तगुणविशिष्टौ सन्तौ “उप “याथः यज्ञमभिप्राप्नुथः ।।

किमत्रं दस्रा कृणुथ॒ः किमांसाथे॒ जनो॒ यः कश्चि॒दहंविर्मही॒यतें ।

अतिं क्रमिष्टं जु॒रतं प॒णेरसुं॒ ज्योति॒र्विप्रांय कृणुतं वच॒स्यवें ॥३

किम् । अत्रं । द॒स्रा॒ । कृ॒णु॒थ॒ः । किम् । आ॒सा॒थे॒ इतिं । जनः॑ । यः । कः । चि॒त् । अहंविः । म॒ही॒यतें ।

अतिं । क्र॒मि॒ष्ट॒म् । जु॒रतं॑म् । प॒णेः । असुं॑म् । ज्योतिः॑ ।
विप्रा॑य । कृ॒णु॒त॒म् । व॒च॒स्यवें ॥३

किम् । अत्र । दस्रा । कृणुथः । किम् । आसाथे इति ।
जनः । यः । कः । चित् । अहविः । महीयते ।।

अति । क्रमिष्टम् । जुरतम् । पणेः । असुम् । ज्योतिः ।
विप्राय । कृणुतम् । वचस्यवे ॥३॥

हे “दस्रा उपक्षपयितारौ युवाम् “अत्र अस्मिन् मनुष्ये “किं
“कृणुथः कुरुथः । हविषोऽभावादिति भावः । तत्रैव
किमासाथे किं तिष्ठथः । अत्रेत्युक्तं कुत्रेत्याह । “यः
“कश्चित् “जनः जन्मवान् "अहविः यज्ञार्थहवीरहितः
“महीयते पूज्यते स्वयं न युष्मान् पूजयति । तं जनम्
"अति “क्रमिष्टं पराभूय तिष्ठतम् । न केवलमतिक्रममात्रं
किंतु “पणेः वणिग्भूतस्य लुब्धकस्यायष्टुः तस्य “असुं
प्राणं "जुरतम् अहिंसिष्टम् अनीनशतम् । “विप्राय

मेधाविने “वचस्यवे वचसः स्तोत्ररूपस्य युवाभ्यामिच्छते मह्यं "ज्योतिः “कृणुतं युष्मद्यजनविषयज्ञानं कुरुतम् ॥

ज॒म्भयं॑तम॒भितो॒ राय॑त॒ः शुनो॑ ह॒तं मृधो॑ वि॒दथु॒स्तान्यं॑श्विना ।

वाचं॑वाचं जरि॒तू र॒त्निनीं॑ कृतमु॒भा शंसं॑ नासत्याव॒तं मम॑ ॥ ४

ज॒म्भयं॑तम् । अ॒भित॑ः । राय॑तः । शुन॑ः । ह॒तम् । मृध॑ः । वि॒दथु॑ः । तानि॑ । अ॒श्वि॒ना॒ ।

वाचं॑म्ऽवाचम् । ज॒रि॒तुः । र॒त्निनी॑म् । कृ॒त॒म् । उ॒भा । शंस॑म् । ना॒स॒त्या॒ । अ॒व॒त॒म् । मम॑ ॥४

जम्भयतम् । अभितः । रायतः । शुनः । हतम् । मृधः । विदथुः । तानि । अश्विना ।।

वाचम्ऽवाचम् । जरितुः । रत्निनीम् । कृतम्। उभा ।
शंसम् । नासत्या । अवतम् । मम ॥४॥

हे अश्विनौ “रायतः निन्दितं शब्दयतः अस्मान्
हन्तुमागच्छतो वा “शुनः श्वसदृशान् “अभितः “जम्भयतं
नाशयतम् । तथा "मृधः तेषां संग्रामान् संग्रामं कुर्वतो वा
“हतं मारयतम् । “तानि हननोपायान् “विदथुः जानीथः ।
किंच “जरितुः युष्मान् स्तोतुः “वाचंवाचं तां तां
स्तुतिलक्षणां वाचं “रत्निनीं “कृतं सर्वामपि स्तुतिं
रमणीयफलवतीं कुरुतम् । हे “नासत्या सत्यभूतौ युवाम्
“उभा उभौ मम मदीयां “शंसं स्तुतिम् “अवतं रक्षतम् ॥

युवमे॒तं चं॑क्रथु॒ः सिन्धु॑षु प्ल॒वमा॑त्म॒न्वन्तं॑ प॒क्षिणं॑ तौ॒ग्र्याय॒
कम् ।

येनं देव॒त्रा मनंसा निरू॒हथुं॑ः सुपप्त॒नी पेंतथु॒॑ः क्षोदंसो म॒हः ॥५

यु॒वम् । ए॒तम् । च॒क्र॒तु॒ः । सिन्धुंषु । प्ल॒वम् । आ॒त्म॒न्ऽवन्तंम् । प॒क्षिणंम् । तौ॒ग्र्यायं । कम् ।

येनं । दे॒व॒ऽत्रा । मनंसा । नि॒ःऽऊ॒हथुः॑ । सु॒ऽप॒प्त॒नि । पे॒त॒थु॒ः । क्षोदंसः । म॒हः ॥५

युवम् । एतम् । चक्रथुः । सिन्धुषु । प्लवम् । आत्मन्ऽवन्तम् । पक्षिणम्। तौग्र्याय । कम्।

येन । देवऽत्रा । मनसा । निःऽऊहथुः । सुऽपप्तनि । पेतथुः । क्षोदसः । महः ॥ ५ ॥

हे अश्विनौ "युवं युवां “सिन्धुषु समुद्रोदकेषु “एतं "प्लवं प्रसिद्धं प्लुतिसाधनं प्लवं नावम् “आत्मन्वन्तं दार्ढ्यवन्तं “पक्षिणं पक्षवद्गतिसाधनरथवन्तं “तौग्र्याय तुग्रनाम्नो राज्ञः

पुत्राय भुज्युनाम्ने राज्ञे “कं सुखकरं “चक्रथुः। तौग्र्यो भुज्यू राजा समुद्रवर्ती ससेनः परचक्रं प्रमथितुं प्रस्थितः । तं प्रतीपबलानि आगत्यापातयन् स च प्रसादफलकराश्विनौ स्तुत्वा स्वात्मानं ररक्ष इत्ययमितिहासो बहुधा पूर्वं प्रपञ्चितः। यद्वा । कमिति पूरणः । तस्य जलसंचारिरथस्य सहायभूतान् बहून् रथादीनकुरुतमित्यर्थः । अयमर्थस्तु ‘तमूहथुर्नौभिः' (ऋ. सं. १. ११६. ३ ), ‘चतस्रो नावः' (. सं. १. १८२. ६ ), 'त्रिभी रथैः' (ऋ. सं. १. ११६. ४ ) इत्यादिमन्त्रान्तरेषु प्रसिद्धः । “येन युष्मद्दत्तेन प्लवेन “देवत्रा देवेषु मध्ये “मनसा अनुग्रहयुक्त्या बुद्ध्या । येन मनसेति वा योज्यम् । “निरूहथुः निर्गमनं कुरुथः । तथा “सुपप्तनि शोभनपतनं यथा भवति सुपतनौ वा युवां “महः महतः “क्षोदसः । उदकनामैतत् । उदकात् "पेतथुः तदधः पतथः उत्तरीतुम् ॥ ॥ २७ ॥

अवंविद्धं तौ॒ग्र्यम॒प्स्व१॒॑न्तरंनारम्भ॒णे तमंसि॒ प्रविंद्धम् ।

चतंस्रो॒ नावो॒ जठंलस्य॒ जुष्टा॒ उद॒श्विभ्यांमिषि॒ताः पांरयन्ति ॥६

अवंऽविद्धम् । तौ॒ग्र्यम् । अ॒प्ऽसु । अ॒न्तः । अ॒ना॒र॒म्भ॒णे । तमंसि । प्रऽविंद्धम् ।

चतंस्रः । नावः॑ । जठंलस्य । जुष्टाः॑ । उत् । अ॒श्विऽभ्यांम् । इ॒षि॒ताः । पा॒र॒य॒न्ति॒ ॥६

अवऽविद्धम् । तौग्र्यम् । अप्ऽसु । अन्तः । अनारम्भणे । तमसि । प्रऽविद्धम् ।।

चतस्रः । नावः । जठलस्य । जुष्टाः । उत्। अश्विऽभ्याम् । इषिताः । पारयन्ति ॥६॥

“अप्स्वन्तः मध्ये "अवविद्धम् अवस्ताच्छत्रुभिः पातितम् “अनारम्भणे अनालम्बने आलम्बनरहिते “तमसि । तमोवत्तमः । दृष्टिश्वासादिप्रतिबन्धके जलमध्ये “प्रविद्धं प्रकर्षेण पीडितं तौग्र्यं भुज्युं “जठलस्य जठरवदुदकधारकस्य मध्ये "जुष्टाः सेविताः । यद्वा ॥ कर्मणि षष्ठी ॥ जठरं प्राप्ताः अन्तर्जलं प्रविष्टाः । "अश्विभ्यामिषिताः चतस्रो "नावः “उत् पारयन्ति उत्तारयन्ति प्रापयन्ति ॥

कः स्विं॑द्वृ॒क्षो निष्ठि॑तो॒ मध्ये॒ अर्ण॑सो॒ यं तौ॒ग्र्यो ना॑धि॒तः प॒र्यष॑स्वजत् ।

प॒र्णा मृ॒गस्य॑ प॒तरो॑रिवा॒रभ॒ उद॑श्विना ऊहथुः श्रोम॑ताय॒ कम् ॥७

कः । स्वि॒त् । वृ॒क्षः । निःऽस्थि॑तः । मध्ये॑ । अर्ण॑सः । यम्
। तौ॒ग्र्यः । ना॒धि॒तः । प॒रि॒ऽअस॑स्वजत् ।

प॒र्णा । मृ॒गस्य॑ । प॒तरोः॑ऽइव । आ॒ऽरभे॑ । उत् । अ॒श्वि॒ना॒ ।
ऊ॒ह॒थुः । श्रोम॑ताय । कम् ॥७

कः । स्वित्। वृक्षः । निःऽस्थितः । मध्ये । अर्णसः । यम् ।
तौग्र्यः । नाधितः । परिऽअसस्वजत् ।

पर्णा । मृगस्य । पतरोःऽइव । आऽरभे। उत् । अश्विनौ ।
ऊहथुः । श्रोमताय । कम् ॥ ७ ॥

“कः “स्वित् कश्चिदनुग्राहकः “वृक्षः वृक्षविकारो रथः ।
विकारे प्रकृतिशब्दः । यद्वा । संस्तवाभिप्रायमेतत् ।
स्तोत्राख्यो वृक्ष इत्यर्थः । कीदृशो रथः । “निष्ठितः निश्चलं
वर्तमानः । कुत्रेति उच्यते । "अर्णसः उदकस्य “मध्ये । "यं
वृक्षं "तौग्र्यः तुग्रपुत्रो भुज्युः "नाधितः याचमानः

“पर्यषस्वजत् परिष्वक्तमकरोत् । आलम्बने दृष्टान्तः ।
“पतरोः पतनशीलस्य मृगस्य मार्जयितुः शोधयितुर्हिंसादेः
“आरभे आलम्बनाय पर्णानीव । तानि यथा आलम्बनाय
प्रभवन्ति तद्वत् । हे “अश्विनौ "श्रोमताय कीर्तिमत्त्वाय
"उत् “ऊहथुः उर्ध्वं प्रापयथः । स्तुतिपक्षे स्तोत्राख्यं
वृक्षमाश्रितवन्तं तमूहथुरित्यर्थः ॥

तद्वां॑ नरा नासत्या॒वनु॑ ष्या॒द्यद्वां॒ मानां॑स उ॒चथ॒मवो॑चन् ।

अ॒स्माद॒द्य सद॑सः सो॒म्यादा वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥८

तत् । वा॒म् । न॒रा॒ । ना॒स॒त्यौ॒ । अनु॑ । स्या॒त् । यत् । वा॒म् ।
मानां॑सः । उ॒चथ॑म् । अवो॑चन् ।

अ॒स्मात् । अ॒द्य । सद॑सः । सो॒म्यात् । आ । वि॒द्याम॑ ।
इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥८

तत् । वाम् । नरा । नासत्यौ । अनु । स्यात् । यत्। वाम् । मानासः । उचथम् । अवोचन् ।

अस्मात् । अद्य । सदसः । सोम्यात् । आ । विद्याम । इषम् । वृजनम्। जीरऽदानुम् ॥८॥

हे "नरा नेतारौ कर्मणो नराकारौ वा हे “नासत्यौ असत्यरहितौ सत्यफलौ वा "वां युवां “तत् तादृशं स्तोत्रम् “अनु “स्यात् अनुकूलं भवतु अनुभवतु वा वाम् । तदित्युक्तं यदित्याह । “वां प्रति “मानासः पूजावन्तोऽस्मदीया होत्रादयः “यत् “उचथं स्तोत्रम् “अवोचन् अकुर्वन् तद्वाम् अनु ष्यात् । हे अश्विनौ “अद्य अस्मिन् प्रधानयागदिने "अस्मात् अस्माभिः क्रियमाणात् “सदसः संबन्धिनः “सोम्यात् सोमयागसंपादकात् । “आ इति अप्यर्थे । अस्माभिर्यजमानैः अद्य क्रियमाणादपि स्तोत्रात् प्रीणयतमिति । विद्यामेति गतम् ॥ ॥ २८ ॥

# ऋग्वेदः सूक्तं १.१८३


← सूक्तं १.१८२

ऋग्वेदः - मण्डल १

सूक्तं १.१८३

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१८४ →


## दे. अश्विनौ। त्रिष्टुप्।

---

तं युञ्जाथां मनसो यो जवीयान्त्रिवन्धुरो वृषणा यस्त्रिचक्रः ।

येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः ॥१॥

सुवृद्रथो वर्तते यन्नभि क्षां यत्तिष्ठथः क्रतुमन्तानु पृक्षे ।

वपुर्वपुष्या सचतामियं गीर्दिवो दुहित्रोषसा सचेथे ॥२॥

आ तिष्ठतं सुवृतं यो रथो वामनु व्रतानि वर्तते हविष्मान् ।

येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥३॥

मा वां वृको मा वृकीरा दधर्षीन्मा परि वर्क्तमुत माति धक्तम् ।

अयं वां भागो निहित इयं गीर्दस्राविमे वां निधयो मधूनाम् ॥४॥

युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे हविष्मान् ।

दिशं न दिष्टामृजूयेव यन्ता मे हवं नासत्योप यातम् ॥५॥

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।

एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम् ॥६॥

## सायणभाष्यम्

# 'तं युञ्जाथाम्' इति षडृचं चतुर्थं सूक्तं त्रैष्टुभमागस्त्यमाश्विनम् ॥

# तं यु॑ञ्जाथा॒ं मन॑सो॒ यो जवी॑यान्त्रिवन्धु॒रो वृ॑षणा॒

यस्त्रि॑च॒क्रः ।

येनो॑पया॒थः सु॒कृतो॑ दुरो॒णं त्रि॒धातु॑ना पतथो॒ विर्न प॒र्णैः ॥१

तम् । यु॒ञ्जा॒था॒म् । मन॑सः । यः । जवी॑यान् । त्रि॒ऽव॒न्धु॒रः । वृ॒ष॒णा॒ । यः । त्रि॒ऽच॒क्रः ।

येन॑ । उ॒प॒ऽया॒थः । सु॒ऽकृतः॑ । दु॒रो॒णम् । त्रि॒ऽधातु॑ना । प॒त॒थः॒ । विः । न । प॒र्णैः ॥१

तम् । युञ्जाथाम् । मनसः । यः । जवीयान् । त्रिऽवन्धुरः । वृषणा । यः । त्रिऽचक्रः ।

येन । उपऽयाथः । सुऽकृतः । दुरोणम् । त्रिऽधातुना । पतथः । विः । न । पर्णैः ॥ १ ॥

हे "वृषणा वर्षकौ कामानां युवां "तं वक्ष्यमाणगुणविशिष्टं रथं "युञ्जाथां योजयतम् । तमित्युक्तं कमित्याह । "यः

रथः "त्रिवन्धुरः त्रिप्रकारसारथिस्थानः । वन्धुरं रथिनः स्थानमित्याहुः । ‘आ याह्यर्वाङुप वन्धुरेष्ठाः' ( ऋ. सं. ३. ४३. १ ) इत्यादिमन्त्रान्तरात् । "यः च "त्रिचक्रः चक्रत्रितयोपेतः । पुनः स एव विशेष्यते । "येन रथेन “उपयाथः उपगच्छथः । किम् । 'सुकृतः शोभनसोमाख्यकर्मवतो यजमानस्य “दुरोणम् । गृहनामैतत् । यागगृहम् । येनेत्युक्तं केनेत्याह । “त्रिधातुना त्रिप्रकारस्थानोपेतेन सुवर्णरजतताम्रधातुत्रयोपेतेन वा रथेन । गमने दृष्टान्तः। "विर्न "पर्णैः पक्षी पक्षैर्यथा शीघ्रमप्रयत्नेन गच्छति तद्वदुक्तलक्षणेन रथेन “पतथः गच्छथः ॥

सु॒वृद्रथो॑ वर्तते॒ यन्न॒भि क्षां यत्तिष्ठ॑थ॒ः क्रतु॑म॒न्तानु॑ पृ॒क्षे ।

वपु॑र्वपु॒ष्या सं॑चतामि॒यं गीर्दि॒वो दु॑हि॒त्रोषसा॑ सचेथे ॥२

सु॒ऽवृत् । रथः॑ । व॒र्त॒ते॒ । यन् । अ॒भि । क्षाम् । यत् । तिष्ठ॑थः । क्रतु॑ऽमन्ता । अनु॑ । पृ॒क्षे ।

वपुः॑ । व॒पु॒ष्या । स॒च॒ता॒म् । इ॒यम् । गीः । दि॒वः । दु॒हि॒त्रा । उ॒षसा॑ । स॒चे॒थे॒ इति॑ ॥२

सुऽवृत् । रथः । वर्तते । यन् । अभि । क्षाम् । यत् । तिष्ठथः । क्रतुऽमन्ता। अनु । पृक्षे।

वपुः । वपुष्या। सचताम् । इयम् । गीः । दिवः । दुहित्रा । उषसा । सचेथे इति ॥ २ ॥

हे अश्विनौ युवयोः "रथः सुवृत् शोभनवर्तनः शोभनचक्रपरिभ्रमणः “यन् गच्छन् "क्षाम् “अभि “वर्तते देवयजनभूमिं प्रति गच्छति । "यत् यं रथं “क्रतुमन्ता संकल्पवन्तौ कर्मवन्तौ वा "पृक्षे। अन्ननामैतत् । हविषि निमित्तभूते सति । "अनु अधीत्यर्थे । अधि “तिष्ठथः

आश्रयथः। तादृशो रथो देवयजनं प्रत्यागत इत्यर्थः । अनन्तरं “वपुष्या युष्मद्वपुषि हिता शरीरवर्धनी “इयं "गीः इदानीं क्रियमाणप्रकारा स्तुतिरूपा वाक् "वपुः "सचताम् । युवां च "दिवः द्युलोकस्य आदित्यस्य वा “दुहित्रा दुहितृस्थानीयया "उषसा उषोदेवतया "सचेथे यज्ञं संगच्छेथे। उषस्याश्विनयोः समानकालत्वादिति भावः ॥

आ तिंष्ठतं सु॒वृत॒ं यो रथों वा॒मनुं व्र॒तानि॒ वर्तंते ह॒विष्मांन् ।

येनं नरा नासत्येष॒यध्यैं व॒र्तिर्या॒थस्तनंयाय॒ त्मनें च ॥३

आ । ति॒ष्ठ॒त॒म् । सु॒ऽवृतंम् । यः । रथः । वा॒म् । अनुं । व्र॒तानिं । वर्तंते । ह॒विष्मांन् ।

येनं । न॒रा॒ । ना॒स॒त्या॒ । इ॒ष॒यध्यैं । व॒र्तिः । या॒थः । तनंयाय । त्मनें । च॒ ॥३

आ। तिष्ठतम् । सुऽवृतम् । यः । रथः । वाम् । अनु ।
व्रतानि । वर्तते । हविष्मान् ।

येन । नरा । नासत्या । इषयध्यै । वर्तिः । याथः । तनयाय
। त्मने । च ।। ३ ॥

हे अश्विनौ "वां युवां "सुवृतं शोभनवर्तनं रथम् “आ
“तिष्ठतम् आश्रयतम् । "यो "रथः “हविष्मान् । षष्ठ्यर्थे
प्रथमा । हविष्मतो यजमानस्य “व्रतानि कर्माणि "अनु
"वर्तते । यद्वा । यजमानाय दत्तहविषा तद्वान् । "येन च
रथेन हे "नरा नेतारौ वा हे "नासत्या असत्यरहितौ युवाम्
“इषयध्यै यज्ञं प्राप्तुमिच्छतमिति शेषः । तेन रथेन "वर्तिः
। गृहनामैतत् । यजमानस्य यज्ञगृहं “तनयाय पुत्रलाभाय
“त्मने आत्मने आत्महिताय "च "याथः ।।

मा वा॒ं वृको॒ मा वृ॒कीरा दं॑धर्षी॒न्मा परिं॑ वर्क्तमु॒त मातिं॑

धत्क्तम् ।

अ॒यं वां भा॒गो निहि॑त इ॒यं गीर्दस्रा॑वि॒मे वां नि॒धयो॒ मधू॑नाम् ॥४

मा । वा॒म् । वृक॑ः । मा । वृ॒कीः । आ । द॒ध॒र्षी॒त् । मा । परि॑ । व॒र्त्क्त॒म् । उ॒त । मा । अति॑ । ध॒त्क्त॒म् ।

अ॒यम् । वा॒म् । भा॒गः । निऽहि॑तः । इ॒यम् । गीः । दस्रौ॑ । इ॒मे । वा॒म् । नि॒ऽधय॑ः । मधू॑नाम् ॥४

मा। वाम् । वृकः । मा । वृकीः । आ । दधर्षीत् । मा । परि । वर्त्क्तम् । उत। मा। अति । धत्क्तम् ।।

अयम् । वाम् । भागः । निऽहितः । इयम् । गीः । दस्रौ । इमे । वाम् । निऽधयः । मधूनाम् ॥४॥

हे "दस्रौ शत्रूणामुपक्षपयितारावश्विनौ "वां युवयोः अनुग्रहादिति शेषः । "वृकः हिंसकः अरण्यश्वादिः "मा “दधर्षीत् माम् । तथा “वृकीः वृक्यो हिंसिका अन्य अपि "मा दधर्षीत् ॥ वचनव्यत्ययः ।। धर्षणं मा कार्षुः । युवामेव वा मा दधर्षीदिति योज्यम् । तथा युवां "मा "परि "वर्क्त परितो मा वर्जयतं माम् । "उत अपि च "माति “धत्तम् अस्मानतिक्रम्य अन्यस्मै मा दत्तम् । किमर्थमेवमिति उच्यते । “वां युवयोरर्थाय "अयं "भागः भजनीयो हविरंशः "निहितः। तथा “इयं च "गीः स्तुतिरूपा वागपि निहितेति शेषः । हे दस्रावश्विनौ “वां युवाभ्याम् “इमे इमानि "मधूनां सोमरसानां “निधयः निधानानि स्थापितानि ।।

यु॒वां गोत॑मः पुरुमी॒ळ्हो अत्रि॒र्दस्रा॒ हव॒तेऽवं॑से ह॒विष्मा॑न् ।

दिशं॒ न दि॒ष्टामृं॑जू॒येव॒ यन्ता॑ मे॒ हवं॑ नास॒त्योपं॑ यातम् ॥५

यु॒वम् । गोतं॑मः । पु॒रु॒ऽमी॒ळ्हः । अत्रिः॑ । दस्रा॑ । हवं॑ते ।
अवं॑से । ह॒विष्मा॑न् ।

दिशं॑म् । न । दि॒ष्टाम् । ऋ॒जु॒याऽइं॑व । यन्ता॑ । आ । मे॒ ।
हवं॑म् । ना॒स॒त्या॒ । उपं॑ । या॒त॒म् ॥५

युवाम् । गोतमः । पुरुऽमीळ्हः । अत्रिः । दस्रा । हवते ।
अवसे । हविष्मान् ।

दिशम् । न । दिष्टाम् । ऋजुयाऽइव । यन्ता । आ । मे।
हवम् । नासत्या। उप । यातम् ॥५॥

हे "दस्रा दस्रावश्विनौ "युवां "गोतमः च "पुरुमीळ्हः च
"अत्रिः च महर्षयश्च एतेषु एकैकः "हविमान् सन् "अवसे
रक्षणाय युष्मत्तर्पणाय वा "हवते आह्वयति ।
एवमहमप्याह्वयामि । फलसाधनाह्वाने दृष्टान्तः। "यन्ता

उपगन्ता उपगन्तुकामः “ऋजूयेव ॥ द्वितीयाया अकारः ।। ऋजुगामिनं मार्गज्ञं “दिष्टां “दिशं "न गन्तव्यामभिमतां दिशं प्रति यथा तथा वामपि । यथा अध्वगामी स्वगन्तव्यस्य शीघ्रगमनाय मार्गज्ञमृजुगामिनमाह्वयति तद्वत् । यद्वा । ऋजूयेव । इवशब्द एवार्थे । गन्ता ऋजुनैव मार्गेण इष्टां दिशमिव तथा युष्मत्प्रीणनेन मार्गेण स्वाभिमतं फलं प्राप्नोति । हे नासत्यावश्विनौ "मे मम "हवम् आह्वानमालक्ष्य “उप "यातम् उपगच्छतम् ॥

अता॑रिष्म॒ तम॑सस्पा॒रम॒स्य प्रति॑ वा॒ं स्तोमो॑ अश्विनावधायि ।

एह या॑तं प॒थिभि॑र्देव॒यानै॑र्वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥६

अता॑रिष्म । तम॑सः । पा॒रम् । अ॒स्य । प्रति॑ । वा॒म् । स्तोमः॑ । अ॒श्वि॒नौ॒ । अ॒धा॒यि॒ ।

आ । इ॒ह । या॒त॒म् । प॒थिऽभिः॑ । दे॒व॒ऽयानैः॑ । वि॒द्याम॑ ।
इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥६

अतारिष्म । तमसः । पारम् । अस्य । प्रति । वाम् ।
स्तोमः । अश्विनौ । अधायि ।

आ। इह । यातम्। पथिऽभिः । देवऽयानैः । विद्याम ।
इषम् । वृजनम् । जीरऽदानुम् ॥६॥

हे अश्विनौ युवयोः प्रसादात् "अस्य “तमसः तमनहेतोः
श्रेयःप्रतिबन्धरूपस्य दुःखस्य "पारं पर्यन्तभूमिम्
"अतारिष्म उत्तीर्णाः स्मः । हे "अश्विनौ “वां “प्रति "स्तोमः
स्तोत्रम् "अधायि अकारीत्यर्थः । युवां "देवयानैः
देवगन्तव्यैर्मार्गैः "इह अस्मद्यज्ञे "आ "यातम् आगच्छतम् ।
शिष्टो व्याख्यातः ॥ ॥ २९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थाश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति
श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क
भूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके
चतुर्थोऽध्यायः समाप्तः ॥

# मण्डल

## १

सूक्तं १.१
सूक्तं १.२
सूक्तं १.३
सूक्तं १.४
सूक्तं १.५
सूक्तं १.६

सूक्तं १.३१
सूक्तं १.३२
सूक्तं १.३३
सूक्तं १.३४
सूक्तं १.३५
सूक्तं १.३६

सूक्तं १.६१
सूक्तं १.६२
सूक्तं १.६३
सूक्तं १.६४
सूक्तं १.६५
सूक्तं १.६६

सूक्तं १.९१
सूक्तं १.९२
सूक्तं १.९३
सूक्तं १.९४
सूक्तं १.९५
सूक्तं १.९६

सूक्तं १.१२१
सूक्तं १.१२२
सूक्तं १.१२३
सूक्तं १.१२४
सूक्तं १.१२५
सूक्तं १.१२६

सूक्तं १.१५१
सूक्तं १.१५२
सूक्तं १.१५३
सूक्तं १.१५४
सूक्तं १.१५५
सूक्तं १.१५६

सूक्तं १.१८१
सूक्तं १.१८२
सूक्तं १.१८३
सूक्तं १.१८४
सूक्तं १.१८५
सूक्तं १.१८६

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|
| १.१४ | १.४४ | १.७४ | १.१०४ | १.१३४ | १.१६४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१५ | १.४५ | १.७५ | १.१०५ | १.१३५ | १.१६५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१६ | १.४६ | १.७६ | १.१०६ | १.१३६ | १.१६६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१७ | १.४७ | १.७७ | १.१०७ | १.१३७ | १.१६७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१८ | १.४८ | १.७८ | १.१०८ | १.१३८ | १.१६८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१९ | १.४९ | १.७९ | १.१०९ | १.१३९ | १.१६९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२० | १.५० | १.८० | १.११० | १.१४० | १.१७० |

# ऋग्वेदः सूक्तं १.१८४



सूक्तं १.१८४

अगस्त्यो मैत्रावरुणिः

## दे. अश्विनौ। त्रिष्टुप्।

ता वामद्य तावपरं हुवेमोच्छन्त्यामुषसि वह्निरुक्थैः ।

नासत्या कुह चित्सन्तावर्यो दिवो नपाता सुदास्तराय ॥१॥

अस्मे ऊ षु वृषणा मादयेथामुत्पणींर्हतमूर्म्या मदन्ता ।

श्रुतं मे अच्छोक्तिभिर्मतीनामेष्टा नरा निचेतारा च कर्णैः ॥२॥

श्रिये पूषन्निषुकृतेव देवा नासत्या वहतुं सूर्यायाः ।

वच्यन्ते वां ककुहा अप्सु जाता युगा जूर्णेव वरुणस्य भूरेः ॥३॥

अस्मे सा वां माध्वी रातिरस्तु स्तोमं हिनोतं मान्यस्य कारोः ।

अनु यद्वां श्रवस्या सुदानू सुवीर्याय चर्षणयो मदन्ति ॥४॥

एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति ।

यातं वर्तिस्तनयाय त्मने चागस्त्ये नासत्या मदन्ता ॥५॥

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।

एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम् ॥६॥

## सायणभाष्यम्

# ॥ श्रीगणेशाय नमः ॥

# यस्य निःश्वसितं बेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

द्वितीयाष्टकमध्यस्थश्चतुर्थोऽध्याय आदरात् ।

व्याख्यातः सायणार्येण पञ्चमी व्याकरिष्यते ।।

तत्र ‘ता वाम्' इतीदं प्रथममण्डलस्य चतुर्विंशेऽनुवाके पञ्चमं सूक्तम् । पूर्वसूक्ते ' षट् ' इत्युक्तत्वात् ‘सूक्तसंख्यानुवर्तते ' इति परिभाषितत्वात् षडृचम् । ‘ऋषिश्चान्यस्मात् ' इति परिभाषया अगस्त्यम् । तथा ' आश्विनं वै' इत्युक्तत्वात् तुह्यादिपरिभाषया इदमप्याश्विनम् । अनादेशपरिभाषया त्रैष्टुभम् । ‘ता वाम्' इत्यनुक्रान्तम् ।' युवो रजांसि ' इत्यादीनां पञ्च सूक्तानां तृतीयवर्जितानां प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः । तत्रेदं पञ्चमम् ॥

ता वा॑म॒द्य ताव॑प॒रं हु॑वेमो॒च्छन्त्या॑मु॒षसि॒ वह्नि॑रु॒क्थैः ।

नास॑त्या॒ कुह॑ चि॒त्सन्ता॑व॒र्यो दि॒वो नपा॑ता सु॒दास्त॑राय ॥१

ता । वा॒म् । अ॒द्य । तौ । अ॒प॒रम् । हु॒वे॒म॒ । उ॒च्छन्त्या॑म् ।
उ॒षसि॑ । वह्नि॑ः । उ॒क्थैः ।

नास॑त्या । कुह॑ । चि॒त् । सन्तौ॑ । अ॒र्यः । दि॒वः । नपा॑ता ।
सु॒दाःऽत॑राय ॥१

ता । वाम् । अद्य । तौ । अपरम् । हुवेम । उच्छन्त्याम् ।
उषसि । वह्निः । उक्थैः ।

नासत्या । कुह । चित् । सन्तौ । अर्यः । दिवः । नपाता ।
सुदाःऽतराय ॥ १ ॥

“ता तौ रक्षकत्वेन प्रसिद्धौ "वां युवाम् "अद्य अस्मिन् यागदिने "हुवेम आह्वयामः इति आशीः । तथा “अपरम् अपरस्मिन्नपि दिने "तौ युवां हुवेम । अपरमित्येतत् अपरस्मिन्नित्यर्थे समभिव्याहारात्, ‘ अद्या च नो मृळयतापरं च ' ( ऋ. सं. २. २९. २ ) इत्यादिमन्त्रान्तरे तथा दर्शनाच्च । अपरयागं प्रत्यपि इति वा । कस्मिन् काले। "उपसि उषोदेवतायाम् "उच्छन्त्यां तमो विवासयन्त्यां सत्याम् । उषःकाले हि प्रातरनुवाकाश्विनशस्त्रे प्रयुज्यते । उक्ते काले हे "नासत्या असत्यरहितौ “दिवो “नपाता द्युलोकस्य नपातयितारौ नप्तृस्थानीय वा "कुह "चित् "सन्तौ कुत्रचिद्देशे वर्तमानौ युवां "वह्निः स्तुतेर्वोढा "अर्यः ईरयिता स्तुतेरीश्वरो वा ईदृशोऽहं होता “सुदास्तराय अत्यर्थं शोभनहविर्दात्रे यजमानाय तदर्थं तौ युवाम् "उक्थैः शस्त्रैर्हुवेमेति संबन्धः । अत्र आख्यातं पदमेकवचनतया नेतव्यम् । वह्निरर्यशब्दौ वा बहुवचनत्वेन नेतव्यौ । अथवा

वाक्यद्वयम् । यस्माद्वह्निरर्यो होता उक्तगुणकौ युवां शंसति तस्माद्वयं यजमानाः तौ युवामाह्वयामः इति ।

अ॒स्मे ऊ॒ षु वृ॑षणा मादयेथा॒मुत्प॒णीँर्ह॑तमू॒र्म्या मद॑न्ता ।

श्रु॒तं मे॒ अच्छो॑क्तिभिर्मती॒नामेष्टा॑ नरा॒ निचे॑तारा च॒ कर्णैः॑ ॥२

अ॒स्मे इति॑ । ऊ॒ँ इति॑ । सु । वृ॒ष॒णा॒ । मा॒द॒ये॒था॒म् । उत् । प॒णीन् । ह॒त॒म् । ऊ॒र्म्या । मद॑न्ता ।

श्रु॒तम् । मे॒ । अच्छो॑क्तिऽभिः । म॒ती॒नाम् । एष्टा॑ । न॒रा॒ । निऽचे॑तारा । च॒ । कर्णैः॑ ॥२

अस्मे इति । ऊँ इति । सु । वृषणा। मादयेथाम् । उत् । पणीन् । हतम् । ऊर्म्या । मदन्ता ।

श्रुतम् । मे। अच्छोक्तिऽभिः । मतीनाम् । एष्टा । नरा।
निऽचेतारा । च । कर्णैः ॥ २ ॥

हे "वृषणा कामानां वर्षकौ अश्विनौ युवाम् "अस्मे “उ अस्मास्वेव “सु “मादयेथां सुष्ठु तृप्यतम् । अस्मभ्यं तर्पयतमभिमतम् । तथा “पणीन् वणिजो लुब्धकानयष्टॄन् "उत् उन्मूल्य "हतं नाशयतम् । कीदृशौ युवाम् । “ऊर्म्या । रात्रिनामैतत् । रात्रौ "मदन्ता माद्यन्तौ । यद्वा । ऊर्मिरिति सोमनाम ।' ऊर्मिर्यस्ते पवित्र अ ' ( ऋ. सं. ९. ६४. ११ ) इत्यादिषु तथा प्रयोगात् । अस्मदीयेन सोमेन मदन्तौ । तादृशौ युवां "मे मम अच्छोक्तिभिः अभिमुख्यकरैर्निर्मलवेदवाक्यैः रचिताः "मतीनाम् ॥ कर्मणि षष्ठी ।। मननसाधनाः स्तुतीः "कर्णैः आकर्णनसाधनैः श्रोत्रैः "श्रुतम् शृणुतम् । हे "नरा नेतारौ युवां खलु “एष्टा अन्वेष्टारौ अस्मत्स्तुतीनां तथा “निचेतारा

लब्धानां तासां संचयकर्तारौ । निरित्येष समित्येतस्य स्थाने । यस्मादेवंविधौ तस्माच्छृणुतमिति ॥

श्रि॒ये पू॑षन्निषु॒कृते॑व दे॒वा नास॑त्या वह॒तुं सू॒र्याया॑ः ।

व॒च्यन्ते॑ वां ककु॒हा अ॒प्सु जा॒ता यु॒गा जू॒र्णेव॒ वरु॑णस्य॒ भूरे॑ः ॥३

श्रि॒ये । पू॒ष॒न् । इ॒षु॒कृता॑ऽइव । दे॒वा । नास॑त्या । व॒ह॒तुम् । सू॒र्याया॑ः ।

व॒च्यन्ते॑ । वा॒म् । क॒कु॒हाः । अ॒प्ऽसु । जा॒ताः । यु॒गा । जू॒र्णाऽइ॑व । वरु॑णस्य । भूरे॑ः ॥३

श्रिये । पूषन् । इषुकृताऽइव । देवा । नासत्या । वहतुम् । सूर्यायाः ।।

वच्यन्ते । वाम् । ककुहाः । अप्ऽसु । जाताः । युगा।
जूर्णाऽइव । वरुणस्य । भूरेः ॥ ३ ॥

सविता सूर्यो दुहितरं सूर्याख्यां प्रदातुमनाः देवानाहूय सामर्थ्यसमीक्षणाय आजिं परिकल्प्य यः इमं जेष्यति स एषां कन्यकामृक्सहस्रक्लृप्तं स्तोत्रं च लभते इत्यकल्पयत्। तमग्निः प्रथममजयत् तमनु अश्विनावपि जित्वा अग्निं प्रधृष्य ऋक्सहस्रं कन्यकां च अलभेताम् । तत इन्द्रः उषाश्च अजयताम् । तौ च तैरग्न्यादिभिः प्रार्थितौ स्वशस्त्रस्य कंचित्कंचिद्भागं तेभ्यः परिकल्प्य सूर्यां स्वरथेऽधारयतामिति । अयमितिहासो ब्राह्मणे 'प्रजापतिर्वै सोमाय राज्ञे' (ऐ. ब्रा. ४. ७) इत्यत्राम्नातोऽस्माभिः प्रथमाष्टमे " आ वां पतित्वं सख्याय' (ऋ. सं. १. ११९. ५) इत्यत्र प्रपञ्चितः । अत्राह । हे "पूषन् पोषक सूर्य । एतच्चन्द्रस्याप्युपलक्षणं सूर्याचन्द्रमसोरेवाश्वित्वात् । 'सूर्यचन्द्रमसावित्येके' (निरु.

१२. १ ) इति यास्केनोक्तत्वात् । अतः पूषन्नित्युक्ते हे पोषकावश्विनावित्युक्तं भवति । हे पोषकौ हे "नासत्या असत्यरहितौ "देवा देवौ युवां "श्रिये श्रेयसे शस्त्रस्य कन्यायाश्च लाभायेत्यर्थः । “इषुकृतेव । इवशब्दः एवार्थे । आजिधावनाय इषुवच्छीघ्रमृजुगामिनौ कृतावेव सन्तौ "सूर्यायाः एतन्नामिकायाः सवितुः पुत्र्याः ॥ कर्मणि षष्ठी ॥ सूर्यां "वहतुं रथे धारयितुम् । आजिमुदजयतामित्यर्थः । यस्मादेवं तस्मात् "अप्सु "जाताः कर्मसु संपादिताः "ककुहाः शस्त्ररूपाः स्तुतयः “भूरेः अविच्छिन्नप्रवाहस्य “वरुणस्य फलप्रतिबन्धकपापनिवारकस्य यागस्य सिद्ध्यर्थं तत्संबन्धिन्यः “वां प्रति “वच्यन्ते होत्रादिभिः । युवामेव शस्त्रगतमन्त्रैः यागकाले च स्तुवन्तीत्यर्थः । "युगा “जूर्णेव जीर्णानि युगानीव। इवशब्दः संप्रत्यर्थः । पुरातना यागकालाः यथा तद्वत् अद्यतनाः अपि इत्यर्थः । पूर्वकाले यथा युवामेव स्तुवन्ति तद्वत् इदानीमपीति तात्पर्यम् ॥

अ॒स्मे सा वां माध्वी रा॒तिरं॑स्तु स्तोमं॑ हिनोतं मा॒न्यस्यं॑ का॒रोः ।

अनु॒ यद्वां॑ श्रव॒स्यां॑ सुदानू सु॒वीर्या॑य चर्ष॒णयो॒ मदं॑न्ति ॥४

अ॒स्मे इति॑ । सा । वा॒म् । मा॒ध्वी॒ इति॑ । रा॒तिः । अ॒स्तु॒ । स्तोमं॑म् । हि॒नो॒त॒म् । मा॒न्यस्यं॑ । का॒रोः ।

अनु॑ । यत् । वा॒म् । श्र॒व॒स्यां॑ । सु॒दा॒नू॒ इति॑ सुऽदानू । सु॒ऽवीर्या॑य । च॒र्ष॒णयः॑ । मदं॑न्ति ॥४

अस्मे इति । सा । वाम् । माध्वी इति । रातिः । अस्तु । स्तोमम् । हिनोतम्। मान्यस्य । कारोः ।।

अनु। यत्। वाम् । श्रवस्या । सुदानू इति सुऽदानू । सुऽवीर्याय । चर्षणयः । मदन्ति ॥४॥

हे “माध्वी मधुपूर्णपात्रयुक्तावश्विनौ “वां युवयोः संबन्धिनी “सा प्रसिद्धा “रातिः दानम् “अस्मे अस्माकम् “अस्तु भवतु । तदर्थं “मान्यस्य मननीयस्य “कारोः स्तोतुरगस्त्यस्य “स्तोमं स्तुतिं "हिनोतं प्रीणयतम् । हे “सुदानू शोभनफलदानौ “वां युवां “श्रवस्या कीर्तेरन्नस्य वा इच्छया “यत् यस्मात् “सुवीर्याय यजमानाय शोभनबलाय वा “चर्षणयः मनुष्या ऋत्विग्रूपाः “अनु “मदन्ति अनुक्रमेण माद्यन्ति युवाभ्यां सह स्वयं वा ।

ए॒ष वां॒ स्तोमो॑ अश्विनावकारि॒ मानें॑भिर्मघवाना सुवृ॒क्ति ।

या॒तं व॒र्तिस्तनं॑याय॒ त्मनें॑ चा॒गस्त्यें॑ नासत्या॒ मदं॑न्ता ॥५

ए॒षः । वा॒म् । स्तोमः॑ । अ॒श्वि॒नौ॒ । अ॒का॒रि॒ । मानें॑भिः । म॒घ॒ऽवा॒ना॒ । सु॒ऽवृ॒क्ति ।

या॒तम् । व॒र्तिः । तन॑याय । त्मने॑ । च॒ । अ॒गस्त्ये॑ । ना॒स॒त्या॒ । मद॑न्ता ॥५

एषः । वाम् । स्तोमः । अश्विनौ । अकारि । मानेभिः । मघऽवाना । सुऽवृक्ति ।

यातम् । वर्तिः । तनयाय । त्मने । च । अगस्त्ये। नासत्या । मदन्ता ॥ ५ ॥ ॥ १ ॥

हे “अश्विनौ हे मघवाना हविर्लक्षणान्नवन्तौ “वां युवाभ्याम् “एषः “स्तोमः स्तोत्रं “सुवृक्ति सुष्ठु पापवर्जनं यथा भवति तथा । यद्वा । सुसमाप्ति “अकारि कृतः । कीदृशोऽयम् । “मानेभिः मानैः हविष्प्रदानरूपैः सहितः । हे “नासत्या असत्यरहितौ युवाम् "अगस्त्ये एतन्नाम्नि महर्षौ मयि “मदन्ता माद्यन्तौ सन्तौ "वर्तिः गृहं यज्ञसंबन्धि “यातं प्राप्नुतम् । किमर्थम्। “तनयाय पुत्रादिलाभाय “त्मने आत्मने “च हिताय ।।

अतां॑रिष्म॒ तमं॑सस्पा॒रम॒स्य प्रतिं॑ वां॒ स्तोमों॑ अश्विनावधायि
।

एह यां॑तं प॒थिभिं॑र्दे॒व॒यानै॑र्वि॒द्यामे॒षं॑ वृ॒जनं॑ जी॒रदां॑नुम् ॥६

अतां॑रिष्म । तमं॑सः । पा॒रम् । अ॒स्य । प्रतिं॑ । वा॒म् ।
स्तोमः॑ । अ॒श्वि॒नौ॒ । अ॒धा॒यि॒ ।

आ । इ॒ह । या॒त॒म् । प॒थिऽभिः॑ । दे॒व॒ऽयानैः॑ । वि॒द्याम॑ ।
इ॒षम् । वृ॒जनं॑म् । जी॒रऽदां॑नुम् ॥६

अतारिष्म । तमसः । पारम् । अस्य । प्रति। वाम् । स्तोमः
। अश्विनौ । अधायि ।

आ। इह । यातम् । पृथिऽभिः । देवऽयानैः । विद्याम ।
इषम् । वृजनम्। जीरऽदानुम् ॥६॥

अतारिष्मेति षष्ठी व्याख्याता ॥ ॥ १ ॥

# ऋग्वेदः सूक्तं १.१८५

← सूक्तं १.१८४

ऋग्वेदः - मण्डल १

सूक्तं १.१८५

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१८६ →

## दे. द्यावापृथिव्यौ। त्रिष्टुप्।

कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद ।

विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥१॥

भूरिं द्वे अचरन्ती चरन्तं पद्वन्तं गर्भमपदी दधाते ।

नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥२॥

अनेहो दात्रमदितेरनर्वं हुवे स्वर्वदवधं नमस्वत् ।

तद्रोदसी जनयतं जरित्रे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥३॥

अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे ।

उभे देवानामुभयेभिरह्नां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥४॥

संगच्छमाने युवती समन्ते स्वसारा जामी पित्रोरुपस्थे ।

अभिजिघ्रन्ती भुवनस्य नाभिं द्यावा रक्षतं पृथिवी नो अभ्वात् ॥५॥

उर्वी सद्मनी बृहती ऋतेन हुवे देवानामवसा जनित्री ।

दधाते ये अमृतं सुप्रतीके द्यावा रक्षतं पृथिवी नो अभ्वात् ॥६॥

उर्वी पृथ्वी बहुले दूरेअन्ते उप ब्रुवे नमसा यज्ञे अस्मिन् ।

दधाते ये सुभगे सुप्रतूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥७॥

देवान्वा यच्चकृमा कच्चिदागः सखायं वा सदमिज्जास्पतिं वा ।

इयं धीर्भूया अवयानमेषां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥८॥

उभा शंसा नर्या मामविष्टामुभे मामूती अवसा सचेताम् ।

भूरि चिदर्यः सुदास्तरायेषा मदन्त इषयेम देवाः ॥९॥

ऋतं दिवे तदवोचं पृथिव्या अभिश्रावाय प्रथमं सुमेधाः ।

पातामवद्याद्दुरितादभीके पिता माता च रक्षतामवोभिः ॥१०॥

इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवे वाम् ।

भूतं देवानामवमे अवोभिर्विद्यामेषं वृजनं जीरदानुम् ॥११॥

## सायणभाष्यम्

‘कतरा पूर्वा' इत्येकादशर्चं षष्ठं सूक्तमागस्त्यं त्रैष्टुभम् । “कतरैकादश द्यावापृथिवीयम्' इत्यनुक्रान्तम् । आभिप्लविके षष्ठेऽहनि वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानमिदम् । 'तृतीयस्य' इति खण्डे सूत्रितं- 'कतरा पूर्वोषासानक्तेति वैश्वदेवम् ' ( आश्व. श्रौ. ७. ७) इति । महाव्रतेऽपि वैश्वदेवशस्त्रे इदमेव द्यावापृथिव्यनिविद्धानम् । ‘उत्तमादाभिप्लविकात्तृतीयसवनम्' (ऐ. आ. ५. ३. २ ) इत्यतिदेशात् ॥

क॒त॒रा पूर्वा॑ कत॒राप॑रा॒योः क॒था जा॒ते क॑वय॒ः को वि वे॑द ।

विश्वं॒ त्मना॑ बिभृतो॒ यद्ध॒ नाम॒ वि व॑र्तेते॒ अह॑नी च॒क्रिये॑व ॥ १

क॒त॒रा । पूर्वा॑ । क॒त॒रा । अप॑रा । अ॒योः । क॒था । जा॒ते इति॑ । क॒व॒य॒ः । कः । वि । वे॒द॒ ।

विश्व॑म् । त्मना॑ । बि॒भृ॒त॒ः । यत् । ह॒ । नाम॑ । वि । व॒र्ते॒ते॒ इति॑ । अह॑नी॒ इति॑ । च॒क्रिया॑ऽइव ॥१

कतरा । पूर्वा । कतरा । अपरा। अयोः । कथा । जाते इति । कवयः । कः । वि। वेद ।

विश्वम् । त्मना । बिभृतः । यत् । ह। नाम । वि। वर्तेते इति । अहनी इति । चक्रियाऽइव ॥१॥

“अयोः एनयोर्द्यावापृथिव्योर्मध्ये “कतरा “पूर्वा पूर्वमुत्पन्ना। “कतरा वा “अपरा पश्चाद्भाविनी । एवं पौर्वापर्यप्रश्नः । उभयोः अविनाभावेन सहैव वर्तमानत्वादिति भावः । तथा “कथा केन हेतुना “जाते किमनयोरुत्पादनमित्यर्थः । हे “कवयः क्रान्तदर्शिनोऽतीन्द्रियज्ञाः यूयं वदत “को "वि “वेद पौर्वापर्यं कारणं च विशेषेण विविच्य वा जानाति । न केनापि ज्ञायते इत्यर्थः । अज्ञाने कारणमाह। “यद्ध यस्मात्खलु हेतोः “नाम प्रसिद्धं “विश्वं कृत्स्नमपि जगत् अविशेषेण “त्मना आत्मनैव अन्यनैरपेक्ष्येणैव “बिभृतः धारयतः । यद्वा । यद्ध नाम यत्किंचित् पदार्थजातमस्ति विश्वं तत्सर्वमात्मना बिभृतः । अनेन यत्कारणं ब्रूमस्तदपि आभ्यामेव भ्रियते इति कारणाभावः प्रतिपादितः । 'उत्तरेण पौर्वापर्याभाव उच्यते । “अहनी एते द्यावापृथिव्यौ “चक्रियेव चक्रयुक्ते इव वि “वर्तेते । अत्र

‘कतरा पूर्वा कतरापरैनयोः ' ( निरु. ३. २२ ) इत्यादि निरुक्तं द्रष्टव्यम् ॥

भूरिं॒ द्वे अच॑रन्ती॒ चर॑न्तं प॒द्वन्तं॒ गर्भ॑म॒पदी॑ दधाते ।

नित्यं॒ न सू॒नुं पि॒त्रोरु॒पस्थे॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त् ॥२

भूरि॑ । द्वे इति॑ । अच॑रन्ती॒ इति॑ । चर॑न्तम् । प॒त्ऽवन्त॑म् । गर्भ॑म् । अ॒पदी॒ इति॑ । द॒धा॒ते॒ इति॑ ।

नित्य॑म् । न । सू॒नुम् । पि॒त्रोः । उ॒पऽस्थे॑ । द्यावा॑ । रक्ष॑तम् । पृ॒थि॒वी॒ इति॑ । नः॒ । अभ्वा॑त् ॥२

भूरिम् । द्वे इति । अचरन्ती इति । चरन्तम् । पत्ऽवन्तम् । गर्भम् । अपदी इति । दधाते इति ।

नित्यम् । न । सूनुम् । पित्रोः । उपऽस्थे । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥२॥

“अचरन्ती अविचले “द्वे एव एते द्यावापृथिव्यौ “भूरि बहुतरं चरन्तं पद्वन्तं पादयुक्तं “गर्भवदाश्रितं कृत्स्नं प्राणिजातम् “अपदी स्वयं पादरहिते “दधाते धारयतः । अनयोर्मध्ये खलु सर्वं जगत् क्षेमेण वर्तते । धारणे दृष्टान्तः । “पित्रोः मातापित्रोः “उपस्थे उत्सङ्गे वर्तमानं नित्यं ध्रुवमात्मजं “सूनुं न पुत्रमिव यथा स्नेहेन वर्धयन्तौ धारयन्तौ मातापितरौ तद्वत् । अथ प्रत्यक्षेणाह। हे “द्यावा “पृथिवी द्यावापृथिव्यौ । इतरेतरापेक्षया द्वित्वमुभयोः । “नः अस्मान् “अभ्वात् महतो भयहेतोः पापात् “रक्षतं पालयतम् । यद्वा । अभ्वात् अभ्वं महत् । अत्यर्थमित्यर्थः । अभ्वेति महन्नाम ॥ द्वन्द्वे कृतद्यावादेशस्य द्यावापृथिवीशब्दस्य मध्ये रक्षतम् इति

पदप्रयोगश्छन्दसः। आमन्त्रितस्याविद्यमानत्वेन निघाताभावः ॥

अ॒ने॒हो दा॒त्रमदिं॑तेरन॒र्वं हु॒वे स्व॑र्वदव॒धं नमं॑स्वत् ।

तद्रों॑दसी जनयतं जरि॒त्रे द्यावा॒ रक्षं॑तं पृथिवी नो॒ अभ्वां॑त् ॥ ३

अ॒ने॒हः । दा॒त्रम् । अदिं॑तेः । अ॒न॒र्वम् । हु॒वे । स्व॑ःऽवत् । अ॒व॒धम् । नमं॑स्वत् ।

तत् । रो॒द॒सी॒ इतिं॑ । ज॒न॒य॒त॒म् । ज॒रि॒त्रे । द्यावां॑ । रक्षं॑तम् । पृ॒थि॒वी॒ इतिं॑ । न॒ः । अभ्वां॑त् ॥३

अनेहः । दात्रम् । अदितेः । अनर्वम् । हुवे । स्वःऽवत् । अवधम् । नमस्वत् ।

तत् । रोदसी इति । जनयतम् । जरित्रे । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥३॥

“अदितेः । एतदन्तरिक्षस्याप्युपलक्षणम् । अखण्डनीयायाः पृथिव्याः तादृशस्यान्तरिक्षस्य च संबन्धि दात्रं धनं “हुवे आह्वयामि स्पृहयामीत्यर्थः । कीदृशं तद्धनम् । “अनेहः अपापं दुःखरहितं सुखात्मकम् “अनर्वम् अनरणम् अक्षीणमित्यर्थः । “स्वर्वत् सर्वतः फलभूतेन स्वर्गेण तद्वत् “अवधम् अहिंसितं “नमस्वत् अन्नवत् । ईदृशं धनं हुवे । “तत् अस्माभिः काङ्क्षितमुक्तलक्षणं धनं हे “रोदसी द्यावापृथिव्यौ “जरित्रे स्तोत्रे यजमानाय “जनयतम् उत्पादयतम् । द्यावेत्यादि व्याख्यातम् ।।

अतं॑प्यमाने॒ अव॒सावं॑न्ती॒ अनु॑ ष्याम॒ रोदं॑सी दे॒वपुं॑त्रे ।

उ॒भे दे॒वाना॑मु॒भये॑भि॒रह्ना॑ं द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्
॥४

अत॑प्यमाने॒ इति॑ । अव॑सा । अव॑न्ती॒ इति॑ । अनु॑ । स्या॒म॒ ।
रोद॑सी॒ इति॑ । दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे ।

उ॒भे इति॑ । दे॒वाना॑म् । उ॒भये॑भिः । अह्ना॑म् । द्याव॑ा ।
रक्ष॑तम् । पृ॒थि॒वी॒ इति॑ । न॒ः । अभ्वा॑त् ॥४

अतप्यमाने इति । अवसा । अवन्ती इति । अनु । स्याम ।
रोदसी इति । देवपुत्रे इति देवपुत्रे ।

उभे इति । देवानाम् । उभयेभिः । अह्नाम् । द्यावा ।
रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥४॥

“अवसा स्वतोऽधिकेन केनचित् कृतेन अवनेन समृद्ध्या
“अतप्यमाने अनीश्वरे ॥ तपेः ऐश्वर्यकर्मणः इदं रूपम् ॥
अतप्यमाने अन्यैरपीड्यमाने। 'अवसा अनेन “अवन्ती

तर्पयन्त्यौ “देवपुत्रे देवाः व्यवहर्तारो मनुष्याः पुत्रस्थानीयाः ययोस्तादृश्यौ । लोकद्वयस्थाः मनुष्याश्च देवाश्च तदुपजीव्यत्वात् पुत्राः इत्युच्यन्ते । ईदृशौ “उभे रोदसी द्यावापृथिव्यौ "देवानाम् “अह्नाम् । एतद्रात्रेरप्युपलक्षणम् । द्योतमानानाम् अह्नां रात्रीणां च संबन्धिभिः उभयविधैः शीतोष्णादिरूपैः विलक्षणैः धनैः निमित्तभूतैः । तेषां लाभायेत्यर्थः । तदर्थं युवाम् “अनु “स्याम अनुभवेम । शिष्टो व्याख्यातः ॥

स॒ंगच्छ॑माने युव॒ती सम॑न्ते॒ स्वसा॑रा जा॒मी पि॒त्रोरु॒पस्थे॑ ।

अ॒भि॒जिघ्र॑न्ती॒ भुव॑नस्य॒ नाभि॒॑ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त् ॥५

स॒ङ्गच्छ॑मान॒ इति॑ स॒म्ऽगच्छ॑माने । यु॒व॒ती इति॑ । सम॑न्ते॒ इति॒ सम्ऽअ॑न्ते । स्वसा॑रा । जा॒मी इति॑ । पि॒त्रोः । उ॒पऽस्थे॑

।

अ॒भि॒जिघ्रं॑न्ती॒ इत्यं॑भि॒ऽजिघ्रं॑न्ती । भुवं॑नस्य । नाभिं॑म् । द्यावां॑ । रक्षं॑तम् । पृ॒थि॒वी॒ इतिं॑ । न॒ः । अभ्वां॑त् ॥५

संगच्छमाने इति सम्ऽगच्छमाने । युवती इर्ति । समन्ते इति सम्ऽअन्ते । स्वसारा । जामी इति । पित्रोः । उपऽस्थे ।

अभिजिघ्रन्ती इत्यभिऽजिघ्रन्ती। भुवनस्य । नाभिम् । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ ५ ॥

“संगच्छमाने परस्परमुपकारित्वेन सह युज्यमाने। वृष्टिहविषोश्च परस्परमुपकार्योपकारकभावः । यद्वा । पूर्वं संसृष्टे एव सत्यौ पश्चाद्वियुज्य वृष्टिहविषी अकुर्वन्त्यौ पश्चात् मनुष्यैः प्रार्थितैर्देवैः विवाहिते सत्यौ संगते अभूतामित्याहुः । अयमर्थः ‘द्यावापृथिवी सहास्ताम्' (तै.

ब्रा. १. १. ३. २ ) इत्यादिब्राह्मणे समाम्नातः । “युवती नित्यतरुण्यौ मिश्रयन्त्यौ वा सर्वेषु भावेषु “समन्ते समानान्तिके समानपर्यन्ते वा “स्वसारा परस्परं स्वसृभूते "जामी बन्धुभूते । प्रजापतेः सकाशात सहोत्पन्नत्वात् परस्परं जामित्वम् । तथा च निगमौ-’दिवं च पृथिवीं चान्तरिक्षमथो स्वः' ( ऋ. सं. १०. १९०. ३ ) ‘यतो द्यावापृथिवी निष्टतक्षुः ' ( ऋ. सं. १०.३१. ७) इति । “पित्रोः सर्वस्य पितृस्थानीययोः पालकयोस्तयोः “उपस्थे उत्सङ्गे स्थितं “भुवनस्य भूतजातस्य “नाभिं बन्धकमुदकम् “अभिजिघ्रन्ती अभिघ्राणं कुर्वन्त्यौ स्पृशन्त्यौ ।' समानमेतदुदकम् ' ( ऋ. सं. १. १६४. ५१ ) इत्यादिमन्त्रवर्णात् उभयोरुदकप्रदत्वं प्रसिद्धम् । ईदृश्यौ "नः रक्षतम् ॥ ॥ २ ॥

उ॒र्वी सद्म॑नी बृह॒ती ऋ॒तेन॑ हु॒वे दे॒वाना॒मव॑सा॒ जनि॑त्री ।

द॒धाते॒ ये अ॒मृतं॑ सु॒प्रती॑के॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्
॥६

उ॒र्वी इति॑ । सद्म॑नी॒ इति॑ । बृ॒ह॒ती इति॑ । ऋ॒तेन॑ । हु॒वे ।
दे॒वाना॑म् । अव॑सा । जनि॑त्री॒ इति॑ ।

द॒धाते॒ इति॑ । ये इति॑ । अ॒मृत॑म् । सु॒प्रती॑के॒ इति॑ सु॒ऽप्रती॑के
। द्यावा॑ । रक्ष॑तम् । पृ॒थि॒वी॒ इति॑ । न॒ः । अभ्वा॑त् ॥६

उर्वी इति। सद्मनी इति । बृहती इति । ऋतेन । हुवे।
देवानाम् । अवसा । जनित्री इति ।

दधाते इति । ये इति । अमृतम्। सुप्रतीके इति सुऽप्रतीके
। द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ ६ ॥

“उर्वी विस्तीर्णे “सद्मनी सदनाधारभूते “बृहती महत्यौ
महानुभावे "देवानाम् । उपलक्षणमेतत् ।
देवमनुष्यादीनाम् “अवसा प्रीत्या निमित्तेन "जनित्री

वृष्टिसस्ययोर्जनित्र्यौ । वृष्ट्यादेर्देवानामवसा तर्पणेन निमित्तेन “ऋतेन यज्ञेन च निमित्तभूतेन 'हुवे आह्वयामि । देवानां हविरर्थम् अस्मद्यज्ञायेत्यर्थः । "ये “सुप्रतीके शोभनरूपे “अमृतम् उदकं “दधाते धारयतः ते युवामाह्वयामि । शिष्टं स्पष्टम् ॥

उ॒र्वी पृ॒थ्वी ब॑हु॒ले दू॒रेअ॑न्ते॒ उप॑ ब्रुवे॒ नम॑सा य॒ज्ञे अ॒स्मिन् ।

द॒धाते॒ ये सु॒भगे॑ सु॒प्रतू॑र्ती॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्
॥७

उ॒र्वी इति॑ । पृ॒थ्वी इति॑ । ब॒हु॒ले इति॑ । दू॒रेअ॑न्ते॒ इति॑ दू॒रेऽअ॑न्ते । उप॑ । ब्रु॒वे॒ । नम॑सा । य॒ज्ञे । अ॒स्मिन् ।

द॒धाते॒ इति॑ । ये इति॑ । सु॒भगे॒ इति॑ सु॒ऽभगे॑ । सु॒प्रतू॑र्ती॒ इति॑ सु॒ऽप्रतू॑र्ती । द्यावा॑ । रक्ष॑तम् । पृ॒थि॒वी॒ इति॑ । नः॒ । अभ्वा॑त्

||७

उर्वी इति । पृथ्वी इति । बहुले इति । दूरेअन्ते इति दूरेऽअन्ते। उप । ब्रुवे। नमसा। यज्ञे। अस्मिन् ।

दधाते इति । ये इति । सुभगे इति सुऽभगे। सुप्रतूर्ती इति सुऽप्रतूर्ती । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ ७ ॥

“उर्वी उर्व्यौ महत्यौ “पृथ्वी पृथिव्यौ “बहुले अनेकप्रकारेण प्रथमाने बह्वाकारे “दूरेअन्ते विप्रकृष्टान्तदेशे अपारे इत्यर्थः । ईदृश्यौ युवाम् “अस्मिन् “यज्ञे “नमसा नमःसाधनेन स्तोत्रेण “उप “ब्रुवे उपेत्य ब्रवीमि स्तौमीत्यर्थः । पुनः कीदृश्यौ । "ये "सुभगे शोभनभाग्ये “सुप्रतूर्ती सुप्रतरणे शोभनदाने “दधाते विश्वं जगत् ते युवाम् उप ब्रुवे स्तौमि ।।

दे॒वान्वा॒ यच्च॑कृ॒मा कच्चि॒दाग॒ः सखा॑यं वा॒
सद॒मिज्जास्प॑तिं वा ।

इ॒यं धीर्भू॑या अव॒यान॑मेषां॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्
॥८

दे॒वान् । वा॒ । यत् । च॒कृ॒म । कत् । चि॒त् । आग॑ः ।
सखा॑यम् । वा॒ । सद॑म् । इत् । जाःऽप॑तिम् । वा॒ ।

इ॒यम् । धीः । भू॒या॒ः । अ॒व॒ऽयान॑म् । ए॒षा॒म् । द्यावा॑ ।
रक्ष॑तम् । पृ॒थि॒वी॒ इति॑ । न॒ः । अभ्वा॑त् ॥८

देवान् । वा। यत् । चकृम । कत् । चित् । आगः ।
सखायम् । वा। सदम् । इत् । जाःपतिम् । वा।

इयम् । धीः । भूयाः। अवऽयानम् । एषाम् । द्यावा ।
रक्षतम् । पृथिवी इति । नः। अभ्वात् ॥८॥

हे द्यावापृथिव्यौ वयं “देवान् देवान् प्रति “यत् "कञ्चित् "आगः अपराधं तत्तद्यागकाले तेषांतेषाम् अयागलक्षणं “सदमित् सर्वदैव “चकृम कृतवन्तो वयम् । “सखायं “वा प्रियं मित्रं वा प्रति यच्चकृम । “जास्पतिम् । जाः पुत्र्यः । तासां पतिं जामातरं “वा जायापतिं प्रति दोषारोपणकलहोत्पादनादिरूपं यत्सर्वदैव चकृम । “एषाम् उक्तरूपाणां पापानाम् अपगमं कर्तुम् “इयं “धीः युष्मत्स्तुतिरूपम् इदं कर्म “भूयाः भूयात् भवतु । द्यावेत्यादि गतम् । अत्र सर्वत्र प्रकारान्तरेण मन्त्रमन्तरेण रक्षतं रक्षतमिति प्रार्थनं तयोः अश्विन्यादिबहुमननासंभवात् उचितमेव । तस्मात् स्वस्थाने एव स्थिते अनुकूले भवतमित्येवं प्रार्थ्यते ।।

उ॒भा शंसा॒ नर्या॒ मामंविष्टामु॒भे माम॒ूती अवंसा सचेताम् ।

भूरिं चिद॒र्यः सु॒दास्तंराये॒षा मदं॑न्त इषयेम देवाः ॥९

उ॒भा । शंसां । नर्यां । माम् । अ॒वि॒ष्टा॒म् । उ॒भे इतिं । माम् । ऊ॒ती इतिं । अवंसा । स॒चे॒ता॒म् ।

भूरिं । चि॒त् । अ॒र्यः । सु॒दाःऽतंराय । इ॒षा । मदं॑न्तः । इ॒ष॒ये॒म॒ । दे॒वा॒ः ॥९

उभा। शंसा। नर्या। माम्। अविष्टाम्। उभे इति। माम् । ऊती इति । अवसा । सचेताम् ।

भूरि । चित् । अर्यः । सुदाःऽतराय । इषा । मदन्तः । इषयेम । देवाः ॥ ९ ॥

“उभा “शंसा द्यावापृथिव्योरुभयोः विषयौ उभावपि शंसौ “नर्या नरेभ्यो हितौ ईदृश्यौ उभयाश्रये स्तुती “माम् अविष्टां रक्षताम् । यद्वा । द्यावापृथिव्यभिमानिदेवयोरेव शंसशब्देन अभिधानात् पुंलिङ्गता । तथा “उभे “ऊती

रक्षिके द्यावापृथिव्यौ "माम् “अवसा रक्षणेन सचेताम् । यद्वा । प्राणिभ्यो हितकरौ उभौ ऐहिकामुष्मिकविषयौ शंसौ माम् अविष्टां प्राप्नुताम् । तथा उभे अपि ऊती तयोः संबन्धिन्योरभिमानिदेवतयोः अवसा अस्मत्तर्पणेन निमित्तेन सचेताम् । हे “देवाः द्यावापृथिव्योरन्तर्भूताः सर्वेऽपि देवाः “अर्यः स्तोतारो वयं “सुदास्तराय अतिशयेन शोभनदातृत्वाय “इषा अन्नेन सोमलक्षणेन “मदन्तः मादयन्तः सन्तः “भूरि “चित् । चित् पूजायाम् । अभिपूजितं धनम् “इषयेम इच्छेम । यद्वा । अर्यः इति षष्ठ्या रूपम् । ईश्वराद्राजादेरपि सुदास्तरायेत्यर्थः । शिष्टं समानम् ॥

‘ऋतं दिवे' इति द्वे द्यावापृथिवीये पशौ पुरोडाशहविषोः अनुवाक्ये । ‘अग्नीषोमौ । इति खण्डे सूत्रितम्-’ऋतं दिवे तदवोचं पृथिव्या इति द्वे' ( आश्व. श्रौ. ३. ८) इति ॥

ऋ॒तं दि॒वे तदं॑वोचं पृथि॒व्या अं॑भिश्रा॒वायं॑ प्रथ॒मं सुं॑मे॒धाः ।

पा॒तामं॑व॒द्याद्दुं॑रि॒ताद॒भीकें॑ पि॒ता मा॒ता चं॑ रक्षता॒मवों॑भिः ॥ १०

ऋ॒तम् । दि॒वे । तत् । अ॒वो॒च॒म् । पृ॒थि॒व्यै । अ॒भि॒ऽश्रा॒वायं॑ । प्र॒थ॒मम् । सु॒ऽमे॒धाः ।

पा॒ताम् । अ॒व॒द्यात् । दुः॒ऽइ॒तात् । अ॒भीकें॑ । पि॒ता । मा॒ता । च॒ । र॒क्ष॒ता॒म् । अवः॑ऽभिः ॥१०

ऋतम् । दिवे । तत् । अवोचम् । पृथिव्यै। अभिऽश्रावाय । प्रथमम् । सुऽमेधाः ।

पाताम् । अवद्यात् । दुःऽइतात् । अभीके। पिता । माता । च । रक्षताम् । अवःऽभिः ॥१०॥

“सुमेधाः शोभनप्रज्ञोऽहं “दिवे द्युदेवतायै “पृथिव्यै पृथिवीदेवतायै “तत् तत्प्रीतिकरम् “ऋतं स्तोत्रं “प्रथमम् । मुख्यनामैतत् । प्रतमं प्रष्टतमम् “अवोचं ब्रवीमि । किमर्थम् । “अभिश्रावाय अभितः सर्वतः श्रवणाय । किंच “पिता पालको द्युलोकः "माता सस्यादेर्निर्मात्री पृथिवी “च उभे “अवद्यात् निन्दितात् दुःखप्रापकात् अंहसः सकाशात् "पातां रक्षताम् । तथा "अभीके । अन्तिकनामैतत् । समीपे एव “अवोभिः अभिमततर्पणैः रक्षतां पालयताम् ॥

इ॒दं द्या॑वापृथिवी स॒त्यम॑स्तु पित॒र्मात॒र्यदि॒होप॑ब्रु॒वे वा॑म् ।

भू॒तं दे॒वाना॑मव॒मे अवो॑भिर्वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥११

इ॒दम् । द्या॒वा॒पृ॒थि॒वी॒ इति॑ । स॒त्यम् । अ॒स्तु । पित॒रिति॑ । मात॒रिति॑ । यत् । इ॒ह । उ॒प॒ऽब्रु॒वे । वा॒म् ।

भू॒तम् । दे॒वाना॑म् । अ॒व॒मे इति॑ । अव॒ःऽभिः॑ । वि॒द्याम॑ । इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥११

इदम् । द्यावापृथिवी इति । सत्यम् । अस्तु । पितः। मातः। यत् । इह । उपऽब्रुवे । वाम् ।

भूतम् । देवानाम् । अवमे इति । अवःऽभिः । विद्याम । इषम्। वृजनम्। जीरऽदानुम् ॥११॥

हे “द्यावापृथिवी द्यावापृथिव्यौ “इदम् अस्माभिः क्रियमाणं स्तोत्रं “सत्यमस्तु अवितथं भवतु फलवद्भवत्वित्यर्थः । इदमित्युक्तं किं तदित्याह । हे "पितः द्यौः हे “मातः पृथिवि “वां युवां प्रति “इह अस्मिन् यज्ञे “यत् स्तोत्रम् "उपब्रुवे उपेत्य ब्रवीमि तत्सत्यमस्तु । “देवानां स्तोतॄणामस्माकम् “अवमे। अन्तिकनामैतत् । नित्यसंनिहिते युवाम् अवोभिः तर्पणैर्युक्ते “भूतं भवतम् । अवशिष्टं गतम् ॥ ॥ ३॥

# मण्डल

## १

| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
|---|---|---|---|---|---|
| १.१४ | १.४४ | १.७४ | १.१०४ | १.१३४ | १.१६४ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१५ | १.४५ | १.७५ | १.१०५ | १.१३५ | १.१६५ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१६ | १.४६ | १.७६ | १.१०६ | १.१३६ | १.१६६ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१७ | १.४७ | १.७७ | १.१०७ | १.१३७ | १.१६७ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१८ | १.४८ | १.७८ | १.१०८ | १.१३८ | १.१६८ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.१९ | १.४९ | १.७९ | १.१०९ | १.१३९ | १.१६९ |
| सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं | सूक्तं |
| १.२० | १.५० | १.८० | १.११० | १.१४० | १.१७० |

# ऋग्वेदः सूक्तं १.१८६

← सूक्तं १.१८५

ऋग्वेदः - मण्डल १

सूक्तं १.१८६

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१८७ →

## दे. विश्वे देवाः। त्रिष्टुप्।

आ न इळाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु ।

अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥१॥

आ नो विश्व आस्क्रा गमन्तु देवा मित्रो अर्यमा वरुणः सजोषाः ।

भुवन्यथा नो विश्वे वृधासः करन्सुषाहा विथुरं न शवः ॥२॥

प्रेष्ठं वो अतिथिं गृणीषेऽग्निं शस्तिभिस्तुर्वणिः सजोषाः ।

असद्यथा नो वरुणः सुकीर्तिरिषश्च पर्षदरिगूर्तः सूरिः ॥३॥

उप व एषे नमसा जिगीषोषासानक्ता सुदुघेव धेनुः ।

समाने अहन्विमिमानो अर्कं विषुरूपे पयसि सस्मिन्नूधन् ॥४॥

उत नोऽहिर्बुध्न्यो मयस्कः शिशुं न पिप्युषीव वेति सिन्धुः ।

येन नपातमपां जुनाम मनोजुवो वृषणो यं वहन्ति ॥५॥

उत न ईं त्वष्टा गन्त्वच्छा स्मत्सूरिभिरभिपित्वे सजोषाः ।

आ वृत्रहेन्द्रश्चर्षणिप्रास्तुविष्टमो नरां न इह गम्याः ॥६॥

उत न ईं मतयोऽश्वयोगाः शिशुं न गावस्तरुणं रिहन्ति ।

तमीं गिरो जनयो न पत्नीः सुरभिष्टमं नरां नसन्त ॥७॥

उत न ईं मरुतो वृद्धसेनाः स्मद्रोदसी समनसः सदन्तु ।

पृषदश्वासोऽवनयो न रथा रिशादसो मित्रयुजो न देवाः ॥८॥

प्र नु यदेषां महिना चिकित्रे प्र युञ्जते प्रयुजस्ते सुवृक्ति ।

अध यदेषां सुदिने न शरुर्विश्वमेरिणं प्रुषायन्त सेनाः ॥९॥

प्रो अश्विनाववसे कृणुध्वं प्र पूषणं स्वतवसो हि सन्ति ।

अद्वेषो विष्णुर्वात ऋभुक्षा अच्छा सुम्नाय ववृतीय देवान् ॥१०॥

इयं सा वो अस्मे दीधितिर्यजत्रा अपिप्राणी च सदनी च भूयाः ।

नि या देवेषु यतते वसूयुर्विद्यामेषं वृजनं जीरदानुम् ॥११॥

## सायणभाष्यम्

‘आ न इळाभिः' इति सप्तमं सूक्तमेकादशर्चमागस्त्यं त्रैष्टुभं वैश्वदेवम् । आ नो वैश्वदेवम् इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

आ न॒ इळा॑भिर्वि॒दथे॑ सुश॒स्ति वि॒श्वान॑रः सवि॒ता दे॒व ए॑तु ।

अपि॑ यथा॑ युवानो॒ मत्स॑था नो॒ विश्वं॒ जग॑दभिपि॒त्वे म॑नी॒षा ॥१

आ । न॒ः । इळा॑भिः । वि॒दथे॑ । सु॒ऽश॒स्ति । वि॒श्वान॑रः ।
स॒वि॒ता । दे॒वः । ए॒तु॒ ।

अपि॑ । यथा॑ । यु॒वा॒न॒ः । मत्स॑थ । न॒ः । विश्व॑म् । जग॑त् ।
अ॒भि॒ऽपि॒त्वे । म॒नी॒षा ॥१

आ। नः । इळभिः । विदथे । सुऽशस्ति । विश्वानरः ।
सविता । देवः । एतु ।

अपि । यथा । युवानः । मत्सथ । नः । विश्वम् । जगत् ।
अभिऽपित्वे । मनीषा ॥ १ ॥

“नः “विदथे अस्मदीये यज्ञे “सुशस्ति ॥ सुपो लुक् ॥
सुशस्तिभिः शोभनशंसनैः स्तुतिभिः प्रदेयैः रत्नैः सह ।
यद्वा । "इळाभिः। तदाश्रितेषु तच्छब्द्यम् ।
भूमिस्थानाभिर्देवताभिः सह। “विश्वानरः
सर्वप्राणिहितकार्यग्निः “सविता प्रेरक आदित्यश्च “देवः

“एतु आगच्छतु । हे "युवानः नित्यतरुणा यज्ञस्य मिश्रयितारो वा यूयं “नः अस्मान् “अभिपित्वे अभिपतनीयेऽस्मद्यज्ञे “मनीषा मनीषया मनसः ईशितृत्वेन स्वेच्छयेत्यर्थः । अपिः संभावनायाम् । “अपि अस्मान् “मत्सथ मादयथ। "यथा “विश्वं “जगत् । एतत्स्थावरस्याप्युपलक्षणम् । यद्वा कृत्स्नं प्रपञ्चे मत्सथ तथा अस्मानपि । यद्वा । जगच्छब्दो यजमानरूपमनुष्यवाची । सर्वानपि यजमानान् यथा मत्सथ तथेत्यर्थः ॥

वैश्वदेवे पशौ ‘आ नो विश्वे' इत्येषा हविषः पुरोनुवाक्या । ‘आ नो देवानामुपवेतु शंस आ नो विश्व आस्क्रा गमन्तु देवाः ' ( आश्व. श्रौ. ३. ७) इति ।।

आ नो॒ विश्व॒ आस्क्रा॑ गमन्तु दे॒वा मि॒त्रो अ॑र्य॒मा वरु॑णः स॒जोषा॑ः ।

भुव॒न्यथा॑ नो॒ विश्वे॑ वृ॒धास॒ः करं॑न्सु॒षाहा॑ वि॒थु॒रं न शव॑ः ॥२

आ । नः॒ । विश्वे॑ । आस्क्राः॑ । ग॒म॒न्तु॒ । दे॒वाः । मि॒त्रः । अ॒र्य॒मा । वरु॑णः । स॒ऽजोषाः॑ ।

भुव॑न् । यथा॑ । नः॒ । विश्वे॑ । वृ॒धासः॑ । कर॑न् । सु॒ऽसहा॑ । वि॒थु॒रम् । न । शवः॑ ॥२

आ। नः । विश्वे । आस्क्राः । गमन्तु । देवाः । मित्रः । अर्यमा । वरुणः । सऽजोषाः ।।

भुवन् । यथा। नः । विश्वे । वृधासः । करन् । सुऽसहा । विथुरम् । न । शवः ॥ २ ॥

“नः अस्माकं यज्ञं “विश्वे सर्वे देवाः “आस्क्राः शत्रूणामास्कन्दयितारः आक्रमितारो वा “आ “गमन्तु आगच्छन्तु । के ते । “मित्रो “अर्यमा “वरुणः च त्रयोऽपि “सजोषाः समानप्रीतयः सन्तः आगच्छन्तु । किंतु “विश्वे देवाः “नः अस्माकं “वृधासः वर्धयितारः यथा “भुवन् भवेयुः तथा “सुषाहा सुष्ठु शत्रूणामभिभवेन नोऽस्मदीयं “शवः अन्नं “विथुरं हीनं यथा “न “करन् न कुर्युः तथा आगच्छन्तु ॥

प्रेष्ठं॑ वो॒ अति॑थिं गृणी॒षे॒ऽग्निं श॒स्तिभि॑स्तु॒र्वणिः॑ स॒जोषाः॑ ।

अस॒द्यथा॑ नो॒ वरु॑णः सुकी॒र्तिरिष॑श्च पर्ष॑दरिगू॒र्तः सू॒रिः ॥३

प्रेष्ठ॑म् । वः॒ । अति॑थिम् । गृ॒णी॒षे । अ॒ग्निम् । श॒स्तिऽभिः॑ । तु॒र्वणिः॑ । स॒ऽजोषाः॑ ।

अस॑त् । यथा॑ । नः॒ । वरु॑णः । सु॒ऽकी॒र्तिः । इषः॑ । च॒ ।
प॒र्ष॒त् । अ॒रि॒ऽगू॒र्तः । सू॒रिः ॥३

प्रेष्ठम् । वः । अतिथिम् । गृणीषे । अग्निम् । शस्तिऽभिः ।
तुर्वणिः । सऽजोषाः ।

असत् । यथा । नः । वरुणः । सुऽकीर्तिः । इषः । च ।
पर्षत् । अरिऽगूर्तः। सूरिः ॥३॥

हे देवाः “वः युष्माकं प्रेष्ठं प्रियतमम् ।
सर्वेषामाह्वातृत्वाद्धविर्वहनाच्च अग्निः देवानां प्रियतमः।
तम् “अतिथिं गृणीषे गृणे स्तौमि ॥ व्यत्ययेन मध्यमः ॥
केन साधनेन । “शस्तिभिः शंसनैः स्तुतिभिः ।
कीदृशोऽहम् । “तुर्वणिः तूर्णवनिः शीघ्रं संभक्ता “सजोषाः
युष्माभिः सह प्रीयमाणः । यद्वा । एते अग्निविशेषणे । यः
तुर्वणिः शीघ्रं यज्ञस्य संभक्ता सजोषा युष्माभिः सह
प्रीयमाणः तम् “अग्निं गृणीषे । “यथा येन प्रकारेण “नः

अस्माकं “वरुणः एतन्नामको देवः “सुकीर्तिः शोभनकीर्तिमान् “असत् । ‘सुकीर्तिं भिक्षे वरुणस्य भूरेः' (ऋ. सं. २. २८.१ ) इत्यादिमन्त्रवर्णेषु वरुणात् सुकीर्तिरिव एषणीया । “अरिगूर्तः अरिषु अदातृषु सदा शब्दितः अरीणां हननाय उद्युक्तो वा “सूरिः प्रेरयिता अयं वरुणः “इषश्च अन्नानि “पर्षत् पूरयेत् । तथा तमपि स्तुम इत्यर्थः ॥

उप॑ व॒ एषे॒ नम॑सा जिगी॒षोषासा॒नक्ता॑ सु॒दुघे॑व धे॒नुः ।

स॒मा॒ने अह॑न्वि॒मिमा॑नो अ॒र्कं विषु॑रूपे॒ पय॑सि॒ सस्मि॒न्नूध॑न् ॥४

उप॑ । व॒ः । आ । ई॒षे॒ । नम॑सा । जि॒गी॒षा । उ॒षसा॒नक्ता॑ । सु॒दुघा॑ऽइव । धे॒नुः ।

स॒मा॒ने । अहं॑न् । वि॒ऽमिमा॑नः । अ॒र्कम् । विषुं॑ऽरूपे । पयं॑सि । सस्मिं॑न् । ऊधं॑न् ॥४

उप । वः । आ । ईषे । नमसा । जिगीषा। उषसानक्ता । सुदुघाऽइव । धेनुः ।

समाने । अहन् । विऽमिमानः । अर्कम् । विषुऽरूपे । पयसि । सस्मिन् । ऊधन् ॥ ४ ॥

हे देवाः “वः युष्माकं “नमसा हविषा नमस्कारेण वा “उप उपेत्य “जिगीषा पापानां जिगीषया “एषे इच्छामि ।। ‘इष गतौ ' इत्यस्य वा ईषतेर्वा गत्याद्यर्थस्य लिटि उत्तमैकवचने इदं रूपम् ॥ भजामि । कस्मिन् काले । “उषासानक्ता अहनि रात्रौ च । यद्वा । अहोरात्रदेवते अपि अभिगच्छामि । गतौ दृष्टान्तः । “सुदुघा “धेनुः “इव सुदोग्ध्री धेनुः यथा दोहाय दोग्धुः गृहमागच्छति तद्वत् । किं कुर्वन् । “सस्मिन् समाने “ऊधन ऊधस्युत्पन्ने “विषुरूपे नानारूपे “पयसि

क्षीरघृतादिके “अर्कम् अर्चनीयमन्नं चरुपुरोडाशादिकं “विमिमानः विविधं मिमानः । कस्मिन् काले। “समाने “अहन् षष्ठेऽहनि । एकस्मिन्नेवाहनि सर्वदैव वा इत्यर्थः । एकस्मिन्नेवाहनि समाने ऊधस्युत्पन्ने नानारूपे पयसि त्वदर्थं हविर्मिमान उपगच्छामीत्यर्थः । यद्वा । सस्मिन् सर्वस्मिन्नूधसि फलाख्यक्षीरोत्पादके यज्ञे निमित्तभूते सति विषुरूपे पयसि नानारूपे सोमलक्षणोदके अर्कमन्नसाधनं स्तोत्रं विमिमानोऽहं युष्मानभिगच्छामि ॥

उ॒त नोऽहि॑र्बु॒ध्न्यो॒३॒ मय॑स्क॒ः शि॒शुं न पि॒प्यु॒षीं॑व वेति॒ सिन्धुः॑ ।

येन॒ नपा॑तम॒पां जु॒नाम॑ मनो॒जुवो॒ वृष॑णो॒ यं वह॑न्ति ॥५

उ॒त । न॒ः । अहि॑ः । बु॒ध्न्य॑ः । मय॑ः । क॒रि॒तिं॑ कः । शि॒शुं॑म् । न । पि॒प्यु॒षीं॑ऽइव । वे॒ति॒ । सिन्धुः॑ ।

येनं । नपांतम् । अ॒पाम् । जु॒नामं । म॒न॒ःऽजुवः॑ । वृषंणः ।
यम् । वहंन्ति ॥५

उत । नः । अहिः । बुध्न्यः । मयः । करिति कः । शिशुम् ।
न । पिप्युषीऽइव । वेति । सिन्धुः ।

येन । नपातम् । अपाम् । जुनाम । मनःऽजुवः । वृषणः ।
यम् । वहन्ति ॥ ५॥

“उत अपि च “नः अस्माकम् “अहिः अन्तरिक्षगामी
अहन्ता वा अहीनो वा अहन्यमानो वा एतन्नामको देवः स
एव “बुध्न्यः । बुध्नं बन्धकमन्तरिक्षम् । तदर्हतीति बुध्न्यः
अन्तरिक्षचारी एतन्नामको देवः “मयः सुखं “कः करोतु ॥
करोतेर्लङि रूपम् ॥ किंच “पिप्युषी । इवशब्दः एवार्थः
पूरणो वा । अस्मान् रसेन आप्याययन्ती “सिन्धुः नाम
नदी वेतु आयच्छतु। तत्र दृष्टान्तः । “शिशुं “न यथा शिशुं
प्याययन्ती गौर्गच्छति तद्वत् । “अपां नपातम्

उदकानामपातयितारं वर्षकमेतन्नामकं यद्वा उदकानां नप्तारं तृतीयं पुत्रम् । अद्भ्यः ओषधिवनस्पतयः तेभ्योऽग्निरिति नप्तृत्वम् । तादृशमग्निं "जुनाम स्तुतिभिः संगच्छेम । जु इति सौत्रो धातुर्गत्यर्थः ॥ “यं देवं मनोजुवः मनोवेगाः “वृष्णः वर्षका मेघा अश्वाः “वहन्ति स सुखं करोतु ॥ ॥ ४ ॥

उ॒त नं ई॒ं त्वष्टा ग॒न्त्वच्छा॒ स्मत्सू॒रिभिंरभिपि॒त्वे स॒जोषांः
।

आ वृंत्र॒हेन्द्रंश्चर्षणि॒प्रास्तु॒विष्टंमो न॒रां नं इ॒ह गंम्याः ॥६

उ॒त । न॒ः । ई॒म् । त्वष्टां । आ । ग॒न्तु॒ । अच्छं । स्मत् । सू॒रिऽभिः॑ । अ॒भि॒ऽपि॒त्वे । स॒ऽजोषाः॑ ।

आ । वृ॒त्र॒ऽहा । इन्द्रः॑ । च॒र्ष॒णि॒ऽप्राः । तु॒विः॒ऽत॑मः । न॒राम् । नः॒ । इ॒ह । ग॑म्याः ॥६

उत । नः । ईम् । त्वष्टा । आ । गन्तु । अच्छ। स्मत् । सूरिऽभिः । अभिऽपित्वे । सऽजोषाः।

आ । वृत्रऽहा । इन्द्रः । चर्षणिऽप्राः । तुविःऽतमः । नराम् । नः । इह । गम्याः ॥ ६ ॥

“त्वष्टा देवोऽपि “नः अस्मान् अच्छ अभिप्राप्तुं “ईम् इदानीम् इमं यज्ञं वा “आ “गन्तु। आगत्य च । “स्मत् सहार्थे प्राशस्त्ये वा वर्तते । अत्र प्रशंसायाम् । प्रशस्तं यथा तथा “अभिपित्वे अभिगन्तव्ये यज्ञे निमित्तभूते सति “सूरिभिः स्तोतृभिर्ऋत्विग्भिः “सजोषाः समानप्रीतिर्भवत्विति शेषः । तथा “वृत्रहा वृत्रघाती “चर्षणिप्राः। चर्षणयो मनुष्या यजमानाः । कामैः तेषां पूरकः । “तुविष्टमः बहुतमो महत्तमः “इह अस्मिन् कर्मणि

“नरां नृणां “नः अस्माकम् उक्तगुणोपेतः सन् “आ “गम्याः आगच्छतु ॥

उ॒त नं ईं म॒तयोऽश्वं॑योगा॒ः शिशुं॒ न गाव॒स्तरुं॑णं रिहन्ति ।

तमीं॒ गिरो॒ जनं॑यो॒ न पत्नीः॑ सु॒र॒भिष्टं॑मं न॒रां नं॑सन्त ॥७

उ॒त । न॒ः । ई॒म् । म॒तयः॑ । अश्वं॑ऽयोगाः । शिशुं॑म् । न । गावः॑ । तरुं॑णम् । रि॒ह॒न्ति॒ ।

तम् । ई॒म् । गिरः॑ । जनं॑यः । न । पत्नीः॑ । सु॒र॒भिःऽतं॑मम् । न॒राम् । न॒स॒न्त॒ ॥७

उत । नः । ईम् । मतयः । अश्वऽयोगाः । शिशुम् । न । गावः । तरुणम् । रिहन्ति ।

तम् । ईम् । गिरः । जनयः । न । पत्नीः । सुरभिःऽतमम् । नराम् । नसन्त ॥ ७ ॥

“उत अपि च “ईम् एनं “तरुणं नित्ययुवानमिन्द्रं “मतयः अस्मद्बुद्धयः “अश्वयोगाः अश्वसमानप्राप्तयः “रिहन्ति आस्वादयन्ति स्तुवन्तीत्यर्थः । तत्र दृष्टान्तः । “गावः दोग्ध्र्यो धेनवः “शिशुं “न शिशुमिव वत्समिव तं यथा लिहन्ति तद्वत् । तदेवाह । “तमीं तमेवैनं “नरां नराणां यजमानानां “सुरभिष्टमम् अतिशयेन सुरभिं “जनयः फलस्योत्पादयित्र्यः “गिरः स्तुतयः “नसन्त व्याप्नुवन्ति । नसतिर्व्याप्तिकर्मा । तत्र दृष्टान्तः । “जनयः “न उत्पादयित्र्यः “पत्नीः पत्न्यः पतिमिव ।

उ॒त न॑ ईं म॒रुतो॑ वृ॒द्धसे॑ना॒ः स्मद्रोद॑सी॒ सम॑नसः सदन्तु ।

पृष॑दश्वासो॒ऽवन॑यो॒ न रथा॑ रि॒शाद॑सो मित्र॒युजो॒ न दे॒वाः ॥८

उ॒त । न॒ः । ई॒म् । म॒रुतः॑ । वृ॒द्धऽसे॑ना॒ः । स्मत् । रोद॑सी॒ इति॑ । सऽम॑नसः । स॒द॒न्तु॒ ।

पृष॑त्ऽअश्वासः । अ॒वन॑यः । न । रथाः॑ । रि॒शाद॑सः । मि॒त्र॒ऽयुजः॑ । न । दे॒वाः ॥८

उत । नः । ईम् । मरुतः । वृद्धऽसेनाः । स्मत् । रोदसी इति । सऽमनसः । सदन्तु ।

पृषत्ऽअश्वासः । अवनयः । न । रथाः । रिशादसः । मित्रऽयुजः । न । देवाः ॥ ८ ॥

"उत अपि च "नः अस्मदीयम् "ईम् इदानीम् एनं यागं वा "मरुतः "स्मत् सह अपि "सदन्तु गच्छन्तु । कुतो देशात् । "रोदसी रोदस्योर्द्यावापृथिव्योः सकाशात् । यद्वा । रोदस्यावपि गच्छताम् । कीदृशास्ते मरुतः । "वृद्धसेनाः प्रवृद्धबलाः "समनसः समानमनस्काः "पृषदश्वासः

पृषद्वर्णाश्वाः । ‘पृषत्यो मरुताम्’ (नि. १, १५, ६) इति यास्कः । “अवनयो “न यथैव नमनस्वभावाः “रथाः रंहणस्वभावा रथवन्तो वा ।। मत्वर्थो लुप्यते ।। यद्वा । अवनयो रक्षका रथा इव स्थिताः। “रिशादसः । रिशाः शत्रवः । तेषाम् अत्तारः “मित्रयुजः “देवाः “न मैत्रीयुक्ता व्यवहर्तारः ऋत्विज इव । यद्वा । मैत्रीयुक्ता अन्ये देवा यथा गच्छन्ति तद्वत् ॥

प्र नु यदेषां महिना चिकित्रे प्र युञ्जते प्रयुजस्ते सुवृक्ति ।

अध यदेषां सुदिने न शरुर्विश्वमेरिणं प्रुषायन्त सेनाः ॥९

प्र । नु । यत् । एषाम् । महिना । चिकित्रे । प्र । युञ्जते । प्रऽयुजः । ते । सुऽवृक्ति ।

अध॑ । यत् । ए॒षा॒म् । सु॒ऽदिने॑ । न । शरुः॑ । विश्व॑म् । आ ।
इरि॑णम् । प्रु॒षा॒यन्त॑ । सेनाः॑ ॥९

प्र । नु । यत् । एषाम् । महिना । चिकित्रे । प्र । युञ्जते ।
प्रऽयुजः । ते । सुऽवृक्ति ।

अध । यत् । एषाम् । सुऽदिने । न । शरुः । विश्वम्। आ ।
इरिणम् । प्रुषायन्त । सेनाः ॥९॥

“एषां मरुतां “महिना महिमा वृष्टिलक्षणः “यत् यस्मात् “प्र “चिकित्रे प्रज्ञायते । यद्वा । एषां महत्त्वेन युक्ता नराः चिकित्रे जानन्त्यनुष्ठेयम् । “नु इति पूरणः । ततः “ते ज्ञातारः “सुवृक्ति ॥ सुपो लुक् ॥ सुष्टुतीनां “प्रयुजः प्रयोगान् “प्र “युञ्जते । “अध अथ प्रयोगानन्तरं “यत् यस्मात् “एषां “सेनाः वृष्ट्युत्पादकाः “विश्वं सर्वं भुवनम् “इरिणम् ऊषरप्रदेशं यथा तथा सर्वतः “प्रुषायन्त उत्पादयन्ति । तत्र दृष्टान्तः । “सुदिने मेघावरणादिरहिते

दिने “शरुः अन्धकारहिंसकः प्रकाश इव। स यथा सर्वमावृणोति तथा मरुत्सेना वृष्ट्या सर्वम् ऊषरं करोति । यद्वा । मरुन्महिमा वृष्टिर्भवति । तदा सस्यादिसमृद्धौ सत्यां प्रयोगं कुर्वन्ति । यदा यजन्ति तदा मरुत्सेनाः सर्वा महीमुन्दन्तीत्येवं महानुभावा मरुत इति तेषां स्तुतिः ॥ ।

प्रो अ॒श्विना॒वव॑से कृणुध्व॒ं प्र पू॒षण॒ं स्वत॑वसो॒ हि सन्ति॑ ।

अ॒द्वे॒षो विष्णु॒र्वात॑ ऋभु॒क्षा अच्छा॑ सु॒म्नाय॑ ववृतीय दे॒वान् ॥१०

प्रो इति॑ । अ॒श्विनौ॑ । अव॑से । कृ॒णु॒ध्व॒म् । प्र । पू॒षण॑म् । स्वऽत॑वसः । हि । सन्ति॑ ।

अ॒द्वे॒षः । विष्णुः॑ । वातः॑ । ऋ॒भु॒क्षाः । अच्छ॑ । सु॒म्नाय॑ । व॒वृ॒ती॒य॒ । दे॒वान् ॥१०

प्रो इति। अश्विनौ । अवसे । कृणुध्वम् । प्र । पूषणम् । स्वऽतवसः । हि । सन्ति ।

अद्वेषः । विष्णुः । वातः । ऋभुक्षाः । अच्छ। सुम्नाय । ववृतीय । देवान् ॥ १० ॥

हे ऋत्विजः "अश्विनौ एतन्नामकौ देवावुद्दिश्य "अवसे अस्मद्रक्षणाय "प्रो "कृणुध्वं स्तुतिं प्रकर्षेण कृणुध्वम् । "पूषणं पोषकम् एतन्नामकं देवमपि अवसे प्रकर्षेण स्तुतिं कृणुध्वम् । किंच ये "स्वतवसः स्वायत्तबलाः "सन्ति तानपि प्र कृणुध्वम् । के ते। "अद्वेषः द्वेषरहितः "विष्णुः व्याप्तः एतन्नामको देवः । प्रथममनाहूतोऽपि न कुप्यतीति वक्तुम् अद्वेषः इत्युक्तम् । तथा "वातः सर्वत्र संचारी वायुः "ऋभुक्षाः पतिरिन्द्रश्च । एतानपि प्र कृणुध्वम् । अतोऽहं स्वायत्तबलान् सर्वानपि "देवान् "सुम्नाय सुखाय "अच्छ आभिमुख्येन "ववृतीय स्तोत्रैः अभिवर्तयेयम् ॥

इ॒यं सा वों अ॒स्मे दीधिंतिर्यजत्रा अपि॒प्राणीं च॒ सदंनी च भूयाः ।

नि या दे॒वेषु॒ यतंते वसू॒युर्वि॒द्यामे॒षं वृ॒जनं जी॒रदांनुम् ॥११

इ॒यम् । सा । व॒ः । अ॒स्मे इतिं । दीधिंतिः । य॒ज॒त्रा॒ः । अ॒पि॒ऽप्राणीं । च॒ । सदंनी । च॒ । भू॒या॒ः ।

नि । या । दे॒वेषुं । यतंते । व॒सु॒ऽयुः । वि॒द्यामं । इ॒षम् । वृ॒जनंम् । जी॒रऽदांनुम् ॥११

इयम् । सा। वः । अस्मे इति । दीधितिः । यजत्राः । अपिऽप्राणी। च । सदनी । च । भूयाः ।

नि । या । देवेषु । यतते । वसुऽयुः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥

हे “यजत्राः यष्टव्या देवाः “वः युष्मत्संबन्धिनी “सा “इयं प्रसिद्धा "दीधितिः दीप्तिः “अस्मे अस्माकम् “अपिप्राणी सर्वदा चेष्टयित्री “सदनी “च निवासवती च “भूयाः भूयात् भवतु । “या दीधितिः “वसूयुः वसुमती “देवेषु “नि यतते नियमेन प्रयत्नं करोति । तानपि प्रकाशितुं सैव भूयात् । विद्याम इति गतः ॥ ॥ ५ ॥

# ऋग्वेदः सूक्तं १.१८७

← सूक्तं १.१८६

**ऋग्वेदः - मण्डल १**

सूक्तं १.१८७

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१८८ →

दे. अन्नं । १ अनुष्टुब्गर्भा उष्णिक्, ३, ५-७, ११ अनुष्टुप्, ११ बृहती वा, २,४, ८-१० गायत्री।

---

पितुं नु स्तोषं महो धर्माणं तविषीम् ।

यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥१॥

स्वादो पितो मधो पितो वयं त्वा ववृमहे ।

अस्माकमविता भव ॥२॥

उप नः पितवा चर शिवः शिवाभिरूतिभिः ।

मयोभुरद्विषेण्यः सखा सुशेवो अद्वयाः ॥३॥

तव त्ये पितो रसा रजांस्यनु विष्ठिताः ।

दिवि वाता इव श्रिताः ॥४॥

तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो ।

प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते ॥५॥

त्वे पितो महानां देवानां मनो हितम् ।

अकारि चारु केतुना तवाहिमवसावधीत् ॥६॥

यददो पितो अजगन्विवस्व पर्वतानाम् ।

अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः ॥७॥

यदपामोषधीनां परिंशमारिशामहे ।

वातापे पीव इद्भव ॥८॥

यत्ते सोम गवाशिरो यवाशिरो भजामहे ।

वातापे पीव इद्भव ॥९॥

करम्भ ओषधे भव पीवो वृक्क उदारथिः ।

वातापे पीव इद्भव ॥१०॥

तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम ।

देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादम् ॥११॥

तुलनीय -- पैप्पलादसंहिता ६.१६, काठकसंहिता ४०.८

## सायणभाष्यम्

'पितुं नु' इत्येकादशर्चमष्टमं सूक्तमागस्त्यमन्नदेवताकं गायत्रम् । आद्या अनुष्टुब्गर्भोष्णिक् । 'आद्यः पञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा' (अनु. ५. ७) इत्युक्तत्वात् । तृतीया पञ्चमी षष्ठी सप्तम्येकादशी च इति पञ्चानुष्टुभः । तथा च अनुक्रमणिका-पितुं न्वन्नस्तुतिर्गायत्रं त्वाद्यानुष्टुब्गर्भा तृतीयान्त्ये पञ्चम्याद्याश्च तिस्रोऽनुष्टुभः' इति । विनियोगं शौनक आह- पितुं न्वित्युपतिष्ठेत नित्यमन्नमुपस्थितम् ।

पूजयेदशनं नित्यं भुञ्जीत ह्यविकुत्सयन् ॥ नास्य स्यादन्नजो व्याधिर्विषमप्यमृतं भवेत् । विषं च पीत्वैतत्सूक्तं जपेद्विषविनाशनम् ।। नावाग्यतस्तु भुञ्जीत नाशुचिर्न जुगुप्सितम् । दद्याञ्च पूजयेच्चैव जुहुयाच्च हविस्तदा । क्षुद्भयं नास्य किंचित्स्यान्नान्नजं व्याधिमाप्नुयात्' ( ऋग्वि. १. १४८-१५१ ) इति ।।

पि॒तुं नु स्तोषं म॒हो ध॒र्माणं॒ तवि॑षीं ।

यस्यं त्रि॒तो व्योजंसा वृ॒त्रं विपं॑र्वम॒र्दयंत् ॥१

पि॒तुम् । नु । स्तो॒ष॒म् । म॒हः । ध॒र्माणं॑म् । तवि॑षीम् ।

यस्यं । त्रि॒तः । वि । ओजंसा । वृ॒त्रम् । विऽपं॑र्वम् । अ॒र्दयंत् ॥१

पितुम् । नु । स्तोषम् । महः । धर्माणम् । तविषीम् ।।

यस्य । त्रितः । वि। ओजसा । वृत्रम् । विऽपर्वम् । अर्दयत्
॥ १ ॥

अहमगस्त्यः “नु क्षिप्रं “पितु पालकमन्नं “स्तोषं स्तौमि। “महः महान्तं “धर्माणं सर्वस्य धारकं “तविषीं बलात्मकम् । यद्वा । महतो लोकस्य धारकम् । “यस्य अन्नस्य “ओजसा बलेन सामर्थ्येन “त्रितः विस्तीर्णतमः प्रख्यातकीर्तिः त्रिषु क्षित्यादिस्थानेषु तायमानोऽपि इन्द्रः “वृत्रं “विपर्वं विच्छिन्नसंधिकं यथा तथा अर्दयत् हिंसितवान् ।

स्वादों पितो मधों पितो व॒यं त्वां ववृमहे ।

अ॒स्माकंमवि॒ता भंव ॥२

स्वादो॒ इतिं । पि॒तो॒ इतिं । मधो॒ इतिं । पि॒तो॒ इतिं । व॒यम् ।
त्वा॒ । व॒वृ॒म॒हे॒ ।

अ॒स्माकंम् । अ॒वि॒ता । भ॒व॒ ॥२

स्वादो इति । पितो इति। मधो इति । पितो इति । वयम् ।
त्वा । ववृमहे ।

अस्माकम् । अविता । भव ॥ २ ॥

हे “स्वादो आस्वादनीय “पितो पालक “मधो माधुर्योपेत
“पितो हे पानसाधनान्न "वयं “त्वा त्वां “ववृमहे सेवामहे ।।
अत्र सर्वत्र अननुदात्तानां पूर्वस्य
असामान्यवचनत्वेनानिघातत्वम् । अनुदात्तानां तु
विशेषवचनत्वान्निघातत्वम् ।। असकृत्पितुशब्दश्रवणं
तस्य प्राशस्त्यज्ञापनार्थम् । हे पितो “अस्माकमविता
तर्पयिता “भव ॥

उपं नः पित॒वा चंर शि॒वः शि॒वाभिं॑रू॒तिभिः॑ ।

म॒यो॒भुरंद्विषे॒ण्यः सखां सु॒शेवो॒ अद्वंयाः ॥३

उपं । न॒ः । पि॒तो॒ इतिं । आ । च॒र॒ । शि॒वः । शि॒वाभिः॑ । ऊ॒तिऽभिः॑ ।

म॒य॒ःऽभुः । अ॒द्वि॒षे॒ण्यः । सखां । सु॒ऽशेवः॑ । अद्वंयाः ॥३

उप । नः । पितो इति । आ । चर। शिवः । शिवाभिः । ऊतिऽभिः ।

मयःऽभुः । अद्विषेण्यः । सखा । सुऽशेवः । अद्वयाः ॥ ३ ॥

हे “पितो यतः त्वं “शिवः मङ्गलः अतः “शिवाभिः मङ्गलयुक्ताभिः “ऊतिभिः रक्षणैः “नः अस्मान् “आ “चर

आगच्छ। आगत्य च “मयोभुः सुखस्य भावयिता “अद्विषेण्यः अद्वेष्यरसः प्रियरस इत्यर्थः । “सखा सखिवत्प्रियकारी “सुशेवः अत एव सुष्ठु सुखकरः “अद्वयाः द्वयरहितः उक्तगुण एव न तु तद्विपरितो भवेत्यर्थः । अथवा दृष्टान्तवादोऽयम् । सुशेवोऽद्वया मनःकर्मविसंवादरहितः सखा यथा मयोभुः अद्वेष्यश्च भवति तद्वत् त्वमपि भवेत्यर्थः ।।

तव॒ त्ये पिं॑तो॒ रसा॒ रजा॒ंस्यनु॒ विष्ठिं॑ताः ।

दि॒वि वाता॑ं इव श्रि॒ताः ॥४

तव॑ । त्ये । पि॒तो॒ इति॑ । रसाः॑ । रजां॑सि । अनु॑ । विऽस्थिं॑ताः ।

दि॒वि । वाताः॑ऽइव । श्रि॒ताः ॥४

तव । त्ये। पितो इति। रसाः । रजांसि। अनु। विऽस्थिताः ।

दिवि । वाताःऽइव । श्रिताः ॥४॥

हे “पितो “तव त्वत्संबन्धिनः “त्ये ते स्वाद्वम्लादि षट् “रसाः “रजांसि लोकान् लोकस्थानार्थान् “अनु आनुकूल्येन “विष्ठिताः विविधं स्थिताः । विविधस्थितौ दृष्टान्तः । “दिवि द्युलोकेऽन्तरिक्षे “श्रिताः “वाताः वायवः ते यथा व्याप्तास्तद्वत् ॥

तव॒ त्ये पिंतो॒ ददंत॒स्तवं स्वादिष्ठ॒ ते पिंतो ।

प्र स्वा॒द्मानो॒ रसांनां तुवि॒ग्रीवां इवेरते ॥५

तवं । त्ये । पि॒तो॒ इतिं । ददंतः । तवं । स्वा॒दि॒ष्ठ॒ । ते । पि॒तो॒ इतिं ।

प्र । स्वा॒द्मानः॑ । रसा॑नाम् । तु॒वि॒ग्रीवाः॑ऽइव । ई॒र॒ते॒ ॥५

तव । त्ये। पितो इति । ददतः । तव । स्वादिष्ठ । ते । पितो इति ।

प्र । स्वाद्मानः । रसानाम् । तुविग्रीवःऽइव । ईरते ॥ ५ ॥

हे "पितो पालकान्न “त्ये ते त्वदर्थिनो नराः “तव भोक्तारो भवन्तीति शेषः । के ते नराः । “स्वादिष्ट स्वादुतम “पितो पालक “तव त्वदनुग्रहात् "ते त्वां “ददतः प्रयच्छन्तो भवन्ति । यद्वा। ते पितो इत्यादरार्थम् । अभ्यासे हि भूयांसमर्थं मन्यन्ते । किंच तव “रसानां स्वाद्वम्लादीनां षण्णां “स्वाद्मानः स्वादयितारो भक्षयितार एव “तुविग्रीवाइव । तुवीति बहुनाम । प्रवृद्धग्रीवा एव “प्र “ईरते प्रकर्षेण गच्छन्ति संचरन्ति । इवशब्द एवकारार्थः पूरणो वा । भूलोके अत्तार एव दृढाङ्गा भवन्तीति प्रसिद्धम् । अनशने हि ग्रीवा अधो लम्बन्ते । यद्वा । तव

रसानामत्तारः असंख्यातग्रीवा इव भवन्ति रसानां बाहुल्यादिति भावः । एवं वहुरसोपेतमन्नमिति तस्य स्तुतिः ॥ ॥ ६ ॥

त्वे पिंतो म॒हानां॑ दे॒वाना॒ं मनों हि॒तं ।

अकांरि॒ चारुं के॒तुना॒ तवाहि॒मवंसावधीत् ॥६

त्वे इतिं । पि॒तो॒ इतिं । म॒हानां॑म् । दे॒वानां॑म् । मनः॑ । हि॒तम् ।

अकांरि । चारुं । के॒तुनां । तवं । अहिंम् । अवंसा । अ॒व॒धी॒त् ॥६

त्वे इति । पितो इतिं । महानाम् । देवानाम् । मनः । हितम् ।

अकारि । चारु । केतुना । तव । अहिम् । अवसा ।
अवधीत् ॥ ६ ॥

हे “पितो "महानां पूज्यानां महतां वा “देवानाम् इन्द्रादीनां “मनः “त्वे त्वयि “हितं निहितम् “अकारि कृतम् । अमृतमपि विहाय त्वय्येव वर्तते । हे पितो “तव “चारु समीचीनेन “केतुना त्वत्कृतेन प्रज्ञानलक्षणेन “अवसा रक्षणेन "अहिं मेघं वृत्रं वा “अवधीत हतवानिन्द्रः । ‘अन्नमयं हि सोम्य मनः ' ( छा. उ. ६. ५. ४) इति श्रुतेः । अथवा त्वत्केतुना जगद्रक्षणेन निमित्तेनेति योज्यम् । जगद्रक्षणार्थं हि इन्द्रेणाहिर्भिद्यते ॥

यद॒दो पिंतो॒ अजंगन्वि॒वस्व॒ पर्वंतानां ।

अत्रां चिन्नो मधो पि॒तोऽरं भ॒क्षायं गम्याः ॥७

यत् । अ॒दः । पि॒तो॒ इति॑ । अज॑गन् । वि॒वस्व॑ । पर्व॑तानाम्
।

अत्र॑ । चि॒त् । न॒ः । म॒धो॒ इति॑ । पि॒तो॒ इति॑ । अर॑म् ।
भ॒क्षाय॑ । ग॒म्या॒ः ॥७

यत् । अदः । पितो इति । अजगन् । विवस्व । पर्वतानाम्
।

अत्र । चित् । नः । मधो इति । पितो इति । अरम् ।
भक्षाय । गम्याः ॥ ७ ॥

हे "पितो अन्न त्वां "यत् यदा "विवस्व ।। सुपो लुक् ।
अन्त्यलोपश्छान्दसः ॥ विवासनवतां
विद्युद्रूपप्रकाशनवताम् । विवो धनमुदकलक्षणम् ।
धनवतां वा "पर्वतानां मेघानां संबन्धि "अदः प्रसिद्धं
तदुदकम् "अजगन् अगमत् गच्छेत् । "अत्र "चित्

अस्मिन्काले "नः अस्मान् हे “मधो हे “पितो माधुर्योपेतान्न त्वं नोऽस्मान् “अरम् अलं संपूर्णं “भक्षाय भक्षणाय “गम्याः गच्छ संनिहितो भव ॥ यद्पामोषधीनां परिंशमरिशामहे । वातापे पीव इद्भव ॥ ८ ॥

यद॒पामोषं॑धीनां परि॒ंशमा॑रि॒शाम॑हे ।

वाता॑पे॒ पीव॒ इद्भ॑व ॥८

यत् । अ॒पाम् । ओषं॑धीनाम् । प॒रि॒ंशम् । आ॒ऽरि॒शाम॑हे ।

वाता॑पे । पीवः॑ । इत् । भ॒व॒ ॥८

यत् । अपाम् । ओषधीनाम् । परिंशम्। आऽरिशामहे ।

वातापे। पीवः । इत्। भव ॥८॥

"यत् येन “अपामोषधीनां संबन्धि “परिंशं परिलेशं परितः सुखकरमन्नम् “आरिशामहे आस्वादयामः भक्षयामः तेन अन्नोदकसारेण हे “वातापे । वातेन प्राणेन आप्नोति स्वनिर्वाहमिति वातेनाप्यायत इति वा वातापि शरीरम् । हे शरीर त्वं “पीव “इत् आप्यायित एव “भव । अन्नोदकाभ्यां शरीरवृद्धिः प्रसिद्धा । यद्वा । यद्यपि अपामोषधीनां परिंशं लेशमास्वादयामः तथापि हे वातापे वातवत्सर्वव्यापक पितो त्वम् अल्पमपि पीवः पीवानेव भव ॥

यत्तें सोम॒ गवा॑शिरो॒ यवा॑शिरो॒ भजा॑महे ।

वाता॑पे॒ पीव॒ इद्भ॑व ॥९

यत् । ते॒ । सो॒म॒ । गोऽआ॑शिरः । यव॑ऽआशिरः । भजा॑महे ।

वातांपे । पीवः । इत् । भ॒व॒ ॥९

यत् । ते । सोम। गोऽअशिरः। यवऽआशिरः। भजामहे ।

वातापे । पीवः । इत् । भव ॥९॥

पूर्वम् अन्नसामान्येन स्तुत्वा इदानीं सोमलक्षणमन्नं स्तौति । हे "सोम “ते तव “यत् यम् अंशं “गवाशिरः गोविकारक्षीराद्याश्रयणद्रव्यं "यवाशिरः यवविकाराश्रयणद्रव्यं “भजामहे सेवामहे तेन हे “वातापे शरीर “पीवः भव ॥

क॒र॒म्भ ओंषधे भव॒ पीवों वृ॒क्क उंदा॒र॒थिः ।

वातां॒पे॒ पीव॒ इद्भंव ॥१०

क॒र॒म्भः । ओ॒ष॒धे॒ । भ॒व॒ । पीवः । वृ॒क्कः । उ॒दा॒र॒थिः ।

वातांपे । पीवः । इत् । भ॒व॒ ॥१०

करम्भः । ओषधे । भव । पीवः । वृक्कः। उदारथिः ।

वातापे। पीवः । इत् । भव ॥ १० ॥

“करम्भः यः करम्भादिरूपः सक्तुपिण्डोऽस्ति तदात्मक हे “ओषधे त्वं “पीवः स्थौल्यवान् “वृक्कः व्याधेर्वर्जयिता “भव । उदारथिः ऊर्ध्वगमः इन्द्रियाणामुद्दीपयिता भव । शिष्टो गतः ॥

तं त्वां व॒यं पिंतो॒ वचोंभि॒र्गावो॒ न ह॒व्या सुंषूदिम ।

दे॒वेभ्यंस्त्वा सध॒मादंम॒स्मभ्यं त्वा सध॒मादं ॥११

तम् । त्वा॒ । व॒यम् । पि॒तो॒ इतिं । वचःऽभिः । गावः । न । ह॒व्या । सु॒सू॒दि॒म॒ ।

दे॒वेभ्यः॑ । त्वा॒ । स॒ध॒ऽमाद॑म् । अ॒स्मभ्य॑म् । त्वा॒ । स॒ध॒ऽमाद॑म् ॥११

तम् । त्वा । वयम् । पितो इति । वचःऽभिः । गावः । न । हव्या । सुसूदिम् ।।

देवेभ्यः । त्वा । सधऽमादम् । अस्मभ्यम् । त्वा । सधऽमादम् ॥ ११ ॥

हे “पितो अन्न सोमरूप “तं तादृशं स्तुतं “त्वा त्वां महानुभावं “वचोभिः स्तुतिवाग्भिः “वयं “सुषूदिम क्षारयामो रसान् । तत्र दृष्टान्तः । “गावो “न “हव्या गाव इव हवींष्युत्पादयन्ति तथा त्वत्सकाशात् सोमं सुषूदिम । किमर्थं कीदृशं च इति चेत् उच्यते । “देवेभ्यः इन्द्रादिभ्यः तदर्थं “सधमादं तेषां सह मादयितारम् । न केवलं देवेभ्य एव किंतु “सधमादम् अस्माभिः सह मादयितारं

हुतशेषरूपं “त्वा त्वाम् “अस्मभ्यम् अस्मदर्थमपि ॥ ॥ ७ ॥

**टिप्पणी**

अस्मिन् सूक्ते पितुः शब्दस्य प्राकट्यं एकादशवारेण भवति। सामान्यतः सायणादि भाष्येषु पितुः शब्दस्य अर्थं सोम इति कृतं भवति। अस्य सूक्तस्य ऋषिः अगस्त्यः अस्ति। अगस्त्यस्य ळक्ष्यं दक्षता प्राप्तिरस्ति। डा. फतहसिंहः कथयति स्म यत् वैदिकवाङ्मये शब्दस्य अर्घताह्रासस्य प्रदर्शनाय तस्य अभिव्यक्तिः द्विवचने एवं बहुवचने भवति। अनेन प्रकारेण, पितुः शब्दस्य बहुवचनं पितरः भविष्यति। देहमध्ये ये प्राणाः अव्यक्तरूपेण देहस्य पालनं

कुर्वन्ति, तेषां संज्ञा पितरः अस्ति। आधुनिक चिन्तनानुसारेण तेषां संज्ञा अचेतनमनः कर्तुं शक्यन्ते। पितृषु दोषमस्ति यत् तेषां संगमनं, एकीकरणं अतिकठिनं अस्ति। अतएव, तेषां सर्वोच्चस्तरस्य संज्ञा विश्वेदेवाः अस्ति। आधुनिकविज्ञानस्य भाषायां विश्वेदेवाः समूहः अस्ति, न व्यूहः। किन्तु अगस्त्यः यस्मिन् रूपे पितॄणां दर्शनं करोति, तत् पितुः अस्ति।

सा ततः प्राच्युदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । अथर्व पितुं मे गोपायेति । तै.ब्रा. १.१.१०.४

अथर्व पितुं मे गोपाय । रसमन्नमिहायुषे । अदब्धायोऽशीततनो । अविषं नः पितुं कृणु । तै.ब्रा. १.२.१.२५

पितुषणिरित्यन्नं वै पितु दक्षिणा वै पितु तामेनेन सनोत्यन्नसनिमेवैनं तत्करोति - ऐ.ब्रा. १.१३

अविषं नः पितुं कृण्वित्यन्नं वै पितुरनमीवं न इदमकिल्बिषमन्नं कुर्वित्येवैतदाह - माश. १.९.२.२०

अथैतं पितुमद्धि प्रसूत इत्यन्नं वै पितुरथैतदन्नमद्धि प्रमुक्त इति - माश. ७.२.१.१५

प्रथमायां ऋचायां उल्लेखमस्ति - यस्य त्रितो वि ओजसा वृत्रं विपर्वमर्दयत्। विपर्वस्य वृत्रस्य किमर्थं भवति। एकमर्थमस्ति - संवत्सरो वै पर्ववान् अस्ति। संवत्सरे कालस्य विभाजनं कला, कला, मुहूर्त्तादिषु कर्तुं शक्यन्ते। संवत्सरस्य निर्माणं सूर्य, पृथिवी एवं चन्द्रमसः अन्योन्याश्रिताभिः गतिभिः भवति। आध्यात्मिक स्तरे एषः योगः प्राण, वाक् एवं मनसि

भवति। शतपथब्राह्मणे १.६.३.१७ कथनमस्ति यत् यदा वृत्रस्य हननम् अभवत्, तदा तस्य यः सौम्यं भागमासीत्, तत् चन्द्रमा अभवत्। यः असुर्यम् आसीत्, तत् उदरे क्षुधारूपेण प्रतिष्ठितो अभवत्। शतपथ ब्राह्मणं १.२.३.२ अनुसृत्वा इदं कथितुं शक्यन्ते यत् यः वृत्रः अस्ति, तस्य साम्यं त्वष्टा विश्वरूपेण सह अस्ति। विश्वरूपः त्रिशीर्षः अस्ति। सः एकेन मुखेन सोमस्य पानं करोति, द्वितीयेन सुरायाः, तृतीयेन अन्नस्य। त्रितेन, यः इन्द्रस्य सहायकः अस्ति, तस्य त्रिशीर्षाणां कर्तनं अभवत्।

अन्नोपरि पौराणिकसंदर्भाः

अन्नोपरि टिप्पणी

वाताप्योपरि पौराणिकसंदर्भाः

## वाताप्योपरि टिप्पणी

शाङ्खायनब्राह्मणे २७.४ कथनमस्ति -- इन्द्रो वै वातापिः । स ह वातम् आप्त्वा शरीराण्यर्हन् । वैदिकवाङ्मयानुसारेण, वातः प्राणानां अनिरुक्तं रूपं, समष्टिरूपं अस्ति। वाततः निरुक्तप्राणस्य सर्जनं इन्द्रस्य कार्यमस्ति। अन्तरिक्षे या वायुः वहति, तत् प्राणानां एव समष्टिरूपमस्ति। यं वायुं वयं नासिकया गृह्णीमः, तदपि प्राणानां समष्टिरूपमस्ति। अस्य वायोः ग्रहणं फुफ्फुसेभिः भवति। फुफ्फुसेभ्यः वायुतः प्राणवायोः ग्रहणं भवति। तस्य प्राणवायोः वितरणं देहस्य कोषे - कोषे भवति। अयं सामान्या स्थितिः अस्ति। विशिष्टायां स्थित्यां, अयं प्राणवायुः अन्नस्य कार्यमपि करोति। यदि देहे इन्द्रदेवस्य विद्यमानता अस्ति, तर्हि सः वायुतः अन्नस्य सर्जनं कर्तुं समर्थः

अस्ति। अन्यथा, यथा सर्वविदितं अस्ति, केवलं वायुपानेन स्थूलदेहस्य क्रमिकक्षयः भवति। अयं प्रतीयते यत् प्रस्तुतसूक्ते वातापे पीव इद्धवेति कथनस्य अयमेव कारणमस्ति।

पुराणेषु सार्वत्रिकरूपेण इल्वल एवं तस्य अनुज वातापि दानवयोः कथा अस्ति। इल्वलः श्राद्धेषु वातापिं पाचयित्वा ब्राह्मणेभ्यः अन्नरूपेण प्रयच्छति। तदनन्तरं इल्वलः वातापेः आह्वानं करोति एवं वातापिः ब्राह्मणानां उदरं भङ्क्त्वा बहिरागच्छति। यदा अगस्त्यमुनिना वातापेः भक्षणं कृतमासीत्, तदा वातापिअसुरस्य पुनरुज्जीवनं सम्भवं नाभवत्। प्रथमदृष्ट्या, इल्वल एवं वातापि दानवयोः मध्ये न कोपि सामञ्जस्यं प्रतीयते। किन्तु, कथासरित्सागरे <u>८.२.३७७</u> उल्लेखमस्ति यत्

वातापिः जन्मान्तरे प्रज्ञाढ्यनामकः मन्त्रीरूपेण उत्पन्नः भवति। इल्वलसंज्ञायां इला, इळा, अचेतनमनः निहितमस्ति। वातापिसंज्ञायां प्रज्ञा निहितमस्ति। पुराणानुसारेण, इला एवं प्रज्ञा श्रद्धायाः दुहिते आस्ताम्। शांखायनआरण्यके ७.१८ कथनमस्ति - प्रज्ञा पूर्वरूपम्, श्रद्धा उत्तररूपम् कर्म संहिता सत्यं सन्धानम्। पातंजलयोगसूत्रे ऋतम्भरा प्रज्ञायाः उल्लेखमस्ति। एषा प्रज्ञैव वाततः, अनिरुक्तेभ्यः प्राणेभ्यः अन्नस्य निर्माणं कर्तुं शक्यते। वातापेः असुरस्य असुरत्वं किमस्ति। यदि वाततः प्रज्ञायाः सर्जनं न भवेत्, तत् वातापेः असुरत्वं प्रतीयते। अगस्त्यमुनिः वातापेः असुरत्वस्य पाचनं केन प्रकारेण करोति। भागवतपुराणे ४.१.३६ उल्लेखमस्ति यत् अगस्त्यः पुलस्त्यस्य पुत्रमस्ति एवं तस्य अपरसंज्ञा जठराग्निरस्ति। अयं प्रतीयते यत् यावत् जठराग्निः

उदरमध्ये स्थानिकः अस्ति, तावत् अयं अगस्त्यः न अस्ति। यदा जठराग्न्याः विस्तारं देहे अन्यत्रापि भवति, तदा अयं देहस्य शोधकः भवति, देहसमुद्रस्य असुराणां भक्षकः भवति। तदैव अयं अगस्त्यसंज्ञा धारयितुं शक्यते। अयं संभवमस्ति यत् अयं अगस्त्यसंज्ञका जठराग्निः वाततः प्रज्ञायाः सर्जनं कर्तुं शक्यते। श्राद्धस्य संज्ञा अन्नमपि अस्ति। अतएव, प्रज्ञातः श्रद्धायाः सर्जनं भविष्यति, श्रद्धातः श्राद्धस्य।

करम्भ

सोमयज्ञेषु प्रकृतिभूत ज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. होत्रा प्रातरनुवाके शस्यमाने

अग्नीत् सवनीयान् पुरोडाशान् निर्वपति । तत्र इन्द्राय एकादशकपालपुरोडाशं, हरिभ्यां धानाः, पूष्णे करम्भं हविर्निर्वपति । करम्भो नाम सक्तवो मन्थः। 'आज्यादिना वा संयुतः करम्भ इत्याचक्षते' (आप० श्रौ० १२।४।१२) (तु०-का० श्रौ० ९।२।१५ विद्याधरः) । २. सवनीय हविर्धानाश्रपणात् पश्चात् कृष्णाजिनावधूननादि कृत्वा द्वितीयं भागं (भ्रष्टयवानां) पेषयित्वा नवे पात्रे तथैवाज्यमानीय जातान् सक्तूनोप्य मन्थन- शलाकया रज्ज्वादिना मथित्वा स्थाल्योष्ठलग्ना विप्रुषोऽन्तः क्षिप्त्वा 'इन्द्राय त्वा' इति मन्त्रेणाभिमृश्य धानानामुत्तरतो भस्ममिश्रेष्वङ्गारेषु अधिश्रयति । अयं पदार्थः करम्भ इत्युच्यते । द्र० श्रौ०प०नि० पृ० २६१-६२ । द्र० सवनीयपुरोडाशयाग-, सवनीयधानाश्रपण-, सवनीययागहविर्निवाप-। पं. पीताम्बरदत्त शास्त्री ,

श्रौतयज्ञप्रक्रिया – पदार्थानुक्रमकोषः, (राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, २००५ई.)

पुराणेषु सार्वत्रिकरूपेण करम्भस्य उल्लेखः शकुनेः पुत्ररूपेण अस्ति। अयं संकेतमस्ति यत् मर्त्यस्तरे ये शकुनाः जायन्ते, ते करम्भाः भवन्ति। क - रम्भः करम्भः। यः विषयः कः- मर्त्यस्तरं रेभयति, आलोड्यति, तत् करम्भः। पैप्पलादसंहिता २.१ अनुसारेण अस्य विनियोजनं अधोदिशायाः विषस्य अपनयने भवति। तैत्तिरीयब्राह्मण ३.१.४.७ अनुसारेण करम्भस्य निर्वपणं आश्लेषा नक्षत्राय भवति। आश्लेषा नक्षत्रस्य देवता सर्पाः सन्ति।

करम्भोपरि पौराणिकसंदर्भाः

करम्भोपरि वैदिकसंदर्भाः

वृक्कः

समग्रे वैदिकवाङ्मये वृक्कस्य एकवचनरूपं अत्रैव दृश्यते। अन्यत्र द्विवचनरूपं वृक्कौ, वृक्काभ्यां प्रकटयति ( सूर्याचन्द्रमसौ वृक्काभ्यां - काठकसंहिता ५३.९, वृक्काभ्यां गिरीन् - शु.यजुर्वेदः २५.८, क्रोधो वृक्कौ, मन्युराण्डौ - पैप्पलादसंहिता १६.१३९.८)। अष्टाङ्गसंग्रह ५.२८ अनुसारेण रक्तमेदःप्रसादात् वृक्कयोः जननं भवति। आधुनिकआयुर्विज्ञानतः सम्यग्रूपेण ज्ञातमस्ति यत् वृक्कयोः कार्यं रक्तस्य शोधनमस्ति। रक्ते यानि अपद्रव्याणि सन्ति, तेषां अपनयनम्। अस्मिन् संदर्भे शतपथब्राह्मणस्य १२.७.१.८ कथनं उल्लेखनीयमस्ति। इन्द्रस्य मूत्रस्य माध्यमेन तस्य ओजस्य क्षरणमभवत् । क्षरितात् ओजतः वृकस्य,

आरण्यकपशोः उत्पत्तिरभवत्। ओजः अर्थात् ओ, ओंकारतः जायमानः। निहितार्थमस्ति यत् वृक्कयोः कार्यं ओंकारस्य स्थित्याः, ओजस्य रक्षणमस्ति। करम्भस्य वृक्केण सह कः सम्बन्धमस्ति। मूत्रः देहस्तरे वृष्टेः परिणाममस्ति। वृष्टेः जननहेतु विद्युतस्य अपेक्षा अस्ति। विद्युज्जननस्य कार्यं करम्भेण भवति, अयं प्रस्तावः।

वृकोपरि टिप्पणी

# ऋग्वेदः सूक्तं १.१८८

← सूक्तं १.१८७

ऋग्वेदः - मण्डल १

सूक्तं १.१८८

अगस्त्यो मैत्रावरुणिः

सूक्तं १.१८९ →

दे. आप्रीसूक्तं (१ इध्मः समिद्धोऽग्निर्वा, २ तनूनपात्, ३ इळः, ४ बर्हिः, ५ देवीर्द्वारः, ६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पतिः, ११ स्वाहाकृतयः ।गायत्री ।

---

समिद्धो अद्य राजसि देवो देवैः सहस्रजित् ।

दूतो हव्या कविर्वह ॥१॥

तनूनपादृतं यते मध्वा यज्ञः समज्यते ।

दधत्सहस्रिणीरिषः ॥२॥

आजुह्वानो न ईड्यो देवाँ आ वक्षि यज्ञियान् ।

अग्ने सहस्रसा असि ॥३॥

प्राचीनं बर्हिरोजसा सहस्रवीरमस्तृणन् ।

यत्रादित्या विराजथ ॥४॥

विराट् सम्राड्विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः ।

दुरो घृतान्यक्षरन् ॥५॥

सुरुक्मे हि सुपेशसाधि श्रिया विराजतः ।

उषासावेह सीदताम् ॥६॥

प्रथमा हि सुवाचसा होतारा दैव्या कवी ।

यज्ञं नो यक्षतामिमम् ॥७॥

भारतीळे सरस्वति या वः सर्वा उपब्रुवे ।

ता नश्चोदयत श्रिये ॥८॥

त्वष्टा रूपाणि हि प्रभुः पशून्विश्वान्समानजे ।

तेषां न स्फातिमा यज ॥९॥

उप त्मन्या वनस्पते पाथो देवेभ्यः सृज ।

अग्निर्हव्यानि सिष्वदत् ॥१०॥

पुरोगा अग्निर्देवानां गायत्रेण समज्यते ।

स्वाहाकृतीषु रोचते ॥११॥

## सायणभाष्यम्

‘समिद्धो अद्य' इत्येकादशर्चं नवमं सूक्तमागस्त्यं सर्वं गायत्रम् । समिद्धाग्नितनूनपादादयः एकादश प्रत्यृचं देवताः। यास्केन ‘किंदेवताः प्रयाजाः' इत्युपक्रम्य ‘आग्नेयाः प्रयाजा ऋतुदेवताश्छन्दोदेवताः पशुदेवताः प्राणदेवताः आत्मदेवताः' इत्यादिना बहून् पक्षानुपन्यस्य ब्राह्मणानि च प्रदर्श्य आग्नेया एव इति सिद्धान्तितम् ( निरु. ८. २२ )। ‘समिद्ध अप्रियः' इत्यनुक्रान्तम् । पशौ अगस्त्यानामेकादशप्रयाजरूपम् इदमाप्रीसूक्तम् ॥

समिंद्धो अ॒द्य रांजसि दे॒वो दे॒वैः संहस्रजित् ।

दू॒तो ह॒व्या क॒विर्वंह ॥१

सम्ऽइंद्धः । अ॒द्य । रा॒ज॒सि॒ । दे॒वः । दे॒वैः । स॒ह॒स्र॒ऽजि॒त् ।

दू॒तः । ह॒व्या । क॒विः । व॒ह॒ ॥१

सम्ऽइद्धः । अद्य । राजसि । देवः । देवैः । सहस्रऽजित् ।

दूतः । हव्या । कविः । वह ॥१

हे अग्ने "देवैः व्यवहर्तृभिर्ऋत्विग्भिः "समिद्धः सम्यग्दीपितः "देवः अत एव दीप्यमानः समिद्धैः वा देवैः सहितः समिद्धः सन् "अद्य अस्मिन् यागदिने "राजसि ईशिषे । हे "सहस्रजित् सहस्रस्य धनस्य एतत्संख्याकानां शत्रूणां वा जेतः ततः "दूतः देवानां दूतः तद्यज्ञादिवार्ताहरः

आह्वाता वा । ‘ अग्निर्देवानां दूत आसीत् ' (तै. सं. २. ५. ८. ५) इति श्रुतेः। "कविः क्रान्तदर्शी ईदृशस्त्वं “हव्या अस्मदीयानि हवींषि “वह देवेभ्यः प्रापय ।।

तनूं॑नपादृ॒तं य॒ते मध्वां॑ य॒ज्ञः समं॑ज्यते ।

दधं॑त्सह॒स्रिणी॒रिषः॑ ॥२

तनूं॑ऽनपात् । ऋ॒तम् । य॒ते । मध्वां॑ । य॒ज्ञः । सम् । अ॒ज्य॒ते॒ ।

दधं॑त् । स॒ह॒स्रिणीः॑ । इषः॑ ॥२

तनूऽनपात् । ऋतम् । यते । मध्वा । यज्ञः । सम् । अज्यते ।

दधत् । सहस्रिणीः । इषः ॥२

"तनूनपात् यज्ञशरीरस्य नपातयिता । यद्वा । आपोऽत्र तन्व उच्यन्ते इत्युक्तत्वात् अपां नपातयिता तासां नप्ता वा । अद्भ्य ओषधयः ओषधीभ्योऽग्निरिति नप्तृत्वम् । "यज्ञः पूज्यः । यज्ञनिर्वाहकत्वाद्वा यज्ञः । ईदृशोऽग्निः “ऋतं यज्ञं "यते गच्छते अनुतिष्ठते । यजमानाय तदभिमतार्थम् । "मध्वा मधुरेणाज्यसोमादिद्रव्येण "समज्यते । किं कुर्वन् अयम् । “सहस्रिणीः एतत्संख्याकान् "इषः अन्नानि “दधत् यजमानेभ्यो धारयन् ॥

आ॒जुह्वा॑नो न॒ ईड्यो॑ दे॒वाँ आ व॑क्षि य॒ज्ञिया॑न् ।

अग्ने॑ सहस्र॒सा अ॑सि ॥३

आ॒ऽजुह्वा॑नः । न॒ः । ईड्यः॑ । दे॒वान् । आ । व॒क्षि॒ । य॒ज्ञिया॑न् ।

अग्ने॑ । स॒ह॒स्र॒ऽसाः । अ॒सि॒ ॥३

आऽजुह्वानः । नः । ईड्यः । देवान् । आ । वक्षि ।
यज्ञियान् ।

अग्ने । सहस्रऽसाः । असि ॥३

हे "अग्ने आजुह्वानः अस्माभिराहूयमानः सन् "ईड्यः
अस्माभिः स्तुत्यः इण्नामकः त्वं "नः अस्मदर्थं "यज्ञियान्
यज्ञभाजः "देवान “आ “वक्षि आवह । हे अग्ने त्वं
"सहस्रसा “असि अपरिमितधनस्य दातासि ॥

प्रा॒चीनं॑ ब॒र्हिरोज॑सा स॒हस्र॑वीरमस्तृणन् ।

यत्रा॑दित्या वि॒राज॑थ ॥४

प्रा॒चीन॑म् । ब॒र्हिः । ओज॑सा । स॒हस्र॑ऽवीरम् । अ॒स्तृ॒ण॒न् ।

यत्रं । आ॒दि॒त्याः॒ । वि॒ऽराजंथ ॥४

प्राचीनम् । बर्हिः । ओजसा । सहस्रऽवीरम् । अस्तृणन् ।

यत्र । आदित्याः । विऽराजथ ॥४

“प्राचीनं प्रागग्रं "सहस्रवीरं सहस्रसंख्याका वीराः शत्रूणां विशेषेण ईरयितारो देवाः यस्य तत्तादृक् । यद्वा । अपरिमितवीराः पुत्रादयो येन तादृक् । “बर्हिः "ओजसा मन्त्रलक्षणबलेन उपेताः ऋत्विजः "अस्तृणन् आच्छादयन् । "यत्र यस्मिन् बर्हिषि "आदित्याः अदितेः पुत्राः यूयं "विराजथ विविधं राजध्वे तद्बर्हिः अस्तृणन् ।

वि॒राट् स॒म्राड्वि॒भ्वीः प्र॒भ्वीर्ब॒ह्वीश्च॒ भूयंसीश्च॒ याः ।

दुरों घृ॒तान्यंक्षरन् ॥५

वि॒राट् । स॒म्ऽराट् । वि॒भ्वीः । प्र॒ऽभ्वीः । ब॒ह्वीः । च॒ ।
भूयंसीः । च॒ । याः ।

दुरः॑ । घृ॒तानिं । अ॒क्ष॒र॒न् ॥५

विराट् । सम्ऽराट् । विभ्वीः । प्रऽभ्वीः । बह्वीः । च ।
भूयसीः । च । याः ।

दुरः । घृतानि । अक्षरन् ॥५

“विराट् । विशेषेण राजन्त इति व्यत्ययेनैकवचनम् ॥
“सम्राट् सम्यगिति पूज्यतरं राजमानाः ॥ अत्रापि
व्यत्ययेनैकवचनम् ॥ “विभ्वीः विभ्व्यो विविधं भवित्र्यः
"प्रभ्वीः प्रभ्व्यः प्रकर्षेण भवित्र्यः “बह्वीः बह्व्यः "भूयसीः
लोकप्रसिद्धसंख्याभिः "च भूयस्यश्च “याः "दुरः
यज्ञगृहद्वारः सन्ति ताः “घृतानि उदकानि प्राण्युपकारार्थम्

"अक्षरन् क्षरन्ति । यद्वा । बह्वीर्भूयसीरित्येते संख्यावचने । शिष्टानि तासां नामधेयानि ॥ ॥ ८ ॥

सु॒रु॒क्मे हि सु॒पेश॒साधिं श्रि॒या वि॒राजंतः ।

उ॒षासा॒वेह सींदताम् ॥६

सु॒रु॒क्मे इतिं सु॒ऽरु॒क्मे । हि । सु॒ऽपेशंसा । अधिं । श्रि॒या । वि॒ऽराजंतः ।

उ॒षसौं । आ । इ॒ह । सी॒द॒ता॒म् ॥६

सुरुक्मे इति सुऽरुक्मे । हि । सुऽपेशसा । अधि । श्रिया । विऽराजतः ।

उषसौ । आ । इह । सीदताम् ॥६

"सुरुक्मे शोभनदीप्ताभरणे प्रसिद्धे "सुपेशसा शोभनरूपे ईदृश्यौ अहोरात्रदेवते "अधि अधिकं "श्रिया सौन्दर्येण "विराजतः विशेषेण दीप्येते ।। हियोगादनिघातः । तादृश्यौ "उषसौ । एतत् रात्रेरप्युपलक्षणम् । उषःशब्दो दिवसस्योपलक्षकः । रात्रिरुषाश्च उभे "इह अस्मिन् दिने "आ "सीदताम् आगत्य तिष्ठताम् आगच्छतां वा ॥

प्र॒थ॒मा हि सु॒वाचंसा॒ होतां॒रा॒ दैव्यां क॒वी ।

य॒ज्ञं नों यक्षतामि॒मम् ॥७

प्र॒थ॒मा । हि । सु॒ऽवाचंसा । होतां॒रा । दैव्यां । क॒वी इतिं ।

य॒ज्ञम् । न॒ः । य॒क्ष॒ता॒म् । इ॒मम् ॥७

प्रथमा । हि । सुऽवाचसा । होतारा । दैव्या । कवी इति ।

यज्ञम् । नः । यक्षताम् । इमम् ॥७

"प्रथमा । मुख्यनामैतत् । प्रतमौ प्रकृष्टतमौ । हिः प्रसिद्धौ । "सुवाचसा प्रियवचनौ "दैव्या देवार्हौ "होतारा देवानामाह्वातारौ होमनिष्पादकौ वा "कवी मेधाविनौ एतौ "नः अस्मदीयम् “इमं "यज्ञं "यक्षतां यजतां गच्छतां वा ।।

भार॒तीळे॒ सरं॑स्वति॒ या व॒ः सर्वा॑ उपब्रु॒वे ।

ता नं॑श्चोदयत श्रि॒ये ॥८

भारं॑ति । इळें॑ । सरं॑स्वति । याः । व॒ः । सर्वाः॑ । उ॒प॒ऽब्रु॒वे ।

ताः । न॒ः । चो॒द॒य॒त॒ । श्रि॒ये ॥८

भारति । इळे । सरस्वति । याः । वः । सर्वाः । उपऽब्रुवे ।

ताः । नः । चोदयत । श्रिये ॥८

हे "भारति । भरतः आदित्यः । तस्य संबन्धिनी भारती । तादृशि द्युलोकदेवते हे “इळे भूदेवि हे "सरस्वति । सरः वागुदकं वा । तद्वत्यन्तरिक्षदेवते तादृशि देवि । एताः क्षित्यादिदेवताः । एतास्तिस्र आदित्यप्रभावविशेषरूपा इत्याहुः । "याः तिस्रः "सर्वाः "वः युष्मान् "उपब्रुवे उपेत्य स्तौमि “ताः यूयं "नः अस्मान् "श्रिये संपदे “चोदयत प्रेरयत ।

त्वष्टां रू॒पाणि॒ हि प्र॒भुः प॒शून्विश्वांन्समान॒जे ।

तेषां नः स्फा॒तिमा यंज ॥९

त्वष्टां । रू॒पाणिं । हि । प्र॒ऽभुः । प॒शून् । विश्वांन् । स॒म्ऽआ॒न॒जे ।

तेषांम् । न॒ः । स्फा॒तिम् । आ । य॒ज॒ ॥९

त्वष्टा । रूपाणि। हि । प्रऽभुः । पशून् । विश्वान् । सम्ऽआनजे ।

तेषाम् । नः । स्फातिम् । आ । यज ॥९॥

“त्वष्टा यज्ञसाधनपात्राभिमानी देवः “रूपाणि योनौ सृष्टानि रेतांसि रूपाणि कर्तुं "प्रभुः “हि । हिशब्दः श्रुत्यन्तरप्रसिद्धिद्योतनार्थः । ‘यावच्छो वै रेतसः सिक्तस्य', त्वष्टा रूपाणि विकरोति' (तै. सं. १. ५. ९. १-२ ) इति श्रुतेः । स देवः "विश्वान् सर्वानपि पशून् अस्मदीयान् गवादिकान् “समानजे सम्यगनक्ति व्यक्तीकरोति ॥ संपूर्वादनक्तेर्लिटि तस्मात् नुड्' इति नुट् ॥ अथ प्रत्यक्षः । “तेषाम् अक्तानां पशूनां "स्फातिं वृद्धिं "नः अस्मदर्थम् “आ “यन सर्वतः पूजय कुर्वित्यर्थः ।।

उप॒ त्मन्या॑ वनस्पत॒े पाथो॑ दे॒वेभ्यः॑ सृज ।

अ॒ग्निर्ह॒व्यानि॑ सिष्वदत् ॥१०

उप॑ । त्मन्या॑ । व॒न॒स्प॒ते॒ । पाथः॑ । दे॒वेभ्यः॑ । सृ॒ज॒ ।

अ॒ग्निः । ह॒व्यानि॑ । सि॒स्व॒द॒त् ॥१०

उप । त्मन्या । वनस्पते । पाथः । देवेभ्यः । सृज ।

अग्निः । हव्यानि । सिस्वदत् ॥१०

हे "वनस्पते यूपाभिमानिदेव “त्मन्या आत्मनैव "देवेभ्यः अग्न्यादिभ्यः "पाथः पशुरूपमन्नम् “उप “सृज उत्पादय । यूपाभावे पशुनियोजनाभावेन हविषोऽभावात् । त्वयि एवं

कृतवति सति “अग्निः हव्यानि हवींषि "सिस्वदत् स्वदयतु स्वादूकरोतु ॥

पुरोगा अग्निर्देवानां गायत्रेण समंज्यते ।

स्वाहांकृतीषु रोचते ॥११

पुरःऽगाः । अग्निः । देवानांम् । गायत्रेणं । सम् । अज्यते ।

स्वाहांऽकृतीषु । रोचते ॥११

पुरःऽगाः । अग्निः । देवानाम् । गायत्रेण । सम् । अज्यते ।

स्वाहाऽकृतीषु । रोचते ॥११

अयम् "अग्निः "देवानां “पुरोगाः असुरयुद्धं प्रति पुरोगामी । यद्वा । देवानां मध्ये यज्ञं प्रति अग्निरेव पुरोगामी । अत एव अग्रणीत्वादेव अग्निशब्दो निष्पन्नः । ‘अग्निः कस्मादग्रणीर्भवति' ( निरु. ७. १४ ) इति निरुक्तम् । तादृशोऽयं "गायत्रेण एतदुपलक्षितेन मन्त्रेण "समज्यते सम्यग्लक्ष्यते । "स्वाहाकृतीषु स्वाहाकारेषु सत्सु हविःषु दीयमानेषु "रोचते अत्यर्थं दीप्यते । एता: प्रयाजदेवताः यज्ञावयवाभिमानिन्यः । तद्द्वारा यज्ञ एव स्तूयते इति केषांचित् मतम् । अग्नेरेव नामान्तरमित्यन्ये ॥ ॥ ९ ॥

**टिप्पणी**

According to Sayana (RV I.13), there are 12 āprī sukta. Of the ten āprī sukta,

Ṛgveda commented by Gargya Narayana, RV I.13 and I.142 invoke Narāśaṁsa and Tanūnapāt manifestations of Agni. RV I.188, III.4, IX.5 and X.110 invoke only Tanūnapāt manifestation. RV II.3, V.5, VII.2 and X.70 invoke only Narāśaṁsa manifestation.

इध्मः

ध्मा प्रपूरणशब्दो य इध्मा नाम प्रकीर्त्यते ।
पूरितस्यागतिर्येन तेनेध्मस्त्वं भविष्यसि ।।
वराहपुराणम् १८.२६ ।। ध्मा शब्दस्य विनियोजनं प्रायः अयसः ध्मानाय एव भवति। किन्तु अत्र प्रपूरणे अस्ति। यथा उल्लिखितमस्ति, इध्मस्य उन्नतं

रूपं समित् अस्ति। समित् अर्थात् समिति, सममिति। अस्मिन् जगते सममितेः ह्रासं अस्ति, येन कारणेन सममितेः प्रपूरणाय वयं भोजनं कुर्वामः। सममितेः आधुनिकं व्याख्या श्री गोवान  कृतमस्ति। विष्णु पुराणस्य १.८.१९ कथनमस्ति - लक्ष्मी इध्मा, विष्णुः कुशः। कुशोपरि टिप्पणी

# ऋग्वेदः सूक्तं १.१८९



दे. अग्निः । त्रिष्टुप् ।

---

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।

युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥१॥

अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा ।

पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥२॥

अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमन्त कृष्टीः ।

पुनरस्मभ्यं सुविताय देव क्षां विश्वेभिरमृतेभिर्यजत्र ॥३॥

पाहि नो अग्ने पायुभिरजस्रैरुत प्रिये सदन आ शुशुक्वान् ।

मा ते भयं जरितारं यविष्ठ नूनं विदन्मापरं सहस्वः ॥४॥

मा नो अग्नेऽव सृजो अघायाविष्यवे रिपवे दुच्छुनायै ।

मा दत्वते दशते मादते नो मा रीषते सहसावन्परा दाः ॥५॥

वि घ त्वावाँ ऋतजात यंसद्गृणानो अग्ने तन्वे वरूथम् ।

विश्वाद्रिरिक्षोरुत वा निनित्सोरभिह्रुतामसि हि देव विष्पट् ॥६॥

त्वं ताँ अग्न उभयान्वि विद्वान्वेषि प्रपित्वे मनुषो यजत्र ।

अभिपित्वे मनवे शास्यो भूर्मर्मृजेन्य उशिग्भिर्नाक्रः ॥७॥

अवोचाम निवचनान्यस्मिन्मानस्य सूनुः सहसाने अग्नौ ।

वयं सहस्रमृषिभिः सनेम विद्यामेषं वृजनं जीरदानुम् ॥८॥

# सायणभाष्यम्

' अग्ने नय' इति दशमं सूक्तम् अष्टर्चमागस्त्यं
त्रैष्टुभमाग्नेयम् । अग्ने नयाष्टावाग्नेयम्' इत्यनुक्रमणिका ।
प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभच्छन्दसि विनियोगः ।
अथैतस्याः' इत्यत्र अग्ने नयाग्रे
बृहन्नित्यष्टानामुत्तमादुत्तमास्तिस्र उद्धरेत् ' ( आश्व. श्रौ. ४.
१३) इति सूत्रितत्वात् । अत्र शौनकः-'उत्पथप्रतिपन्नो यो
भ्रष्टो वापि पथः क्वचित् । पन्थानं प्रतिपद्येत कृत्वा वा
कर्म गर्हितम् ॥ अग्ने नयेति सूक्तेन प्रत्यृचं जुहुयाद्धृतम् ।
जपेच्च प्रयतो नित्यमुपतिष्ठेत वानलम् ' (ऋग्वि. १.
१५१-१५३) इति ॥ आद्याश्चतस्रः श्रवणाकर्मणि
विनियुक्ताः । 'श्रावण्यां पौर्णमास्याम् । इत्यत्र सूत्रितम्--
अग्ने नय सुपथा राये अस्मानिति चतसृभिः प्रत्यर्चं हुत्वा'
(आश्व. गृ. २.१.४ ) इति । आग्नेये पशौ
वपापुरोडाशयोराद्ये द्वे अनुवाक्ये । तथा च सूत्रितम्-'अग्ने
नय सुपथा राये अस्मान् पाहि नो अग्ने पायुभिरजस्रैः ' (
आश्व. श्रौ. ३. ७ ) इति । आद्या प्रायणीयेष्टौ

आग्नेयस्यानुवाक्या । सैव उदयनीये याज्या । तदहः प्रायणीयेष्टिः' इत्यत्र सूत्रितम्-’अग्ने नय सुपथा राये अस्माना देवानामपि पन्थामगन्म' ( आश्व. श्रौ. ४. ३ ) इति । विपरीताश्च याज्यानुवाक्या इति च ।।

अग्ने॒ नयं सु॒पथां रा॒ये अ॒स्मान्विश्वांनि देव व॒युनांनि वि॒द्वान् ।

यु॒यो॒ध्य१॒स्मज्जुंहुरा॒णमेनो॒ भूयिंष्ठां ते॒ नमंउक्तिं विधेम ॥१

अग्नें । नयं । सु॒ऽपथां । रा॒ये । अ॒स्मान् । विश्वांनि । दे॒व॒ । व॒युनांनि । वि॒द्वान् ।

यु॒यो॒धि । अ॒स्मत् । जु॒हु॒रा॒णम् । एनः॑ । भूयिंष्ठाम् । ते॒ । नमः॑ऽउक्तिम् । वि॒धे॒म॒ ॥१

अग्ने । नय । सुऽपथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् ।

युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नमःऽउक्तिम् । विधेम ॥ १ ॥

हे “अग्ने अङ्गनादिगुणविशिष्ट “देव द्योतमान “विश्वानि “वयुनानि सर्वाणि प्रज्ञानानि । अनेन एतदनुष्ठितमिदं प्रायणीयमिति यदेतज्ज्ञानमस्ति तद्विद्वानित्यर्थः । यतः “विद्वान् अतस्त्वम् “अस्मान् “सुपथा शोभनेन मार्गेण "राये गन्तव्याय स्वर्गादिधनाय । द्वितीयार्थे वा चतुर्थी । प्रापणीयं रयिं प्रति “नय । तदर्थं “जुहुराणं कुटिलकारि “एनः पापं फलप्रतिबन्धरूपम् “अस्मत् अस्मत्तः “युयोधि पृथक्कुरु । "ते तव वयं भूयिष्ठाम् अतिप्रवृद्धां “नमउक्तिं नमस्कारोक्तिं स्तुतिं “विधेम परिचरेम कुर्मः ॥

आयुष्कामेष्ट्याम् 'अग्ने त्वं पारय' इति द्वे स्विष्टकृतो याज्ये 'याहि नः' इति चतुर्थ्यनुवाक्या । 'पाहि नो अग्ने पायुभिरजस्रैरग्ने त्वं पारया नव्यो अस्मानिति संयाज्ये' ( आश्व. श्रौ. २. १० ) इति सूत्रितम् । एते एव स्वस्त्ययन्यामपि संयाज्ये इति सूत्रितत्वात् ॥

अग्ने॒ त्वं पा॑रया॒ नव्यो॑ अ॒स्मान्स्व॒स्तिभि॒रति॑ दु॒र्गाणि॒ विश्वा॑ ।

पूश्च॑ पृ॒थ्वी ब॑हु॒ला न॑ उ॒र्वी भवा॑ तो॒काय॒ तन॑याय॒ शं योः ॥२

अग्ने॑ । त्वम् । पा॒र॒य॒ । नव्यः॑ । अ॒स्मान् । स्व॒स्तिऽभिः॑ । अति॑ । दुः॒ऽगानि॑ । विश्वा॑ ।

पूः । च॒ । पृ॒थ्वी । ब॒हु॒ला । नः॒ । उ॒र्वी । भव॑ । तो॒काय॑ । तन॑याय । शम् । योः ॥२

अग्ने । त्वम् । पारय । नव्यः । अस्मान् । स्वस्तिऽभिः ।
अति । दुःऽगानि । विश्वा ।

पूः । च । पृथ्वी । बहुला । नः । उर्वी । भव । तोकाय ।
तनयाय । शम् । योः ॥ २ ॥

हे अग्ने “त्वं नव्यः नवतरः स्तुत्यो वा त्वम् अस्मान्
यागानुष्ठातॄन् “अति पारय कर्म समापय्य अतिपारय
अतिक्रामय । केन साधनेन । स्वस्तिभिः।
अस्तिरभिपूजितः । सुशब्दः शोभनवचनः । अत्यन्तं
पूजितैर्यज्ञादिसाधनैः। कानि । “दुर्गाणि दुर्गमनानि
पापानि । अनतिक्रमणीयानि दुरिताख्यानि अतिपारय ।
किंच “नः अस्माकं “पृथ्वी पृथुतरा “पूश्च पुरी अपि
भवत्विति शेषः । चशब्दो वक्ष्यमाणेन सह समुच्चयार्थः ।
पूरिति जात्येकवचनम् । पुराण्यपि भवन्त्वित्यर्थः । तथा
नः अस्माकम् “उर्वी पृथ्वी अपि बहुतरा भवतु । त्वं तु

“तोकाय अपत्याय “तनयाय पुत्राय ।
तोकशब्दोऽपत्यसामान्यवचनः । तनयशब्दः पुत्रवचनः।
“शं सुखं “योः मिश्रयिता “भव । यद्वा । रोगाणां शमनं
भयानां यावनं च भव कुर्वित्यर्थः ॥

अग्ने॒ त्वम॒स्मद्यु॑यो॒ध्यमी॑वा॒ अन॑ग्नित्रा अ॒भ्यमं॑न्त कृ॒ष्टीः ।

पुन॑र॒स्मभ्यं॑ सुवि॒ताय॑ देव॒ क्षां विश्वे॑भिर॒मृते॑भिर्यजत्र ॥३

अग्ने॑ । त्वम् । अ॒स्मत् । यु॒यो॒धि॒ । अमी॑वाः । अन॑ग्निऽत्राः
। अ॒भि । अम॑न्त । कृ॒ष्टीः ।

पुन॒ः । अ॒स्मभ्य॑म् । सु॒वि॒ताय॑ । दे॒व॒ । क्षाम् । विश्वे॑भिः ।
अ॒मृते॑भिः । य॒ज॒त्र॒ ॥३

अग्ने । त्वम् । अस्मत् । युयोधि । अमीवाः । अनग्निऽत्राः
। अभि । अमन्त । कृष्टीः ।

पुनः । अस्मभ्यम् । सुविताय । देव । क्षाम् । विश्वेभिः । अमृतेभिः । यजत्र ॥ ३ ॥

हे “अग्ने “त्वम् "अमीवाः रोगान् “अस्मत् अस्मत्तः "युयोधि व्यावर्तय । याः “अनग्नित्राः अग्निना अपालिताः "कृष्टीः प्रजाः “अभ्यमन्त अभिमिमतेऽस्मान् ॥ यच्छब्दाध्याहारादनिघातः । ताः युयोधि । यद्वा । ता अनग्नित्राः पापिन्यः कृष्टयः प्रजा अभ्यमन्त । त्वया अभ्यमितुमभितो रोगैः प्रापयितुमर्हन्ति । वयं तु न तादृशाः । अतोऽस्मत्तो वियोजयेत्यर्थः । न केवलं वियोगमात्रं अपि तु पुनः पुनरिदं कर्तव्यम् । “अस्मभ्यम् अस्मदर्थं "सुविताय शोभनफलाय हे “यजत्र यष्टव्य “देव द्योतमानाग्ने “विश्वेभिरमृतेभिः सर्वैरमरणधर्मभिः अन्यैर्यष्टव्यैर्देवैः सह “क्षां पृथिवीं देवयजनलक्षणाम् आगच्छेति शेषः ॥

‘पाहि नः' इत्यस्या विनियोगद्वयम् ‘अग्ने त्वं पारय' इत्यत्रोक्तम् । तथाग्नेयपशावेषैव हविषोऽनुवाक्या । तथा च सूत्रितं -- पाहि नो अग्ने पायुभिरस्रैः प्र वः शुक्राय भानवे भरध्वम् ' (आश्व. श्रौ. ३. ७ ) इति ॥

पा॒हि नो॑ अग्ने पा॒युभि॒रजं॑स्रैरु॒त प्रि॒ये सद॑न॒ आ शुं॑शु॒क्वान् ।

मा ते॑ भ॒यं जं॑रि॒तारं॑ यविष्ठ नू॒नं विं॑द॒न्मापु॒रं सं॑हस्वः ॥४

पा॒हि । न॒ः । अ॒ग्ने॒ । पा॒युऽभिः॑ । अजं॑स्रैः । उ॒त । प्रि॒ये । सदं॑ने । आ । शु॒शु॒क्वान् ।

मा । ते॒ । भ॒यम् । ज॒रि॒तारं॑म् । य॒वि॒ष्ठ॒ । नू॒नम् । वि॒द॒त् । मा । अ॒प॒रम् । स॒ह॒स्व॒ः ॥४

पाहि । नः । अग्ने । पायुऽभिः । अजस्रैः । उत । प्रिये । सदने । आ । शुशुक्वान् ।

मा। ते। भयम् । जरितारम् । यविष्ठ । नूनम् । विदत् । मा । अपरम् । सहस्वः ॥ ४ ॥

हे "अग्ने "नः अस्मान् "अजस्रैः अनवरतैरविच्छिन्नैः "पायुभिः पालनप्रकारैः "पाहि पालय । “उत अपि च "प्रिये "सदने तव प्रियभूते यागगृहे “आ सर्वतः “शुशुक्वान् दीप्यमानो भवेति शेषः । किंच हे "यविष्ठ युवतम “ते तव "जरितारं गरितारं स्तोतारं मां "नूनम् अद्य "भयं “मा "विदत् मा लभतां मा आप्नोतु । हे "सहस्वः बलवन्नग्ने "अपरम् अपरस्मिन्काले भयं “मा विदत् । अपरं मदन्यं वा मा विदत् ॥ अच्युताय भौमाय एककपालपुरोडशहोमे ‘मा नो अग्ने' इत्यनया आशयमभिजुहोति । तथा च सूत्रितं-'

मा नो अग्नेऽव सृजो अघायेत्येनमाशयेनाभिजुहोति' ( आश्व. गृ. २. १. ६) इति ॥

मा नों अ॒ग्नेऽवं सृजो अ॒घायांवि॒ष्यवें रि॒पवें दु॒च्छुनांयै ।

मा द॒त्वते॒ दशंते॒ मादतें नो॒ मा रीषंते सहसाव॒न्परां दाः ॥५

मा । न॒ः । अ॒ग्ने॒ । अवं । सृ॒ज॒ः । अ॒घायं । अ॒वि॒ष्यवें । रि॒पवें । दु॒च्छुनांयै ।

मा । द॒त्वतें । दशंते । मा । अ॒दतें । न॒ः । मा । रिषंते । स॒ह॒सा॒ऽव॒न् । परां । दा॒ः ॥५

मा । नः । अग्ने । अव । सृजः । अघाय । अविष्यवे। रिपवे । दुच्छुनायै ।

मा । दत्वते । दशते । मा । अदते । नः । मा । रिषते ।

सहसाऽवन् । परा । दाः ॥ ५ ॥

हे "अग्ने "नः अस्मान् "अघाय हिंसकाय "अविष्यवे। अविष्यतिरत्तिकर्मा । अन्नेच्छवे "दुच्छुनायै । शुनं सुखम् । दुष्टसुखकारिणे । दुःखकारिणे इत्यर्थः । तस्मै "रिपवे "मा अव "सृजः मा त्याक्षीः तदधीनं मा कुवित्यर्थः । तथा नः अस्मान् दत्वते दन्तवते "दशते खादते सर्पादये "मा अव सृजः । तथा "नः अस्मान् "अदते अदन्तकाय शृङ्गादिभिर्घातिने "मा अव सृजः । तथा "रिषते हिंसकाय तस्करराक्षसादये हे "सहसावन् सहस्विन "मा "परा "दाः पराभूतं मा देहि सर्वथा न देहीत्यर्थः ॥ ॥१०॥

वि घ॒ त्वावाँ॑ ऋतजात यंसद्गृणा॒नो अं॑ग्ने त॒न्वे॒३॒ वरू॑थम् ।

विश्वां॑द्रिरि॒क्षोरु॒त वां निनि॒त्सोर॑भि॒ह्रुता॒मसि॒ हि दे॑व वि॒ष्पट् ॥६

वि । घ॒ । त्वावा॑न् । ऋ॒त॒ऽजा॒त॒ । यं॒स॒त् । गृ॒णा॒नः । अ॒ग्ने॒ । त॒न्वे॑ । वरू॑थम् ।

विश्वा॑त् । रि॒रि॒क्षोः । उ॒त । वा॒ । नि॒नि॒त्सोः । अ॒भि॒ऽह्रुता॑म् । असि॑ । हि । दे॒व॒ । वि॒ष्पट् ॥६

वि । घ । त्वाऽवान् । ऋतऽजात । यंसत् । गृणानः । अग्ने । तन्वे । वरूथम् ।

विश्वात् । रिरिक्षोः । उत । वा । निनित्सोः । अभिऽह्रुताम् । असि । हि। देव। विष्पट् ॥६॥

हे "ऋतजात यज्ञार्थमुत्पन्न “अग्ने "वरूथं वरणीयं त्वां “तन्वे शरीरपोषाय "गृणानः स्तुवन् “त्वावान् त्वया देवतया तद्वान् जनः “वि ”घ “यंसत् विमुञ्चति खलु

आत्मानम् । कस्मात्सकाशात् । “रिरिक्षोः हिंसितुमिच्छोश्चोरादेः सकाशात् । "उत "वा अथवा “निनित्सोः निन्दितुमिच्छतः । हे “देव "अभिह्रुताम् आभिमुख्येन कुटिलं कुर्वतां द्विषां विष्पट् विशेषेण बाधकः "असि “हि । अतः त्वदनुग्रहात् अयं जनो वि यंसत् ॥

त्वं ताँ अ॑ग्न उ॒भया॒न्वि वि॒द्वान्वेषि॑ प्रपि॒त्वे मनु॑षो यजत्र ।

अ॒भि॒पि॒त्वे मन॑वे॒ शास्यो॑ भूर्मर्मृ॒जेन्य॑ उ॒शिग्भि॒र्नाक्रः ॥७

त्वम् । ताम् । अ॒ग्ने॒ । उ॒भया॑न् । वि । वि॒द्वान् । वेषि॑ । प्र॒ऽपि॒त्वे । मनु॑षः । य॒ज॒त्र॒ ।

अ॒भि॒ऽपि॒त्वे । मन॑वे । शास्यः॑ । भूः॒ । म॒र्मृ॒जेन्यः॑ । उ॒शिक्ऽभिः॑ । न । अ॒क्रः ॥७

त्वम् । तान् । अग्ने । उभयान् । वि । विद्वान् । वेषि । प्रऽपित्वे । मनुषः । यजत्र ।

अभिऽपित्वे । मनवे । शास्यः । भूः । मर्मृजेन्यः । उशिक्ऽभिः । न । अक्रः ॥ ७ ॥

हे "यजत्र यष्टव्य “अग्ने “त्वं “तान् यष्टॄनयष्टॄंश्च "उभयान् "मनुषः मनुष्यान् विविच्य "विद्वान् जानन् "प्रपित्वे संनिहिते एव काले "वेषि कामयसे यष्टॄन् । तथा कुर्वन् "अक्रः आक्रमिता त्वं “मनवे । षष्ट्यर्थे चतुर्थी । मनुष्यस्य यजमानस्य "अभिपित्वे अभिप्राप्तकालेऽभिगमनवति यज्ञे वा “शास्यः "भूः शिक्षणीयो भव । इदं कुरु इदं कुरु इति विधेयो भव । "मर्मृजेन्यः शोधयिता यजमानः “उशिग्भिः कामयमानैर्ऋत्विग्भिरिव ॥

अवो॑चाम नि॒वच॑नान्यस्मि॒न्मान॑स्य सू॒नुः स॑हसा॒ने अ॒ग्नौ ।

व॒यं स॒हस्र॒मृषि॑भिः सनेम वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम् ॥८

अवो॑चाम । नि॒ऽवच॑नानि । अ॒स्मि॒न् । मान॑स्य । सू॒नुः । स॒ह॒सा॒ने । अ॒ग्नौ ।

व॒यम् । स॒हस्र॑म् । ऋषि॑ऽभिः । स॒ने॒म॒ । वि॒द्याम॑ । इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥८

अवोचाम । निऽवचनानि । अस्मिन् । मानस्य । सूनुः । सहसाने । अग्नौ ।

वयम् । सहस्रम् । ऋषिऽभिः । सनेम । विद्याम् । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥

वयम् "अस्मिन् अग्नौ "निवचनानि नियमपूर्वकाणि वचांसि स्तोत्ररूपाणि "अवोचाम ब्रूमः । अग्निर्विशेष्यते । "मानस्य "सूनुः । मीयत इति मानो मन्त्रः । तस्य सूनुरग्निः मन्त्रेण उत्पद्यमानत्वात् । सप्तम्यर्थे प्रथमा । मानस्य सूनौ "सहसाने शत्रूणामभिभवितरि "अग्नौ अवोचाम । “वयम् एभिः “ऋषिभिः अतीन्द्रियार्थप्रकाशकैर्मन्त्रैः साधनैः "सहस्रम् अपरिमितं धनं “सनेम संभजेमहि । विद्याम इति गतम् ॥ ॥ ११ ॥

## टिप्पणी

१.१८९.१ अग्ने नय इति

महारात्रे बुद्ध्वाग्ने नयेत्याग्नीध्रमभिमृशति

आप.श्रौ.सू. १२.१.१

